नाधिकरणस्य भवति । तत्र शेषत्वादस्य लटः शता, तस्य शित्त्वात्सार्वधातुकत्वे पूर्ववच्छबादयः । शत्रन्तस्य 'कृदतिङि'ति तृतीयधात्वधिकारविहितस्य प्रत्ययस्य कृत्सञ्ज्ञाविधानात् कृदन्तत्वेन प्रातिपदिकत्वादविशेषेण स्वादिप्रसङ्गे कर्मत्वस्य विवक्षितत्वा'त्कर्मणि द्वितीये'ति द्वितीया । द्वितीयादिशब्दैः सुपां त्रिकाः पूर्वाचार्यप्रसिद्ध्योच्यन्ते । तत्रापि सुपस्त्रीणित्रीणि पदानि भूत्वेकशो यथासंख्यमेकवचनादिसंज्ञानीति तिङ्वदेकत्वादौ क्रमेणैकवचनादि भवति । तत्रामौटोः ॥ 'सुडनपुंसकस्य' ॥ सुडिति प्रत्याहारेणादितः पञ्च वचनानि गृह्यन्ते । तान्यनपुंसकस्य संबन्धीनि सर्वनामस्थानानीति सर्वनामस्थानत्वे 'उगिदचां सर्वनामस्थाने धातो'रिति नुम् । उगितामङ्गानां लुप्तनकारस्याञ्चतेः पूर्वमधातोरुगितः परस्माद्धातोस्तस्मिन्नुम । अञ्चतिग्रहणादुगितो धातोर्यदि भवति अञ्चतेरेवेति नियमार्थकाद् अधातुग्रहणमधातुर्भूतपूर्वार्थं, नुम् मित्त्वा'न्मिदचोन्त्यात्पर'इत्येकत्र सन्निविष्टानामचामन्त्यादचः परः ॥ 'नश्चापदान्तस्य झलि' ॥ अपदान्तयोर्नकारमकारयोर्झल्यनुस्वार इति नस्यानुस्वारः ॥ 'अनुस्वारस्य ययि परसवर्णः' ॥ स च 'स्थानेन्तरतम'इति नासिक्यानुस्वारस्य तादृशो नकारः । भवन्त पश्य भवतस्तानित्यत्र 'स्वादिष्वसर्वनामस्थान'इति पूर्वस्य प्राप्तायाः पदसञ्ज्ञायाः 'यचि भ'मिति भसञ्ज्ञया परया ऽनवकाशया बाधात् 'झलां जशोन्त'इति जश्त्वं न भवति । कर्तृकरणविवक्षायां, 'कर्तृकरणयोस्तृतीया' ॥ उक्तः कर्त्ता ॥ 'साधकतमं करणम्' ॥ क्रियाप्रसिद्धौ यत्कारक कारकान्तरापेक्षया प्रकृष्टं विवक्ष्यते यद्व्यापारानन्तरं क्रियानिष्पत्तिर्विवक्ष्यते तत्करणम् । तदुक्तम् ।

क्रियायाः परिनिष्पत्तिर्यद्व्यापारादनन्तरम् ।
विवक्ष्यते यदा तत्र करणत्वं तदा स्मृतम् ॥
वस्तुतस्तदनिर्देश्य नहि वस्तु व्यवस्थितम् ।
स्थाल्या पच्यतइत्येषा विवक्षा दृश्यते यतः ॥
क्रियते येनयेनैव तत्तत्करणमिष्यते ।
तेनाश्वेन रथेनेति सिद्धं दीपिकयेति च ॥

इति । टाटकारष्टाङसीति विशेषणार्थः । अन्यथा 'सुपां सुलु-गि'ति विहितस्यापि ग्रहणमापद्येत । भवता तेन । भवद्भ्यां ताभ्यां, भवद्भिस्तैः । हलादौ पदत्वाज्जश्त्वम् । संप्रदानविवक्षायां 'चतुर्थी सम्प्रदाने' ॥ क्तादाद्यनभिहितइति शेषः ॥ 'कर्मणा यमभिप्रैति स सम्प्रदानम्' ॥ ददाति-कर्मणा करणभूतेन कर्ता यमर्थमभिप्रैति तदनिराकर्तृत्वे प्रेरयितृत्वेनुमन्तृ कारकं सम्प्रदानम् । उक्तञ्च ।

अनिराकरणात्कर्तुस्त्यागाङ्गं कर्मणेप्सितम् ।
प्रेरणानुमतिभ्यां च लभते सम्प्रदानताम् ॥

इति । दानं च पुनरग्रहणाय किंचिदुद्दिश्य स्वीयत्यागः । भवते तस्मै ददाति । भवद्भ्यां ताभ्यां ददाति । भवद्भ्यस्तेभ्यो ददाति । अपादानविवक्षायाम् 'अपादाने पञ्चमी' ॥ 'ध्रुवमपाये ऽपादानम्' ॥ सावधिकं गमनमपायः । तदुक्तम्

संयोगभेदाद् भिन्नात्मा गतिरेव भ्रमिर्यथा ।
ध्रुवावधिरपायोऽपि समवेतस्तथा ध्रुवः ॥

इति । अस्मिन् साध्ये यद् ध्रुवमेतदनाविष्टं तत्कारकमपादानम् । तथाहि ।

अपाये यदुदासीनं चलं वा यदि वा ऽचलम् ।
ध्रुवमेवातदावेशात्तदपादानमुच्यते ॥

इति । त्रिविधं चैतत् । यथाह ।

निर्दिष्टविषयं किंचिदुपात्तविषयं तथा ।
अपेक्षितक्रियं चेति त्रिधा ऽपादानमुच्यते ॥

इति । तत्र प्रथमं धातुना ऽभिहितापायविषयं, द्वितीयं धात्वन्तरार्थत्वेनाभिहितापायविषयम् । तृतीयं तु सामर्थ्यादिना प्रतीयमानापायविषयम् । भवतस्तस्मादागच्छति । भवतो मेघाद्विद्योतते विद्युत् । अत्र निःसरणाङ्गे विद्योतने विद्युन्निर्वर्त्तते । भवतस्तस्मादाढ्यतरः । अत्र प्रकर्षप्रत्ययसामर्थ्याद्विभागकारणतया प्रकर्षलक्षणा क्रिया प्रतीयते, अत्रावधिविभक्तयोरेकीकारो विभागस्तद्धेतुरपकर्षणं च बोद्धुम् । तथा चाह ।

बुद्ध्या समीहितैकत्वान् पञ्चालान् कुरुभिर्यदा ।
पुनर्विभजते वक्ता तदापायः प्रतीयते ॥

इति । तत्रतत्र ङसीत्यनुवादार्थौ ङकारेकारौ । विभागोपायः, अस्मिन् साध्ये यद् ध्रुवमेतद्धेतुभूतक्रियानाविष्टं तदपादानमिति सूत्रार्थः । शेषविवक्षायाम् ॥ 'षष्ठी शेषे' ॥ अनभिहितइति शेषः । कर्मादिभ्यो ऽन्यः प्रातिपदिकार्थव्यतिरेकहेतुः स्वस्वामिसंबन्धादिः शेषः, द्विष्ठोप्यसौ सबन्धो गुणभूतेन शब्देन प्रतिपाद्यतइति तस्मादेव षष्ठी न तु प्रधानात् ।

द्विष्ठोप्यसौ परार्थत्वाद् गुणेषु व्यतिरिच्यते ।

इति । तथा वार्त्तिकमपि 'उक्तं पूर्वेणे'ति । अस्यार्थः । प्रातिपदिकार्थसूत्रे यदसामानाधिकरण्ये उपसंख्यानमधिकत्वादिति चोद्यस्य न वाक्यार्थत्वादिति सामानाधिकरण्यप्रतीतेर्वाक्यार्थत्वेन पदसंस्कारवेलायामभावात् प्रातिपदिकार्थनिबन्धना प्रथमा यथा भवत्येवमत्रापि प्रधानगतसबन्धप्रतीतेर्वाक्यार्थत्वेन पदसंस्कारवेलायामभावाच्च प्रसङ्गः षष्ठ्या इति, परिहारभाष्यं चार्थरूपमेवैतदेवंजातीयकमिति, भवतो ऽस्य स्व, भवतोरनयोः, भवतामेषाम् । अधिकरणविवक्षायाम् ॥ 'सप्तम्यधिकरणे च' ॥ चकाराद् दूरान्तिकार्थेभ्यश्च ॥ 'आधारोधिकरणम्' ॥ कर्तृकर्मणोः क्रियाश्रयभूतयोर्धारणक्रियां प्रति य आधारस्तत्कारकमधिकरणम् । त्रिविधं चैतत् । यदाह,

कर्तृकर्मव्यवहितामसाक्षाद् धारयत् क्रियाम् ।
उपकुर्वन् क्रियासिद्धौ शास्त्रेधिकरणं स्मृतम् ॥
औपश्लेषिकमेकं स्यात्तथा वैषयिकं परम् ।
अभिव्यापकमित्येतत्त्रिधाधिकरणं मतम् ॥
आस्ते कटे शकुन्तः खे तिले तैलं व्यवस्थितम् ।
क्रमेणाधारभेदानामुदाहरणदर्शनम् ॥

इति । भवति कटे शेते । मेघच्छन्ने भवति खे बलाकाः, भवति तिले तैलं, भवतोरनयोः, भवत्स्वेषु । प्रथमासामानाधिकरण्ये प्रथमासामानाधिकरण्याभावे च 'नन्वोर्विभाषे'त्यतो विभाषानुवृत्तेर्विकल्पेन

भवतः ॥ 'प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा' ॥ भवन्नयम् । 'हल्ङ्याब्भ्य' इति सुलोपः । तकारस्य संयोगान्तलोपः । तस्यासिद्धत्वा'न्न लोपः प्रातिपदिकान्तस्ये'ति विधीयमानो नलोपो न भवति । भवन्तौ । भवन्तः । जसो जकारो ऽसन्देहेन विभक्तिस्वरूपप्रतिपत्त्यर्थः । भवत्तरः । भवत्तमः । भवद्रूपः । भवत्कल्प इत्यादौ तरबादि पूर्ववत् । भवत्कः । 'प्रागिवात्कः' । 'इवे प्रतिकृता'वित्यतः प्रागितः परेष्वज्ञातादिष्वर्थेषु द्योत्येषु कः प्रातिपदिकादिति कः । तद्धितत्वान्न ककारस्येत्त्वम् । शत्रभावे भवतीत्यादि पूर्वमुक्तमेव । अत्र तिङस्थानिवत्त्वेन लत्वाच्छत्रादेशो न भवति, वाग्रहणस्य व्यवस्थितविभाषाविज्ञानात् । यदि हि स्यात्स्थानिवद्भावेन तिङन्तादस्माच्च तरप् 'किमेत्तिङव्यये'त्याम्स्यात् । ततश्च भवत्तरामिति तृतीय रूप स्यात् । असामानाधिकरण्ये खल्वपि भवत इदं भावतम् ॥ 'तस्येदम्' ॥ षष्ठीसामर्थ्याद् ङ्याप्प्रातिपदिकात्सबन्धिन्यर्थे ऽणिति अण् । 'तद्धितेष्वचामादे'रिति वृद्धिः ञिति णिति तद्धिते परेऽङ्गस्याचामादेरचो वृद्धिरिति । इयं चा'त उपधाया' इति ञिति णिति प्रत्ययमात्रे परे ऽङ्गस्योपधाया अतो विधीयमाना वृद्धिमपवादत्वाद्बाधते । न च भवत इत्यस्य देवदत्तादिविशेषापेक्षत्वादस्तीहापि सामानाधिकरण्यमिति वाच्यम् । तर्हि सापेक्षत्वादस्मात्प्रत्यय एव न स्यात् । 'समर्थः पदविधि'रितीह शास्त्रे पदविधिः समर्थपदाश्रय इत्युक्तत्वात् । इदमप्युदाहरणं, भवतो भक्तिर्भवद्भक्तिरिति ॥ 'षष्ठी' ॥ षष्ठ्यन्तं समर्थेन सुबन्तेन वा समस्यतइति समासः । 'सुपो धातुप्रातिपदिकयो'रिति तद्धितान्तसमासप्रातिपदिकयोरन्तर्भूतस्य सुपो लुक् । अत्र के चिल्लडिति वर्त्तमाने 'लटः शतृशानचा'विति पुनर्लड्ग्रहणाद् 'नन्वोर्विभाषे'ति भूते विहितस्यापि लटोप्येतावादेशौ भवत इति । एतद्भाष्यवार्त्तिकयोर्नोक्त वृत्तिकारस्य च नेष्टम् । यदाह लडितिवर्त्तमाने पुनर्लड्ग्रहणात् क्व चित् प्रथमासामानाधिकरण्येपि भवतीति ॥ 'संबोधने च' ॥ शतृशानचाविति शेषः । आभिमुख्यकरणं संबोधनम्, तच्च स्वभावात्क्व चित् कार्ये विनियोगार्थम् । यदाह ।

सिद्धस्याभिमुखीभावमात्रं संबोधनं विदुः।

प्राप्ताभिमुख्यो ह्यर्थोऽत्मा क्रियायां विनियुज्यते॥

इति। हे सुखमनुभवन्नर्थस्य॥ 'लक्षणहेत्वोः क्रियायाः'॥ लक्षणं चिन्ह, हेतुः कारण, क्रियाया लक्षणहेत्वोर्वर्त्तमानाद्धातोर्लटः शतृशानचौ स्याताम्, शयनमनुभवन् यवनो भुङ्क्ते। अत्र शयनानुभवनं यवनभोजनस्योपलक्षणं, शुश्रूषुर्भवन्विद्यामधिगच्छति, अत्रापि शुश्रूषाभवनं विद्याधिगमस्य हेतुः। योगद्वयमिदं प्रथमासमानाधिकरणे नित्यार्थम्। प्रथमा च 'संबोधने चे'ति संबोधनाधिकप्रातिपदिकार्थे विहिता॥ 'माङ्याक्रोशे'॥ आक्रोशः शपनम्। अस्मिन् गम्यमाने माङ्युपपदे शतृशानचौ भवतः। मा भवन्। 'माङि लुङि' प्राप्ते ऽस्मादेवादेशवचनाल्लडनुमीयते। सुखमनुभवन्नित्यादौ 'कर्तृकर्मणोः कृती'त्यनयोः कृद्योगे विधीयमाना षष्ठी न भवति, 'न लोकाव्ययनिष्ठाखलर्थतृना'मिति लादियोगे प्रतिषेधात्। ल इति शतृशानचौ कानच् क्वसुकिकिनौ चोच्यन्ते। उ इत्युवर्णान्ताः, उः, इच्छुः, उकः प्रत्यय एव। अव्यय इति 'कृन्मेजन्तः'। 'क्त्वातोसुन्कसुन' इति उक्ता अव्ययकृतः॥ 'क्तक्तवतू निष्ठा'॥ खलर्थः खल् युच् तृन्निति 'पूङ्यजोः शान'न्निति शानन्नादय'स्तृन्नि'ति तृन्पर्यन्ताः प्रत्याहारेणोक्ताः। प्रत्याहारश्च 'लटः शत्रि'ति तृशब्दस्य तृनो नकारेण। सुखस्यानुभवन्निति प्रयोगः शेषलक्षणषष्ठ्या, अत्र षष्ठीसमासः 'पूरणगुणसुहितार्थसदव्ययतव्यसमानाधिकरणेनेति' पूरणादिभिः षष्ठीसमासो न भवति, तत्र पूरण इति पूरणप्रत्ययान्ताः। गुण इति गुणद्वारेण गुणिनि वर्त्तितुं शक्ता गुणगुणिनिष्ठाः शुक्लादयः, ये तु गुणं स्वनिष्ठतयैवाभिदधति ते रसादयस्तत्स्थैश्च गुणैः षष्ठी समस्यतइति तैः समास उक्तः। सुहितार्थास्तृप्त्यर्थाः। सदिति 'तौ सदि'ति सत्संज्ञौ शतृशानचौ। अव्यया उक्ताः। तव्यो न सानुबन्धकः। निरनुबन्धकग्रहणे न सानुबन्धकस्येति। समानाधिकरणमेकविभक्त्यन्तं विशेषणं विशेष्यं च॥

अथ शत्रन्तात्स्त्रीप्रत्यया इह प्रदर्श्यन्ते॥ 'उगितश्च'॥ यत्प्रातिपदिकमवयवद्वारेण साक्षाद्वोगित् 'येन विधिस्तदन्तस्ये'ति तदन्तात्, व्यपदे-

भवतः ॥ 'प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा' ॥ भवन्नयम् । 'हल्ङ्याब्भ्य' इति सुलोपः । तकारस्य संयोगान्तलोपः । तस्यासिद्धत्वा'न्न लोपः प्रातिपदिकान्तस्ये'ति विधीयमानो नलोपो न भवति । भवन्तौ । भवन्तः । जसो जकारो ऽसन्देहेन विभक्तिस्वरूपप्रतिपत्त्यर्थः । भवत्तरः । भवत्तमः । भवद्रूपः । भवत्कल्प इत्यादौ तरबादि पूर्ववत् । भवत्कः । 'प्रागिवात्कः' । 'इवे प्रतिकृता'वित्यतः प्रागितः परेष्वज्ञातादिष्वर्थेषु द्योत्येषु कः प्रातिपदिकादिति कः । तद्धितत्वान्न ककारस्येत्त्वम् । शत्रभावे भवतीत्यादि पूर्वमुक्तमेव । अत्र तिङस्थानिवत्त्वेन लत्वाच्छत्रादेशो न भवति, वाग्रहणस्य व्यवस्थितविभाषाविज्ञानात् । यदि हि स्यात्स्थानिवद्भावेन तिङन्तादस्माच्च तरप् 'किमेत्तिङव्यये'त्यामस्यात् । ततश्च भवत्तरामिति तृतीय रूप स्यात् । असामानाधिकरण्ये खल्वपि भवत इदं भावतम् ॥ 'तस्येदम्' ॥ षष्ठीसामर्थ्याद् ङ्याप्प्रातिपदिकात्सम्बन्धिन्यर्थे ऽणिति अण् । 'तद्धितेष्वचामादे'रिति वृद्धिः ञिति णिति तद्धिते परेऽङ्गस्याचामादेरचो वृद्धिरिति । इयं चा'त उपधाया' इति ञिति णिति प्रत्ययमात्रे परे ऽङ्गस्योपधाया अतो विधीयमाना वृद्धिमपवादत्वाद्बाधते । न च भवत इत्यस्य देवदत्तादिविशेषापेक्षत्वादस्तीहापि सामानाधिकरण्यमिति वाच्यम् । तर्हि सापेक्षत्वादस्मात्प्रत्यय एव न स्यात् । 'समर्थः पदविधि'रितीह शास्त्रे पदविधिः समर्थपदाश्रय इत्युक्तत्वात् । इदमप्युदाहरणं, भवतो भक्तिर्भवद्भक्तिरिति ॥ 'षष्ठी' ॥ षष्ठ्यन्तं समर्थेन सुबन्तेन वा समस्यतइति समासः । 'सुपो धातुप्रातिपदिकयो'रिति तद्धितान्तसमासप्रातिपदिकयोरन्तर्भूतस्य सुपो लुक् । अत्र के चिल्लडिति वर्त्तमाने 'लटः शतृशानचा'विति पुनर्लड्ग्रहणाद् 'नन्वोर्विभाषे'ति भूते विहितस्यापि लटोप्येतावादेशौ भवत इति । एतद्भाष्यवार्त्तिकयोर्नोक्तं वृत्तिकारस्य च नेष्टम् । यदाह लडितिवर्त्तमाने पुनर्लड्ग्रहणात् क्व चित् प्रथमासामानाधिकरण्येपि भवतीति ॥ 'संबोधने च' ॥ शतृशानचाविति शेषः । आभिमुख्यकरणं संबोधनम्, तच्च स्वभावात्क्व चित् कार्ये विनियोगार्थम् । यदाह ।

सिद्धस्याभिमुखीभावमात्रं सम्बोधनं विदुः ।
प्राप्ताभिमुख्यो ह्यर्थाऽत्मा क्रियाया विनियुज्यते ॥

इति । हे सुखमनुभवन्नर्थं च ॥ 'लक्षणहेत्वोः क्रियायाः' ॥ लक्षणं चिन्ह, हेतुः कारणं, क्रियाया लक्षणहेत्वोर्वर्त्तमानाद्धातोर्लटः शतृशानचौ स्याताम्, शयनमनुभवन् यवनो भुङ्क्ते । अत्र शयनानुभवनं यवनभोजनस्योपलक्षणं, शुश्रूषुर्भवन्विद्यामधिगच्छति, अत्रापि शुश्रूषाभवनं विद्याधिगमस्य हेतुः । योगद्वयमिदं प्रथमासमानाधिकरणे नित्यार्थम् । प्रथमा च 'सम्बोधने चे'ति सम्बोधनाधिकप्रातिपदिकार्थे विहिता ॥ 'माङ्याक्रोशे' ॥ आक्रोशः शपनम् । अस्मिन् गम्यमाने माङ्युपपदे शतृशानचौ भवतः । मा भवन् । 'माङि लुङि' प्राप्ते ऽस्मादेवादेशवचनाल्लडनुमीयते । सुखमनुभवन्नित्यादौ 'कर्तृकर्मणोः कृती'त्यनयोः कृद्योगे विधीयमाना षष्ठी न भवति, 'न लोकाव्ययनिष्ठाखलर्थतृना'मिति लादियोगे प्रतिषेधात् । ल इति शतृशानचौ कानच् क्वसुकिकिनौ चोच्यन्ते । उ इत्युवर्णान्ताः, उः, इच्छुः, उकः प्रत्यय एव । अव्यय इति 'कृन्मेजन्तः' । 'त्वातोसुन्कसुन' इति उक्ता अव्ययकृतः ॥ 'क्तक्तवतू निष्ठा' ॥ खलर्थः खल् युच् तृन्निति 'पूङ्यजोः शान'न्निति शानन्नादय'स्तृन्नि'ति तृन्पर्यन्ताः प्रत्याहारेणोक्ताः । प्रत्याहारश्च 'लटः शत्रि'ति तृशब्दस्य तृनो नकारेण । सुखस्यानुभवन्निति प्रयोगः शेषलक्षणषष्ठ्या, अत्र षष्ठीसमासः 'पूरणगुणसुहितार्थसदव्ययतव्यसमानाधिकरणेनेति' पूरणादिभिः षष्ठीसमासो न भवति, तत्र पूरणा इति पूरणप्रत्ययान्ताः । गुण इति गुणद्वारेण गुणिनि वर्त्तितु शक्ता गुणगुणिनिष्ठाशुक्लादयः,ये तु गुण स्वनिष्ठतयैवाभिदधति ते रसादयस्तत्स्थैश्च गुणैः षष्ठी समस्यतइति तैः समास उक्तः । सुहितार्थास्तृप्त्यर्थाः । सदिति 'तौ सदि'ति सत्सञ्ज्ञौ शतृशानचौ । अव्यया उक्ताः । तव्यो न सानुबन्धकः । निरनुबन्धकग्रहणे न सानुबन्धकस्येति । समानाधिकरणमेकविभक्त्यन्तं विशेषणं विशेष्य च ॥

अथ शत्रन्तात्स्त्रीप्रत्यया इह प्रदर्श्यन्ते ॥ 'उगितश्च' ॥ यत्प्रातिपदिकमवयवद्वारेण साक्षाद्वोगित् 'येन विधिस्तदन्तस्ये'ति तदन्तात्, व्यपदे-

शिवद्भावेन केवलाच्च प्रातिपदिकात् स्त्रिया ङीप्स्यात् । ङकारः सामान्यग्रहणार्थः, पकारस्तदविघातार्थः । 'ग्रहणवता प्रातिपदिकेन तदन्तविधिर्न,' 'अपदेशिवद्भावो ऽप्रातिपदिकेने'ति परिभाषे प्रातिपदिकस्य स्वरूपग्रहणेन प्रत्ययविधिविषये इति नेह स्तः । ङीबन्तस्य 'यू स्त्र्याख्यौ नदी' ॥ अन्यानपेक्षया स्त्रियां वृत्तमीदूदन्तं नदी, नदीत्वे ॥ 'शप्श्यनोर्नित्यम्' ॥ शप्श्यनोर्निमित्तत्वेन संबन्धिनः शतुर्नित्यं नुम् शीनद्योः परयोः, नुम् मित्त्वादन्त्यादचः परः । इह नदीशब्दो नद्यवयवे वर्त्तत इति शतुर्नदीपरत्वम् । भवन्ती । अतिभवन्ती । ङ्यन्तत्वात्स्वादिषु सोर्हल्ङ्यादि लोपः । भवन्त्यौ । भवन्त्यः । अजादा'विको यणची'ति संहितायां यण् भवति । 'प्रथमयोः पूर्वसवर्ण'इत्यकः प्रथमाद्वितीययोरजादौ विभक्तौ परतः पूर्वपरयोः पूर्वसवर्णदीर्घ एक इत्येतदत्र न भवति, 'दीर्घाज्जसि चे'ति निषेधाच्च चकारादिज् गृह्यते । हे भवन्ति । 'अम्बार्थनद्योर्ह्रस्व' इति ह्रस्वः । अम्बार्था मात्रर्थाः । 'एङ्ह्रस्वात्संबुद्धेरिति' संबुद्धेर्हलो लोपः ॥ 'एकवचनं संबुद्धिः' ॥ संबोधने प्रथमाया इति शेषः । भवन्तीम् । अत्रा'मि पूर्वः' पूर्वसवर्णदीर्घश्च यणं बाधेते । ङिद्वचनेष्वा'ण्नद्या' इति टित्त्वादादावाडागमे 'आटश्चे'ति यथायोगमैकार औकारश्च वृद्धिः । भवन्त्यौ, भवन्त्यः । आमि 'ह्रस्वनद्यापो नुडि'ति नुट् टित्त्वादादौ, भवन्तीनाम् । सप्तम्येकवचनस्य 'ङेराम्नद्याम्नीभ्य'इत्यामादेशे । भवन्त्याम् । नीशब्देन नदन्तो ग्रामण्यादिरुच्यते । भवन्तितरा । भवन्तीतरा । पूर्ववत्तरप् । अत्र 'घरूपकल्पचेलड्ब्रुवगोत्रमतहतेषु ङ्योऽनेकाचो ह्रस्व' इति घादिषु परेषु ङ्यन्तस्यानेकाचो विधीयमानो नित्यो ह्रस्व 'उगितश्चे'त्युगितः परस्या नद्या उच्यमानेन ह्रस्वविकल्पेन बाध्यते, अत्र घादयः प्रत्ययाश्चेलडादीनि प्रातिपदिकानि । अत्र हरदत्तः । चेलडादीनां वृत्तिविषये कुत्सनवचनत्वात् तैः 'कुत्सितानि कुत्सनै'रिति समास इति । न्यासकारस्तु चेलड्ब्रुवगोत्राणामेवं समासमुक्त्वा मतहताभ्यां तु 'विशेषणं विशेष्येणे'त्याह । एवं तमबादिष्वप्युदाहार्यम् ॥

अथ नपुंसकप्रक्रिया ॥ भवत् ब्राह्मणकुलं तिष्ठति पश्येति वा ।

'स्वमोर्नपुंसका'दिति लुक् । भवन्ती कुले । 'नपुंसकाच्चे'त्यौङः शीभावः । औङिति प्रथमाद्वितीययोर्द्विवचनस्य पूर्वाचार्यसंज्ञा । शकारः 'शीनद्यो'-रिति निर्देशार्थः । 'शप्श्यनो'रिति नित्यं नुमागमः । भवन्ति कुलानि । 'जश्शसोः शि'रिति नपुंसकाङ्गात्परत्वे जश्शसोः शिरादेशः । शकारः शीति तत्रानुवादार्थः । 'शि सर्वनामस्थान'मिति शेः सर्वनामस्थानत्वे । 'नपुंसकस्य झलच'इति झलन्तस्याजन्तस्य नपुंसकाङ्गस्य सर्वनामस्थाने नुमिति नुम् । भवतेत्यादि पुल्लिङ्गवत् ।

अथ शानच् ॥ व्यतिभवमानाः । 'आने मुगि'त्यदन्तस्याङ्गस्यानपरत्वेन मुक्प्राप्त्वादन्त्यः । व्यतिभवमानौ । 'प्रथमयोः पूर्वसवर्णदीर्घस्य 'नादिची'ति निषेधे 'वृद्धिरेची'ति वृद्धिः, व्यतिभवमानान् । 'तस्माच्छसो नः पुंसी'ति तस्मात्प्रथमयोः पूर्वसवर्णदीर्घात् परस्य शसः सकारस्य न इति नकारादेशः, व्यतिभवमानेन ॥ 'टाङसिङसामिनात्स्याः' ॥ अदन्तादङ्गात्परेषां टादीनां यथासंख्यमिनादय इति इनादेशे गुणः । व्यतिभवमानाभ्याम् । 'सुपि चे'त्यदन्ताङ्गस्य दीर्घ इति सुप्परत्वाद्दीर्घः । व्यतिभवमानैः । 'अतो भिस ऐसि'त्यदन्ताङ्गात्परत्वेन भिस ऐसादेशः । व्यतिभवमानाय । 'ङेर्य' इत्यदन्तादङ्गात्परत्वेन यादेशः । 'कष्टाये'ति निर्देशात्सनिपातपरिभाषाया अनित्यत्वा'त्सुपि चे'ति दीर्घः । व्यतिभवमानेभ्यः । अत्र झलादिबहुवचनसुप्परादन्ताङ्गत्वेन 'बहुवचने झल्ये'दित्येत्त्व सुपि चे'ति दीर्घश्च प्राप्नोति, तत्र 'विप्रतिषेधे परं कार्यं' द्वयोस्तुल्यबलविरोधे परस्य प्राप्यमाणत्वात्परमेत्व प्रवर्त्तते । व्यतिभवमानात् । व्यतिभवमानस्य । 'टाङसी'त्यादिना ङसिङसोरात्स्यौ । व्यतिभवमानयोः । 'ओसि चे'त्यदन्तस्याङ्गस्यौस्परत्वेनैकारे ऽयादेशः । व्यतिभवमानानाम् । 'ह्रस्वनद्यापो नुडि'ति नुट् । ह्रस्वान्तस्याङ्गस्य नाम्परत्वेन 'नामी'ति दीर्घः । 'सुपि चे'त्येव वा, व्यतिभवमाने । 'आद्गुणः' । व्यतिभवमानेषु । एत्वे षत्व, व्यतिभवमानस्येदं व्यातिभवमानम् । अत्रासामानाधिकरण्ये शानच् । 'तस्येद'मित्यण्यादिवृद्धिः । 'न य्वाभ्यां पदान्ताभ्यां पूर्वौ तु ताभ्यामैजि'ति पदान्ताभ्यां यकारवकाराभ्यां परस्याचामादेरचो वृद्धिर्न भवति किं तु ताभ्यां

शिवद्भावेन केवलाच्च प्रातिपदिकात् स्त्रिया ङीप्स्यात् । ङकारः सामान्यग्रहणार्थः, पकारस्तदविघातार्थः । 'ग्रहणवता प्रातिपदिकेन तदन्तविधिर्न,' 'व्यपदेशिवद्भावो ऽप्रातिपदिकेने'ति परिभाषे प्रातिपदिकस्य स्वरूपग्रहणेन प्रत्ययविधिविषये इति नेह स्तः । ङीबन्तस्य 'यू स्त्र्याख्यौ नदी' ॥ अन्यानपेक्षया स्त्रियां वृत्तमीदूदन्तं नदी, नदीत्वे ॥ 'शप्श्यनोर्नित्यम्' ॥ शप्श्यनोर्निमित्तत्वेन सबन्धिनः शतुर्नित्यं नुम् शीनद्योः परयोः, नुम् मित्त्वादन्त्यादचः परः । इह नदीशब्दो नद्यवयवे वर्त्तत इति शतुर्नदीपरत्वम् । भवन्ती । अतिभवन्ती । ङ्यन्तत्वात्स्वादिषु सोर्हल्ङ्यादि लोपः । भवन्त्यौ । भवन्त्यः । अजादा'विको यणची'ति संहितायां यण् भवति । 'प्रथमयोः पूर्वसवर्ण'इत्यकः प्रथमाद्वितीययोरजादौ विभक्तौ परतः पूर्वपरयोः पूर्वसवर्णदीर्घ एक इत्येतदत्र न भवति, 'दीर्घाज्जसि चे'ति निषेधाच् चकारादिज् गृह्यते । हे भवन्ति । 'अम्बार्थनद्योर्ह्रस्व' इति ह्रस्वः । अम्बार्था मात्रर्थाः । 'एङ् ह्रस्वात्सबुद्धेरिति' सबुद्धेर्हलो लोपः ॥ 'एकवचनं सबुद्धिः' ॥ सबोधने प्रथमाया इति शेषः । भवन्तीम् । अत्रा'मि पूर्वः' पूर्वसवर्णदीर्घश्च यणं बाधेते । ङिद्वचनेष्वा'ण् नद्या' इति टित्त्वादादावाडागमे 'आटश्चे'ति यथायोगमैकार औकारश्च वृद्धिः । भवन्त्यौ, भवन्त्यः । आमि 'ह्रस्वनद्यापो नुडि'ति नुट् टित्त्वादादौ, भवन्तीनाम् । सप्तम्येकवचनस्य 'ङेराम्नद्याम्नीभ्य'इत्यामादेशे । भवन्त्याम् । नीशब्देन तदन्तो ग्रामण्यादिरुच्यते । भवन्तितरा । भवन्तीतरा । पूर्ववत्तरप् । अत्र 'घरूपकल्पचेलड्ब्रुवगोत्रमतहतेषु ङ्योनेकाचो ह्रस्व' इति घादिषु परेषु ङ्यन्तस्यानेकाचो विधीयमानो नित्यो ह्रस्व 'उगितश्चे'त्युगितः परस्या नद्या उच्यमानेन ह्रस्वविकल्पेन बाध्यते, अत्र घादयः प्रत्ययाश्चेलडादीनि प्रातिपदिकानि । अत्र हरदत्तः । चेलडादीनां वृत्तिविषये कुत्सनवचनत्वात् तैः 'कुत्सितानि कुत्सनै'रिति समास इति । न्यासकारस्तु चेलड्ब्रुवगोत्राणामेवं समासमुक्त्वा मतहताभ्यां तु 'विशेषणं विशेष्येणे'त्याह । एवं तमबादिष्वप्युदाहार्यम् ॥

अथ नपुंसकप्रक्रिया ॥ भवत् ब्राह्मणकुलं तिष्ठति पश्येति वा ।

'स्वमोर्नपुंसका'दिति लुक्। भवन्ती कुले। 'नपुंसकाच्चे'त्यौङः शीभावः। औङिति प्रथमाद्वितीययोर्द्विवचनस्य पूर्वाचार्यसंज्ञा। शकारः 'शीनद्यो'-रिति निर्देशार्थः। 'शप्श्यनो'रिति नित्यं नुमागमः। भवन्ति कुलानि। 'जश्शसोः शि'रिति नपुंसकाङ्गात्परत्वे जश्शसोः शिरादेशः। शकारः शीति तत्रानुवादार्थः। 'शि सर्वनामस्थान'मिति शेः सर्वनामस्थानत्वे। 'नपुंसकस्य झलच'इति झलन्तस्याजन्तस्य नपुंसकाङ्गस्य सर्वनामस्थाने नुमिति नुम्। भवतेत्यादि पुल्लिङ्गवत्।

अथ शानच् ॥ व्यतिभवमानाः। 'आने मुगि'त्यदन्तस्याङ्गस्यानपरत्वेन मुक्त्वादन्त्यः। व्यतिभवमानौ। 'प्रथमयोः पूर्वसवर्णदीर्घस्य 'नादिची'ति निषेधे 'वृद्धिरेची'ति वृद्धिः, व्यतिभवमानान्। 'तस्माच्छसो नः पुंसी'ति तस्मात्प्रथमयोः पूर्वसवर्णदीर्घात् परस्य शसः सकारस्य न इति नकारादेशः, व्यतिभवमानेन ॥ 'टाङसिङसामिनात्स्याः' ॥ अदन्तादङ्गात्परेषां टादीनां यथासंख्यमिनादय इति इनादेशे गुणः। व्यतिभवमानाभ्याम्। 'सुपि चे'त्यदन्ताङ्गस्य दीर्घ इति सुप्परत्वाद्दीर्घः। व्यतिभवमानैः। 'अतो भिस ऐसि'त्यदन्ताङ्गात्परत्वेन भिस ऐसादेशः। व्यतिभवमानाय। 'ङेर्य' इत्यदन्तादङ्गात्परत्वेन यादेशः। 'कष्टाये'ति निर्देशात्सन्निपातपरिभाषाया अनित्यत्वा'त्सुपि चे'ति दीर्घः। व्यतिभवमानेभ्यः। अत्र झलादिबहुवचनसुप्परादन्ताङ्गत्वेन 'बहुवचने झल्ये'दित्येत्त्वं सुपि चे'ति दीर्घश्च प्राप्नोति, तत्र 'विप्रतिषेधे परं कार्यं' द्वयोस्तुल्यबलविरोधे परस्य प्राप्यमाणत्वात्परमेत्व प्रवर्त्तते। व्यतिभवमानात्। व्यतिभवमानस्य। 'टाङसी'त्यादिना ङसिङसोरात्स्यौ। व्यतिभवमानयोः। 'ओसि चे'त्यदन्तस्याङ्गस्यौस्परत्वेनैकारे ऽयादेशः। व्यतिभवमानानाम्। 'ह्रस्वनद्यापो नुडि'ति नुट्। ह्रस्वान्तस्याङ्गस्य नाम्परत्वेन 'नामी'ति दीर्घः। 'सुपि चे'त्येव वा, व्यतिभवमाने। 'आद्गुणः'। व्यतिभवमानेषु। एत्वे षत्व, व्यतिभवमानस्येदं व्यातिभवमानम्। अत्रासामानाधिकरण्ये शानच्। 'तस्येद'मित्यण्यादिवृद्धिः। 'न य्वाभ्यां पदान्ताभ्यां पूर्वौ तु ताभ्यामैजि'ति पदान्ताभ्या यकारवकाराभ्यां परस्याचामादेरचो वृद्धिर्न भवति किं तु ताभ्यां

पूर्वमैज् भवति तद्धिते ञ्णिति किति वा परइत्येतस्य 'न कर्मव्यतिहार'- इति निषेधः ।

अथ स्त्रियाम् ॥ व्यतिभवमाना ॥ 'अजाद्यतष्टाप्' ॥ अजादिगण-पठितादकारान्ताच्च प्रातिपदिकात् स्त्रियां टाबिति टाप् । पकारः सामान्यग्रहणार्थः, टकारस्तदविघातार्थः । अत्र शानचः स्थानिवत्त्वेन टित्त्वा'ट्टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयप्ठक्ठञ्कञ्क्वरप्*ख्युना'मिति यथा कथं चित् टितः प्रातिपदिकाड्ढाद्यन्ताच्चानुपसर्जनात् स्त्रिया विधीयमानो ङीप्, ट एव इद् यस्य स टिदित्यवधारणस्याश्रयणाल्लटश्च द्व्यनुबन्धकत्वान्न भवति, सामगीत्यादौ टको ऽनेकानुबन्धकत्वेऽपि टित्त्वसामर्थ्यात् ङीप्, लटस्तु टित्त्वमेत्वाद्यर्थतया सावकाशम् । 'हल्ङ्या'दिना सुलोपः । व्यतिभवमाने । 'औङ आप' इत्यापः परत्वेनौङः शीभावे गुणः । ईकारप्रत्ययपरत्वेन 'यस्ये'ति लोपो न भवति । 'औङः श्यां परे प्रतिषेध' इति निषेधात् । व्यतिभवमानाः । सवर्णदीर्घः । हे व्यतिभवमाने । 'संबुद्धौ चे'त्याप एत्वम् । एङः परत्वात्सोर्लोपः । व्यतिभवमानया । 'आङि चाप' इत्येत्वे ऽयादेशः । आङिति तृतीयैकवचनस्य पूर्वाचार्यसञ्ज्ञा । चकारादोसि च, व्यतिभवमानायै । 'याडाप' इति आपः परस्य ङिद्वचनस्य याडागमष्टित्त्वादादिः । 'वृद्धिरेची'ति वृद्धिः । व्यतिभवमानायाः । व्यतिभवमानयोः । 'आङि चाप' इत्येत्वेऽयादेशः । व्यतिभवमानानाम् । 'ह्रस्वनद्यापो नुडि'ति नुट् । व्यतिभवमानायाम् । ङेरामादेशः, व्यतिभवमानासु ।

अथ नपुंसकम् ॥ व्यतिभवमानम् । 'अतोमि'त्यम्भावः । व्यतिभवमाने । 'नपुंसकाच्चे'ति शीभावे पूर्ववदौङः श्यामिति यस्येतिलोपनिषेधः । व्यतिभवमानानि । 'जश्शसोः शिः'॥ 'नपुसकस्य झलच' इति नुम् । सर्वनामस्थाने चासंबुद्धा'विति नान्तस्याङ्गस्योपधाया दीर्घः । हे व्यतिभवमानेत्यत्रा'तोमि'त्यम्भावेऽमि पूर्वत्वे 'एङ्ह्रस्वा'दिति सबुद्धेर्हलो मकारस्य

* ख्युनामिति २ पु· नास्ति ।

लोपः । तृतीयादि पुल्लिङ्गवत् । 'लृटः सद्वे'ति लट इव लृटोपि शतृशानचोर्विधानाद् भविष्यदित्यादि लड्वत् सर्वमुदाहार्यम् । तत्र स्त्रियां नपुंसके द्विवचने चा'च्छीनद्योर्नुमि'ति नुम्विकल्पो विशेषः । अत्रानुवृत्त शतृग्रहणं स्वावयवे वर्त्तते । तेनावर्णान्तादङ्गात् परो य. शत्रवयवस्तदन्तस्याङ्गस्य शीनद्योः परयोर्वा नुमिति सूत्रार्थः, अथ वा अवर्णान्तादङ्गात् शीनद्योः परयोः शत्रन्तस्य वा नुमिति । तत्र येन नाव्यवधानमिति तकारेण व्यवधानमाश्रयिष्यते, अवर्णान्तादङ्गात्परो यः शता तदन्तस्याङ्गस्येति सूत्रार्थो नोक्तः । अङ्गान्तस्य शत्रवयवस्य चान्तरङ्गत्वात्नुमः पूर्वमेकादेशे व्यपवर्गाभावादवर्णान्ताङ्गात्परस्य शतुरसम्भवात् । न चान्तादिवद्भावः, 'उभयत आश्रये नान्तादिवदि'ति निषेधात्, भूतपूर्वगत्याश्रयणे तु लुग्विकरणादावदती घ्नतीत्यादावपि स्यात् । व्यतिभविष्यमाण इत्यादा'वट्कुप्वाङ्नुम्व्यवायेऽपी'ति णत्वम् । अडादिभिर्व्यवायेपि रषाभ्यां परस्य समानपदस्थस्य नो ण इति सूत्रार्थः । भविष्यन्नित्यत्र तु 'पदान्तस्ये'ति निषेधान्न भवति ॥

अथ सनादयः प्रदर्श्यन्ते ॥ 'धातोः कर्मणः समानकर्तृकादिच्छायां वा' ॥ यो धातुरिषिकर्म समानकर्तृकश्चार्थद्वारेण तस्मादिच्छायां वा सन् स्यात्, नकारो निर्देशाद्यर्थः ॥ 'सनि ग्रहगुहोश्च' ॥ ग्रहिगुहिभ्यामुगन्तादेकाचश्च परस्य सनो नेडितीड्निषेधः । 'इको झल्' इति इगन्ताद्धातोः परस्य झलादेः सनः कित्त्वान्न गुणः ॥ 'सन्यङोः' ॥ एतदन्तस्य प्रथमैकाचो द्वे भवतो ऽजादेस्तु द्वितीयस्येति द्वित्वेऽभ्यासकार्यम् । 'सनाद्यन्ता धातव' इति सनादिणिङ्पर्यन्तानां प्रत्ययान्तानां धातुत्वात्पूर्ववल्लडादिषु तिबादयः । बुभूषतीत्यादि । लिटि तु ॥ 'कास्प्रत्ययादाममन्त्रे लिटि' ॥ कासप्रत्ययान्ताच्च धातोर्लिटि परे आम्प्रत्यय इत्याम् । अकारो मकारपरित्राणाय । सूत्रे त्वत एव निर्देशात्पररूपम् । आमश्चार्द्धधातुकत्वादतो लोप आर्द्धधातुकइति सनोऽकारस्य लोपः । 'आमः' इत्यामः परस्य लेर्लुक् । प्रत्ययलक्षणत्वेन कृदन्तत्वादुत्पन्नस्य सुपः स्वरादिष्वामिति पाठादव्ययत्वाल्लुक् । तत्र यद्यमा साहचर्यादामपि तद्धित एवेत्युच्यते तर्ह्या'म' इत्येव

लुभविष्यति । लिङ्ग्रहणं तु तत्र निवर्त्तिष्यते । अत्रामन्तस्याव्यक्तपदार्थकत्वात्पदत्वाय प्रथमातिक्रमे कारणाभावान्मुरेोऽन्यद्यते । तस्य हल्ङ्यादिलोपः सिद्ध इति किं लुको विधानेनेति । यदा तु प्रयोगवशाद् द्वित्वाद्यभिव्यक्तौ द्विवचनाद्युत्पद्यते तदर्थं लुगेषितव्यः॥ 'कृञ् चानुप्रयुज्यते लिटि'॥ आमन्तस्य पश्चादेवाव्यवहिता एव कृभ्वस्तय एव लिट्पराः प्रयोक्तव्याः। अत्र 'भूततद्भावे कृभ्वस्ती'ति कृशब्दस्य कृञो द्वितीयेति ञकारेण प्रत्याहारनिर्देशात् कृञिति कृभ्वस्तय उच्यन्ते। बुभूषा चकार। बुभूषां बभूव। अत्र 'मोनुस्वारः'॥ पदान्तस्य मोनुस्वारो हलीत्यनुस्वारे तस्य 'वा पदान्तस्ये'ति यजि परे विधीयमानः परसवर्णविकल्पो भवति। अनुस्वारः पक्षउदाहार्यः। 'आम्प्रत्ययवत् कृञोऽनुप्रयोगस्ये'त्यत्र पूर्ववदित्यनुवृत्त्या पूर्ववत् कृञोऽनुप्रयोगस्येति द्वितीयोऽपि योगः सपद्यते। तत्राद्य आम्प्रत्ययप्रकृतेरिवाकर्त्रभिप्रायेप्यनुप्रयुज्यमानस्य कृञ आत्मनेपदं प्राकरणिकं विधत्ते। द्वितीये त्वर्थात् पूर्वस्येव कर्त्रभिप्राये परस्मैपदमित्यत्र आम्प्रकृतेः शेषत्वेन नित्यपरस्मैपदित्वात् कृञोऽपि परस्मैपदमेव । इदमेव कृञ्ग्रहणमनुप्रयोगे कृञिति प्रत्याहारग्रहणमिति ज्ञापयति । अन्यथाऽनुप्रयोगस्येत्येव ब्रूयात् । बुभूषामास । अत्र 'स्तेर्भू'रित्यार्द्धधातुके विषये विधीयमानो भूभावोऽनुप्रयोगे प्रत्याहारग्रहणसामर्थ्यान्न भवति। अन्यथा प्रतिपत्तिलाघवाय कृभ्वित्येव ब्रूयात्। बुभूषिता। इट्यतो लोपो गुणं परत्वाद् वार्णादाङ्गमिति वा बाधते । बुभूषिष्यति । बुभूषतु । अबुभूषत् । बुभूषेत् । आशिषि । बुभूष्यात् । 'अतो येयो' न भवति। आर्द्धधातुकत्वात् । अत्र'कृत्सार्वधातुकयोर्दीर्घ' इति अकृद्यकारेऽसार्वधातुके च परेऽजन्तस्याङ्गस्य विधीयमानो दीर्घो 'ण्यल्लोपावियङ्यण्गुणवृद्धिदीर्घेभ्यः पूर्वविप्रतिषेधेने'त्यल्लोपेन बलीयस्त्वेन बाध्यते । अबुभूषीत् । 'अस्तिसिचोऽपृक्त'इति इडागमे 'इट ईटी'ति सिचो लोपः । 'सिज्लोप एकादेशे सिद्धो वक्तव्य' इति सिज्लोपस्य पूर्वत्रासिद्धत्वाभावात्सवर्णदीर्घः । अबुभूषिषुः । 'सिजभ्यस्तेति' जुस् । अबुभूषिष्यत्

अथात्मनेपदम् ॥ व्यतिबुभूषते । व्यतिबुभूषां चक्रे । 'आम्-

प्रत्ययवदि'ति नित्यस्तङ् क्ङः । व्यतिबुभूषां बभूव । आसेति वा । व्यतिबुभूषितासे । व्यतिबुभूषिष्यते । व्यतिबुभूषताम् । व्यत्यबुभूषत । व्यतिबुभूषेत । आशिषि व्यतिबुभूषिषीष्ट । व्यत्यबुभूषिष्यत । सर्वत्र 'पूर्ववत्सन' इति तङ् । सनः पूर्वो धातुर्येन निमित्तेनात्मनेपदी सनन्तमपि तेनैव तथेत्यर्थः ॥

अथ भावकर्मणोः ॥ बुभूष्यते त्वया । अनुबुभूष्यते सुखम् । यक्य 'कृत्सार्वधातुकयोर्दीर्घ' इति दीर्घं बाधित्वा'तो लोपः' पूर्वविप्रतिषेधेन भवति । बुभूषां चक्रे भवता । अनुबुभूषां चक्रे सुखम् । बुभूषामासइति वा । इहानुप्रयुज्यमानस्यामन्तार्थाभिव्यक्तिमात्रकरत्वात् करोतेर्भावे, इतराभ्यामकर्मकत्वाद् भावउपपद्यते । प्रयुज्यते चैवं'रोमन्थमन्थरचलद्गुरुसास्नमासां चक्रे निमीलदलसेक्षणमौक्षकेण' । 'प्रकाशिनाकाशे दिनकरकरान्विक्षिपद्भिस्स्मिताक्षैर्नरेन्द्रैरौपेन्द्रं वपुरथ विशद्धाम वीक्षां बभूव' इति । 'इ एति' इत्यस्तेर्हत्व तासिसाहचर्यात्सार्वधातुकोत्तमैकवचने एवेतीह 'लिटस्तझयो'रिति तशब्दस्यैशीटश्चैत्वे न भवतीति । के चित्तु तासेरुत्तमैकवचनमेकारः संभवतीत्येतावन्मात्रसाहचर्याश्रयेण लिडुत्तमैकवचनेपि हत्वमिच्छन्ति । तत्र साहचर्यसंकोचे कारणं न विद्मः । लङ्लृटोराशीर्लिङि लुङि च कर्तृवदेव रूपम् । न च चिण्वदिटि वृद्धौ चा'तो युक् चिण्कृतो'रित्याकारान्तस्य चिणि ञ्णिति कृति च परे युको विधानाद्रूपभेदप्रसङ्गः, णयल्लोपावित्यादिना वृद्धेरतो लोपेन बाधस्योक्तत्वात् । लुङेकवचने तु चिणो विधानात् तत्राबुभूषीति विशेषः । तथा लोटि लङि विध्यादिलिङि कर्तृवत् प्रक्रिया । यक् तु विशेषः । कर्मकर्तरि 'भूषाकर्मकिरादिसनां चोपसंख्यानमन्यत्रात्मनेपदा'दिति यक्चिणोर्निषेधात्सर्वत्र कर्तृवद्रूपम् । वत्करणात्स्वाश्रये भावे लकारे यक्चिणोर्विषये कर्मवद्रूपम् । कर्तरि तृतीया विशेषः । अभिबुभूष्यते शत्रुणा स्वयमेवेत्यादि । इच्छायाः कर्तृस्थत्वेन कर्मस्थत्वाभावेऽपीष्यमाणस्य प्राधान्यात्तस्य च कर्मस्थत्वादस्ति कर्मवद्भावः । अत एव 'भूषाकर्मेति' यक्चिणौ निषिध्येते ॥

अथ यङ् ॥ 'धातोरेकाचो हलादेः क्रियासमभिहारे यङ्' ॥ पौनः-

लुभविष्यति । लिङ्ग्रहणं तु तत्र निवर्त्तिष्यते । अत्रामन्तस्याव्यक्तपदार्थकत्वात्पदत्वाय प्रथमातिक्रमे कारणाभावात्सुरेवोत्पद्यते । तस्य हल्ङ्यादिलोपः सिद्ध इति किं लुको विधानेनेति । यदा तु प्रयोगवशाद् द्वित्वाद्यभिव्यक्तौ द्विवचनाद्युत्पद्यते तदर्थं लुगेषितव्यः॥ 'कृञ् चानुप्रयुज्यते लिटि' ॥ आमन्तस्य पश्चादेवाव्यवहिता एव कृभ्वस्तय एव लिट्पराः प्रयोक्तव्याः । अत्र 'भूततद्भावे कृभ्वस्ती'ति कृशब्दस्य कृञो द्वितीयेति ञकारेण प्रत्याहारनिर्देशात् कृञिति कृभ्वस्तय उच्यन्ते । बुभूषां चकार । बुभूषां बभूव । अत्र 'मोनुस्वारः'॥ पदान्तस्य मोनुस्वारो हलीत्यनुस्वारे तस्य 'वा पदान्तस्ये'ति यञि परे विधीयमानः परसवर्णविकल्पो भवति । अनुस्वारः पक्ष उदाहार्यः । 'आम्प्रत्ययवत् कृञो ऽनुप्रयोगस्ये'त्यत्र पूर्ववदित्यनुवृत्त्या पूर्ववत् कृञो ऽनुप्रयोगस्येति द्वितीयो ऽपि योगः सपद्यते । तत्राद्य आम्प्रत्ययप्रकृतेरिवाकर्त्रभिप्रायेप्यनुप्रयुज्यमानस्य कृञ आत्मनेपद प्राकरणिकं विधत्ते । द्वितीये त्वयंात् पूर्वस्येव कर्त्रभिप्राये परस्मैपदमित्यत्र आम्प्रकृतेः शेषत्वेन नित्यपरस्मैपदित्वात् कृञो ऽपि परस्मैपदमेव । इदमेव कृञ्ग्रहणमनुप्रयोगे कृञिति प्रत्याहारग्रहणमिति ज्ञापयति । अन्यथा ऽनुप्रयोगस्येत्येव ब्रूयात् । बुभूषामास । अत्रा 'स्तेर्भू'रित्यार्द्धधातुके विषये विधीयमानो भूभावो ऽनुप्रयोगे प्रत्याहारग्रहणसामर्थ्यान्न भवति । अन्यथा प्रनिर्प[illegible] कृभ्वित्येव ब्रूयात् । बुभूषिता । इट्यतो लोपो गुणं परत्वाद् वाणोदाङ्गमिति वा बाधते । बुभूषिष्यति । बुभूषतु । अबुभूषत् । बुभूषेत् । आशिषि । बुभूष्यात् । 'अतो येयो' न भवति । आर्द्धधातुकत्वात् । अत्रा 'कृत्सार्वधातुकयोर्दीर्घ' इति अकृद्यकारे ऽसार्वधातुके च परे ऽजन्तस्याङ्गस्य विधीयमानो दीर्घो 'णयल्लोपाविपङ्यणगुणवृद्धिदीर्घेभ्यः पूर्वविप्रतिषेधेने'त्यल्लोपेन बलीयस्त्वेन बाध्यते । अबुभूषीत् । 'अस्तिसिचो ऽपृक्त'इति इडागमे 'इट ईटी'ति सिचो लोपः । 'सिज्लोप एकादेशे सिद्धो वक्तव्य' इति सिज्लोपस्य पूर्वत्रासिद्धत्वाभावात्सवर्णदीर्घः । अबुभूषिषुः । 'सिजभ्यस्तेति' जुस् । अबुभूषिष्यत्

अथात्मनेपदम् ॥ व्यतिबुभूषते । व्यतिबुभूषां चक्रे । 'आम्-

प्रत्ययवदि'ति नित्यस्तङ् क्नञः । व्यतिबुभूषां बभूव । आसेति वा । व्यतिबुभूषितासे । व्यतिबुभूषिष्यते । व्यतिबुभूषताम् । व्यत्यबुभूषत । व्यतिबुभूषेत । आशिषि व्यतिबुभूषिषीष्ट । व्यत्यबुभूषिष्यत । सर्वत्र 'पूर्ववत्सन' इति तङ् । सनः पूर्वो धातुर्येन निमित्तेनात्मनेपदी सनन्तमपि तेनैव तथेत्यर्थः ॥

अथ भावकर्मणोः ॥ बुभूष्यते त्वया । अनुबुभूष्यते सुखम् । यक्य- 'कृत्सार्वधातुकयोर्दीर्घ' इति दीर्घं बाधित्वा'तो लोपः' पूर्वविप्रतिषेधेन भवति । बुभूषां चक्रे भवता । अनुबुभूषां चक्रे सुखम् । बुभूषामासइति वा । इहानुप्रयुज्यमानस्यामन्तार्थाभिव्यक्तिमात्रकरत्वात् करोतिर्भावे, इतराभ्यामकर्मकत्वाद् भावउपपद्यते । प्रयुज्यते चैव'रोमन्थमन्थरचलद्गुरुसास्नामासां चक्रे निमीलदलसेक्षणमौक्षकेण' । 'प्रकाशेनाकाशे दिनकरकरान्विक्षिपद्भिस्मितालैर्नरेन्द्रैरौपेन्द्रं वपुरथ विशङ्काम वीचां बभूव' इति । 'ह एति' इत्यस्तेर्हत्व तासिसाहचर्यात्सार्वधातुकोत्तमैकवचने एवेतीह 'लिटस्तझयो'रिति तशब्दस्यैशीटश्चैत्वे न भवतीति । के चित्तु तासेरुत्तमैकवचनमेकारः सम्भवतीत्येतावन्मात्रसाहचर्याश्रयेण लिडुत्तमैकवचनेपि हत्वमिच्छन्ति । तत्र साहचर्यसङ्कोचे कारणं न विद्मः । लङ्लृटोराशीर्लिङि लुङि च कर्तृवदेव रूपम् । न च चिण्वदिटि वृद्धौ चा'तो युक् चिण्कृतो'रित्याकारान्तस्य चिणि ञ्णिति कृति च परे युको विधानाद्रूपभेदप्रसङ्गः, णयल्लोपावित्यादिना वृद्धेरतो लोपेन बाधस्योक्तत्वात् । लुङेकवचने तु चिणो विधानात् तत्राबुभूषीति विशेषः । तथा लोटि लङि विध्यादिलिङि कर्तृवत् प्रक्रिया । यक्तु विशेषः । कर्मकर्त्तरि 'भूषाकर्मकिरादिसना चोपसंख्यानमन्यत्रात्मनेपदा'दिति यक्चिणोर्निषेधात्सर्वत्र कर्तृवद्रूपम् । तत्करणात्स्वाश्रये भावे लकारे यक्चिणोर्विषये कर्मवद्रूपम् । कर्त्तरि तृतीया विशेषः । अभिबुभूष्यते शत्रुणा स्वयमेवेत्यादि । इच्छायाः कर्तृस्थत्वेन कर्मस्थत्वाभावेऽपीष्यमाणस्य प्राधान्यात्तस्य च कर्मस्थत्वादस्ति कर्मवद्भावः । अत एव 'भूषाकर्मेति' यक्चिणौ निषिध्येते ॥

अथ यङ् ॥ 'धातोरेकाचो हलादेः क्रियासमभिहारे यङ्' ॥ पौनः-

पुन्य भृशार्थो वा क्रियायां समभिहारस्तत्र द्योत्ये एव विधाद्धातोर्यङ् स्यात् । द्विर्वचनादि पूर्ववत् । 'गुणो यङ्लुकोः' ॥ यङि यङ्लुकि चाभ्यासस्येको गुण इति गुणः । बोभूयते । 'अनुदात्तङित' इत्यादिना ऽऽत्मनेपदम् । यङो ङकारस्य गुणप्रतिषेधार्थत्वेनावयवे चरितार्थत्वान्न समुदायार्थत्वमिति यङन्तस्य धातोरङित्त्वात्कथमात्मनेपदमिति नाशङ्क्यम्, तत्र धातुग्रहणाभावात् ङिन्मात्रात्परस्य तस्य तद्विधेः । अनुदात्तेतो ये धातवो ङितश्चेति प्रायिकाभिप्राय वृत्तिकारवचनम् । अथ वा 'ङितश्चे'-त्यत्र शब्दादित्यध्याहार्यम् । अत एवानुदात्तेतो ङितश्च ये धातव इति नोक्तम् । चङादिष्वतिप्रसङ्गपरिहारस्तत्र तत्र वक्ष्यते । बोभूय्यते त्वया । अनुबोभूय्यते सुखमित्यादि सनन्तवत्प्रक्रिया । कर्मवत्कर्मकर्ता । लुङि तशब्दे 'अचःकर्मकर्तरी'ति चिणो विकल्पनात्पक्षे सिजपि भवति । तेनाभ्यबोभूयि शत्रुः स्वयमेव, अभ्यबोभूष्ट इति च । वत्करणाद्भावे लकारे नित्यं चिणेव । अभ्यबोभूयि शत्रुणा स्वयमेवेति ॥

अथ यङ्लुक् ॥ 'यङोऽचि' च ॥ यङोऽचि प्रत्यये नित्यं लुक् । चकारेण बहुलग्रहणानुकर्षणादय विकल्पेनानैमित्तिकोऽपि । प्रत्ययलक्षणेन यङन्तत्वाद्धातुत्वे लडादि । द्विर्वचनम् । आत्मनेपद तु ङिन्मात्रात्तद्विधेः प्रत्ययलक्षणत्वाभावान्न भवति । 'चर्करीत परस्मैपदि अदादिवच्चे'ति वचनाद् 'अदिप्रभृतिभ्यः शपः' । इत्यदादिभ्य उत्तरस्य शपो विधीयमानो लुग्यङ्लुगन्तेऽपि भवति । चर्करीतमिति यङ्लुगन्तस्य पूर्वाचार्यव्यपदेशः । अत्र परस्मैपदीत्यनुवादो न विधिरित्याहुः ॥ 'यङो वे'ति यङ्लुगन्तात्परस्य हलादेः पितः सार्वधातुकस्य वा ईडागमः । बोभवीति । बोभोति । 'भूसुवोस्तिङी'ति गुणनिषेधोऽत्र न भवति 'दाधर्त्ती'सूत्रे बोभूत्विति गुणाभावार्थान्निपातनाज् ज्ञापकात् । इदमेव प्रकृतिग्रहणे यङ्लुगन्तस्यापि ग्रहणमित्यत्र ज्ञापकम् । बोभूतः । बोभुवति ॥ 'अदभ्यस्तात्' ॥ अभ्यस्तादङ्गात्परस्य प्रत्ययादेर्झकारस्यादित्यदादेशे उवङादेशः ॥ 'उभे अभ्यस्तम्' ॥ अस्मिन्प्रकरणे ये द्वे विहिते ते उभे अपि समुदिते अभ्यस्तम् । तथा 'जक्षित्यादयः षडि'ति । जक्ष एतदादयो जागृ दरिद्रा शास् दीधीङ् वेवीङ्

चकास्, बोभवां चकार । पूर्ववत् कृञोऽनुप्रयोगस्येति कृञो नित्यं परस्मैपदम् । बोभविता । बोभविष्यति । बोभवीतु । बोभोतु । बोभूतादित्यत्र तातङो ङित्त्वाच्च गुणः । 'सार्वधातुकमपिदि'त्यस्य प्रसज्यप्रतिषेधत्वात्तत्र च ङिदित्यनुवृत्तिस्तस्य च श्रूयमाणस्य पितश्चोद्देश्योपादेयत्वव्यत्ययेन पिच्च ङित् ङिच्च पिदित्यर्थद्वयस्य भाष्ये समाश्रयणात्तातङः स्थानिवत्त्वप्राप्तपित्त्वं ङित्त्वेनानवकाशेन निवार्यतइति ईडभावः । बोभूहि । 'सेर्ह्यपिच्चे'ति पित्त्वनिषेधादीड्गुणौ न भवतः। बोभूवानि। बोभवाव। आडुत्तमस्य पित्त्वात् उवङ् बाधित्वा परत्वाद्गुणो भवति । अहलादित्वादीडभावः । अबोभवीत् । अबोभोत् । अबोभूताम् । आबोभवुः । 'सिजभ्यस्ते'ति जुसि 'जुसि चे'तीगन्तस्याङ्गस्य गुणः। बोभूयात्। यासुटो ङित्वेन पित्त्वस्य निवर्त्तनादीटोभावः। आशिषि त्वनार्धधातुकत्वेन लिङः सलोपाभावो विशेषः। बोभूयुरित्यत्र जुसभावे 'उस्यपदान्तादि'ति पररूपत्वम् । यासुटो जुसभक्तत्वेन 'जुसी'ति गुणोऽत्र न भवति, येन नाप्राप्तिन्यायेन 'सार्वधातुकमपिदि'तित्यदिष्टङित्त्वाश्रयस्य निषेधस्यैव तेन बाधात्, तत्र 'क्सस्याची'त्यतोची-त्यधिकारादजादौ जुसि तद्विधानाद्वा । अबोभोत् । अबोभूवीत् । अबोभूताम् । अबोभूवन् । 'गातिस्थे'ति सिचो लुक् । 'यङो वे'तीटो विकल्पः । सिचः प्रत्ययलक्षणेना'स्तिसिच' इति नित्यस्तु न भवति, श्रूयमाणे सिचीत्युक्तत्वात् । ईट्पक्षे 'भुवो वुगि'त्यजादिलक्षणो वुङ्नित्यत्वाद्गुणं बाधते । अबोभूवन्नित्यत्र सिचः प्रत्ययलक्षणेन 'सिजभ्यस्ते'ति जुसभाव 'आत' इति नियमाच्च भवति । अभ्यस्ताश्रयस्तु विदिसाहचर्याल्लङ्विषय इति नेह प्रसज्यते । विदेर्ह्यव्यवहितो झिर्लङ्येव संभवति । न च सिचा साहचर्याल्लुङ्विषयोऽपि स्यादिति वाच्यम् । 'विप्रतिषेधे परमि'ति परसाहचर्यस्य बलीयस्त्वात् । अबोभविष्यदित्यादि ॥

अथात्मनेपदम् ॥ व्यतिबोभूते । व्यतिबोभुवाते । अजादावुवङ् । व्यतिबोभवां चक्रे । व्यतिबोभवा बभूव । 'आम्प्रत्ययवदि'ति कृञो नित्यं तङ् । व्यतिबोभवितासे । व्यतिबोभविष्यते । व्यतिबोभूताम् । व्यतिबोभुवाताम् । अजादावुवङ् । उत्तमे पित्वाद् गुणः । व्यतिबोभवै । व्यत्य-

बोभूत । व्यत्यबोभुवाताम् । व्यत्यबोभुवि । पूर्ववदुवङ्जादौ । व्यतिबोभुवीत । व्यतिबोभुवीयाताम् । व्यतिबोभुवीय । पूर्ववदजादावुवङ् । आशिषि व्यतिबोभविषीष्ट । आर्द्धधातुकत्वादिड्गुणौ । ध्वमि 'विभाषेट' इति मूर्द्धन्यविकल्पो द्रष्टव्यः । व्यत्यबोभविष्ट । ध्वमि पूर्ववन्मूर्द्धन्यविकल्पः । व्यत्यबोभविष्यत । भावकर्मणोः कर्मकर्त्तरि च बोभूयते त्वयेत्यादि सर्वं प्रकृतिवत्तेयमभ्यास एको विशेषः ॥

अथ सत् ॥ बोभुवद् ब्राह्मणः । उगिल्लक्षणो नुम् 'नाभ्यस्तादि'ति निषिध्यते । बोभुवती स्त्री । बोभुवती कुले । स्त्रियां नपुंसकद्विवचनयोश्च नित्यत्वादन्तरङ्गत्वाच्च नुमः पूर्वं शपो लुग्भवत्यत 'आच्छीनद्यो'रिति विकल्पितो नुम् न भवति । नापि 'शप्श्यनोरि'ति नित्यस्तस्यावर्णात्परशतृविषयत्वात् । न च प्रत्ययलक्षणेनात्परत्व, तस्याप्रत्ययलक्षणत्वात् । बोभुवति कुलानि । बोभुवन्ति कुलानीत्यत्र तु शौ 'नाभ्यस्ता'दिति निषेधस्य 'वा नपुंसकस्ये'ति विकल्पनात् पक्षे नुम् भवति । व्यतिबोभुवानः । लडादेशस्य तु स्येन व्यवधानादभ्यस्तात्परत्वाभावा'च्चाभ्यस्ता'दिति निषेधो न भवति । नापि 'वा नपुंसकस्ये'ति विकल्प इति सर्वं प्रकृतिवत् ॥

अथ णिच् ॥ 'हेतुमति च' ॥ स्वतन्त्रस्य कर्तुः प्रयोजको हेतुः तद्व्यापारः प्रेषणादिर्हेतुमान् स च कर्त्ता मा विरंसीदिति तत्र धातोर्णिच् स्यात् । णकारो वृद्ध्यर्थः । चकारो णिच्णिङोः सामान्यग्रहणाविघातार्थः । सनाद्यन्तत्वाद्धातुत्वे लडादयः । तेषां 'णिचश्चे'ति क्रियाफलस्य कर्तृगामित्वे तङ् । अन्यथा तु परस्मैपदम् । भावयते सस्यम् । भावयति सस्यम् । यदा तु फलस्य कर्तृगामित्वमुपपदेन प्रतीयते तदा 'विभाषोपपदेन प्रतीयमान'इति परस्मैपदमपि भवति, स्वस्य सस्य भावयतीति । यदा चित्तवत्कर्तृकादकर्मकादस्माण्णिच् तदा क्रियाफलस्य कर्तृगामित्वे'ण्यणावकर्मकाच्चित्तवत्कर्तृकादि'ति परस्मैपदम् । पुत्रं भावयतीति ॥ 'विभाषोपपदाद'प्ययमेवविप्रतिषेधेन' ॥ स्वं पुत्रं भावयतीति । 'गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणामणि कर्त्ता स णा'वित्यणौ कर्ता णौ कर्म । भावयां चक्रे,

चकार, बभूव, आस। 'अयामन्ताल्वाय्येत्न्विष्णुष्वि'ति आमादिषु विधीयमानो णेरयादेशो 'णेरनिटी'त्यनिडादावार्द्धधातुके विधीयमान णिलोपमपवादत्वाद्बाधते। यदायं णयन्तः चित्तवत्कर्तृकत्वेन नित्य परस्मैपदी तदा तु प्रयुक्तः करोतिरपि पूर्ववत् कृञोनुप्रयोगस्येति भिन्नेन कल्पितेन योगेन परस्मैपद्येव। भावयिता इत्यादि प्रकृतिवत्। आशीर्लिङि 'णेरनिटी'ति णिलोपः, स चा'कृत्सार्वधातुकयो'रिति दीर्घं णयल्लोपाविन्यादिना बाधतइति भाव्यादित्यादि भवति। आत्मनेपदे त्विडादित्वाणिलोपो नेति गुणायादेशयोर्भावयिषीष्टेत्यादि। ध्वमि 'विभाषेट' इति मूर्द्धन्यविकल्पः। लुङि 'णिश्रिद्रुस्रुभ्यः कर्त्तरि चङि'ति सिजपवादश्चङ्। चकारङकारौ विशेषणार्थौ, णिलोपः। 'णौ चङ्युपधाया ह्रस्व' इति चङ्परे णावङ्गस्योपधाया ह्रस्वः। 'चङी'त्यनभ्यासस्य चङ्परस्य धातोः प्रथमस्यैकाचो ऽजादेस्तु द्वितीयस्येति द्विर्वचने कर्त्तव्ये णौ कृत स्थानिवदिति रूपस्थानिवत्त्वे भूशब्दो भौशब्दो वा द्विरुच्यते। तत्र भौशब्दस्य द्विर्वचनपक्षेऽपि 'ह्रस्व' इति भौशब्दस्य ह्रस्वो भवत्येव। 'एच इग्घ्रस्वादेश'इति नियमादिभवत्रान्तरतम्यादुकारः। तस्य च 'ओः पुयण्ज्यपर'इतीकारः। उवर्णान्तस्याभ्यासस्यावर्णपरे पवर्गे यणि जकारे च परत इकार इति सूत्रार्थः। तस्य 'दीर्घो लघो'रिति दीर्घः। चङ्परे णौ यदङ्ग तदभ्यासस्य लघोर्लघुनि धात्वक्षरे परे दीर्घो भवति अनग्लोपइति सूत्रार्थः। इदमेवेत्ववचन ज्ञापकं णौ कृतस्य स्थानिवत्त्वे। अन्यथोवर्णान्ताभ्यासो न कश्चिदपि स्यात्। नन्वत्र 'सन्वल्लघुनि चङ्परे ऽनग्लोप'इति चङ्परे णौ यदङ्गं तदभ्यासस्य लघुनि परेऽनग्लोपे सन्वत्कार्यातिदेशादित्व सिद्ध, सन्वत्कार्यं चेत्वमेव। 'सन्यत' इति सनि परेऽभ्यासाकारस्येत्वविधानात्कि णौ कृतस्य स्थानिवत्त्वेन येनोःपुयण्जीति वक्तव्यं स्यात्सत्य,मत्र सन्वद्भावेनापि सिद्ध्यति, जुहावयिषतीत्यादावप्येवं स्यात्। अबीभवत्। नन्वत्र यङ इव चङो ङित्त्वेन तङ् स्यादिति चेत्, न। विकरणात्पूर्वं नियमाप्रवृत्तेः। अत्र च ज्ञापकं 'वृद्भ्यः स्यसनो'रिति स्यसनोस्तङो विकल्पनम्। पूर्वं तु विकरणे तेन

व्यवधानान्नानुदात्तेतोऽनन्तरस्तङस्ति नापि शेषादित्यात्मनेपदपरस्मैपदनियमयोश्चाप्रसङ्गादेवात्मनेपदपरस्मैपदयोर्लस्य तिबादय इति सामान्येन लसिद्धेः किमनेन विकल्पवचनेन ॥

अथ कर्मणि ॥ णयन्तस्य सकर्मकत्वाद्भावासंभवः । तत्र लट्लोट्लङ्विध्यादिलिङ्क्षु यकि विकरणे णिलोपे भाव्यते । भाव्यताम् । अभाव्यत । भाव्येतेत्यादि । अतो ऽन्येषु लुङ्व्यतिरिक्तेषु कर्तृवद्रूपम् । लुङि तु कर्तरि चङो विधानात्सिजेव । तशब्दे तु चिणि अभावि । अभावयिषातामित्यादि । तत्र चिणि णिलोपः । अन्यत्र गुणायादेशौ, ध्वमि 'विभाषेट' इति मूर्द्धन्यविकल्पः । स्यादिषु चिण्वदिट्पक्षे 'असिद्धवदत्राभादि'ति चिण्वदिटो ऽसिद्धत्वाण्णिलोपे भाविष्यते । अभाविष्यत । अभाविषाताम् । भाविषीष्ट । भावितेत्याद्यपि द्रष्टव्यम् । अत्रापि षीध्वलुङोर्धकारस्य पूर्ववद्वा मूर्द्धन्यः । कर्मकर्त्तरि तु 'यक्चिणोः प्रतिषेधे णिश्रन्थिग्रन्थिब्रूञात्मनेपदाकर्मकाणामुपसंख्यान'मिति यक्चिणोर्निषेधाद्यथायोगं सर्वत्र कर्तृवद्रूपं स्यादिषु तु कर्मवत् । तत्करणाद्भावे तु कर्मवदुदाहार्यं, कर्त्तरि तृतीया विशेषः । णिश्रन्थीति यक्चिणोर्निषेधः कर्मकर्त्तरीति लस्त* एव ॥

अथः कृतः प्रदर्श्यन्ते ॥ भव्य भवता । अनुभव्यो घटः । 'अचो यदि'ति यत् । अयं 'कर्त्तरि कृदि'ति कर्त्तरि प्राप्तोऽपि 'कृत्याः प्राङ् ण्वुलः' ॥ इति तव्यादीनां ण्वुलः प्रावा कृत्यसञ्ज्ञाविधानात् 'तयोरेव कृत्यक्तखलर्था' इति भावकर्मणोर्नियम्यते । 'भव्यगेयप्रवचनीयोपस्थानीयजन्याप्लाव्यापात्या वा' इतिनिपातनात् कर्त्तरि अपि भवति । अत्र वाग्रहणा'त्तयोरेवे'ति सामान्यस्य बाधां विज्ञापयति । उदाहरणेषु गुणे 'वान्तो यि प्रत्यये' इत्यवादेशः । अत्र वान्त इति पूर्वसूत्रनिर्दिष्टाववावावुच्येते, तौ च तत्र यथासख्यादोदौतोरितीहापि तथैव । अनेन विशेषविहितेन यता सामान्यविहितानां तव्यत्तव्यानीयरां न बाधः ।

* इह स्त एवेति २ पु॰ पा॰ ।

'वाऽसरूपो ऽस्त्रिया'मित्यस्याधिकारविहितस्यासरूपप्रत्ययस्य पक्षे बाधकत्ववचनात् । तव्यतव्यतोः स्वरे षष्ठीसमासनिषेधे च विशेषः । भवितव्य, भवनीयम् । अनीयरो रेफ 'उपोत्तमं रिती'त्युपोत्तमस्योदात्तार्थः । अवश्यभाव्यम् । 'ओरावश्यक'इत्यवश्यंभावे द्योत्यउवर्णान्तलक्षणो ण्यत् । वृद्धौ 'वान्त' इत्यावादेशः । पूर्ववदनेनापि तव्यादीनां न बाधः । यत्तु सरूपत्वाद्बाध्यते 'नानुबन्धकृतमसारूप्यमि'त्युक्तम् । अवश्यमो मकारस्य 'लुम्पेदवश्यमः कृत्ये तुङ्काममनसोरपी'ति समासे लोपः । समासस्तु 'मयूरव्यंसकादयश्चे'ति तत्पुरुषः । मयूरव्यंसकादिराकृतिगणः । देवभूयं गतः । देवत्व गत इत्यर्थ. । 'भुवो भाव'इत्यनुपसर्गे सुबन्तउपपदे भुवः क्यप् । कित्त्वाच्च गुणः । अनुपपदादुपसृष्टाच्चाचो यदेव । 'उपपदमतिङि'ति तत्पुरुषो नित्य समासः । उपपदं सुबन्त समर्थेन नित्यं समस्यते समासोतिङन्तश्चेति सूत्रार्थः । इदमेवातिङ्ग्रहणमत्र सुपेत्यस्यासबन्धे ज्ञापकम्, तथा योगविभागेन 'कुगतिप्रादय' इत्यत्रापि सबध्यतइति तत्रापि सुपेत्यस्यासंबन्धं ज्ञापयति । तेन 'गतिकारकोपपदाना कृद्भिः सह समासवचन प्राक् सुबुत्पत्तेरि'ति पूर्वाचार्यपरिभाषार्थः सगृहीतो भवति । अस्य प्रयोजनमुत्तरत्र दर्शयिष्यते । 'तत्रोपपदं सप्तमीस्थमि'ति तृतीये धात्वधिकारे सप्तम्या निर्दिष्टस्योपपदसज्ञा । धात्वधिकारादेव तृतीये धात्वधिकारइति सिद्धे तत्रग्रहणं योगविभागेनाधिकृतेन प्रत्ययपदेन सबध्यते । तेनायमर्थस्तत्रोपपदे सत्येव प्रत्यय इति । अभिभावी । अभिभवतीत्यर्थः । अभिभावीभूत इति, ग्रहादौ णिन्यन्तो निपातितः । परिभवी । परिभावी । अत्रैव निपातनाण्णिनौ पक्षे वृद्ध्यभावः । अभावी । अचामचित्तकर्तृकाणामिति ग्रहादिपाठाण्णिनिः । अत्र प्रतिषिद्धानामित्यनुवृत्तेरयं प्रत्ययो नञ्पूर्वादेव ॥ 'नञ्' ॥ नञ् समर्थेन सुबन्तेन समस्यतइति तत्पुरुषसमासः । 'न लोपो नञ' इति उत्तरपदे नलोपः । 'सर्वनामस्थाने चासंबुद्धावि'ति नान्ताङ्गत्वादुपधादीर्घः सर्वत्र 'इन्हन्पूषार्यम्णा शौ' । 'सौ चे'ति उपधालक्षणादीर्घमात्रस्य शौ सावेवेति नियमादभिभाविनाविन्यादौ न भवति ।

पदान्ते 'न लोपः प्रातिपदिकान्तस्ये'ति नलोपः । संबुद्धौ तु 'न ङिसंबुद्ध्योरि'ति निषेधान्न भवति । परिपूर्वत्वे 'प्रातिपदिकान्तनुम्विभक्तिषु चे'ति समासप्रातिपदिकान्तस्य नकारस्य नुम्विभक्तिस्थस्य पूर्वपदस्थान्निमित्तादुत्तरस्य वा णत्वविधानात् पक्षे परिभाविणाविति णकार उदाहार्यः । संबुद्धौ तु 'पदान्तस्ये'ति निषेधः । ननु च विकल्पमपवादत्वाद्बाधित्वा 'कृत्यचः' इति उपसर्गस्थान्निमित्तात्परस्य कृत्स्थस्याचः परस्य नकारस्य नित्यं विधीयमानं णत्वं स्यात् तच्च मन्मानानीयानीनिष्ठादेशा इति प्रतिपदं परिगण्यते । न चापवादेषु पूर्वत्रासिद्धत्वप्रसङ्गः । नैष दोषः । 'कृत्यच' इत्यस्य 'न भाभूपूकमिगमिप्यायीवेपामि'ति निषेधात् । स्त्रियामृन्नेभ्यो ङीपि अभिभाविनीत्यादि । नपुंसके स्वमोर्लुकि नलोपः । संबुद्धौ तु 'वा नपुंसकानामि'ति नलोपः । अभिभाविन्नित्यादि । शौ तु 'इन्हन्पूषार्यम्णां शावि'ति दीर्घेऽभिभावीनीति । वा सरूपविधिना सर्वत्रात्र ण्वुल्तृचावपि भवतः । अभिभावकः । अभिभवितेत्यादि । तत्र 'युवोरनाकावि'त्यकादेशः । यु वु इत्युत्सृष्टानुबन्धयोः प्रतिज्ञातानुनासिकयोः प्रत्ययर्योर्ग्रहणम् । तृचि तु 'ऋदुशनस्पुरुदंसोऽनेहसां चे'ति असंबुद्धौ सावृकारान्तानामुशनस्पुरुदंसोऽनेहसां चाङ्गानां विधीयमानोऽनङ्ङित्त्वादन्त्यादेशः, 'अप्तृन्तृच्स्वसृनप्तृनेष्टृत्वष्टृक्षत्तृहोतृपोतृप्रशास्तॄणामि'त्यबादीनामङ्गानामुपधायाः संबुद्धिवर्जिते सर्वनामस्थाने दीर्घविधानाद्दीर्घे नलोपः । अत्र चासंबुद्धौ 'नोपधायाः' इति नान्तलक्षणो वा दीर्घः । द्विवचनादौ सर्वनामस्थाने संबुद्ध्येकवचने च 'ऋतो ङि सर्वनामस्थानयोरि'ति गुणः । स च 'उरण् रपरः' ॥ ऋवर्णस्य स्थानेऽण् प्रसज्यमान एव रपर इति रपरः । तत्र संबुद्धौ 'रात्सस्ये'ति हल्ङ्यादिना वा सुलोपे हे अभिभवितः । अन्यत्र सर्वनामस्थानेऽप्य'प्तृन्नि'ति दीर्घे अभिभवितारावित्यादि । अभिभवितॄनित्यत्र पूर्वसवर्णदीर्घे 'तस्माच्छसः' इति नत्वे 'पदान्तस्ये'ति णत्वनिषेधः । अभिभवित्रा । अभिभवितृभ्यामित्यादि । अजादौ यण् । ङसिङसोस्तु तयोरकारस्य ऋकारस्य च 'ऋत उदि'ति उकार उभयोः स्थाने भवन्नप्यसावृकारस्थानिकोऽपीति पूर्ववद्रपरत्वे सलोपः । अभिभ-

वितृणामिति 'वम्भ्रादिषु चे'ति णत्वनिषेधे नूनमनत्रप्रीतिग्रहणाद् ऋव-र्णगतोऽपि रेफो णत्वनिमित्तमिति 'रषाभ्या'मि'ति णत्वे 'नामी'ति दीर्घः। अभिभवितरि। 'ऋतो ङी'ति गुणः। स्त्रियां 'ऋन्नेभ्यो ङीप्'ति ङीप्। अ-भिभवित्रीत्यादि। नपुंसके पूर्ववत्स्वमोर्लुक्। अभिभवितृ। औङः शीभावे 'इकोऽचि विभक्ता'विति नुम्। अभिभवितृणी। शौ 'नपुंसकस्य झलच' इति नुमि 'सर्वनामस्थाने चासम्बुद्धा'विति दीर्घे अभिभवितॄणि। अयं नुम् 'वृद्ध्यौत्वतृज्वद्भावगुणेभ्यो नुम् पूर्वविप्रतिषेधेने'ति 'ऋतो ङी'ति गुणं बाधते। तृतीयादावजादौ 'तृतीयादिषु भाषितपुंस्कं पुंवद्गालवस्ये'ति समानायामा-कृतौ भाषितपुंस्कस्येगन्तस्य नपुंसकस्य पुंवद्भावविधानात् पुंसीव पक्षे नुम-भावादभिभवित्रा। अभिभवितृणा, इत्याद्युभयमपि। आमि 'नुमचिरतृ-ज्वद्भावेभ्यो नुट् पूर्वविप्रतिषेधेने'ति नुटि नामी'ति दीर्घः। भवतीति भावः। भवतेश्चेति वक्तव्यात्पक्षे णः। तस्याभावेऽज्विधिः सर्वधातुभ्य इत्यपि। भवः। आशितो भवत्यनेनेत्याशितम्भव ओदनः। आशितस्य भवन-माशितम्भवः। 'आशिते भुवः करणभावयो'रि'ति खच्, उपपदसमासः। 'अ-रुर्द्विषदजन्तस्य मुम्' इति खिदन्त उत्तरपदेऽजन्तस्य पूर्वस्यान्त्यादचः परो मुमागमः। आढ्यम्भविष्णुः। आढ्यम्भावुकः। अनाढ्य आढ्यो भवतीत्यर्थे आढ्यसुभगस्थूलपलितनग्नान्धप्रियेषु च्व्यर्थेष्वच्व्यन्तेषूपपदेषु 'कर्तरि भुवः खिष्णुच्खुकञा'विति कर्तरि कारके खिष्णुच्खुकञौ। उभयत्र खित्वात् पूर्ववद् मुम्। खुकञो ञित्वाद्वृद्धिः। सुभगादिष्वप्येवमुदाहार्यम्। भवि-ष्णुः। 'भुवश्चे'ति तच्छीलतद्धर्मतत्साधुकारिष्विष्णुच्। अस्य भाषावि-षयत्वं चान्द्रा इच्छन्ति। भाष्यादौ छान्दसत्वमेव स्पष्टम्। तच्छी-लादौ तच्छब्देन धात्वर्थ उच्यते। तत्र फलनिरपेक्षप्रवृत्तिः तच्छीलः। धात्वर्थः कुलक्रमागतो धर्मो यस्य स तद्धर्मा। धात्वर्थं सम्यगपि य साधु करोति स तत्साधुकारी। भूष्णुः। 'ग्लाजिस्थश्च ग्स्नुः' रित्यत्र चकारादस्मादपि ग्स्नुः। गित्वान्न गुणः। अत एव 'श्र्युकः किती'तीटो निषेधः, भावुकः। 'लषपतपदस्थाभूवृषहनकमगमशृभ्य उकञि'ति तच्छी-लादावुकञ्। ञित्वाद्वृद्धिः। परिभवी। 'जिदृक्षिविश्रीण्वमाव्यथाभ्य

म्यपरिभूप्रसूभ्यश्चे'ति तच्छीलादाविनिः । इकारो नकारपरित्राणाय । 'लषपते'त्यादिना परिपूर्वादुकञ् भवति । परिभावुक इति । विभूर्नाम कश्चित् । प्रतिभूर्धनिकाधमर्णयोर्मध्यस्थः । 'भुवः सञ्ज्ञान्तरयो'रित्यनयो-र्गम्यमानयोः क्विप् । अन्तरशब्देन धनिकाधमर्णयोर्मध्यस्थ उच्यते । सञ्ज्ञा-न्तरे स्वभावादुपसर्गनियमः, कित्त्वान्न गुणः । इकारो 'वेरि'ति सामान्य-ग्रहणार्थः । पकारस्तुग्विघातार्थः । वकारस्य 'वेरपृक्तस्ये'ति लोपः । प्रतिभुवावित्यादावोः सुपी'ति धातोरवयवः संयोगो यस्मादुवर्णात्पूर्वो नास्ति तदन्तस्यानेकाचोऽङ्गस्याजादौ सुपि यणिति प्राप्तस्य यणो 'न भूसुधियो'रिति निषेधादुवङ् । वर्षासु भवतीति वर्षाभूः । वर्षाभ्वौ । वर्षाभ्वः । पूर्ववत् क्विप् । 'सञ्ज्ञायाम्' ॥ अस्यां सप्तम्यन्तं समस्यतइति तत्पुरुषः । 'क्विप् चे'ति सोपपदनिरुपपदसाधारणे सर्वधातुविषये क्विप्यु-पपदसमासो वा । 'वर्षाभ्वश्चे'त्यजादौ यण् । चशब्दो दृन्कारपुनःपूर्वस्य च भुवो यणर्थः । दृन्भूशब्दो दृन्भू इति निपातितः । अत्र तु भूशब्दस्या-नर्थकत्वा'न्न भूसुधियो'रित्यत्र ग्रहणाभावः सिद्ध इति कैयटे । ते'नोः सुपी'त्यस्याननुवृत्तौ इको यणचीत्येव यण् सिद्ध इत्यर्थः । दृम्भू इति मान्तमेके पठन्ति । अनुस्मृतौ कारशब्दस्य स्थाने करशब्दः पठ्यते । दृन्पुनःकरवर्षासु भुव इति । कारशब्दस्यैकदेशविकृतस्यानन्यत्वात् सिद्ध-मिति तद्वृत्तौ । अत्र क्षीरस्वामिसुभूतिचन्द्रप्रभृतयो भेके वर्षाभूशब्द ह्रस्वान्तं प्रतिपद्यन्ते । अत एव स्त्रियां शिली गण्डूपदी भेकी वर्षाभ्वी कमठी दृन्नीति भुवश्चेति उकारान्तलक्षणं ङीषं पठन्ति । 'वर्षाभ्वश्चे'ति अत्र वर्षासु भवतीति वर्षा वा भवते प्राप्नोतीति वर्षाभूरोषधिविशेष इत्यर्थविशेषमभिदधानस्य कैयटस्याप्ययमेवाशयो लक्ष्यते । तथा भागुरि-रपि ह्रस्वान्तं मन्यते । यथाह च ।

> भार्या भेकस्य वर्षाभ्वी शङ्गी स्यान्मद्गुरस्य तु ।
> शिली गण्डूपदस्यापि कच्छपस्य डुलिः स्मृता ॥

इति । यादवप्रकाशस्तु भेकेऽप्यूकारान्तमाह । भेक्यां पुनर्नवायां स्त्री वर्षाभूर्दर्दुरे वर्णाति । तथा सुबोधनीकारोऽपि । भुवश्चेत्युदन्तान्

ङीष्विधानात् वर्षाभ्वीति पाठो न युक्तः। युक्तस्तु पाठो वर्षाभूकमठी दुलिरिति। एवमेवोक्तं प्रक्रियारत्नेऽपि। वर्षासु प्रावृषि भवतीति वर्षाभूर्मण्डूकः पुंस्त्री, तेनास्त्र्यव्यत्वान्न ह्रस्वादय इति नदीसंज्ञायामाख्याग्रहणं नियतस्त्रीलिङ्गपरिग्रहार्थमिति तन्मतम्। कैयटेऽप्येवमुक्तम्। आख्याग्रहणसामर्थ्यान्नियम आश्रीयते स्त्रियमेव यावाचक्षाते न तु लिङ्गान्तरयुक्तमपीत्यर्थ इति। उक्तं च तत्र इष्वशनिप्रभृतीनामुभयलिङ्गाना पट्वादीनां च गुणवचनानां सर्वलिङ्गानां स्त्रीविषयत्वाभावात् स्त्रियां वृत्तौ नदीसंज्ञा न प्राप्नोति, एवं तर्हि 'ङिति ह्रस्वश्च' त्यत्रैवंविधो नियमो नाश्रीयते केवलस्य स्त्रीशब्दस्यानुवर्त्तनादित्यदोष इति। हरदत्तस्तु पदान्तरमनपेक्ष्य स्त्रीवचनाना ग्रहणार्थमाख्याग्रहणं न तु नियतस्त्रीवचनानामित्याह। यद्वा पदान्तरमनपेक्ष्य स्वयमेव यौ य्वौ स्त्रियमाचक्षाते इत्याश्रीयते। इष्वशनिप्रभृतीनामुभयलिङ्गानां शब्दार्थ एव स्त्रीत्वमिति संज्ञा भवति। एवं पटुशब्दप्रभृतीनां गुणवचनानामपि शब्दार्थ एव स्त्रीत्वम्। तथा च पटुरानीयतामित्युक्ते स्त्रियमप्यानीय कृती भवतीति। पुनश्चैवमाह नियतस्त्रीवचनाना ग्रहणार्थमाख्याग्रहणमिति वदतो मते आङ्पूर्वाद्ध्यायतेः क्विपि सम्प्रसारणे आध्यै ब्राह्मण्यै अत्रापि भाष्यकारोदाहृते न स्यात् तस्मात्पूर्व एव प्रकार आश्रयणीयः, कथं तर्हि प्रत्युदाहरणं ग्रामण्ये स्त्रियै खलप्वे स्त्रियै इति, उच्यते। क्रियाशब्दत्वेऽप्यनयोः पुंसि मुख्या वृत्तिः, पुंसामेव खल्विदमुचितं यत् ग्रामनयनं नाम। एवं खलपवनमपि। आध्यानं तु स्त्रीपुंससाधारणमिति विशेष इति। न्यासे उद्योतादावप्येवमुक्तम्। वृत्तिकारस्याप्ययमेव पक्षोऽभिमतः। यदाह। आख्याग्रहणं शब्दार्थे स्त्रीत्वे यथा स्यात्पदान्तरद्योत्ये मा भूदिति। प्रक्रियारत्ने त्वाधीशब्दो नित्यस्त्रीवचन इति नदीसंज्ञासिद्धिरुक्ता। एवं च हरदत्तादिमते वर्षाभूशब्दस्य भेकाभिधानेऽपि नदीसंज्ञया भाव्यमिति तन्निबन्धनानि ह्रस्वादीनि भवन्ति। कैयटसुभूतिचन्द्रादीनां मते नदीसंज्ञायां न विवादः, ऊकारान्तस्योपाधिविशेषवाचित्वेन नियतस्त्रीविषयत्वात्। एवं च प्रक्रियारत्नेनोक्तो नदीसंज्ञाभाव'स्त्यजेदेकं कुलस्यार्थे'इति न्यायेन त्याज्यः। षष्ठीबहुवचने

नु परत्वान्नित्यत्वाच्च नुटि कृते तस्य विभक्तिस्थत्वा'देकाजुत्तरपदे णः' इति णत्वम् । एकाच् उत्तरपदं यस्य तस्य प्रातिपदिकान्तनुम्विभक्तिष्वस्य पूर्वपदस्थान्निमित्तादुत्तरस्य णत्वमिति सूत्रार्थः । विभुः । प्रभुः । संभुः । 'विप्रसंभ्यो ड्वसंज्ञायामि'ति व्यादिभ्यः परस्माद्भुवो डुप्रत्ययः, डित्वाट्टिलोपः । शंभुः । 'मितद्र्वादिभ्य उपसंख्यानमि'ति डुः । सुखरूपो भवतीत्यर्थः । यद्वान्तर्भावितण्यर्थो भवतिः । तेन सर्वेषां सुखं भावयतीत्यर्थः । यद्वा शमेण्यन्ता'दन्येभ्योऽपि दृश्यत'इति विचि शशमयिता रोगाणां भवतीति शंभुः । श्रूयते च भिषक्तमं त्वा भिषजां शृणोमि त्वादत्तेभी रुद्र शंतमेभिः । शतं हि मा व्यशीय भेषजेभिः । अध्यवोचदधि वक्ता प्रथमो दैव्यो भिषगिति । शंभवत्यस्मादिति व्युत्पत्तिरपादाने डुप्रत्ययाभावा'न्वन्यः । विभ्वी, प्रभ्वी, संभ्वी । 'भुवश्चे'ति भवतेरुदन्तस्यानुपसर्जनस्य स्त्रियां ङीप् । उपसर्जनत्वे त्वतिविभुर्ब्राह्मणीति ङीप् न भवति । भविष्यतीति भावी । भुवश्चेत्यौणादिक इनिर्णिद्वद्वा । तेन वृद्धिः । अयं च 'भविष्यति गम्यादय' इति गम्यादिषु पाठाद् भविष्यत्कालविषयः । भाव, 'श्रिणीभुवोनुपसर्ग'इति अकर्त्तरि च कारके भावे घञ् । उपसृष्टात्तु 'ऋदोरप्' इत्यप् । प्रभव इति । ऋदिति तकारो मुखसुखार्थ इत्योरित्युकार ऊकारमपि गृह्णाति । प्रभाव इत्यत्र तु प्रकृष्टो भावः प्रभाव इति प्रत्ययार्थ एव प्रशब्देन विशेष्यते न प्रकृत्यर्थ इति क्रियायोगाभावादनुपसर्गत्वाद् घञ्सिद्धिः । विभावानुभावशब्दौ विभावयतीति ण्यन्तादचि व्युत्पाद्यौ । परिभवः, परिभावः । परीभावः । 'परौ भुवोऽवज्ञाने'इति पक्षे घञौ । 'उपसर्गस्य घञ्यमनुष्ये बहुलमि'ति घञन्तउत्तरपदे पूर्वोपसर्गस्य वा दीर्घोऽमनुष्ये विषये । भूति । 'स्त्रियां क्तिनि'त्यकर्त्तरि च कारके भावे च सर्वधातुभ्यः क्तिन् । 'मन्त्रे वृषे'त्यादिना भुवः क्तिन्, उदात्तवचनमस्य नित्त्वात् 'ञ्नित्यादिर्नित्यमि'त्याद्युदात्तत्वव्युदासार्थम्, न तु भाषायां प्रयोगनिवृत्त्यर्थम् । प्रयुज्यते च भाष्ये सर्वइमे स्वभूत्यर्थं प्रवर्त्तन्त इति । भूः । 'संपदादिभ्यः क्विब्वक्तव्य'इति क्विप् । क्विपः सर्वस्य लोपः । भवन्त्यस्मिन्ननेनेति वा भवः । 'पुंसि संज्ञायां घः प्रायेणे'ति पुल्लिङ्गयोः

करणाधिकरणयोर्घः । प्रायग्रहणं क्वचिदसंज्ञायामपि यथा स्यादिति । अनाढ्येनानायासेनाढ्येन भूयते ईषदाढ्यम्भव भवता, स्वाढ्यम्भवं भवता । अनाढ्येनायासेनाढ्येन भूयते दुराढ्यम्भव भवता । 'कर्तृकर्मणोश्च भूकृञोः' । च्व्यर्थविषयकर्तृकर्मणोरीषदादिषु चोपपदेषु भूकृञोः खलिति खल् । तत्र भुवोऽकर्मकत्वात्कर्तरि उपपदे भावे प्रत्ययः, करोतेश्च कर्मणि । स्वभावात् कृच्छ्रग्रहणं दुरो विशेषणम् । अकृच्छ्रग्रहणं त्वितरयोः । खित्त्वान्मुम् । नन्वत्र धात्वर्थमात्रं विशिष्यत ईषता, गत्योरपि सुदुरोश्च कथं व्यवहितप्रयोगः । न च मुमर्थात् खित्करणादिति वाच्यम् । 'खित्यनव्ययस्ये'त्यत्र कृद्ग्रहणपरिभाषया उपस्थानात्सगतिके खिदन्तउत्तरपदे मुमर्थत्वस्य सम्भवात् । न चैव वाच्य 'हृदयस्य हृल्लेखे'त्यत्राण्ग्रहणादेवाणन्तस्य ग्रहणे सिद्धे पुनर्लेखग्रहादुत्तरपदाधिकारेपीह प्रत्ययग्रहणपरिभाषाया अप्रवृत्तेर्ज्ञापनात्तदभावात्तद्विषया कृद्ग्रहणपरिभाषा कथं वर्त्ततइति । यतो मुमव्ययात्परस्य खितोऽसंभवात्तदन्तस्य च सम्भवादनव्ययस्येति निषेधसामर्थ्यादुत्तरपदाधिकारेपीह प्रत्ययग्रहणपरिभाषया अवश्यमुपस्थातव्यं ततश्च तद्विषया कृद्ग्रहणपरिभाषाऽप्युपस्थास्यते । एवं तर्हि भाष्ये ईषदाढ्यम्भवमित्यादेरुदाहृतत्वात् प्रयोगनियमः । अवत्सीयादौ प्रधानभूतच्छप्रत्ययार्थेनान्वीयमानस्य नञ्शब्दान्तेन समासवत् खिदन्तार्थेनान्वीयमानस्यापीषदादेः खिदन्तान्तेनापि सः । कैयटे तु खित्करणादेव कर्तृकर्मणोः पूर्वप्रयोग उक्तः । तस्याय भावः । अनव्ययस्येति निषेधसामर्थ्यादेव तदन्तत्वलाभः । नन्वस्मादेव प्रतिषेधादिहोत्तरपदाधिकारेपि ज्ञापितया प्रत्ययग्रहणपरिभाषया यतस्तद्विषया कृद्ग्रहणपरिभाषा प्रवर्त्ततेति । मुखतोभूत्वा, मुखतोभूय, मुखतोभावम् । 'स्वाङ्गे तस्प्रत्यये कृभ्वोरि'ति तस्प्रत्ययान्ते स्वाङ्गउपपदे क्त्वाणमुलौ, तत्र 'तृतीयाप्रभृतीन्यन्यतरस्यामि'ति 'उपदंशस्तृतीयायामि'त्येतदारभ्योपपदानाममैव तेन चान्येन च तुल्यविधानानाममन्तेन समासविकल्पनान्मुखतोभावमित्येकं पदं द्वे वा पदे । क्त्वान्तेनापि तृतीयाप्रभृतीनामुपपदाना 'क्त्वा चे'ति समासविकल्पनात्तत्पक्षे 'समासेऽनञ्पूर्वे क्त्वो ल्यबि'ति ल्यबादेशः । अत्रानञिति नञ्-

मद्गृहमव्ययं परिगृह्यते । 'कृन्मेजन्तः' क्त्वातोसुन्कसुन' इति णमुल्क्त्वा-न्तयोरव्ययत्वात्सुपो लुक् । स्थानिवत्त्वेन ल्यबन्तमव्ययम् । विनाभूय, विनाभूत्वा, विनाभावं, नानाभूय, नानाभूत्वा, नानाभावम् । एकधाभूय एकधाभूत्वा एकधाभावम् । 'नाधार्थप्रत्यये च्व्यर्थे' इति नाधार्थप्रत्ययान्ते च्व्यर्थविषये उपपदे कृभ्वोः क्त्वाणमुलाविति तौ । नाशब्देन 'विनञ्भ्यां नानाञौ नसहे'ति विहितौ नानाञावुच्येते । धाशब्देन 'संख्याया विधार्थे धा' 'अधिकरणविचाले चे'ति विहितो धाप्रत्यय उच्यते । तत्र विधा नाम प्रकारः, सामान्यस्य भेदको विशेषः । अधिकरणविचालोऽप्यधिकरणं द्रव्यं तस्य विचाल, एकस्यानेककरणमनेकस्यैकीकरणं वा । तदेकधाभूये-त्यादावयमर्थः । अनेकं द्रव्यमेकं भूत्वेति एकस्यानेकीकरणे द्विधाभूये-त्यादौ द्रष्टव्यम् । ये तु धाप्रत्ययस्यादेशा 'एकाद्धो ध्यमुञन्यतरस्या' 'द्वित्र्योश्च धमुञ्' एधाच्चे'तिविहिता ध्यमुञादयस्तेषामपि स्थानिवत्त्वेन धाग्रहणेन ग्रहणात्तदन्ते चोपपदे भुवः क्त्वाणमुलौ भवत इत्यैकध्यभूये-त्याद्युदाहार्यम् । 'नाधार्थे'त्यत्रार्थग्रहणं तु ध्यमुञन्तात्स्वार्थे डदर्शनमिति यदा डप्रत्ययः स्यात् तदर्थं, स हि स्वार्थिकत्वात् धार्थः तथा नाजर्थमपि । अन्यथा सानुबन्धकत्वादपि नानाशब्दो न गृह्येत । तूष्णींभूय, तूष्णीं भूत्वा तूष्णींभावम् । 'तूष्णीमि भुव' इति क्त्वाणमुलौ । अन्वग्भूय, अन्वग्भूत्वा, अन्वग्भावम् । 'अन्वच्यानुलोम्य' इति क्त्वाणमुलौ । आनुलोम्यमनुकूलता । नाधेत्यादियोगत्रयविषयेऽपि 'तृतीयाप्रभृतीनी'ति समासविकल्पो द्रष्टव्यः । भूतो घटः । भूतं घटेन । अत्र 'निष्ठे'ति भूते विहितस्य क्तस्य गत्यर्था-दिपरत्वे 'गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्चे'ति कर्त्तरि चकाराद्भावकर्मणोश्च विधानाद् भुवश्चाकर्मकत्वात्कर्तृभावावर्थौ, अयं च 'नपुंसके भावे क्तः' 'ल्युट् चे'ति क्तल्युटौ न बाधते, यतस्तयोर्धात्वर्थस्य सिद्धता विषयः । अस्य तु धात्वर्थमात्रम् इति विषयभेदस्तेन घटस्य भूतं भवनमिति भवनः । क्तयोगे कर्त्तरि षष्ठ्या 'न लोकाव्यये'ति निषेधो न भवति 'नपुंसके भावे क्त उपसंख्यानमि'ति तद्विधानात् शेषविज्ञानाद्वा तत्सिद्धिः । इदमेषां भूत क्तक्तवतू निष्ठा' 'निष्ठे'ति धौव्यादिभ्यो विहि-

तस्य क्तस्य 'क्तोऽधिकरणे च ध्रौव्यगतिप्रत्यवसानार्थेभ्य' इत्यत्राधिकरणमर्थः । चकारो यथाप्राप्तस्यानुज्ञानार्थः । तेन ध्रौव्यार्थेभ्यः कर्तृभावाधिकरणेषु गत्यर्थेभ्यः कर्मकर्त्रधिकरणेषु कर्मविवक्षायां भावे च । प्रत्यवसानार्थेभ्यः कर्माधिकरणयोः पूर्ववदत्रापि भवति । ध्रौव्यार्था अकर्मकाः । प्रत्यवसानार्था अभ्यवहारार्थाः । अधिकरणव्युत्पन्नस्त्वे त्यधिकरणे कर्मणि षष्ठी । 'अधिकरणवाचिना चे'त्यस्याः समासनिषेधः । भवत्यनेनात्रेति वा भवनम् । 'करणाधिकरणयोश्चे'ति सामान्यविहितो ल्युट् । अस्य कालसामान्यविषयत्वाद् भूतविशेषेणाधिकरणक्तेन न बाधः । परिभवनमित्यत्र 'कृत्यच' इति उपसर्गस्थान्निमित्तादुत्तरस्य कृत्स्थस्याच उत्तरस्य नस्य विधीयमानं णत्वं 'न भाभूपूकमिगमिप्यायीवेपामि'ति निषिध्यते । अत्र ण्यन्तानां च भादीनामुपसङ्ख्यानमिति वचनात्परिभावनमित्यत्रापि णत्वं न भवति ।

अथोणादयः॥ दृन्भूः । तक्षः, सर्पजातिभेद इति पुरुषकारे । 'अन्दूदृम्भूजम्बूकफेलूकर्कन्धूदिधिषूरि'ति दृढशब्दउपपदे कूप्रत्ययान्तो निपातितः । उपपदस्य च दृभावोऽस्मादेव निपातनात् । केचिदुपपदं नान्त्य पठन्ति । अजादावस्य यणिति वर्षाभूप्रस्तावेऽवोचाम । क्व चिदुणादिवृत्तौ दृभीशब्दइत्यस्मात्कूप्रत्यये निपातनमित्युक्तम् । तत्राप्ययमूकारो न धातोरित्युवङोऽप्रसङ्गाद्यणेवेति न रूपभेदः । भवनं गृहम् । 'बहुलमन्यत्रापी'ति युच् । भुवनम् । 'भूसूधूभ्रस्जिभ्यश्छन्दसी'ति क्युन्, भाषायां बहुलवचनात्साधुरि'ति वा भुवनमित्यत्र हरदत्तः । भूमिः । 'भुवः कित्'इति मिन्प्रत्ययः । कृष्णभूमः । उदग्भूमः । पाण्डुभूमः 'अच् प्रत्यन्ववपूर्वात्सामलोम्न' इत्यत्राजिति योगविभागादच् समासान्तः । तथा च श्लोकवार्त्तिके । 'कृष्णोदक्पाण्डुपूर्वाया भूमेरच्प्रत्ययः स्मृत' इति । भूरिः । 'अदिशदिभूशुभिभ्यः क्रिन्'इति क्रिन् । भुवः । अन्तरिक्षलोको महाव्याहृतिश्च । 'भूरञ्जिभ्यां कित्'इत्यसुन्,कित्त्वाच्च गुणः । अद्भुतः । 'अदि भुवो डुतच्'इति डुतच् । ये प्रसिद्धप्रयोगा उणादिप्रत्ययान्ताः प्रदर्शिताः, अतः परमप्येव वक्ष्यन्ते ।

सूत्रवार्त्तिकभाष्येषु छान्दसावेव केवलम् ।
कानच्क्वसू प्रतीयेते तेन नात्र प्रपञ्चितौ ॥
केचिदाहुः क्वसोः कित्त्वाज्ज्ञापकादनुमीयते ।
अस्ति प्रयोगो भाषायामित्येव प्राज्ञमानिनः ॥
तथा हि छान्दसत्वेऽस्य छन्दस्युभयथेत्यतः ।
सार्वधातुकसंज्ञत्वान्ङित्त्वे सिद्धेतिदेशतः ॥
अनुनासिकलोपः स्यात् संयोगान्तेषु धातुषु ।
अन्यत्रापि लिटः कित्त्वे संयोगाल्लिड्विदित्यतः ॥
सिद्धे क्वसः ककारोऽसौ भाषायामर्थवानिति ।
तदसत्तेर्हरित्यादौ यथा लिटि गुणः किति ॥
सञ्जन्यूनामिहापि तितीर्वति गुणो भवेत् ।
स मा भूदिति कित्त्वस्य भाष्ये फलसमर्थनात् ॥ १ ॥

एध वृद्धौ ॥ कत्थ्यन्ता उदात्ता अनुदात्तेतः । एधते । एधसे । एधे । एधमानः । एधा चक्रे । एधा बभूव । एधामास । 'इजादेश्च गुरुमतोऽनृच्छ' इत्याम् प्रत्ययः । 'दीर्घं चे'ति दीर्घं गुरुसंज्ञम् । करोते राम्प्रत्ययवदि'ति नित्यं तङ् । एधिता । एधितासे । एधिताहे । एधिष्यते । एधिष्यसे । एधिष्ये । एधिष्यमाणः । 'लृटः सद्वा' । एधताम् । एधस्व । एधै । 'सवाभ्यां वामौ' । 'एत ऐ' । ऐधत । ऐधथाः । ऐधे । आडजादीनामित्यजादेरङ्गस्य लुङ्लङ्लृङ्क्ष्वाडागम इत्याट् । 'आटश्चे'ति वृद्धिः । ऐधेत । आशिषि एधिषीष्ट । एधिषीष्ठाः । एधिषीय । ऐधिष्ट । ऐधिष्ठाः । ऐधिढ्वम् । ऐधिषि । 'धि चे'ति सलोपः । इणन्तादङ्गादिति 'इणः षीध्वंलुङ्लिटां धोऽङ्गादि'ति धकारस्य मूर्धन्यः । अत्र हरदत्त एव मूर्धन्यमुक्त्वा पक्षान्तरमाह । अन्ये त्विटो विभाषाया वक्ष्यमाणत्वाद् गोबलीवर्दन्यायेन तद्व्यतिरिक्तमिणन्तमिह गृह्यत इति ऐधिध्वमित्यादौ ढत्वं नेच्छन्ति । ऐधिष्यत । ऐधिष्यथाः । ऐधिष्ये । भावे लट्लोट्लङ्विध्यादिलिङ्क्षु यगुदाहार्यः । एध्यते भवतेत्यादि । लुङि 'चिणो लुगि'ति तशब्दस्य लुकि ऐधि भवतेति । शेषे तु कर्तृवद्रूपम् । सन्यजादित्वाद् द्वितीयस्यैकाचो द्विर्वचने

ऽभ्यासकार्यम् । 'पूर्ववत्सन' इति तङ् । एदिधिषतइत्यादि सर्वत्र प्रकृतिवत् । एदिधि[illegible]तइत्यादि कर्तृवत् । न च स्यादिष चिण्वदिट्पक्षे वृद्धौ पुकि रूपान्तरमपि स्यादित्याशङ्क्यम् । णयल्लोपेत्यादिना ऽतो लोपेन वृद्धेर्बाधस्योक्तत्वात् । एधयते सस्यम् । 'णिचश्चे'ति कर्त्रभिप्राये तङ् । अस्मिन्नुपपदेन प्रतीयमाने 'विभाषोपपदेन प्रतीयमान'इति परस्मैपदमपि भवति । स्वं सस्यमेधयतीति । [illegible] इति परस्मैपदमेव पुत्त्रमेधयतीति । विभाषोपपदादपि परत्वादिदमेव भवति, तेन स्वपुत्त्रमेधयतीत्येव । 'गतिबुद्धी'ति सर्वत्र प्रयोज्यकर्मत्वम् । एधया चक्रे । चकार । बभूव । आस । 'अयामन्ते'ति णेरयादेशः । अत्र यदा प्रकृतेः चित्तवत्कर्तृकत्वेन नित्यं परस्मैपदं तदा कृञोऽनुप्रयोगस्येति कल्पितेन योगेन तथैव । एधयितासि । एधयितासे । एधयिष्यति । एधयिष्यते । एधयतु । एधयताम् । ऐधयत् । ऐधयत । एधयेत् । एधयेत । आशिषि एध्यात् । एधयिषीष्ट । [illegible] 'ऽकृत्सार्वधातुकयो'रिति दीर्घस्य पूर्वविप्रतिषेधेन बाधकः । ध्वमीटि गुणायादेशयोरिणः परइटि 'विभाषेट'इति मूर्द्धन्यविकल्पः । ऐदिधत् । ऐदिधत । 'णिश्री'ति चङि णिलोपस्य 'द्विर्वचनेऽची'ति द्विर्वचननिमित्ते ऽचि योऽजादेशः स द्विर्वचने कर्त्तव्ये स्थानित्वं प्रतिपद्यतइति 'चङी'ति द्विर्वचने स्थानिवत्त्वा'दजादेर्द्वितीयस्ये'ति धिशब्दो द्विरुच्यते । इह च 'णौ चङी'त्युपधाह्रस्वाद्बहिरङ्गादप्युत्तरकालं द्रष्टव्यम् । तत्र च लिङ्गमोणोर्ऋदित्करणं, तद्धि मा भवानोणिणदित्यत्र'नाग्लोपी'ति चङि ह्रस्वस्य निषेधार्थं, पूर्वं तु द्विर्वचने ह्रस्वभाव्युपधा नेति किं निषेधेन । तेन मा भवानिदिधदिति भवति, 'न माङ्योग'इत्याटो निषेधः । कर्मणि लुङ्येकवचने चिण् । अन्यत्र सिचीट्गुणायादेशाः । ऐधि । ऐधयिषातामित्यादि । ध्वमि 'धि चे'ति सलोपे गुणायादेशयोरिणः परत्वादिटो 'विभाषेट' इति वा मूर्द्धन्यः । अन्येषु लेषु कर्तृवद्रूपम् । लिट्यनुप्रयोगे नित्यं तङ् उदाहार्यः । स्यादिषु पक्षे चिण्वदिटि तस्या[illegible]लोपे एधिष्यतइत्यादि प्रकृतिवत् रूपाण्यपि पक्षे द्रष्टव्यानि । न च ध्वमि णेरिणः पर इडिति तल्लोपात्पूर्वं 'विभाषेट' इति रूपभेदस्य

प्रसङ्गः । नित्यत्वादन्तरङ्गत्वात्पूर्वत्रासिद्धत्वाच्च पूर्वमेव णेर्लोपात् कर्मकर्तरि यक्चिणोर्विषये तयोः ‘णिश्रन्थी’ति निषेधाच्छ्प्सिचोः कर्तृवद्रूपम् । स्यादिषु कर्मवत् । तत्करणात्स्वाश्रये भावे लकारे सर्वत्र कर्मवत् । कर्त्तरि तृतीया विशेषः । एधयते स्वेनैवेत्यादि । प्रैधते । ‘एत्येधत्यूठस्वि’ति वृद्धिः । एजादाविणि धातावेधतौ ऊठि चावर्णात् पूर्वपरयोरेकादेशो वृद्धिरिति सूत्रार्थः । इयं च वृद्धिरेत्येधत्योरेङि पररूपस्यापवाद इत्यवर्णान्तोपसर्गलाभः । ऊठि त्वाद्गुणस्य । अत्र वृत्तौ एज्ग्रहणमेतेरेव विशेषणं नैधतेरव्यभिचारादिति । अत्र प्रदीपकृत् प्रेदिधदित्यत्र व्यभिचारसंभवान्नैतत्सारमित्याह । इदमेव त्वसारं, ण्यन्तस्य शब्दान्तरत्वादेधतिग्रहणेनाग्रहणात् । अत एव हि ‘न भाभूपूकमी’त्यत्र ण्यन्तानां च भादीनामुपसंख्यानमित्युक्तम् । वदन्ति च तत्र न्यासकारादयः शब्दान्तरत्वात् ण्यन्तानां न प्राप्नोति तस्मादुपसंख्यानमिति । स्वयं च तत्रैव वक्ष्यतीति पूर्वापरविरोधं स एव प्रष्टव्यः । किं च ण्यधिकस्यापि ग्रहणे ‘उपसर्गात्सुनो’तीत्यत्राभिषुणार्वायिषतीत्यत्र ण्यन्तेनाभेर्योगात्सुनोतिं प्रत्यनुपसर्गत्वात् षत्वं न स्यादिति चोदयित्वा प्रेषणादिरिहाभिषवे इति सुनोतिं प्रति उपसर्गत्वात् षत्वमिष्टमिति भाष्यकारादीनां समाधानमनुपपन्नं स्यात् । अत एव हि वृद्धिविधौ हरदत्तः । एज्ग्रहणमेतेरेव विशेषणं न पुनरेधतेरिति वृत्तिमुपादाय आहुन्याभिप्रायेणैतदुक्तं मा प्रेदिधदित्यत्र व्यभिचारसंभवादित्याहुरिति मतान्तरेणाह । एधितः । एधितमनेन । इदमेषामेधितम् । ‘क्तोऽधिकरणे चे’ति क्तः । एधः । ‘असुनि’त्यसुन् ॥ २ ॥

स्पर्द्ध सङ्घर्षे ॥ सङ्घर्षः पराभिभवेच्छा । पराभिभवस्य धात्वर्थेनोपसंग्रहात् अकर्मत्वम् । उक्तं च ।

धातोरर्थान्तरे वृत्तेर्धात्वर्थेनोपसंग्रहात् ।
प्रसिद्धेरविवक्षातः कर्मणोऽकर्मिका क्रिया ॥

इति । स्पर्द्धते । स्पर्द्धसे । स्पर्द्धमानः । पस्पर्द्धे । पस्पर्द्धिषे । पस्पर्द्धे ॥ ‘शर्पूर्वाः खयः’ ॥ अभ्यासस्य शर्पूर्वाः खयः शिष्यन्ते अन्ये हलो निवर्तन्त इति पकारशेषः । स्पर्द्धिता । स्पर्द्धितासे । स्पर्द्धिताहे । स्पर्द्धिष्यते । स्पर्द्धि-

ष्यसे । स्पर्द्धिष्ये । स्पर्द्धताम् । स्पर्द्धस्व । स्पर्द्धै । अस्पर्द्धत । अस्पर्द्धथाः । अस्पर्द्धे । स्पर्द्धेत । स्पर्द्धेथाः । स्पर्द्धेय । आशिषि स्पर्द्धिषीष्ट । स्पर्द्धिषीष्ठाः । स्पर्द्धिषीय । अस्पर्द्धिष्ट । अस्पर्द्धिष्ठाः । अस्पर्द्धिषि । अस्पर्द्धिष्यत । अस्पर्द्धिष्यथाः । अस्पर्द्धिष्ये । भावे लट्लोट्लङ्विध्यादिलिङ्षु यकि स्पर्द्ध्यते । स्पर्द्ध्यताम् । अस्पर्द्ध्यत । स्पर्द्ध्येतेत्यादि । लुङि तशब्दे चिण्यस्पर्द्धीति, आशीरादिषु कर्तृवत् । पिस्पर्द्धिषते । पिस्पर्द्धिषां चक्रे । पिस्पर्द्धिषितेत्यादि । 'सन्यत' इतीत्त्वमभ्यासस्य पूर्ववत् 'पूर्ववत्सन' इति तङ् । आर्धधातुकेऽतो लोपः । विध्यादिलिङ्यतो लोपाभावाल्लिङः सलोपे गुणवल्लिलोपयोः । पिस्पर्द्धिषेत । भावे यक्चिण्णिटीडिः । पिस्पर्द्धिष्यतइत्यादि । पास्पर्द्ध्यते । 'दीर्घोऽकित'इत्यभ्यासस्याकारस्य दीर्घे यङि तल्लुकि च । पास्पर्द्धां चक्रे, पास्पर्द्धितेत्यादि । तत्रार्द्धधातुके 'यस्य हल' इति हल उत्तरस्य यस्य लोपः । स चादेः परस्येति यकारस्य । अकारस्य अतो लोपः । भावे तादिषु यक्यप्यतो लोपयलोपयोः कर्तृवत्सर्वत्र रूपम् । पास्पर्द्ध्यतइत्यादि । लुङि तु चिण्यपास्पर्द्धीति भवति । सन्यङास्तास्यादिषु चिण्वदिटि न विशेषः, अतो लोपेन वृद्धेर्बाधादित्युक्तम् । यङो लुक्यदादिवच्चेति शपो लुकि 'झषस्तथोर्धोऽधः' । झष उत्तरयोस्तकारथकारयोर्दधाति वर्जयित्वा धकार इति धत्वे 'झलां जश् झशी'ति जश्त्वम् । आन्तरतम्याद्दकारः । पास्पर्द्धि, एवं वचनान्तरेषु । पास्पर्द्धः । पास्पर्द्धति । 'अदभ्यस्तादि'त्यद्भावः । पास्पर्त्सि । 'खरि च' । खरि परे झलां चर इति चर्त्वे । पास्पर्द्धः । सर्वत्र हलादेः पितः सार्वधातुकस्य 'यङो वे'ति ईडुदाहार्यः । पास्पर्द्धीतीत्यादि । पास्पर्द्धां चकार । पूर्ववत् कृञोऽनुप्रयोगस्येति नित्यं परस्मैपदम् । पास्पर्द्धिता । पास्पर्द्धिष्यति । पास्पर्द्धु । पास्पर्द्धात् । तातङि ङित्त्व पित्त्वेति स्थानिवत्त्वप्राप्तस्य पित्त्वस्य निषेधादीडभावः । पास्पर्द्धाम् । पास्पर्द्धतु । पास्पर्द्धि । सेर्ह्यादेशे 'हुझल्भ्यो हेर्धि'रिति धिभावः । हेरपित्त्ववचनादिडभावः । अपास्पर्त् । इतश्च लोपे हल्ङ्यादिलोपे च 'झलां जशोऽन्ते'इति जश्त्वे 'वावसान'इति चर्त्वे तकारः । तदभावे अपास्पर्द् । 'रात्सस्ये'ति नियमान्न संयोगान्त-

लोपः । अपास्पर्द्धाम् । अपास्पर्धुः । 'सिजभ्यस्ते'ति जुस् । अपास्पर्त् । अपास्पर्द् । अपास्पाः । सिपि हल्ङ्यादिलोपे पूर्ववज्जश्त्वे चर्त्वे वा च तदभावे 'दश्चे'ति सिपि परे वा रुः । 'रो री'ति पूर्वस्य रेफस्य लोपः । 'ढ्रलोपे पूर्वस्य दीर्घोऽणः' इति पूर्वस्याणो दीर्घः । ढ्रलोपइति ढकाररेफयोर्लोपनिमित्तौ ढकाररेफावुच्येते । अपास्पर्द् । अपास्पर्त् । पास्पर्द्धात् । पास्पर्द्धाताम् । पास्पर्द्धुः । यासुटो ङित्वेनापित्वादीडभावः । आशिषि पास्पर्द्ध्यात् । पास्पर्द्ध्यास्ताम् । असार्वधातुकत्वादीडभावः । अपास्पर्द्धीत् । अपास्पर्द्धिष्टाम् । अपास्पर्द्धिषुः । अपास्पर्द्धीः । अपास्पर्द्धिषम् । 'अस्तिसिच' इति पितो नित्यमीट् । 'इट ईटी'ति सिचो लोपे सिज्लोप एकादेशे सिद्ध' इति सवर्णदीर्घे । 'वदव्रजहलन्तस्याच' इति परस्मैपदपरे सिचि विहिता वृद्धि'र्नेटी'ति निषिध्यते । अपास्पर्द्धिष्यद् इत्यादि । भावे सर्वत्र यङन्तवद्रूपम् । पास्पर्द्ध्यतइत्यादि, णौ स्पर्धयतीत्यादि पर्धतिवदुदाहार्यम् । लुङ्यनजादित्वात्प्रथमस्यैकाचो द्विर्वचनम् । 'संयोगे गुरु'इति संयोगपरस्य ह्रस्वस्य गुरुसंज्ञाविधाना'त्सन्वल्लघुनी'ति इत्वम्, 'दीर्घो लघो'रिति दीर्घश्च न भवति गुरुसंज्ञया आकडारीयतयानवकाशया लघुसंज्ञा बाध्यते, कर्मणि यक्चिणोर्विषये णिलोपे स्पर्ध्यतइत्यादि, प्रकृतौ भाववद्रूपाणि उदाहार्याणि । अन्यत्र स्पर्धया चक्रे इत्यादि कर्तृवत् । लुङि चिण् । द्विवचनादौ सिच् । अस्पर्द्धि । अस्पर्द्धिषाताम् इत्याद्युदाहार्यम् । ध्वमि 'विभाषेट' इति मूर्द्धन्यविकल्पः । स्यादिषु चिण्वदिटि तस्यामिद्धवदत्रेत्यसिद्धत्वाण्णिलोपे स्पर्द्धिष्यतइत्यादि प्रकृतिवद्रूपम् । कर्मकर्तरि यक्चिणोर्निषेधात् शपि स्पर्धयतइत्यादि कर्तृवन्नेयम् । अत्रापि स्यादिषु चिण्वत्पक्षे कर्मवत् । वत्कारणात् स्वाश्रये भावे लकारे सर्वं कर्मवत् । कर्तरि तृतीया विशेषः । स्पर्धनः । 'अनुदात्तेतश्च हलादे'रिति तच्छीलादौ युच् । स्पर्द्धा । 'गुरोश्च हल' इति गुरुमतो हलन्तात् स्त्रियामकारप्रत्ययः । वा सरूपेण क्तिच्स्त्रियामिति निषेधाच्च भवति । इदमेषां स्पर्द्धितम् । स्पर्द्धितमनेन । स्पर्द्धितः । 'क्तोऽधिकरणे चे'ति कर्तृभावाधिकरणेषु क्तः । स्पर्धातुप्रयोगाश्चिन्त्यः ॥ ३ ॥

गाधृ प्रतिष्ठालिप्सयोर्ग्रन्थे च ॥ स्थापना तत्स्थापनं वा प्रतिष्ठा । लब्धुमिच्छा लिप्सा । एकत्र स्थापनं संदर्भो वा ग्रन्थः । तत्राद्ये ऽकर्मकः, इतरयोः सकर्मकः, गाधते । गाधसे । गाधे । गाधमानः । जगाधे । गाधिता । गाधितासे । गाधिताहे । गाधिष्यते । गाधिष्यमाणः । गाधताम् । गाधस्व । गाधै । अगाधत । अगाधथाः । अगाधे । गाधेत । गाधेथाः । गाधेय । आशिषि गाधिषीष्ट । अगाधिष्ट । अगाधिष्ठाः । अगाधिषि । अगाधिष्यतेत्यादि । भावकर्मकर्तृषु लट्लोट्लङ्विध्यादिलिङ्क्षु यक् । गाध्यते । गाध्यसे । गाध्यताम् । अगाध्यत । गाध्येतेत्यादि । अन्येषु लेषु कर्तृवत्, लुङेकवचने तु चिण्यगाधीति । लिप्सायामप्यर्थेन न्यायेनेष्यमाणप्रधानत्वात्तस्य च कर्मस्थत्वात्सन्नन्तवत् कर्मकर्तृत्वोपपत्तिः । जिगाधिषते । जिगाधिषां चक्रे । जिगाधिषिता । जिगाधिषिष्यते । जिगाधिषताम् । अजिगाधिषत । जिगाधिषेत । आशिषि जिगाधिषिषीष्ट । अजिगाधिषिष्ट । अजिगाधिषिष्यतेत्यादि । सर्वत्राभ्यासकार्यम् । आर्धधातुके ऽतो लोपः, भावकर्मणोर्यक्चिण्विषये जिगाधिष्यते । अजिगाधिषीत्यादि । कर्मकर्तरि यक्चिणोर्निषेधात् कर्तृवदेव । जागाध्यते । जागाधां चक्रे । जागाधिता । जागाधिष्यते । जागाध्यताम् । अजागाध्यत । जागाध्येत । आशिषि जागाधिषीष्ट । अजागाधिष्ट । अजागाधिष्यत । सर्वत्राभ्यासस्य 'दीर्घो ऽकितः' । आर्धधातुके ऽतो लोपो 'यस्य हल' इति यलोपाल्लोपौ । भावादिषु यक्यप्यल्लोपयलोपयोः सर्वत्र कर्तृवद्रूपम् । लुङ्येकवचने त्वजागाधीति चिण्विशेषः । सन्यङोश्चिण्वदित्यतो लोपेन वृद्धिबाधाद् न विशेष इत्युक्तम् । यङ्लुकि 'झषस्तथोर्धो ऽधः' । 'झलां जश् झशि' जागाद्धीत्यादि । सिपि 'एकाचो बशो भष् झषन्तस्य स्ध्वोरि'ति धातोरवयवस्य झषन्तस्यैकाचो बशः स्थाने भषादेशः सकारादौ प्रत्यये ध्वे च परे पदान्ते च विषयइत्यान्तरतम्यात् गकारस्य घकारे 'खरि चे'ति धकारस्य तकारे जाघात्सीति । जागाधां चकार । पूर्ववत्कृञ इति परस्मैपदम् । जागाधिता । जागाधिष्यति । जागाद्धु । जागाद्धात् । जागाधानि । अजाघात् । अजाघाः । हल्ङ्यादिलोपे पदान्ते चेति

झषो भषादेशे जश्त्वे च चर्त्वम् । सिपि तु 'दश्चे'ति वा रुत्वे अजागा इत्यपि । जागाध्यात् । जागाध्याताम् । आशिषि जागाध्यात् । जागाध्यास्ताम् । अजागाधीत् । अजागाधिष्टाम् । अजागाधिष्यदित्यादि । सर्वत्र यङ्लुगन्तात्परस्य हलादेः पितः सार्वधातुकस्य पक्षे ईडुदाहार्यः । लुङि 'त्वासिसिव' इति नित्यः । भावादौ यङन्तवत् । गाधयति । गाधयां चकार । गाधयिता । गाधयिष्यति । गाधयतु । अगाधयत् । गाधयेत् । आशिष्य-निडार्धधातुके णिलोपे । गाध्यात् । अजगाधत् । अत्रास्य ऋदित्त्वात् 'नाग्लोपिशास्वृदिताम्' इति णौ चङि ह्रस्वे निषिद्धेऽभ्यासस्यालघुपरत्वात्सन्वद्भावलघुदीर्घत्वे न भवतः । गाधयत इत्याद्युदाहार्यम्, प्रतिष्ठायां 'मणावकर्मका'दिति चित्तवत्कर्तृकत्वे परस्मैपदमेव । भावकर्मणोर्य-क्चिणोर्विषये णिलोपे गाधतिवद्रूपम् । स्यादिषु तु ण्यन्ते कर्तृवत् । चिण्वदिटि तु णिलोपे गाधितेत्यादि प्रकृतिवदेव । कर्मकर्तरि यक्चिणोर्निषेधात्सर्वेषु लकारेषु कर्तृवत् । गाधनः । 'अनुदात्तेत' इति युच् । गाधा । 'गुरोश्च हल' इत्यकारः, प्रतिष्ठायां स्पर्द्धिवत्, भावकर्त्राधिकरणेषु क्त उदाहार्यः, इतरयोस्तु 'तयोरेवे'ति नियमात्कर्मणि ॥ ४ ॥

बाधृ लोडने ॥ लोडनं प्रतिघातः । गाधिवत् । बाहुः । 'अर्जिदृशिकम्यमिपसिबाधामृजिपशितुक्धुक्दीर्घहकाराश्चे'ति कुप्रत्यये धातोर्हकारः । भद्रबाहूः । चतुष्पाद्विशेषः । 'बाह्वन्तात्संज्ञायामि'ति स्त्रियामूङ् प्रत्ययः । सुबाहुर्नाम कश्चित्, तस्यापत्यं सौबाहविः । 'बाह्वादिभ्यश्चे'ति षष्ठ्यन्तादपत्यइञ् । 'ओर्गुणः' । उवर्णान्तभस्याङ्गस्य तद्धिते गुण इति गुणो ऽवादेशः, यद्यपि बाह्वादिषु केवलो बाहुशब्दः पठ्यते, 'समासप्रत्ययविधौ तदन्तविधेः प्रतिषेध' इति तदन्तविधिश्च प्रतिषिध्यते, तथापि केवलस्यापत्येनायोगात्तदन्तत्वलाभः । संज्ञात्वेन विनियुक्ताद् बाहोस्तु प्रत्ययो नेष्यते । यदाह ॥

अभिव्यक्तपदार्था ये स्वतन्त्रा लोकविश्रुताः ।
शास्त्रार्थस्तेषु कर्त्तव्यः शब्देषु न तदुक्तिषु ॥

इति । 'राजश्वशुराद्यद्' इत्यत्र भाष्यादौ चोक्तं संज्ञायां श्वशुराद्यवेति । उभाबाहु, उभयाबाहु प्रहरति । 'द्विदण्ड्यादिभ्यश्चे'तीच् समासान्तः । तस्य च द्विदण्ड्यादिष्वेव पाठाल्लोपः, प्रत्ययलक्षणेन तदन्तत्वात् तिष्ठद्गुप्रभृतिष्विवः पाठात्तदन्तस्याव्ययीभावत्वविधानाद'व्ययीभावश्चे'त्यव्ययत्वे सुपो लुक् । उभयबाहूत्यत्रो'भादुदात्तो नित्य'मित्यत्रास्वरितत्वादेव वाग्रहणाननुवृत्तेर्नित्यमयचि सिद्धे नित्यग्रहणं योगभेदेन वृत्तौ नित्यमयजन्तस्य प्रयोगार्थमित्युभशब्दस्योभयादेशः । अयमर्थः सर्वादिसूत्रे कैयटादौ स्फोरितः । तथा च तत्र वार्त्तिकमपि उभस्य सर्वनामत्वेऽकजर्थः पाठः । अन्याभावो द्विवचनटाब्विषयत्वाद् उभयोऽन्यत्रेति । उभाबाहूत्यत्र तु द्विदण्ड्यादिपाठाद् उभयाभावः ॥ ५ ॥

नाधृ नाथृ याच्ञोपतापैश्वर्याशीःषु ॥ उपतापो रोग इति वृत्तौ । उपघात इति तरङ्गिण्याम् । आद्यो धान्तः, अपरस्थान्तः । अस्य थान्तस्य धान्तकाण्ड पाठोऽर्थसाम्यात् । उभावपि दन्त्यादी । सर्वं गाधतिवत् । द्वितीयस्य तु विशेषः । 'आशिषि नाथ' इत्याशिष्येवात्मनेपदं, कर्मणि शेषत्वेन विवक्षिते षष्ठी च । सर्पिषो नाथतइत्यादि । 'षष्ठी शेष'इत्येवात्र षष्ठीसिद्धौ वचनमिदं सर्पिषो नाथनमित्यादौ समासनिवृत्त्यर्थं षष्ठी श्रूयतएव न लुप्यतइति, स* लोपश्च समासे । उक्तं च ।

साधनैर्व्यपदिष्टे च श्रूयमाणक्रिये पुनः ।
प्रोक्ता प्रतिपदं षष्ठी समासस्य निवृत्तये ॥

इति । न तर्हीदानीमिदं सम्भवति सर्पिर्नाथनमिति । भवति यदा कृद्योगलक्षणा षष्ठी । तथा च वार्त्तिकं, 'प्रतिपदविधाना च षष्ठी न समस्यते' 'कृद्योगा च षष्ठी समस्यत' इति । न चैवं सति समासनिषेधस्य वैयर्थ्यमिति वाच्यम् । यतः शेषषष्ठ्याः समासे 'समासस्ये'त्यन्तोदात्तत्वेन भाव्यम्, अन्यस्यास्तु 'गतिकारकोपपदात् कृत्' । गत्यादिभ्यः परं कृदन्तमुत्तरपदं प्रकृतिस्वरमित्युत्तरपदप्रकृतिस्वरेण भाव्य, स च लिति प्रत्यये पूर्वमुदात्तमित्याद्युदात्तत्वम् । अनाशिषि परस्मैपदं द्रष्टव्यम् । नाथति । ननाथ ।

* षष्ठीलोपश्च समासे इति २ पु॰ पा॰ ।

नाथिता । नाथिष्यति । नाथतु । अनाथत् । नाथेत् । नाथ्यात् । अनाथी-त् । अनाथिष्यत् । निनाथिषतीत्यादि, यङ्लुक्यझषन्तत्वात् 'झषस्तथोर्धोऽधः' इति धत्वं भत्वे 'खरि चे'ति चर्त्वे नानात्ति । नानात्तः । नानात्य इत्यादि विशेषः । अत्र मैत्रेयाभरणकारादयश्च णोपदेशं पठन्तौ 'णो नः' इति धात्वा-दित्वाण्णकारस्य नकारं विधायोपसर्गादसमासेऽपि णोपदेशस्ये'ति उपस-र्गस्थान्निमित्तात्परस्य णोपदेशनकारस्य समासासमासयोर्णत्वविधानात् प्रणाथनइत्यादौ णत्वप्रयोजनमाहतुः । सर्वे नादयो णोपदेशा इत्यस्य पर्युदासे नृनन्दिनर्दिनक्किनटिनाथृनाथवर्जमित्यत्र च न पेठतुः । अत्र का-श्यपः । नाथतेर्णोपदेशत्वमयुक्तं, गणकारवृत्तिकारादीनामनिष्टत्वादिति । नृनिनन्दीत्यादिवाक्ये नाथृनृवर्जं नृत्यादीन् पठित्वेतान्सप्त वर्जयित्वेति वदन् श्रीकरोऽप्यत्रैवानुकूलः । तथा पर्युदासवाक्ये नर्दतिवर्जं सर्वानेतान् पठतः शाकटायनस्य सन्ततोऽप्ययमेव पक्षोऽभिमतः । उभयोरप्यान्तपाठस्तु धात्वप्र-करणविरोधान्नादृतः । इमौ याच्ञायामकर्थितेऽपिततमाभ्यां द्विकर्मकौ ।

दुहियाचिरुधिप्रच्छिभिक्षिचिञामुपयोगनिमित्तमपूर्वविधौ ।
ब्रुविशासिगुणेन च यत्सचते तदकीर्त्तितमाचरितं कविना ॥

इत्यत्र भिक्षेरर्थपरत्वात् । उक्तं च कैयटे । दुह्यादीनां चार्थोपलक्ष-णार्थोपादानात् पर्यायप्रयोगेऽपि कर्मसंज्ञा भवतीति । अर्थाश्रया चेयं संज्ञा न दुह्यादिवत्स्वरूपाश्रयेति भिक्षिं प्रस्तुत्य वदतो हरदत्तस्यापि मते ऽत्र न विवादः । श्लोकार्थस्तु उपयुज्यत इत्युपयोगः पयःप्रभृति प्रधानं कर्म, तस्य निमित्तं गवादि तच्च यच्च ब्रुविशास्योर्गुणेन प्रधानकर्मणा धर्मा-दिना क्रियां प्रति साधनत्वेन गुणत्वात् लब्धगुणव्यपदेशेन सचते संबन्ध-मुपैति माणवकादि, तदुभयं कारकं पूर्वविधौ विशेषेणाविवक्षितत्वादपा-दानादिसंज्ञाभावे कविना क्रान्तदर्शिना सूत्रकारेणाकथितं कर्मोक्तमिति । याचिरिहानुनयार्थे । याचनार्थस्य तु भिक्षिणैव सिद्धम् । अथान्येऽपि द्विकर्मकाः प्रसङ्गात् प्रदर्श्यन्ते । यदाह

नीवह्योर्हरतेश्चापि गत्यर्थानां तथैव च ।
द्विकर्मकेषु ग्रहणं कर्त्तव्यमिति निश्चयः ॥

गत्यर्थग्रहणं गत्यादिसूत्रोपात्तानामुपलक्षणम्,

जयतेः कर्षतेर्मन्थेर्मुषेर्दण्डयतेः पचेः ।

तारेर्याहेस्तथा मोचेस्त्याजेर्दापेश्च संग्रहः ॥

कारिकायां चशब्देन सुधाकरमुखैः कृतः ।

ग्राहेरिह ग्रहो नैव हरदत्तस्य सम्मतः ॥

यदसौ 'गतिबुद्धी'त्यत्राथ कथमयाचितार नहि देवदेवमद्रिः सुतां ग्राहयितुं शशाकेति, स्वतन्त्राः कवयः । यद्वा सुतां प्रति न किंचिदुद्वाहविषयं ग्राहयितुं बोधयितुं शशाकेत्येव व्याख्येयम् । अत्र बुद्ध्यर्थत्वात् द्विकर्मकत्वं सिद्धमिति समर्थयते इतीयं च निर्व्वाहणा दिक् । प्रतिग्रहणस्य ममेदमिति बुद्धिविशेषनिष्पन्नत्वान् सुतां ग्राहयितुं ममेयमिति बोधयितुं न शशाक इत्येव व्याख्यातुमुचितत्वात् । इदानीं न किंचिदुद्वाहविषयमित्याद्यध्याहर्त्तव्यं भवति । तथा श्रीकराचार्यस्याप्यनभिमतमुपादानार्थस्य द्विकर्मकत्वम् ।

अजिग्रहत् जनको धनुस्तद्येनार्दिदद्दैत्यपुरः पिनाकी ।

जिज्ञासमानो बलमस्य बाह्वोर्हंसचताक्षीद्रघुनन्दनस्तत् ॥

इति भट्टिश्लोकं विवृण्वन्यदाह तद्धनुस्तं रामं जनकोऽजिग्रहत् बोधितवान् अनेन धनुषा त्रिपुरं दग्धमिति, ग्रहेश्च बुद्ध्यर्थत्वात् 'गतिबुद्धी'त्यादिना रामस्य कर्मसंज्ञा, धनुषस्तु 'कर्तुरीप्सिततम'मिति ग्रहिर्द्विकर्मकः । उपादानार्थत्वे तु ग्रहिर्गत्यादिष्वेकोऽपि न भवतीति कथं तमितीति । अत एव

तमादौ कुलविद्यानामर्थमर्थविदां वरः ।

पश्चात्पार्थिवकन्यानां पाणिमग्राहयत् पिता ॥

इत्यर्थमबोधयदित्यर्थः । बुध्यर्थत्वाद् द्विकर्मकत्वमुक्त्वा पाणिमग्राहयदित्यत्र तेनेत्यध्याहारेण व्याख्यानात् प्रकृत्यु श्लेषेण बुद्ध्युपादानयोर्ग्रहणं, किं चास्य द्विकर्मकत्वे अथ प्रजानामधिपः प्रभाते जायाप्रतिग्राहितगन्धमाल्यामित्यत्र ण्यन्ते कर्तुश्च कर्मेण इति प्रयोज्याया धेनोरभिधानेन भाव्यं, ततश्च जायया गन्धमाल्ये या धेनुः प्रतिग्राहितेति

नाथिता । नाथिष्यति । नाथतु । अनाथत् । नाथेत् । नाथ्यात् । अनाथी-त् । अनाथिष्यत् । निनाथिषतीत्यादि, यङ्लुक्यञ्झपन्तत्वात् 'झषस्तथोर्धोऽधः' इति धत्वाभावे 'चरि चे'ति चर्त्वे नानात्ति । नानात्तः । नानात्थ इत्यादि विशेषः । अत्र मैत्रेयाभरणकारादयश्च णोपदेशं पठन्तौ 'णो नः' इति धात्वादिणस्य नकारं विधाय 'उपसर्गादसमासेऽपि णोपदेशस्य' इति उपसर्गस्थान्निमित्तात्परस्य णोपदेशनकारस्य समासासमासयोर्णत्वविधानात् प्रणाथनवदन्यदैौ णत्वप्रयोजनमाहतुः । सर्वे नादयो णोपदेशा इत्यस्य पर्युदासे नृतिनन्दिनर्दिनक्किनाटिनाथृनाधृवर्जमित्यत्र च न पेठतुः । अत्र का-श्यपः । नाथतेर्णोपदेशत्वमयुक्तं, गणकारवृत्तिकारादीनामनिष्टत्वादिति । नृतिनन्दीत्यादिवाक्ये नाधृनृवर्ज नृत्यादीन् पठित्वैतान्सप्त वर्जयित्वेति वदन् श्रीकरोऽप्यत्रानुकूलः । तथा पर्युदासवाक्ये नर्दतिवर्जं सर्वानेतान् पठतः शाकटायनन्यासकृतोरयमेव पक्षोऽभिमतः । उभयोरप्यान्तपाठस्तु धान्तप्रकरणविरोधादनाशङ्क्य । इमौ याच्ञायामकथितेप्सिततमाभ्यां द्विकर्मकौ ।

दुहियाचिरुधिप्रच्छिभिक्षिचिञामुपयोगनिमित्तमपूर्वविधौ ।
ब्रुविशासिगुणेन च यत्सचते तदकीर्तितमाचरितं कविना ॥

इत्यत्र भिक्षिरर्थपरत्वात् । उक्तं च कैयटे । दुह्यादीनां चार्थोपलक्षणार्थोपादानात् पर्यायप्रयोगेऽपि कर्मसंज्ञा भवतीति । अर्थाश्रया चेयं संज्ञा न दुह्यादिवत्स्वरूपाश्रयेति भिक्षिं प्रस्तुत्य वदतो हरदत्तस्यापि मते ऽत्र न विवादः । श्लोकार्थस्तु उपयुज्यत इत्युपयोगः पयःप्रभृति प्रधानं कर्म, तस्य निमित्तं गवादि तच्च यच्च ब्रुविशास्योर्गुणेन प्रधानकर्मणा धर्मादिना क्रियां प्रति साधनत्वेन गुणत्वात् लब्धगुणव्यपदेशेन सचते संबन्धमुपैति माणवकादि, तदुभयं कारकं पूर्वविधौ विशेषेणाविवक्षितत्वादपादानादिसंज्ञाभावे कविना क्रान्तदर्शिना सूत्रकारेणाकथितं कर्मोक्तमिति । याचिरिहानुनयार्थः । याचनार्थस्य तु भिक्षिणैव सिद्धम् । अथान्येऽपि द्विकर्मकाः प्रसङ्गात् प्रदर्श्यन्ते । यदाह

नीवह्योर्हरतेश्चापि गत्यर्थानां तथैव च ।
द्विकर्मकेषु ग्रहणं कर्तव्यमिति निश्चयः ॥

गत्यर्थग्रहणं गत्यादिसूत्रोपात्तानामुपलक्षणम्
जयतेः कर्षतेर्नर्त्तेर्नयतेर्दण्डयतेः पचेः ।
तारयेर्ग्राहेस्तथा मोचेस्त्याजेर्दापेश्च सङ्ग्रहः ॥
कारिकायां चशब्देन सुधाकरमुखैः कृतः ।
ग्राहेरिह ग्रहो नैव हरदत्तस्य सम्मतः ॥

यदसौ 'गतिबुद्धी'त्यत्राथ कथमयाचितारं नहि देवदेवमद्रिः सुतां ग्राहयितुं शशाकेति, स्वतन्त्राः कवयः । यद्वा सुतां प्रति न किञ्चिदुद्वाहविषयं ग्राहयितुं बोधयितुं शशाकेत्येव व्याख्येयम् । अत्र बुद्ध्यर्थत्वात् द्विकर्मकत्वं सिद्धमिति समर्थ्यते इतीयं च निर्व्वाहणा दिक् । प्रतिग्रहणस्य ममेदमिति बुद्धिविशेषनिरूप्यत्वात् सुतां ग्राहयितुं ममेयमिति बोधयितुं न शशाक इत्येव व्याख्यातुमुचितत्वात् । इदानीं न किञ्चिदुद्वाहविषयमित्याद्यध्याहर्त्तव्यं भवति । तथा श्रीकराचार्यस्याप्यनभिमतमुपादानार्थस्य द्विकर्मकत्वम् ।

अजिग्रहत जनको धनुस्तद्येनार्दिदद्दैत्यपुरः पिनाकी ।
जिज्ञासमानो बलमस्य बाह्वोर्हंसच्छतात्‌दीद्रघुनन्दनस्तत् ॥

इति भट्टिश्लोकं विवृखन्यदाह तद्धनुस्तं रामं जनकोऽजिग्रहत् बोधितवान् अनेन धनुषा त्रिपुरं दग्धमिति, ग्रहेश्च बुद्ध्यर्थत्वात् 'गतिबुद्धी'त्यादिना रामस्य कर्मसंज्ञा, धनुषस्तु 'कर्त्तुरीप्सिततम'मिति ग्रहिर्द्विकर्मकः । उपादानार्थत्वे तु ग्रहिर्गत्यादिष्वेकोऽपि न भवतीति कथं तमितीति । अत एव

तमादौ कुलविद्यानामर्थमर्थविदां वरः ।
पश्चात्पार्थिवकन्यानां पाणिमग्राहयत् पिता ॥

इत्यर्थमबोधयदित्यर्थः । बुध्यर्थत्वाद् द्विकर्मकत्वमुक्त्वा पाणिमग्राहयदित्यत्र तेनेत्यध्याहारेण व्याख्यानात् प्रकृत्युदश्लेषेण बुद्ध्युपादानयोर्ग्रहणं, किं चास्य द्विकर्मकत्वे अथ प्रजानामधिपः प्रभाते जायाप्रतिग्राहितगन्धमाल्यामित्यत्र ण्यन्ते कर्त्तुश्च कर्मणः इति प्रयोज्याया धेनोरभिधानेन भाव्यं, ततश्च जायया गन्धमाल्ये या धेनुः प्रतिग्राहितेति

विग्रहीनत्वम्, अत्र च प्रथमार्थं वर्जयित्वा सर्वविभक्त्यर्थेषु बहुव्रीहिरित्युक्तत्वात्समासो न स्यात्, सत्यपि समासे समानाधिकरणोत्तरपदाभावात् 'स्त्रियाः पुंवद्' इति पुंवद्भावो न स्यात् । पक्षान्तरे तु गन्धमाल्ययोरेव कर्मत्वात्तयोरेव क्ते तेनाभिधानात् जायया प्रतिग्राहिते गन्धमाल्ये यथा धेन्वेन्दूरयादिवत् तृतीयार्थेन समासः सिध्यतीति गतमदः । दूषिशक्री च द्विकर्मकौ भाष्यउक्तौ । एव चायाचितार नहि देवदेवमित्यत्रापि देवः शब्दापेक्षया कर्म सुता प्रतिग्रहापेक्षयेति न सङ्कटं किंचित् ॥

अथ द्विकर्मकसाधारणमिदं विचार्यते ॥ किमेते लादयः प्रधाने कर्मणि भवन्ति अथाप्रधाने । न चानयोर्युगपदभिधानसंभवो भिन्नकक्षत्वात् । अत्राह ।

प्रधानकर्मण्याख्येये लादीनाहुर्द्विकर्मणाम् ।
अप्रधाने दुहादीनां ण्यन्ते कर्तुश्च कर्मणः ॥

इति । अभिधानइति शेषः । अत्र द्विकर्मणामित्यनेन नीवह्योर्हरतेश्चेति चशब्दसमुच्चित कृषिः नयत्यादयश्च त्रय उच्यन्ते । अन्येषां विशेषस्य वक्ष्यमाणत्वात् । तथा दुह्यादीनामित्यनेन कारिकोपात्ताश्चशब्दसमुच्चितेष्वहेतुमण्ण्यन्ता जिदण्ड्यादयश्चोच्यन्ते, ण्यन्तइत्यनेन तु गत्यादिसूत्रोपात्ताश्चशब्दसमुच्चितान्नाद्यादयश्च । अत्र बुद्धिप्रत्यवसानार्थशब्दकर्मकेषु प्राकृते वा कर्तरि प्रयोज्ये वा लादयः । यदाह ।

कथितेऽभिहिते त्वविधिस्त्वमतिर्गुणकर्मणि लादिविधिः सपरे ।
ध्रुवचेष्टितयुक्तिषु चाप्यगुणे तदनल्पमतेर्वचनं स्मरति ॥

अस्यार्थः । तत्र प्रथमः पादः प्रधानकर्मणि लादिभिरभिहिते गुणकर्मणि षष्ठीत्येकीयमतदूषणपर इति इहानुपयोगात् न व्याख्यायते । सपरे गत्यादिसूत्रोपात्तसहिते दुह्यादौ गुणकर्मणि लादयः । गुणकर्मेति पुरुषप्रवृत्तेः पयःप्रभृत्यर्थत्वात् दुह्यादावप्रधानं गवाद्युच्यते । ण्यन्ते तु शब्देन प्रयोजकव्यापारस्य प्राधान्यं प्रयोज्यव्यापारस्य त्वप्राधान्यमिति तदाप्य धर्माद्युच्यते । ध्रुवयुक्तयोऽकर्मकाः, चेष्टितयुक्तयो गत्य-

थोः, एष्वगुणे प्रयोज्ये, तदेतदनल्पमतेर्मैधाविन आचार्यस्य वचनमिति। अत्र स्मरतीत्यनेनागमस्याविच्छेद दर्शयति। एव चात्रापि याचनस्य धनाद्यर्थत्वात्तस्यैव प्राधान्यादन्यद्राजादि कर्मप्रधानमिति तत्रैव लादयो भवन्तीति नाथ्यते राजा धन नाथ्यः नाथितः सुनाथ इत्यादि भवति। नाथिता धनस्य राज्ञ इत्यत्र च कर्मणि षष्ठ्युभयत्र भवति। गुणकर्मण्युभयथा गोणिकापुत्र इति भाष्ये उक्तत्वात् द्वितीयापि द्रष्टव्या। नाथिता धनस्य राजानमिति, भाष्ये नयतेरुदाहरणं प्रदर्शनमात्रं, स्पष्ट चैतत् पदमञ्जर्यादिषु। नाथितव्यो राजा धन देवदत्तेनेत्यत्र कर्तृकर्मणोः प्राप्ता कृद्योगलक्षणा षष्ठी 'कृत्यानां कर्तरि वे'त्यत्र कृत्यानामिति योगं विभज्य प्राप्तौ नेति चानुवर्त्त्य उभयप्राप्तौ कृत्ये षष्ठ्यभावस्य भाष्ये प्रतिपादितत्वान्न भवति। स्पष्ट चैतत्कैयटादौ। यत्तु 'कृत्याना'मित्यत्रोभयप्राप्तौ कृत्ये षष्ठ्याः प्रतिषेध इति वृत्तिमुपादाय प्रतिषेधोऽयं कर्तरि षष्ठ्याः कर्मणि षष्ठ्यास्तु प्रधानस्य कर्मणः कृत्येनाभिधानादन्यस्याप्राधान्यादप्रसङ्ग इति न्यासेऽर्थसत्त्वमुक्तं तद्द्वितीयाऽप्रधाने षष्ठ्यनिवार्य्येति यत्किंचित्। कर्तरि चेति विधीयमानषष्ठीविकल्प उभयप्राप्तिव्यतिरिक्तकृत्यविषयः। नाथितव्यं सर्पिर्देवदत्तेन देवदत्तस्येति वा ६–७॥

दध धारणे॥ दानइति केचित् पठन्ति, दद दानइत्यत्र धारणइति। तदयुक्तम्।

> तद्वेषसदृशोन्याभिस्त्रीभिर्मधुरताभृतः।
> दधते सुलभा शोभा तदीया विभ्रमा इव॥
> पिबति च पाति च यासकौ रहस्त्वाम्
> व्रज विटपमम् ददस्व तस्यै।
> दाददो दुद्दुदुद्दादी दादादो दूददीददोः।
> दुद्दादं दददे दुद्दे ददाददददोऽददः॥

इत्यादौ दधेो धारणार्थत्वस्यान्यस्य दानार्थत्वस्य च व्यवस्थितत्वात्। दधते। दधेते। दधन्ते। दधसे। दधावहे। दधामहे। देधे। देधाते। देधिरे। देधिषे। देधे। देधिवहे। 'अत एकह-

रित्यादि । लङि तिप्सिपोर्हल्ङ्यादिसंयोगान्तलोपयोरचोस्कुन् । भावादौ यङन्तवदित्युक्तम् । स्कुन्दयति । स्कुन्दयतइत्यादि । स्कुन्दनः । युच् स्कुन्दा । उपदेशावस्थायां नुमो विधानात् धातोर्गुरुमत्त्वाद् 'गुरोश्च हल' इति स्त्रियामकारो लघूपधगुणाभावश्च ॥ ९ ॥

श्विदि श्वैत्ये ॥ अकर्मकः । श्वेतस्य गुणस्यापि धातुना साध्यतया क्रमिकतया वाभिधानात् क्रियात्वम् । यदाह ।

श्वेतते: श्वेत इत्येतत् श्वेतत्वेन प्रकाश्यते ।
आश्रितक्रमरूपत्वादभिधानं प्रवर्त्तते ॥

इति । पूर्ववन्नुमागमः । श्विन्दते इत्यादि स्कुन्दिवत् ॥ १० ॥

वदि अभिवादनस्तुत्योः ॥ प्रणतिपूर्वमाशिषो वाचनमभिवादनं, तथा च प्रयोगः । अभिवदति नाभिवादयतेऽप्याचार्यं श्वशुरं राजानमिति । वन्दते । ववन्दे । वन्दितेत्यादि । पूर्ववन्नुमि कृते ऽकारस्यासहायहल्मध्यगतत्वाभावान्नैत्वाभ्यासलोपौ । 'न शसददवादिगुणाना'मिति निषेधाद्वा । गुण इति तद्भाविताकार उच्यते । वन्दारुः । 'शृवन्द्योरारु'रिति तच्छीलादिकर्तृष्वारुप्रत्ययः । वन्दना । 'घट्टिवन्दिविदिभ्यश्चे'ति स्त्रियां युच् । वन्दा वृक्षरुहा । बाहुलकात् स्त्रियां सञ्ज्ञायामकारः । वन्दा वृक्षादनी वृक्षरुहा जीवन्तिकेत्यपीत्यमरः । वन्दीति । स्तोतर्यावश्यकणिन्यन्तः । हठहृतमहिलायां त्वियमिति सर्वधातुविषयेचन्तात्सर्वतोऽक्तिन्नर्थादित्येकइति ङीषि । अयं वशादिरपभ्रंशः । यदाह राजानकः सन्दिग्धस्योदाहरणे ।

आलिङ्गितस्तत्रभवान्संपराये जयश्रिया ।
आशीःपरंपरां वन्द्यां कर्णे कृत्वा कृपां कुरु ॥

अत्र वन्द्यामिति किं हठहृतमहिलायामुत नमस्यामिति सन्देह इति । वन्द्रः पूजकः । 'स्फायितञ्चिवञ्चिशकिक्षिपिक्षुदिसृपितृपिदृपिवन्द्युन्दिश्वितिवृत्यजिनीपदिमदिमुदिखिदिच्छिदिभिदिमन्दिचन्दिदहिदसिदम्भिवसिवाशिशीङ्हसिसिधिशुभिभ्यो रगि'ति रक् प्रत्ययः ॥ ११ ॥

भदि कल्याणे सुखे च ॥ कल्याणं मङ्गलं सुखमात्मगुणः । भन्दते । बभन्दे । भन्दितेत्यादि स्कुन्दिवत् । देवदत्ताय भद्रं भूयाद्देवदत्तस्येति वा ॥

'ऋज्रेन्द्राग्रवज्रविप्रकुब्रचुब्रक्षुरखुरभद्रोग्रभेरभेलशुक्रशुक्लगौरवम्रेरामाला' इति रक्यनुनासिकलोपे भद्रशब्दो निपातितः। तद्युक्ता चतुर्थी 'चाशिष्यायुष्यमद्रभद्रकुशलसुखार्थहितै'रित्याशिषि गम्यमानायां चतुर्थीषष्ठ्यौ। अत्रायुष्यादयोऽर्थपराः। भद्राकरोति मुण्डयतीत्यर्थः। 'भद्राच्चेति वक्तव्य'मिति परिवापणे मुण्डने कृञो योगे डाच् प्रत्ययः। अस्य 'चोर्यादिच्विडाचश्चे'ति गतित्वात्पूर्वं प्रयोगः। अत एव निपातत्वेनाव्ययत्वात्सेर्लुक् ॥ १२ ॥

मदि स्तुतिमोदमदस्वप्नगतिषु ॥ कान्तिगतिष्वित्येके। मोदो हर्षः। मदो गर्वः। स्वप्न आलस्यम्। चन्द्रस्तु मदि जयइत्यपि पपाठ। स्तुतिगतिभ्यामन्यत्राकर्मकः। मन्दते। ममन्द। मन्दितेत्यादि पूर्ववत्। मन्दुरा। 'मन्दिवाशिमथिचतिचङ्क्यङ्किभ्य उरजि'त्युरच्। मन्दिरम्। 'इषिमदिमुदिखिदिच्छिदिभिदिमन्दिचन्दितिमिमुहिमिहिमुचिरुचिरुधिशुषिबन्धिभ्यः किरजि'ति किरच्। मन्द्रम्। 'स्फायितञ्चीत्या'दिना रक्। मन्दारः। 'अगिमदिमन्दिभ्य आरचि'त्यारन्। मन्दरः। बाहुलकादरः। मन्दु मन्द रातीति मन्दरः। अथ मदी हर्षे दिवादौ। मद हर्षग्लेपनयोः घटादौ। मद तृप्तियोगइति चुरादौ ॥ १३ ॥

स्पदि किंचिच्चलने ॥ चलनं कम्पनम्। अकर्मकः। स्पन्दते। पस्पन्दे। स्पन्दितेत्यादि पूर्ववत्। स्पन्दयति। 'निगरणचलनार्थेभ्यश्चे'ति णयन्तात्परस्मैपदमेव। निगरणमभ्यवहारः ॥ १४ ॥

क्लिदि परिदेवने ॥ परिदेवनं शोचनम्। सकर्मकः। क्लिन्दते देवदत्तम्। चिक्लिन्दे। क्लिन्दितेत्यादि पूर्ववत्। क्लेदा। क्लेदौ वधिशशाङ्कयोरिति यादवप्रकाशः। 'श्वन्नुक्षन्पूषन्प्लीहन्क्लेदन्स्नेहन्मूर्धन्मज्जन्नर्यमन्विश्वप्सन्परिज्मन्मातरिश्वन्मघवन्नि'ति कनिनि गुणनुमभावयोर्निपातितः। 'सर्वनामस्थाने चासंबुद्धा'विति नान्तत्वादुपधाया दीर्घः। सबुद्धौ हल्ङ्यादिलोपे प्रत्ययलक्षणेन सुबन्तत्वात्पदत्वा न्नलोपः प्रातिपदिके'ति प्राप्तो नलोपो 'न ङिसबुद्ध्यो'रिति निषिध्यते, भसंज्ञायामल्लोपे क्लेद्न इत्यादि, सप्तम्येकवचने 'विभाषा ङिश्योरि'त्यल्लोपस्य विकल्पनात् क्लेद्नि क्लेदनीत्यपि भवति। हलादौ पदत्वान्नलोपे क्लेदभ्यामित्यादि। नलोपस्य पूर्वत्रासिद्धत्वा-

'त्सुपि च' 'अतो भिस ऐस्' 'बहुवचने झल्ये'दित्येते विधयो न भवन्ति । स्कुन्दादय स्कन्दन्ताः सप्त इदितः । अयं परस्मैपदादिष्वपि पठ्यते । उदिदार्द्रभावे दिवादौ ॥ ५५ ॥

मुद हर्षे ॥ मोदते । मोदेते । मोदसे । मोदे । लघूपधत्वाद्गुणः । मुमुदे । मुमुदाते । मुमुदिषे । मुमुदिवहे । 'असंयोगाल्लिट्कि'दिति कित्त्वान्न गुणः । मोदिता । मोदिष्यते । मोदताम् । अमोदत । मोदेत । आशिषि । मोदिषीष्ट । अमोदिष्ट । अमोदिष्यत इत्यादि । भावे मुद्यते । अमुद्यत । मुद्येत । अमोदि । शेषं कर्तृवत् । मुमुदिषते, मुमोदिषते । 'रलो व्युपधाद्धलादेः सश्च' । रलन्ताद्धलादेरुकारेकारोपधात् परौ सेटौ क्त्वासनौ वा कितौ भवत इति कित्त्वपक्षे न गुणः । मुमुदिषा चक्रे । मुमोदिषा चक्रे इत्युदाहार्यम् । मोमुद्यते । मोमुदा चक्रे । मोमुदितेत्यादि । अत्रार्धधातुके यलोपाल्लोपयोर्लघूपधगुणो न भवति । 'न धातुलोप आर्धधातुके'इति धात्वेकदेशलोपनिमित्तार्धधातुकनिमित्तयोर्गुणवृद्ध्योर्निषेधात् 'अचः परस्मिन् पूर्वविधा'वित्यल्लोपस्य स्थानिवत्त्वाद्वा । मोमोत्ति । मोमुदीति । मोमुत्तः । मोमुदति । मोमोत्सि । मोमुदीषि । मोमोद्मि । मोमुदीमि । मोमुद्मः । यङ्लुको ऽनैमित्तिकत्वा'न्न धातुलोप' इति निषेधो न भवति । ईटि तु 'नाभ्यस्तस्याचि पिति सार्वधातुक'इति निषेधः । मोमोदा चकार । मोमोदिता । मोमोदिष्यति । मोमोत्तु । मोमुत्तात् । मोमुदीतु । मोमुद्धि । हेरपित्त्वान्न गुणः । मोमुदानि । मोमुदाव । आट्यजादिपित्सार्वधातुकत्वा'न्नाभ्यस्ते'ति गुणनिषेधः । लङ्यडभावपक्षे तिप्सिपोर्हल्ङ्यादिलोपे 'वावसान'इति पक्षे चर्त्वम् । सिपि तु 'दश्चे'ति वा रुत्वमपि । अमोमोत् । अमोमोद् । अमोमुत्ताम् । अमोमोत् । अमोमोद् । अमोमोः । अमोमुदम् । ईट्यमोमुदीत् । अमोमुदीः । मोमुद्यात् । आशिषि । मोमुद्यास्ताम् । यासुटो ङित्त्वकित्त्वाभ्यां न गुणः । अमोमोदीत् । सिज्लोपस्यामिद्धत्वाद्वा प्रत्ययलक्षणेन वा गुणः । अमोमोदिष्टाम् । हलन्तलक्षणा वृद्धि'र्नेटी'ति निषिध्यते । अमोमोदिष्यदित्यादि । मोदयति । मोदयां चकारेत्यादि पूर्ववत् । लुङ्यमू-

मुदत् । 'दीर्घो लघोरि'ति दीर्घः । मुदित्वा । मोदित्वा । उक्तः क्त्विविकल्पः । मुदितमनेन । मोदितमनेन । 'निष्ठे'ति भूते यः क्तः स 'तयोरेव कृत्यक्तखलर्था' इति नियमादकर्मकादस्माद् भावे, प्रमुदितमनेन । प्रमोदितमनेन । प्रमुदितः । प्रमोदितः । अत्रादिक्रियाक्षणस्य भूतत्वाश्रये 'निष्ठे'ति क्तः । स चा'दिकर्मणि क्तः कर्त्तरि चे'ति भावकर्त्रोर्द्वयोरपि भवति । प्रमुदितवान् । प्रमोदितवान् । 'उदुपधाद्भावादिकर्मणोरन्यतरस्या'मिति सेटो निष्ठायाः पक्षे क्त्विनिषेधाद् गुणः । भावादिकर्मभ्यामन्यत्र मुदिते देवदत्तः मुदितवानित्येव । [illegible] कर्तरि क्तः । मुदितवानित्यत्रा'त्वसन्तस्य चाधातो'रित्यात्व तस्याधातोरसन्तस्य चोपधायाः सम्बुद्धिवर्जिते सौ विहिताद्दीर्घादनन्तर क्तवतोरुदित्त्वेन नुमि हल्ङ्यादिसंयोगान्तलोपौ । पूर्व नुमि न दीर्घस्य प्रसङ्गः उपधाभावात् । न च संयोगान्तलोपादनन्तरमुपधात्वे भूतपूर्वगत्याऽत्वन्ताङ्गस्य दीर्घस्य प्रसङ्गः । नापि नान्तत्वेन 'सर्वनामस्थान'इति दीर्घस्य । यतस्तयोः संयोगान्तलोपोऽसिद्धः । मोदन । युच् । मुत् । 'सम्पदादिभ्यः क्विबि'ति स्त्रियां क्विप् । मुदिरः । 'इषिमदी'त्यादिना किरच् । मुद्गः । 'मुदिग्रोर्गग्गा'विति गक् । कित्त्वान्न गुणः । मुद्गेन संसृष्ट मौद्गम् । 'मुद्गादण्'ति तृतीयान्तादस्मात्संसृष्टेऽण् प्रत्ययः । मुद्रा । 'स्फायितञ्ची'त्यादिना रक् । संसर्गार्थोऽयं चुरादौ ॥ १६ ॥

दद दाने ॥ किं चिदुद्दिश्यापुनर्ग्रहणाय स्वीयत्यागो दानम् । ददते । ददसे । ददे । दददे । ददद्दाते । ददद्दिषे । ददद्दे । 'न शसददे'त्येत्वाभ्यासलोपनिषेधः । ददिता । ददिष्यते । ददताम् । अददत । ददेत । आशिषि । ददिषीट । अददिष्ट । अददिष्यत । कर्मादौ । दद्यते । दद्यताम् । अदद्यत । दद्येत । अदादि, शेषं कर्तृवत् । दिददिषते । दादद्यते । दाददीति । दादत्ति । दादयते । शेषं मुदिवद्वेदम् ॥ १७ ॥

ष्वद स्वर्द आस्वादने ॥ सवरणइति क्षीरस्वामी । आस्वादनमनुभवः । अत्रायं सकर्मकः स्वदन्ति देवा उपा निहव्येति दर्शनात् । छान्दस परस्मैपदम् । तथा स्वादनइति ण्यन्तेनार्थनिर्देशाच्च

मकर्मकोऽयम् । यद्वक्ष्यति चुरादावास्वादने सकर्मक इति । अस्यार्थो ऽत्र प्रपञ्चयिष्यते । यद्वायमनेकार्था धातव इति रुचौ वर्त्तते तदाऽकर्मकः । आद्यः षोपदेशः । तदुक्तं भाष्ये । अज्दन्त्यपराः सादयः षोपदेशाः स्मिङ्स्विदिस्वदिस्वञ्जिस्वपयश्चेति । प्रायेणाय माङ्पूर्वः । आस्वदते रसम् । सस्वदितेत्यादि ददिवत् । रुच्यर्थत्वे त्वस्य । दधि स्वदते देवदत्ताय । 'रुच्यर्थानां प्रीयमाण'इति तर्प्यमाणस्यैवा प्रयोगे सम्प्रदानत्वाद्देवदत्ताच्चतुर्थी । अन्यकर्तृकोऽभिलाषो रुचिरिति वृत्तिः । अत्र हरदत्तः । योऽभिलाषस्याश्रयः प्रीयमाणः ततोऽन्यकर्तृक इत्यर्थः । कथं पुनरन्याश्रयस्याभिलाषस्यान्यः कर्त्ता भवति, यावता यदाश्रयव्यापारं धातुः प्राधान्येनाचष्टे स कर्त्ता । नेदं कर्तृलक्षणं किं तर्हि स्वातन्त्र्यमेव, तच्च क्वचिद्वास्तवं क्वचिद्वैवक्षिकम् । तत्र माधुर्यातिशयेन स्वविषयं देवदत्ताश्रयमभिलाषं जनयद् दधि तत्र कर्त्तेति गीयतइति । अत्र 'सात्पदाद्यो'रिति सातिप्रत्ययपदाद्योः सकारस्य षत्वनिषेधादिणः परत्वेपि न षत्वम् । कर्मादौ स्वद्यतइत्यादि, सिस्वदिषते । 'स्तौतिण्योरेव षण्यभ्यासादि'ति नियमाच्च षत्वम् । अभ्यासस्यान्निमित्तादुत्तरस्या-'देशप्रत्यययो'रिति षत्वं, कृतषत्वे सति यदि भवति स्तौतिण्यन्तानामेवेति सूत्रार्थः । सास्वद्यते । सास्वदीति । सास्वत्ति । स्वादयति । स्वादयते । असिष्वदत् । शेषं पूर्ववत् । ण्यन्तात्सनि 'स्तौतिण्योरेवे'ति नियमात् षत्वे प्राप्ते तदपवादः 'सः स्विदिस्वदिसहीनां चे'ति सकारो विधीयतइति सिस्वादयिषतीति भवति । ये त्वमु दन्त्यादिं पठन्ति, तेषामिदं सत्ववचनं कथमर्थवदिति तएव प्रष्टव्याः । स्वर्दते । सस्वर्दे इत्यादि स्वदिवत् । अज्दन्त्येति षोपदेशलक्षणं केवलदन्त्यविषयमिति दन्त्योष्ठ्यपरोऽयं न षोपदेशः । अत एव दन्त्योष्ठ्यपराः ष्विद्यादयः स्वदीत्यादिना पुनः पठ्यन्ते । स्वादुः । 'कृवापाजिस्वदिसाध्यशूभ्य उण्'इत्युण्प्रत्ययः । स्वाद आस्वादनइत्यत्रेयाये ॥ १९ ॥

उर्द माने क्रीडायां च ॥ क्रीडायामकर्मकः । चकारादास्वादने । इह मानं मुर्त्तिमिति समतायाम् । ऊर्दते । ऊर्दां चक्रे । ऊर्दिता । ऊर्दि-

ष्यते । ऊर्दताम् और्दत । ऊर्देत । आशिषि । ऊर्दिषीष्ट । और्दिष्ट । और्दिष्यत । 'उपधाया चे'ति धातोरुपधाभूतरेफात् पूर्वस्वादिको दीर्घः सर्वत्र । यथायोग भावकर्मकर्मकर्तृषूर्द्यतइत्यादि । ऊर्दिदिषते । 'न न्द्राः संयोगादय' इति द्वितीयस्यैकाचो नदराणा संयोगादीना द्विर्वचननिषेधाद्दकारादिर्द्विरुच्यते । ऊर्दयति । और्दिदत् ॥ २० ॥

कुर्द खुर्द गुर्द गुद क्रीडायामेव ॥ अत्र कैयटपुरुषकारमैत्रेयादिषु तृतीयो न पठ्यते । समतामोघाविस्तारचान्द्रेषु तु त्रयोऽपि पठ्यन्ते । गुद क्रीडा गुदविहार इति चरके । मैत्रेयकाश्यपौ गुद इत्यपि पृथक् धातुरिति । अत्रैवकारो धातूनामनेकार्थत्वे ज्ञापक इत्युक्तम् । स्फूर्ज्जेर्दीर्घोपदेशादु'पधाया चे'ति दीर्घ एषा न इति चन्द्रः । मैत्रेयसमतामोघाविस्तारकारादयस्तु दीर्घत्वमिच्छन्ति । कूर्दते । चुकूर्दे । कूर्दिता । कूर्दिष्यते । कूर्दताम् । अकूर्दत । कूर्देत । आशिषि । कूर्दिषीष्ट । अकूर्दिष्ट । भावे । कूर्द्यतइत्यादि । चुकूर्दिषते । चोकूर्द्यते । चोकूर्त्ति । चोकूर्दीति । चोकूर्त्तः । चोकूर्दा चकार । चोकूर्दितेत्यादि । लङि तिप्सिपोर्हल्ङ्यादिलोपे 'वाऽवसान'इति चर्त्त्वविकल्पः । अचोकूर्दीत् । अचोकूर्त् । अचोकूर्द् । सिपि तु 'दश्चे'ति वा रुत्वमपि । अचोकूः । चान्द्रेऽपि मते 'रो रि' लोपे 'ढ्रलोप'इति दीर्घस्य विद्यमानत्वादत्र न विशेषः । कूर्दयति । अचुकूर्दत् । एवमितरयोरप्युदाहार्यम् । गुदः । गोदते । जुगुदे । गोदितेत्यादि । जुगुदिषते । जुगोदिषते । गुदित्वा, गोदित्वेत्यादि मुदिवच्चेयम् । गुदम् । इगुपधलक्षणः कः । गोद इति पचाद्यजिति मैत्रेयः ॥ २४ ॥

षूद क्षरणे ॥ क्षरण निःसारणम् । अत्रायमकर्मकः, हिंसायामपि वर्त्तते, मधुसूदन इति । अत्राय सकर्मकः । ण्यन्तोयं संस्कारेऽपि वर्त्तते । अग्निर्हव्य शमिता सूदयतीति । हव्यं हवनार्हं पशोर्हृदयादि शमिता शमित्राग्निः सूदयति सस्करोतीति । क्षरणस्वादुकरणनाशनार्थत्वमहोरात्राणि मरुतो विलिष्ट सूदन्त्वित्यत्राह भट्टभास्करः । तथा हि अहोरात्राणि मरुतश्च तद्विलिष्टं विनाशित विरूपं वा सूदयन्तु क्षारयन्तु यद्विलिष्ट स्वादु कुर्वन्तु वा । यद्वा यद्विलिष्टं यागायोग्यं यद्विरूपं विशसित तद्विनाशयन्त्त्विति । क्षरे

तु तत्र क्लिष्टं स्यन्न पूरयन्त्विति पूरणार्थत्वं दृश्यते । सूदते । सुषूदे । सूदितेत्यादि । भावादौ सूद्यतइत्यादि । सुषूदिषते । 'स्तौतिण्योरेवे'ति नियमात्र षत्वम् । सोषूद्यते । सोषूत्ति । सूदयति । सूदयते । असूषुदत् । 'णौ चङी'ति ह्रस्वत्वम् । सूदिता । 'सूददीपदीक्षश्चे'त्यनुदात्तेल्लक्षणस्य युचो निषेधात् 'तृन्'इति सामान्यस्ताच्छीलिकस्तृन् । मधुसूदनः । 'नन्दिग्रहिपचादिभ्यो ल्युणिन्यच' इति ल्युः । क्षरति क्षारयति रसानिति च, सूदः पक्तः पाचकश्च । 'इगुपधज्ञाप्रीकिरः कः' इति इगुपधत्वात् कर्त्तरि कः । अयं चुरादावपि ॥ २५ ॥

ह्राद अव्यक्ते शब्दे ॥ अव्यक्तशब्दो वाद्यादिघोषः । ह्रादते । जह्रादे । 'कुहोश्चु'रित्यभ्यासहकारस्यान्तरतम्यात् झकारश्चुत्वं, तस्याभ्यासे चर्चे'ति जश्त्वं जकारः । ह्रादितेत्यादि । भावे ह्राद्यतइत्यादि । अह्रादि । जिह्रादिषते । जाह्राद्यते । जाह्रादीति । जाह्रात्तीत्यादि, ह्रादयति । ह्रादयते । अजिह्रदत् । 'अत्स्मृदृत्वरप्रथम्रदस्तॄस्पशा'मिति स्मरत्यादीनां चङ्परे णौ लघुनि धात्वक्षरे परतस्त्वापवादात्त्वविधानाज् ज्ञापकादिन्त्वविधौ येन नाव्यवधानं तेन व्यवहितेपि भवतीति नियमानाश्रयणादभ्यासस्येत्वम् । दीर्घस्तु न भवति संयोगपरत्वेनालघुत्वात् । ह्रदः । पचाद्यचि पृषोदरादित्वात् ह्रस्वः । महिकिह्रदो नाम वाहीकग्रामविशेषः, तत्र भवादिर्महिकिह्रदीयः, 'कन्यापलदनगरग्रामह्रदोत्तरपदादि'ति शैषिके छो 'वाहिकग्रामेभ्यश्चे'ति प्राप्तयोः ठञ्ञिठयोरपवादः, 'आयनेयीनीयियः फढखच्छघां प्रत्ययादीनामि'ति प्रत्ययादीनां फादीनां यथासंख्यमायन्नादिविधानात् छस्येयादेशः । छविधौ निपातनाद्वा ह्रस्वः ॥ २६ ॥

ह्लादी सुखे च ॥ चकारादव्यक्तशब्दे च । ह्लादतइत्यादि ह्रादिवत् । विशेषस्त्वीदित्वात् श्वीदितो निष्ठायामि'तीडभावो ह्लादो निष्ठायामि'त्युपधाह्रस्वश्च । तथा 'रदाभ्यां निष्ठातो नः पूर्वस्य च दः' इति निष्ठातकारस्य पूर्वदकारस्य च नकारः, आह्लन्नः । आह्लन्नवान् ॥ २७ ॥

स्वाद आस्वदने ॥ स्वादतइत्यादि स्वदिवत् । अषोपदेशत्वादसिस्वदद् इत्यादौ न षत्वम् । स्वदिना समानार्थोप्ययमाकारोपधसाम्या-

दिह पठितः । अजदन्त्येति षोण्देशलत्तणे दन्त्यग्रहणेन केवलो दन्त्यो गृह्यते न तु दन्त्योष्ठ्योऽपीत्ययमषोपदेशः स्वर्दिवत् ॥ २८ ॥

पर्द कुत्सिते शब्दे ॥ रेफवद्दान्तः । सयोगान्तेर्दादिष्वयं न पठितः । शब्दविशेषार्थेन द्राघादिनापि साम्यात् । स्वादिस्त्वाकारवत्सयोगादित्वेन ह्राद्यनुरोधेन मध्ये पठितः । इह कुत्सितः शब्दो गुदरवः । तदाह केशवस्वामी कौत्ते कर्देति पर्दते गुदरवइति । पर्दते । पपर्दे । पर्दिता । पर्दिष्यते । पर्दताम् । अपर्दत । पर्देत । पर्दिषीष्ट । अपर्दिष्ट । भावे पर्द्यतइत्यादि । पिपर्दिषते । पापर्द्यते । पापर्द्मि । पापर्दीति । पापर्त्तीत्यादि । लङि तिप्सिपोर्हल्ङ्यादिलोपे वा चर्त्वम् । सिपि तु पत्ते 'दश्चे'ति रुत्व चोदाहार्यम् । पृदाकुः । 'पर्देर्नित् सम्प्रसारणमल्लोपश्चे'ति काकुप्रत्ययो लोपः प्रसारण च ॥ २९ ॥

यती प्रयत्ने ॥ यतते । येते । येतिषे । एत्वाभ्यासलोपौ । यतिता । यतिष्यते । यतताम् । अयतत । यतेत । आशिषि यतिषीष्ट । अयतिष्ट । अयतिष्यत । भावे । यत्यतइत्यादि । यियतिषते । यायत्यते । यायतीति । यायत्तीत्यादि । लङि तिप्सिपोर्हल्ङ्यादिलोपे जश्त्वे वा चर्त्वम् । सिपि तु 'दश्चे'ति वा रुत्वमपि । यातयति । अयीयतत् । यत्यम् । 'तकिशसियतिजनीनामुपसख्यानमि'ति भावे यत् । आयत्तः । आयत्तवान्, ईदित्वात् 'श्वीदितो निष्ठायामि'तीडभावः । यत्नः । 'यजयाचयतविच्छप्रच्छरत्तो नङि'ति भावादौ नङ् । यतिः । 'इन् सर्वधातुभ्य' इतीन् । यत निकारोपस्कारयोरिति चुरादौ ॥ ३० ॥

युतृ जुतृ भासने ॥ योतते । युयुते । योतिनेत्यादि । भावे युत्यतइत्यादि । युयुतिषते । युयोतिषते । 'रलो व्युपधादि'ति वा कित्त्वम् । योयुत्यते । योयुतीति । योयोत्तीत्यादि । ईट्पत्ते 'नाभ्यस्तस्ये'ति गुणनिषेधः । योतयति । अयुयोतत् । ऋदित्वाच्च'ग्लोपी'त्युपधाह्रस्वनिषेधः । युतित्वा । योतित्वा । सन्वत्कित्त्वविकल्पः । 'उदुपधाद्भावादिकर्मणोरन्यतरस्या'मिति निष्ठायां मुदिवत् कित्त्वविकल्प उदाहार्यः । युतितमनेन योतितमनेनेत्यादि । जोततइत्यादि । युतिवत् ॥ ३२ ॥

नु तत्र विनिष्ट न्यून पूरयन्त्विति पूरणार्थत्व दृश्यते । सूदते । सुषूदे । सूदितेत्यादि भावादौ सूद्यतइत्यादि । सुषूदिषते । 'स्तौतिण्योरेवेति' नियमात्र षत्वम् । सोषूद्यते । सोषूत्ति । सूदयति । सूदयते । असूषुदत् । 'णौ चङी'ति ह्रस्वत्वम् । सूदिता । 'सूददीपदीक्षश्चे'त्यनुदात्तेत्लक्षणस्य युचो निषेधात्तृचि'ति सामान्यस्ताच्छीलिकस्तृन् । मधुसूदनः । 'नन्दिग्रहिपचादिभ्यो ल्युणिन्यच' इति ल्युः । सरति सारयति रसानिति च, सूदः पङ्क्तः पाचकश्च । 'इगुपधज्ञाप्रीकिरः क' इति इगुपधत्वात् कर्त्तरि कः । अथ चुरादावपि ॥ २५ ॥

ह्राद अव्यक्ते शब्दे ॥ अव्यक्तशब्दो वाद्यादिघोषः । ह्रादते । जह्रादे । 'कुहोश्चु'रित्यभ्यासहकारस्यान्तरतम्यात् झकारश्चुत्व, तस्याभ्यासे चर्चे'ति जश्त्व जकार. । ह्रादितेत्यादि । भावे ह्राद्यतइत्यादि । अह्रादि । जिह्रादिषते । जाह्राद्यते । जाह्रादीति । जाह्रात्तीत्यादि, ह्रादयति । ह्रादयते । अजिह्रदत् । 'अत्स्मृदृत्वरप्रथम्रदस्तृस्पशा'मिति स्मरत्यादीना चङ्परे णौ लघुनि धात्वक्षरे परत्वापवादात्त्वविधानाज् ज्ञापका'दित्वविधौ येन नाव्यवधान तेन व्यवहितेपि भवतीति नियमानाश्रयणादभ्यासस्येत्वम् । दीर्घस्तु न भवति संयोगपरत्वेनालघुत्वात् । ह्रदः । पवाद्यचि पृषोदरादित्वात् ह्रस्वः । महिकिह्रदो नाम वाहीकग्रामविशेषः, तत्र भवादिर्माहिकिह्रदीयः, 'कन्थापलदनगरग्रामह्रदोत्तरपदादि'ति शेषे छो वाहिकग्रामेभ्यश्चे'ति प्राप्तयोः ठञ्ञिठयोरपवादः, 'आयनेयीनीयियः फढखच्छघा प्रत्ययादीनामि'ति प्रत्ययादीनां फादीनां यथासंख्यमायन्नादिविधानात् छस्येयादेशः । छविधौ निपातनाद्वा ह्रस्वः ॥ २६ ॥

ह्लादी सुखे च ॥ चकारादव्यक्तशब्दे च । ह्लादतइत्यादि ह्रादिवत् । विशेषस्त्वीदित्वात् 'श्वीदितो निष्ठायामि'तीडभावो'ह्लादो निष्ठायामि'त्युपधाह्रस्वश्च । तथा 'रदाभ्या निष्ठातो नः पूर्वस्य च द' इति निष्ठातकारस्य पूर्वदकारस्य च नकारः, आह्लन्नः । आह्लन्नवान् ॥ २७ ॥

स्वाद आस्वदने ॥ स्वादतइत्यादि स्वदिवत् । अषोपदेशत्वादसिस्वदद् इत्यादौ न षत्वम् । स्वदिना समानार्थोप्ययमाकारोपधमाख्या-

दिह पठितः । अजदन्त्येति षोपदेशलक्षणे दन्त्यग्रहणेन केवलो दन्त्यो गृह्यते न तु दन्त्योष्ठ्योऽपीत्ययमषोपदेशः स्वर्दवत् ॥ २८ ॥

पर्द कुत्सिते शब्दे ॥ रेफवद्दान्तः । सयोगान्तेष्वर्दादिष्वय न पठितः । शब्दविशेषार्थेन द्राघादिनापि साम्यात् । स्वादिस्त्वाकारवत्सयोगादित्वेन ह्राद्यनुरोधेन मध्ये पठितः । इह कुत्सितः शब्दो गुदरवः । तदाह केशवस्वामी कौत्से कर्दति पर्दते गुदरवइति । पर्दते । पपर्दे । पर्दिता । पर्दिष्यते । पर्दताम् । अपर्दत । पर्देत । पर्दिषीष्ट । अपर्दिष्ट । भावे पर्द्यतइत्यादि । पिपर्दिषते । पापर्द्यते । पापर्द्मि । पापर्दीति । पापर्त्तीत्यादि । लङि तिप्सिपोर्हल्ङ्यादिलोपे वा चर्त्वम् । सिपि तु पक्षे 'दश्चे'ति रुत्व चोदाहार्यम् । पृदाकुः । 'पर्दर्नित् सप्रसारणमल्लोपश्चे'ति काकुप्रत्ययो लोपः प्रसारणं च ॥ २९ ॥

यती प्रयत्ने ॥ यतते । येते । येतिषे । एत्वाभ्यासलोपौ । यतिता । यतिष्यते । यतताम् । अयतत । यतेत । आशिषि यतिषीष्ट । अयतिष्ट । अयतिष्यत । भावे । यत्यतइत्यादि । यियतिषते । यायत्यते । यायतीति । यायत्तीत्यादि । लङि तिप्सिपोर्हल्ङ्यादिलोपे जश्त्वे वा चर्त्वम् । सिपि तु 'दश्चे'ति वा रुत्वमपि । यातयति । अयीयतत् । यत्यम् । 'तकिशसिचतियतिजनीनामुपसख्यान'मिति भावे यत् । आयत्तः । आयत्तवान्, ईदित्वात् 'श्वीदितो निष्ठाया'मितीडभावः । यत्नः । 'यजयाचयतविच्छप्रच्छरक्षो नङि'ति भावादौ नङ् । यतिः । 'इन् सर्वधातुभ्य' इतीन् । यत निकारोपस्कारयोरिति चुरादौ ॥ ३० ॥

युतृ जुतृ भासने ॥ योतते । युयुते । योतितेत्यादि । भावे युत्यतइत्यादि । युयुतिषते । युयोतिषते । 'रलो व्युपधादि'ति वा कित्त्वम् । योयुत्यते । योयुतीति । योयोत्तीत्यादि । ईट्पक्षे 'नाभ्यस्तस्ये'ति गुणनिषेधः । योतयति । अयुयोतत् । ऋदित्वान्'ग्लोपी'त्युपधाह्रस्वनिषेधः । युतित्वा । योतित्वा । सन्वत्कित्त्वविकल्पः । 'उदुपधाद्भावादिकर्मणोरन्यतरस्या'मिति निष्ठायां मुदिवत् कित्त्वविकल्प उदाहार्यः । युतितमनेन योतितमनेनेत्यादि । जोततइत्यादि । युतिवत् ॥ ३२ ॥

विथृ वेथृ याचने ॥ द्वितीयान्तौ । आद्यो धान्त इति कौशिकः । क्षीरस्वामिना त्वयं पक्षो दूषितः । वेथते । विविथे । 'असंयोगाल्लिट् कि'दिति कित्त्वान्न गुणः । वेथिता । वेथिष्यते । वेथताम् । अवेथत । वेथेत । आशिषि । वेथिषीष्ट । अवेथिष्ट । अवेथिष्यत । विविथिषते । विवेथिषते । वेविथ्यते । वेविथीति । 'नाभ्यस्तस्ये'ति गुणनिषेधः । वेवेत्ति । वेथयति । अविवेथत् । ऋदित्त्वा'न्नाग्लोपी'त्युपधाह्रस्वनिषेधः । द्वितीयस्य विशेषो विवेथे, वेथ्यते । विवेथिषते । वेवेथ्यते । वेवेथीति । वेवेत्ति इत्यादावगुणविषयएकारश्रवणम् । अस्य ऋदित्करणमुपधाह्रस्वनिवृत्त्यर्थम् । इमौ द्विकर्मकौ । दुह्यादित्वादप्रधाने कर्मणि लादयः । षष्ठी तु द्वितीयावदुभयत्र । गुणकर्मणि तु विकल्पेन, अप्रधाने कृत्येनाभिहिते कर्तृकर्मणोर्नैव षष्ठी । सर्वमेतच्चाग्रहावुपपादितं तत एवावगन्तव्यम् ॥ ३४ ॥

श्रथि शैथिल्ये ॥ शैथिल्यं विश्लिष्टता गाधता च । इदित्त्वं नुमर्थम् । अत एव किति नलोपाभावः । श्रन्थते । शश्रन्थे । श्रन्थिष्यते । श्रन्थिता । अश्रन्थत । श्रन्थेत । आशिषि । श्रन्थिषीष्ट । अश्रन्थिष्ट । अश्रन्थिष्यत । भावे । श्रन्थ्यत इत्यादि । शिश्रन्थिषते । शाश्रन्थ्यते । शाश्रन्थीति । शाश्रन्ति । 'खरि चे'ति चर्त्वं लङि तिप्सिपोर्हल्ङ्यादिलोपे संयोगान्तलोपे चाशाश्रन् । श्रन्थयति । श्रन्थयते । अशश्रन्थत् । श्रन्था । 'गुरोश्च हल' इत्यकारः, 'ण्यासश्रन्थो युजि'त्यत्र लाक्षणिकत्वान्नास्य ग्रहः । प्रश्रथः । हिमश्रथः । 'अवोदैधोद्मप्रश्रथहिमश्रथाः' इति घञि नलोपवृद्ध्यभावयोर्निपातनम् । गणान्तरपठितस्य वा निपातनम् । श्रन्थ विमोचनप्रतिहर्षयोरिति क्र्यादिः । श्रन्थ ग्रन्थ सन्दर्भ इति च, इमावाधृषीयावपि, श्रथ प्रयत्न इति चुरादिः । दौर्बल्ये क्रथादिराधृषीयो मोक्षणे ॥ ३५ ॥

ग्रथि कौटिल्ये ॥ कौटिल्यं शाठ्यं वक्रता वा । ग्रन्थत इत्यादि श्रन्थिवत् । अभ्यासकार्यविशेषः । केचिदिमावनिदितौ सानुषङ्गौ पठन्तः, किति नलोपमिच्छन्ति । अत्र तरङ्गिणी इदित्त्वादनुनासिकलोपाभावात् श्रथि ग्रथि इत्युदाहरन् वृत्तिकारो भ्रान्त इति, अत्र वृत्तिकार इति धातुवृत्तिकृदुच्यते । तथा सानुषङ्गपाठः काशिकावृत्तिकारस्याऽप्यनभिमतः ।

यतः । 'श्न्थिग्रन्थिदम्भिस्वञ्जी'नामिति लिटः कित्त्वविधौ श्रेथतुर्ग्रेथतु-रिति परस्मैपदिनावेवोदाजहार । ग्रन्थ सन्दर्भे इति क्र्यादौ युजादौ च । ग्रन्थ बन्धनेइति च युजादौ ॥ ३६ ॥

कत्थ श्लाघायाम् ॥ कत्थते । चकत्थे । कत्थितेत्यादि । कर्मणि कत्थ्यतइत्यादि, चिकत्थिषते । चाकत्थ्यते । चाकत्थीतीत्यादि पूर्ववत् । विकत्थी । 'वौ कषलसकत्थस्रम्भ' इति वाबुपपदे तच्छीलादिषु घिनुण् । वासरूपेण युच्, विकत्थनः ॥ ३७ ॥ एधादय उदात्ता अनुदात्तेतः ॥

अथ तवर्गीयान्ताः परस्मैपदिनः ॥

अत सातत्यगमने ॥ सातत्यगमनं सन्ततगमनम् । ग्राममतति । ग्रामादायाति । अतसि । अतामि । अतन्ती । 'गत्यर्थकर्मणि द्वितीया-चतुर्थ्यौ चेष्टायामनध्वनी'ति कर्मणि द्वितीयाचतुर्थ्यौ । चेष्टायामिति वचनान्मनसातति ग्राममित्यत्र द्वितीयैव । अध्वन्यर्थग्रहणान्मार्गमततीत्यादावपि द्वितीयैव । आत । आततुः । आतिथ । आतिथ । 'अत आदे'रित्यभ्यासादेर्दीर्घो लिटि । अतिता । अतिष्यति । अततु । आतत् । आटि वृद्धिः । अतेत् । आशिषि । अत्यात् । मा भवानतीत् । 'वदव्रजहलन्तस्ये'ति वृद्धे'र्नेटी'ति निषेधः । आतिष्यत् । कर्मणि अत्यते । आते । अतिता । अतिष्यते । अत्यताम् । आत्यत । अत्येत । आशिषि । अतिषीष्ट । आतिष्ट । आतिषाताम् । आतिषत । गत्यर्थानां कर्तृस्थक्रियत्वाच्च कर्मकर्त्तास्ति । कर्मव्यतिहारे तङस्य नास्ति, 'न गतिहिंसार्थेभ्य' इति निषेधात् । व्यत्यततीत्यादि । अतितिषति । आतयति देवदत्तं ग्रामम् । 'गतिबुद्धी'ति प्रयोज्यस्य कर्मत्वम् । अतितो ग्रामम् । अतितो ग्रामः । अतितं देवदत्तेन, इदमेषामतितम् । 'गत्यर्थाकर्मके'ति 'क्तोऽधिकरणे चे'ति योगद्वयेन कर्तृकर्मभावाधिकरणेषु क्तः । अत्त आसन्नः । 'इण्भीकापाशल्यतिमर्चिभ्यः कन्'ति कन् । आतिः गन्ता पक्षिविशेषश्च । 'अज्यतिभ्यां चे'तीण्प्रत्ययः । पादाभ्यामततीति पदातिः । 'पादस्य पदाज्यातिगोपहतेष्वि' त्याज्यादिषूत्तरपदेषु पदादेशः । शोभनमततीति

स्वातिः नक्षत्र, स्वाती । 'सर्वतोऽक्तिन्नर्थादि'ति वा ङीष् । स्वात्यां जातो माणवकः स्वातिः । अत्र 'सन्धिवेलाद्यृतुनक्षत्रेभ्योऽणि'ति शैषिकोऽण् । यदा जानार्थे तदा तस्य 'श्रविष्ठाफल्गुन्यनुराधास्वातितिष्यपुनर्वसुहस्तविशाखा-षाढाबहुलाल्लुगि'ति लुकि 'लुक्तद्धितलुकी'ति स्त्रीप्रत्ययस्य लुक् । स्वातीति ङीषन्तस्य ग्रहणादङीषन्तादणो लुङ्नास्ति, तेन 'न य्वाभ्यां पदान्ताभ्यां पूर्वौ तु ताभ्यामैजि'ति यथासंख्यादिह वकारात्पूर्वमौकारे वृद्धिनिषेधे च सौवात इति भवति । वृद्धिनिषेधस्य प्रयोजनमन्यत्र, अस्तु चेहापि 'टिड्ढा-णञि'त्यादिना स्त्रियां ङीपि 'यस्येति चे'त्यकारलोपे सौवाती भार्या यस्येति बहुव्रीहौ 'स्त्रियाः पुंवद्भाषितपुंस्कादनूङ् समानाधिकरणे स्त्रियामपूरणीप्रि-यादिष्वि'ति प्राप्तस्य पुंवद्भावस्य 'वृद्धिनिमित्तस्य च तद्धितस्यारक्तविकारे'-इति रक्तविकारादतिरिक्तार्थस्य च वृद्धिनिमित्ततद्धितान्तस्य पुंवद्भावो नेति विधीयमानो निषेध इहाणो वृद्धिनिमित्तत्वाभावान्नेति पुंवद्भावे सौवात-भार्य्य इति भवति । 'स्त्रियाः पुंवदि'ति सूत्रस्यार्थः । स्त्र्यर्थस्य शब्दस्य स्त्रियां वर्त्तमाने समानाधिकरणे पूरणीप्रियादिवर्जितउत्तरपदे पुंस इव रूपं भवति स चेत् स्त्रीशब्दो भाषितपुंस्कादनूङ् भवतीति । पूरणीति पूरणप्रत्ययान्तः स्त्रीलिङ्गपञ्चम्यादिशब्द उच्यते । भाषितः पुमान् यस्मिन्नर्थे प्रवृत्तिनिमित्ते स भाषितपुंस्कः, इह तु शब्दस्तद्योगात्तथोक्तः, ऊङो ऽभावो ऽनूङ्, भा षितपुंस्कात्परोऽनूङ्, निपातनात्पञ्चम्यलुक् । अतिथिः, 'ऋतन्यञ्जिवन्यञ्ज्य-र्पिमद्यत्यङ्गिकुयुक्रशिभ्यः कत्निच्यतुजलिजिष्ठुजिष्ठजिसन्स्यनिथिनुल्यसा-सानुकः' इत्यर्त्त्यादिभ्यो द्वादशभ्यः कत्यादयो द्वादश प्रत्यया यथासंख्यमित्य-तेरिथिन् । अतिथौ साधुरातिथेयः । 'पथ्यतिथिवसतिस्वपतेर्ढञि'ति सप्त-म्यन्तात्साध्वित्यर्थे ढञ् । ढस्य 'यनेयीत्ये'यादेशः । अतिथयइद,मातिथ्यम् । 'अतिथेर्ञ्य' इति चतुर्थ्यन्तात्तादर्थ्ये ञ्यः । अतसः क्षौमं प्रहरणं च वायुश्च । 'अत्यविचमितमिनमिरभिलभिनभितपिपतिपनिपणिमहिभ्यो ऽसजि'त्यस-च् । अतसी उमा, 'षिद्गौरादिभ्यश्चे'ति स्त्रियां ङीष् । सातयतीति सातयः । 'अनुपसर्गाल्लिम्पविन्दधारिपारिवेद्युदेजिचेतिसातिसाहिभ्यश्चे'ति कर्त्तरि शे अपि गुणायौ, सातिः सैत्रो धातुरिति वृत्तौ । बोधिन्यासेपि सातिः सुखे

वर्त्तते सोत्र इति । जिनेन्द्रहरदत्तौ सातिर्हेतुमराण्यन्त इति । इदिद्वन्थनार्थं उत्तरत्र भविष्यति ॥ ३८ ॥

चिती सञ्ज्ञाने ॥ सञ्ज्ञानं चैतन्यम् । चेतति । चिचेत । चिचिततुः । चिचेतिथ । चिचित । चिचेत । चिचितिव । चिचितिम । चेतिता । चेतिष्यति । चेततु । अचेतत् । चेतेत् । आशिषि चित्यात् । अचेतीत् । अचेतिष्यत् । भावे । चित्यतइत्यादि, चिचितिषति । चिचेतिषति । चितित्वा । चेतित्वा । 'रलो व्युपधादि' ति क्त्विविकल्पः । चेचित्यते । चेचितीति । 'नाभ्यस्तस्ये'ति गुणनिषेधः । चेचेत्ति । चेतयति देवदत्तम् । अचीचितत् । 'अणावकर्मकादि'ति परस्मैपदमेव । 'गतिबुद्धी'ति प्रयोज्य कर्म । चित्तः । चित्तवान् । 'श्वीदित' इत्यनिट्त्व, चितः । इगुपधलक्षणः कः । चेतनः । बाहुलकात्कर्त्तरि ल्युः । चित् चैतन्यम् । सपदादित्वाद्भावे क्विप् । चेतः । 'असुचि'त्यसुन् । सुचेतीकरोति । 'अरुर्मनश्चक्षुश्चेतोरहोरजसां लोपश्चे'ति कृभ्वस्तियोगे च्विः सलोपश्च । 'अस्य च्वावि'तीकारो ऽकारस्य । अत्र मैत्रेयः 'कण: कश्चे'ति चितेः कणप्रत्यये धातोरन्त्यस्य ककारे चिक्कण इति । बहुलवचनाद्गुणाभावः प्रत्ययकस्येत्सञ्ज्ञाऽभावश्चेति । हरदत्तस्तु चिनोतेः क्विप्, चित्,कणतेश्च कणः, तकारस्य ककारश्चिक्कणादिपाठात् । के चित्तु चिक्कणादिषु तकारमेव पठन्ति । न्यासकारो ऽप्येवं निरुवाह । स्मरणार्थो ऽप्ययम् । चेतन्ती सुमतीनामिति दर्शनात् । 'अधीगर्थदयेशां कर्मणी'ति कर्मणः शेषत्वे षष्ठी । अधीगर्थाः स्मरणार्थाः । तथा संधानार्थो ऽपि । यदाह श्रीरामस्वामी । प्रायो विनाशः चित्त सन्धानं विनष्टस्य संधान प्रायश्चित्तमिति । 'प्रायस्य चित्तिचित्तयो'रिति पारस्करादिपाठात् सुट् । चिति स्मृत्यामिति चुरादौ । चित सचेतनइति तत्रैवात्मनेपदी ॥ ३९ ॥

च्युतिरासेचने॥ 'उपदेशेऽजनुनासिक इत्' 'हलन्त्यमि'तीकाररेफयो- रित्वे । सेचनमार्द्रीभावनम् । यदाह हरदत्तः,सिचिः कर्मस्थक्रियः, आर्द्रीभावनं ह्यत्र प्रधान तदर्थत्वात्कारकव्यापारस्येति । आङीषदर्थे ऽभिव्याप्तौ वा । च्योतति । चुच्योत । चुच्योतिथ । चुच्युतिव । च्योतिता । च्योतिष्यति । अच्योतत् । च्योतेत् । आशिषि । च्युत्यात् । लुङि'इरितो वे'ति च्लेः परस्मैपदे-

च्यङादेशविधानात् ङित्त्वान्न गुणः। अच्युतत्। अच्युततामित्यादि। अङभा अच्योतीदित्यादि, कर्मादौ च्युत्यतइत्यादि। चुच्युतिषति। चुच्योतिषति च्योतित्वा। च्युतित्वा। पूर्ववत् कित्त्वविकल्पः। चोच्युत्यते। चोच्यु तीति। चोच्योत्ति। ईटि 'नाभ्यस्तस्ये'ति गुणनिषेधः। च्योतयति। अचुच्युतत्। निष्ठाया'मुदुपधाद्भावादिकर्मणो'रिति कित्त्वविकल्प उदाहार्यः। च्युतितमनेन। च्योतितमनेनेत्यादि। कर्माविवक्षायां कर्मकर्तरि भावसंभवः ॥ ४० ॥

श्च्युतिर् क्षरणे ॥ क्षरणं स्रुतिः। श्च्योतति। चुश्च्योतेत्यादि च्युतिवत्। अभ्यासे खयः शेषः। सकारादिरयं, निर्देशः श्चुत्वेन। सकारादित्वे प्रयोजनं मधु श्च्योततीति मधुश्च्युत्। क्विप्। अस्मा'त्तत्करोति तदाचष्ट'इति णिचि णाविष्ठवत्प्रातिपदिकस्येनीष्ठनीव कार्यविधानाट्टिलोपे मधुश्च्यायतेः क्विप्। तस्य लोपे प्रत्ययलक्षणेन 'णेरनिटी'ति णेश्च लोपे यकारान्ताद् अस्मात् कृदन्तात् प्रातिपदिकात्सौ तस्य हल्ङ्यादिलोपे प्रत्ययलक्षणेन सुबन्तत्वेन पदत्वे 'संयोगान्तस्ये'ति यलोपे श्चुत्वस्य पूर्वत्रासिद्धत्वा'त्स्कोः'रिति सलोपे 'चोः कु'रिति चकारस्य पदान्तस्य कुत्वे तस्य जश्त्वे मधुगिति रूपसिद्धिरिति वृत्तिन्यासपदमञ्जरीसंमताकारमैत्रेयादिभिरुक्तम्। यद्येवमटतीत्यट्, अट् श्च्योततीत्यत्रापि श्चुत्वस्यासिद्धत्वात्सकारपरत्वा'ड्डः सि धुड्'इति धुट् प्राप्नोति, नैतत्। 'श्चुत्वं धुट्त्वे सिद्धं वक्तव्य'मित्युक्तत्वात्। अत एव वृत्तिकारादिविरोधात् तालव्योष्म्यादिवादिनौ स्वामिकाश्यपावुपेक्ष्यौ। यद्यपि तयोरट् श्च्योततीत्यत्र धुडभावः सिद्धः, मधुगित्यत्र 'संयोगान्तस्ये'ति यकारवकारयोर्लोपे 'व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः' इति व्रश्चादीनां छकारशकारान्तानां च झलि पदान्ते च षत्वविधानाच् शकारस्य षकारे 'झलां जश' इति जश्त्वे मधुडिति स्यात्। अत्र श्चुतिरित्ययकारमपि पठन्ति। तथा च मधुश्चुतं घृतमिव सुपूतं श्चोतन्ति ते इत्यादौ भट्टभास्करः। अत्र मैत्रेयोऽपि। श्चुतिरित्यप्येके पठन्ति, चुतिर् वामनवृत्ति च ॥ ४१ ॥

मन्थ विलोडने ॥ विलोडन क्षोभणम् । मन्थति । ममन्थ । ममन्थिथ । मन्थिता । मन्थिष्यति । मन्थतु । अमन्थत् । मन्थेत् । आशिषि । मथ्यात् । यासुट. कित्त्वान्नलोपः 'अनिदितां हल उपधायाः क्ङिती'ति । अमन्थीत् । अमन्थिष्यत् । कर्मादौ मथ्यतइत्यादि । मिमन्थिषति । मामथ्यते । मामन्थीति । मामन्ति । लङस्तिप्सिपोर्हल्ङ्यादिलोपे संयोगान्तलोपे चामामन् । मन्थयति । अममन्थत् । मथित्वा । मन्थित्वा । नोपधात्परस्य 'नोपधात्थफान्ताद्वे'ति थकारफकारान्तात्सेटः क्त्वः कित्त्वविकल्पनात् पक्षे नलोपः । मन्थः । 'हलश्चे'ति करणे घञ् । मन्थनी । 'करणाधिकरणयोश्चे'ति अधिकरणे ल्युडन्ता'ट्टिड्ढाणञि'ति ङीप्, मन्थानः ।'सम्यानच् स्तुव' इत्यानच्बाहुलकादस्मादपि । अत्रायं धातुर्यद्यपि क्षीरस्वाम्यादिभिर्न पठ्यते तथापि मैत्रेयचन्द्रदुर्गैः पठितत्वात् शमीगर्भादग्निं मन्थति ततो यथा प्राशु मन्थति यदि मथ्यमानो न जायेतेत्यादिदर्शनादस्त्येव । अयं द्विकर्मकः । दुहादित्वादप्रधाने कर्मणि लादयः । अमृतमम्बुनिधिर्मथ्यतइति । द्वितीयावत् कच्चोगलक्षणा षष्ठ्युभयत्र, कर्मणि गुणे तूभयथा गौणिकापुत्र इति वचनाद् द्वितीयापि । अमृतस्याम्बुनिधेर्मन्थिता । अम्बुनिधिमिति च । अमृत मन्थितव्यो ऽम्बुधिर्देवैरित्यत्र 'कृत्यानामि'ति योगविभागेन कर्तृकर्मणोः षष्ठी निषिध्यते । नायतो सर्वमेतद् उपपादितम् । अयं क्र्यादावपि । इह चाये निरनुषङ्ग एदित् ॥ ४२ ॥

कुथि पुथि लुथि मथि हिंमासंक्लेशनयोः ॥ कुन्थति । चुकुन्थेत्यादि मन्थिवत् । विशेषस्त्विदित्वात् क्ङिति नलोपाभावः । कुन्थ्यतइत्यादि, तथा हिंसार्थत्वा'च्च गतिहिंसे'ति कर्मव्यतिहारे हिंसाया तङ्निषेधश्च । एवं पुन्थतिलुन्थतिमन्थतयो ऽपि । मन्थतिस्तु सर्वत्र मन्थतिवत् । अत्र च क्षीरस्वामी मन्थं सानुषङ्गमनिदित पठित्वा मथ्यतइति चोदाहृत्य मथीति दौर्गा मन्थन्तइत्याह । समतायां तु द्वावपि पठ्येते । खड्गोपकुन्थं शत्रुं मारयति । खड्गेनोपकुन्थमिति वा । 'हिंसार्थानां च समानकर्मकाणा'मिति अनुप्रयोगधातुना समानकर्मकाणां हिंसार्थानां तृतीयान्तउपपदे वा णमुलिति णमुल् । 'तृतीयाप्रभृतीन्नी'ति समासविकल्पः । सर्वस्मिन्नेवात्र णमुल्प्रकरणे क्रियाभेदे

शिष्टाविन्येव चन्द्रः । शास्त्र शास्त्रविषयं शासनम् । माङ्गल्य मङ्गलक्रियेति क्षीरस्वामी । एवं तरङ्गिण्यामपि । सेधतीत्यादि पूर्ववत् । विशेषस्मृदित्त्वादुलादावार्धधातुके 'स्वरतिसूतिसूयतिधूञूदितो वे'ति इटो विकल्पनात् । सेद्धा । सेत्स्यति असैत्सीद् इति, लुङि 'वदव्रजे'ति वृद्धि । तथा ऽऽशीर्लिङ्लुङोरात्मनेपदेषु । 'लिङ्सिचावात्मनेपदेषु' । इक्समीपाद्धलः परौ झलादी लिङ्सिचावात्मनेपदेषु कितौ भवत इति कित्त्वादगुणः. व्यतिषित्सीष्ट । व्यत्यषिद्ध्वम् । व्यत्यषित्सातामित्यादि भवति । क्त्वासनोश्चेड्भावे सिद्ध्वा । सिषित्सति । 'हलन्ताच्चे'ति इक्समीपाद्धलः परस्य झलादेः सनः कित्त्वान्न गुणः निष्ठायां 'यस्य विभाषेती'ति निषेधात्सिद्धमिति भवति । अत्र मैत्रेयसमताकारौ 'कृसृभृवृस्तुद्रुस्रुश्रुवो लिटि' । क्रादय एव लिट्यनिटस्ततोऽन्ये लिटि सेडित्यनेन नियमेन पुरस्तात्प्रतिषेधकाण्डस्यारम्भात् तस्य तदाश्रयस्य नियमस्य च बलीयस्त्वमिति यावान्कश्चिदिड्भाव. प्रतिषेधनिबन्धनो वा विकल्पनिबन्धनो वा स सर्वो बाध्यत इत्युदित्लक्षणं विकल्पं बाधित्वा लिटि क्रादिनियमान्नित्यमिडिति सिषेधिथेत्याहतुः । तथा 'उदित्स्वादित्य'त्र वृत्तिकारो नित्यग्रहणं किं सिधाता, विधविता, तासौ विभाषितेटस्थलि नित्यमिडागमो भवतीति । अत्र न्यासे स्वरत्यादिसूत्रेण धूञ इड्विकल्पः, तस्य नित्यग्रहणाद्विभाषितेटस्थलि नित्यमिडागमो भवतीति । हरदत्तस्तु नित्यमिडागमो भवतीति वृत्तिमुपादाय यावान् कश्चिदिड्भावः प्रतिषेधनिबन्धनो विकल्पनिबन्धनो वा स सर्वः क्रादिसूत्रेण नियम्यत इत्यस्मिन्पक्ष इति भावः । यदा तु प्रतिषेधाधिकारेण क्रादीनामेव लिटीण् न भवतीति नियमात् प्रतिषेध एव सर्वो निवर्त्यते, 'स्वरत्या'दिसूत्रेण विकल्पो भवत्येवेति पक्षस्तदा विदुधोथ, विदुधविथेत्युभय भवतीति । अस्यायमभिप्रायः । अत्र वृञ्व्यतिरिक्तानां क्रादीना'मेकाच उपदेशेऽनुदात्तात्' । एकाज् यो धातुरुपदेशे ऽनुदात्तस्तस्मात्परस्य वलादेरार्धधातुकस्येण्नेति प्रकृत्याश्रयः प्रतिषेधः सिद्धः, वृङ्वृञोस्तूगन्तत्वात् 'श्र्युकः किती'ति प्रत्ययाश्रय इति सिद्धे सत्यारभ्यमाणेनानेन नियमेन तुल्यजातीयानां क्रादिव्यतिरि-

क्ताना येषां प्रकृत्याश्रयः प्रत्ययाश्रयो वा निषेधः प्राप्तस्तेषामेवेट् प्राप्यतइति पुरस्तात्प्रतिषेधकाण्डारम्भस्य प्रयोजनं स्मृत्वा स्मृत इत्यादौ परमपि स्वरत्यादिविकल्पं बाधित्वा 'श्र्युकः किती'ति निषेधप्रवृत्तिरिति च तेनोक्तम् । हरदत्तानुवादी रामदेव*मिश्रोऽपि क्रादिसूत्रे ऽनुदात्तोपदेशानामत्र प्रकृत्याश्रयः प्रतिषेधः, वृङ्वृञोस्तु प्रत्ययाश्रयस्तदुभयस्याप्ययं नियम इति वृत्तिग्रन्थोऽप्यत्रैवानुकूलः । अत्र मते सिषेधिथ सिषेद्ध सिषिधिव सिषिध्वेत्यादि भवति । एतदनन्तरं मृ मरणइत्याभरणे पठ्यते, तद्भाष्यविरोधादुपेक्ष्यम् । यद्ययं स्यात्कथं 'व्यत्ययो बहुलमि'त्यत्र स च न मरति, न म्रियतइति प्राप्तइति ब्रूयात् । अयमनूदित्सराध्यर्थे दिवादौ ॥ ४८ ॥

खादृ भक्षणे ॥ खादति । चखाद । चखादिथ । खादिता । खादिष्यति । खादतु । अखादत् । खादेत् । आशिषि खाद्यात् । अखादीत् । कर्मादौ खाद्यतइत्यादि । चिखादिषति । चाखाद्यते । चाखादीति, । चाखात्ति । खादयति मोदकं देवदत्तेन, 'गतिबुद्धी'त्यादिना प्राप्तं प्रयोज्यस्य कर्मत्वं 'मादिखाद्योः प्रतिषेध' इति निषिध्यते । 'निगरणचलने'ति नित्यं परस्मैपदम् । ऋदित्त्वादचखाददित्यत्र उपधाह्रस्वो न भवति, खादितो मोदकः, खादितमनेन, इदमेषां खादितं, 'क्तोऽधिकरणे चे'त्यादिना कर्मभावाधिकरणेषु क्तः । खादकः । 'निन्दहिंसक्लिशखादविनाशपरिक्षिपपरिरटपरिवादिव्याभाषासूञो वुञि'ति ताच्छीलिको वुञ् । ण्वुलैव सिद्धे वुञ्विधानं ज्ञापकार्थं तच्छीलादिषु वासरूपविधिना तृजादयो न भवन्तीति वृत्तौ ॥ ४९ ॥

खद स्थैर्ये हिंसायां च ॥ चकाराद्भक्षणे च । स्थैर्ये ऽकर्मकः । खदति । चखादेत्यादि, खादिवत् । लुङि अखदीत् । अखादीत् । 'अतो हलादेर्लघो'रिति वृद्धिविकल्पः । खादयति । अचीखदत् । स्थैर्ये कर्मबलात् प्रयोज्य कर्म, खदिरः । 'अजिरशिशिरशिथिलस्थिरस्फिरस्थविरखदिरा' इति किरजन्तो निपातितः । यवखदा, यवस्य सारः । स्वभावात्स्त्रीविषयोऽयं, यवखदी । 'व्रीह्यादिभ्यश्चे'ति मत्वर्थइनिः ॥ ५० ॥

* वेदेति पाठः क्वचित् ।

† बाहुलकाच्छोढे। बुग् ह्रस्वत्वं चेति दीक्षिताः ।

बद स्थैर्ये ॥ ओष्ठ्यादिः । बदति । बबादेत्यादि । खदिवत् । क्निति लिटि थलि च सेटि रूपाभेदे आदेशादित्वानाश्रयणादेत्वाभ्यासलोपयोः बेदतुर्बेदुः बेदिथेत्यादि । बदरं, बाहुलकादरन्प्रत्ययः । बदरी । 'षिद्गौरादिभ्यश्चे'ति ङीष् । अत्र पाठादेवारन् प्रत्ययः । अत्र मैत्रेयः मानुषङ्गं पठित्वा नलोपे कृते एत्वाभ्यासलोपयोर्बेदतुरित्याह, तदसत् । संयोगान्तत्वेन मन्थ्यादिवल्लिटः क्त्वाभावात् । बिदि अवयवे इत्यये ॥ ५१ ॥

गद व्यक्तायां वाचि ॥ गदति । जगाद । गदितेत्यादि, खदिवत् । वचनं शब्दप्रकाशनफलत्वात्कर्मस्थमिति न्यासपदमञ्जरीकैयटेषु । प्रणिगदति । 'नेर्गदनदपतपदघुमास्यतिहन्तियातिवातिद्रातिप्सातिवपतिवहतिशाम्यतिचिनोतिदेग्धिषु चे'ति उपसर्गस्थान्निमित्तात्परस्य नेर्गदादिषु परत्वमिति णत्वम् । अड्व्यवाये ऽपि इदमिष्यत इति प्रण्यगददित्यादावपि भवति । गादयति पुत्रं श्लोकं देवदत्तः । 'गतिबुद्धी'त्यादिना प्रयोज्यस्य कर्मत्वम् । अत्र शब्दकर्मेति कर्मशब्देन साधनमुच्यते न क्रिया । यदि हि स्याद्गतिबुद्धिप्रत्यवसानशब्दार्थाकर्मकेति लघ्वसंदिग्धं च ब्रूयात् । एवं न्यासकैयटपदमञ्जर्यादिष्वपि स्थितमिति न शिष्येण धर्मं गादयतीत्यत्र प्रयोज्यस्य कर्मत्वम् । अत्र नित्याकर्मकगत्यर्थाभ्यवहारार्थशब्दकर्मदृशो ऽखादादिक्रन्दिशब्दायह्वेञ इति शाकटायनसूत्रव्याख्यायाममोघायां नित्याकर्मकेभ्यो गत्यर्थेभ्योभ्यवहारार्थेभ्यः शब्दनक्रियेभ्यः शब्दकर्मकेभ्यश्च दृशेश्च यो णिस्तस्य कर्ता कर्म भवति खादादिक्रन्दिशब्दायह्वेञ इत्येतान् वर्जयित्वेत्युक्तम् । तन्मते क्रन्दित्रयव्यतिरिक्तेषु शब्दार्थेषु प्रयोज्यस्य कर्मत्वेन भाव्यम्, सूत्रे शब्दकर्मकेति कर्मग्रहणात् क्रन्द्यादिपर्युदासाच्च । तेनार्थद्वयस्य लाभः । गद्यम् । 'गदमदचरयमश्चानुपसर्गे'इति कर्मणि यत् । उपसृष्टात्तु ण्यत् । प्रगाद्यमिति । निगदः । 'नौ गदनदपठस्वन' इति पक्षे ऽप् । अन्यदा घञि निगादः । अनुगदतीत्यानुगादिकः । 'अनुगादिनष्ठग्'ति स्वार्थे ठक् । अस्मादेव निपातनाण्णिनिः । न त्वयं केवलं प्रयोगार्हः, ठको नित्यत्वादिति न्यास-

पदमञ्जर्यादिषु । कर्मव्यतिहारे नास्य तङस्ति । प्रतिषेधे हसादीनामुपसङ्ख्यानमिति निषेधात् । हसादयो हसिप्रकारास्ते च शब्दनक्रियाः । स्तनगदी देवशब्दइति चुरादौ ॥ ५२ ॥

रद विलेखने ॥ विलेखनं भेदनम् । रदति । रराद । रेदतुः । रेदिथेत्यादि, पूर्ववत् । रदनः 'करणाधिकरणयोश्चे'ति ल्युट् ॥ ५३ ॥

णद शब्दे ॥ 'णो नः' । धात्वादेरिति शेषः । प्रणदति । प्रणनाद । प्रणेदतुः, प्रणेदिथेत्यादि गदिवत् । 'उपसर्गादसमासे ऽपि णोपदेशस्ये'ति उपसर्गस्थान्निमित्तात्परत्वेन नकारस्य णत्वम् । प्रणिनदतीत्यादौ 'नेर्गदे'ति णत्वम् । इदमप्यड्व्यवायेपीति प्रण्यनददित्य दावपि भवति । धातुनकारस्य निशब्देन व्यवधानादुपसर्गादिति णत्वं न भवति । अशब्दकारकत्वे ऽप्य'णावकर्मक' इति प्रयोज्यस्य कर्मत्व घटं नादयतीति । नदी । पचादौ नदडिति पाठात् टित्त्वात् ङीप् । नद्या भवा नादेयाः । 'नद्यादिभ्यो ढगि'ति शैषिको ढक्, तस्येयादेशः । पञ्चानां नदीनां समाहारः पञ्चनदम् । 'नदीभिश्चे'ति नदीवचनैः सह सङ्ख्याया अव्ययीभावः । अभिधानस्वभावादयं समासः समाहारइत्युक्तम् । अजिति योगविभागादच् समासान्तः । उक्त च ।

कृष्णोदक्पाण्डुपूर्वाया भूमेरच् प्रत्ययः स्मृतः ।
गोदावर्याश्च नद्याश्च सङ्ख्याया उत्तरे यदि ॥

इति । निनदः । 'नौ गदनदे'ति पक्षे अप् । तदभावे घञ् । निनादः । इदित्समृध्यर्थो ऽयं, णद भाषार्थश्चुरादौ ॥ ५४ ॥

अर्द गतौ याचने च ॥ याचने द्विकर्मकः । नाथत्यादिवत्तादयो नेयाः । अर्दति । आनर्द । आनर्दतुः । आनर्दिथ । आनर्दिव । 'अत आदे'रित्यभ्यासादेर्दीर्घे 'तस्मान्नुड् द्विहल' इति दीर्घभूतादभ्यासात्परस्य नुडागमः । अर्दिता । अर्दिष्यति । अर्दतु । आर्दत् । अर्देत् । आशिषि । अर्द्यात् । माभवानर्दीत् । 'नेटी'ति सिचि वृद्धिनिषेधः । कर्मादौ अर्द्यतइत्यादि । गत्यर्थत्वे कर्तृस्थक्रियात्वाच्च कर्मकर्त्तास्ति । 'क्तोधिकरणे चे'त्यादिना कर्तृकर्मभावाधिकरणेषु क्त उदाहार्यः । तथा 'गत्यर्थकर्मणी'ति

तत्पुरुषपक्षे विभक्तेस्तु 'पञ्चम्याः स्तोकादिभ्य' इत्यलुक् । ऐकपद्यमैकस्वर्यञ्च विशेषः । नेदिष्ठः । नेदीयान् । 'अन्तिकबाढयोर्नेदसाधा'विति इष्ठनीयसुनोर्यथासङ्ख्यं नेदसाधावादेशौ । अस्मादेव वचना'दजादी गुणवचनादेवे'ति बाध्यते । अन्दूर्भाषायां शृङ्खले च । 'अन्दूदृम्भू' इत्यूकारप्रत्यये निपातितः । अन्दुको गजनिगलः । सञ्ज्ञाया कनि 'केण' इति ह्रस्वः ॥ ६२ ॥

इदि परमैश्वर्ये ॥ इन्दति । इन्दाञ्चकार । इन्दितेत्यादि । लिटि 'इजादेश्चे'त्याम् । इन्द्रः । ऋज्रेन्द्रेति रनन्तो निपातितः । इन्द्राणी । 'इन्द्रवरुणभवशर्वरुद्रमृडहिमारण्ययवयवनमातुलाचार्याणामानु'गिति पुंयोगादाख्यायां ङीषानुकौ । पुयोगादाख्या पुंसो योगात्तच्छब्देन स्त्रियामभिधानम् । इन्द्रमात्मन इच्छति 'सुप आत्मनः क्यजि'ति इषिकर्मणः सुबन्तादात्मेच्छाया क्यचि अकारस्य 'अस्य च्वौ' 'क्यचि चे'तीकारे इन्द्रीयति । अस्मात्सन्यतो लोपे नन्द्रा' इत्यत्राजादेरिति वर्त्तते, स च कर्मधारयः पचम्यन्त इन्यादेरचः परेषा नदराणां द्विर्वचननिषेध इति व्यवहितत्वाद्रकारस्य द्विर्वचने इन्दिद्रीयिषतीति भवति । अग्नीन्द्रौ देवते अस्य आग्नेन्द्रं हविः । 'देवताद्वन्द्वे चे'ति पूर्वपदस्यानङ्, 'सास्य देवता' । प्रथमान्ताद्वृत्तोपाधिकादस्त्यर्थे ऽणित्यणि 'देवताद्वन्द्वे चे'ति प्राप्ताया उत्तरपदवृद्धे'र्नेन्द्रस्य परस्ये'ति निषेध । इन्दिरा । बाहुलकात् किरच् ॥ ६३ ॥

बिदि अवयवे ॥ अवयवइति अवयवक्रियोच्यते । बशादिः । बिन्दति । बिबिन्द । बिन्दितेत्यादि । बिन्दुः । बाहुलकादुप्रत्ययः । अत्र मैत्रेयः । 'बिन्दुरिच्छु'रिति सूत्र बशादिं पठन् बिन्दुशब्द व्युदपादयत् । वृत्तौ तु वेनेरेव तत्र पाठः । अत्र सम्मताया भिदि अवयवे । भिन्दति । यद्यभिधानमस्ति भिन्दुरिति दृश्यतइति ॥ ६४ ॥

गडि वदनैकदेशे ॥ इह वदनैकदेशारम्भलक्षणा क्रिया वदनैकदेशशब्देनोच्यते । गण्डति । गण्डः । अच् । अत्यादयः पञ्चैते न निरूढविषया इति काश्यपः । सम्मताया बिदिभिदी एव प्रकृत्यैवमुक्तम् । अविगीतमन्ये सर्वेषा तिङमुदाहरन्ति ॥ ६५ ॥

णिदि कुत्सायाम् । निन्दन्ति । निनिन्द । निनिन्दिथ । निनिन्दिव । निन्दितेत्यादि । कर्मादौ निन्द्यतइत्यादि । प्रणिन्दति । 'उपसर्गादसमासेपी'ति णत्वम् । अत्र मैत्रेयाभरणसम्मताकारा: 'वा निंसनिक्षनिन्दा मिति णत्वविकल्पमिच्छन्ति, तदयुक्तम् । यतोत्र 'कृत्यच' इत्यतः कृतीति वर्त्तते, तच्च निन्दादिभिर्विशेष्यमाणमर्थात्परसप्तम्यन्तमिति उपसर्गस्थान्निमित्तात्परस्य निंसादिनकारस्य कृति परे वा णत्वमिति सूत्रार्थः । तथा च शाकटायनः । निंसनिक्षनिन्दः कृति वेति । एव हि प्रकरणमबाधितं भवति णोपदेशश्च सार्थकः । वृत्तौ च प्रणिन्दनम् । प्रनिन्दनमिति कृदन्तमेवोदाहारि । निन्दकः । 'निन्दहिंसे'ति वुन् । णिदृ कुत्सासन्निकर्षयोरिति दिवादौ ॥ ६६ ॥

टुनदि समृद्धौ । 'आदिर्ञिटुडव' इति त्रय एते धात्वादयः समुदाया इतः । प्रयोजनं नन्दथुरित्यत्र 'ट्वितो ऽथुजि'ति भावादावथुच् । नन्दति । ननन्द । नन्दितेत्यादि । भावे नन्द्यतइत्यादि । निनन्दिषति । नानन्द्यते । नानन्दीति । नानन्ति । नन्दयति । अननन्दत् । नन्दयतीति नन्दनः । 'नन्दिग्रही'ति ल्युः । अयं तवर्गीयोपदेशः, नृतिनन्दीति णोपदेशलक्षणपर्युदासात् । न नन्दतीति ननान्दा । ननान्दरौ । 'नञि च नन्दे'रिति ऋन्प्रत्ययो वृद्धिश्च, 'न षट्स्वस्रादिभ्य' इति 'ऋन्नेभ्य' इति ङीपो निषेधः । 'ष्णान्ता षडि'ति षकारनकारान्ता सङ्ख्या षडित्युच्यते, स्वस्रादिपाठादेव नञो नलोपाभावः । ननान्दुरपत्य नानान्द्रः । 'अनृष्यानन्तर्ये विदादिभ्योऽञि'त्यञ् । अनृषीत्यविभक्तिक भिन्न पद, तेन बिदादिभ्यो गोत्रापत्येऽञ् अनृषिभ्यस्त्वनन्तरापत्ये इति सूत्रार्थः ॥ ६७ ॥

चदि आह्लादने दीप्तौ च ॥ चन्दति । चचन्द । चन्दितेत्यादि । चन्दनः । करणे ल्युट् । चन्द्रः । 'स्फायितञ्ची'त्यादिना रक् । चन्द्रकम् । सञ्ज्ञायां कन् । चन्द्रिका । टापि 'प्रत्ययस्थात्कात्पूर्वस्यात इदाप्यसुप' इति इत्वमकारस्य, असुप इत्यापो विशेषणम्, स चेदाप् सुपः परो न भवतीति । चन्दिरः । 'इषिमुषी'त्यादिना किरच् ॥ ६८ ॥

त्रदि चेष्टायाम् ॥ त्रन्दति । तत्रन्द । त्रन्दितेत्यादि ॥ ६९ ॥

क्रदि क्रदि क्लदि आह्वाने रोदने च ॥ आह्वाने सकर्मकः । कन्दति । चकन्द । कन्दितेत्यादि । चिकन्दिषति । चाकन्द्यते । चाकन्दीति । चाकन्ति । कन्दयति पुत्रन्देवदत्तेन । 'गतिबुद्धी'त्यत्र शब्दकर्मेति साधनकर्मणो ग्रहणात् प्रयोज्यस्य न कर्मत्व, शाकटायनमते त्वस्यैव सर्वमेतद्भदतौ प्रतिपादित तत एवावगन्तव्यम् । क्रन्दतीत्यादि पूर्ववत् । सक्रन्दयतीति संक्रन्दनः । नन्द्यादित्वाद् ल्युः । आक्रन्दत्यस्मिन्नित्याक्रन्दो देशः । आक्रन्द्यनेरक्षणार्थमाह, आक्रन्द्यतइत्याक्रन्दः शरणम् । कर्मण्यधिकरणे वा घञ् । आक्रन्दं धावति आक्रन्दिकः । 'आक्रन्दाट्ठञ्चे'ति ठञ्ठकौ । अनयोः स्वरे विशेषः । कन्दरः । बाहुलकादरः । यद्वा । कन्दं वैक्लव्य राति भीरूणामिति कन्दरः । कन्दलः । बाहुलकाद् लप्रत्ययः । यद्वा पूर्ववद्रातेः कः । 'कपिलकादीना सञ्ज्ञाछन्दसो'रिति लत्वम् । अथ वा लातेरन्तर्भावितण्यर्थात्कः । कन्दली । गौरादित्वाद् ङीष् । एते घटादयो ऽपि । भाद्यावेवेत्यपरे ॥ ७२ ॥

क्लिदि परिदेवने ॥ क्लिन्दतीत्यादि । अस्यानुदात्तेत्सु पठितस्येह पाठः परस्मैपदार्थः, स्वरितेत्सु पाठः क्रियाफलस्य कर्तृगामित्वे ऽपि परस्मैपद यथा स्यात् ॥ ७३ ॥

शुन्ध शुद्धौ ॥ शुन्धति । शुशुन्ध । शुन्धितेत्यादि । आशीर्लिङि कित्त्वा'दनिदिता'मिति उपधालोपे शुध्यात् । तथा यक्यङोरपि शुध्यते, शोशुध्यतइति । यङ्लुकि लङि तिप्सिपोर्हल्ङ्यादिलोपे सयोगान्तलोपे च प्रत्ययलक्षणेन लघूपधगुणो न भवति, सयोगान्तलोपस्य पूर्वत्रासिद्धत्वात् । शुधितः । शुधितवान् । शुधित्वा । 'उदुपधा'दिति निष्ठायाः कित्त्वविकल्पो न भवति 'सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्ये'ति । अत्र कित्त्वमसन्निपातनिमित्तमुदुपधत्व यदिदं कित्त्वाश्रये नलोपे भवति । धान्तप्रकरणमपहाय सयोगान्तप्रकरणानुरोधेनायमिह निर्दिष्टः । अय शौचकर्मणि युजादौ । शुध शौचइति दिवादौ । अनुषङ्गो नेह ॥ अतादय उदात्ता उदात्तेतो गताः ॥ ७४ ॥

प्रथमं माङ्गलिकमेधति पठित्वा मातृकापाठक्रमेण कवर्गीयान्तानाह ॥

शीकृ सेचने ॥ तालव्यादिः । दन्त्यादिरिति धनपालकाश्यपौ । अत एव षोपदेशलक्षणे स्मिपिस्वदिस्विदिस्विद्यतिसेकृसृजिस्तृस्त्यान्तसृसृपिसृभीकृसेकृस्त्रवर्जमिति पेठतुः । पुरुषकारस्तु तन्न मृष्यति यदाह । सीकृ इत्यार्या इति धनपालः । तत्र चाय पक्षः शीकर इति प्रयोगाननुगुणः । यो ऽपि षोपदेशलक्षणे सीकृपाठः सो ऽप्येवं प्रत्युक्त इति । शीकते । शिशीके । शीकिता । शीकिष्यते । शीकताम् । अशीकत । शीकेत । आशिषि । शीकिषीष्ट । अशीकिष्ट । अशीकिष्यत । कर्मणि शीक्यतइत्यादि । शिशीकिषते । शेशीक्यते । शेशीकीति । शेशीक्ति । लुङि अशेशीकीत् । हल्ङ्यादिलोपः । अशेशीक् स्यातेत्यत्र 'स्कोरि'ति लोपो न भवति । निमित्तनिमित्तिनोर्भिन्नपदस्थत्वात् । उक्तं चैव 'परेश्च घाङ्कयोरि'त्यत्र कैयटे । पदस्येत्यधिकारात् प्रत्यासत्तिन्यायाश्रयणादेकपदस्थयोर्निमित्तनिमित्तिनोर्ग्रहणमिति । शीकयति । अशिशीकत् । शीका । 'गुरोश्च हल' इत्यकारः । शीकायते । तत्करोत्यर्थे ऽटाट्टाशीकाकोटापोटासोटाप्रुष्टाग्रहणं कर्त्तव्यमिति क्यङ् । अयमपि पाठस्तालव्यादित्वे प्रमाणम् । अयं क्यङ् 'तत्करोती'ति णिचोपवाद इत्येके, सोपीष्यतइति न्यासादौ । कान्तत्वादस्मात् क्विप् नोदाहर्त्तव्य., स्थितं चैव 'परेश्च घाङ्कयोरि'त्यत्र भाष्यकैयटयोः, तथा 'स्कोः संयोगाद्योरि'त्यत्र वृत्तितद्व्याख्यानेष्वपि । मर्षणार्थोय युजादौ ॥ ७५ ॥

लोकृ दर्शने ॥ लोकते । लोकः । भाषार्थोयं चुरादौ ॥ ७६ ॥

श्लोकृ संघाते ॥ श्लोकते । संघातो ग्रन्थः, स चेह ग्रथ्यमानव्यापार इति स्वाम्यादयः । काश्यपादयस्तु ग्रन्थितृव्यापार इति ग्रथ्नातिवत्सकर्मक इति, श्लोकैरुपस्तौति, उपश्लोकयति । 'सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिजि'ति णिच् ॥ ७७ ॥

द्रेकृ ध्रेकृ शब्दोत्साहयोः ॥ शब्दोत्साहइति केचित् । यदाह काश्यपः । द्रेकते । शब्देनोत्साहं करोतीति । उत्साहो वृद्धिरिति चन्द्र. ।

औद्धत्यमिति स्वामी । ढ्रेकते । दिढ्रेके । ढ्रेकितेत्यादि । ढ्रेकणः । इयाभ्यामिति णः । एवं ध्रेकतइत्यादि ॥ ७९ ॥

रेकृ शङ्कायाम् ॥ आङ् पूर्वः संशये । आरेकं संशयं प्राहुरिति वचनात् । रेकतइत्यादि ॥ ८० ॥

सेकृ स्रेकृ स्रकि श्रकि श्लकि गत्यर्थाः ॥ अन्त्यौ तालव्यादी, अन्ये दन्त्यादयः । सेकते । सिसेके । सेकिता स्रेकते । सिस्रेके । स्रङ्कते । सस्रङ्के । स्रङ्किता । श्रङ्कते । शश्रङ्के । श्रङ्किता । श्लङ्कते । शश्लङ्के । श्लङ्किता । इत्यादि । अत्र मैत्रेयः । तृतीयं श्रकृ इति तालव्यादिमेकारोपधं पठति । अत्र कृ चित्सीकृ इति दन्त्यादिरपरोऽपि धातुः पठ्यते, तदनार्षम् । स्मृसृजिसृपिस्तृस्त्यासेकृस्तवर्जमिति षोपदेशपर्युदासे भाष्यादिष्वपाठात् । अत्र क्षीरस्वामी । अत्र दन्त्यादेः स्थाने तालव्यादिं पठित्वा ऽर्थभेदात्पुनः पाठ इत्युक्त्वा षेकृ इत्यन्ये विकल्पेन षोपदेशं कार्यार्थं पेठुरिति ॥ ८५ ॥

शकि शङ्कायाम् ॥ शङ्कते । शशङ्के । शङ्कितेत्यादि । शिशङ्किषते । शाशङ्क्यते । शाशङ्कीति । शाशङ्क्ति । लङि ईडभावे । अशाशन् । शङ्कुः । 'खरुशङ्कुपीयुनीलङ्गुलिगु' इत्युप्रत्ययान्तो निपातितः । शङ्कुला । बाहुलकादुलच् । शकॢ शक्ताविति स्वादौ । शक विभाषितो मर्षणइति दिवादौ ॥ ८६ ॥

अकि लक्षणे ॥ अङ्कते । आनङ्के । अङ्कितेत्यादि । अञ्चिकिषते । अनुस्वारपरसवर्णयोः पूर्वत्रासिद्धत्वात् । 'न न्द्राः' इति निषेधात् ककारादिर्द्विरुच्यते । न च पूर्वत्रासिद्धीयमद्विर्वचनइति असिद्धत्वनिषेधः । 'न न्द्राः' इत्यस्य निषेधरूपत्वादित्यततो स्थापितम् । आहुश्चात्र स्वामिकाश्यपादयोऽपि, 'न न्द्राः' इति निषेधात् कादेर्द्विर्वचनम् । प्राङ्कनम् । 'कृत्यच' इति णत्वस्य 'इजादेः सनुमः' । हलन्तादुणोः सनुमो यदि भवति तर्हि इजादेरेवेति नियमादभावः । अङ्कुरः । 'मन्दिवाशिमथिचतिचङ्क्यङ्किभ्य उरच्' इत्युरच् । अकि कुटिलायां गतावित्यये । अङ्क लक्षणइति चुरादौ ॥ ८७ ॥

वकि कौटिल्ये ॥ वङ्कते । ववङ्के । वङ्कितेत्यादि । प्रवङ्कनम् । पूर्ववद्णत्वम् । वङ्किः । 'वङ्क्यादयश्चे'ति क्विन्नन्तो निपातितः । अयं गत्यर्थः पठिष्यते ॥ ८८ ॥

मकि मण्डने ॥ मङ्कतइत्यादि । प्रमङ्कनम् । अङ्किवद्णत्वम् । मङ्कनः । 'क्रुधमण्डार्थेभ्यश्चे'ति युच् । कर्मकर्त्तरि 'भूषाकर्मे'ति यक्चिणोर्निषेधाद् मङ्कते कन्या स्वयमेव, अमङ्किष्ट कन्या स्वयमेवेति शप्सिचौ भवतः । मङ्किः । इन्वितीन् ॥ ८९ ॥

कक लौल्ये ॥ लौल्य गर्वश्चापल्य च । ककते । चकके । ककितेत्यादि । काकः, घञ् । बाहुलकात्कर्तरि, गत्यर्थः पठिष्यते तस्माद्वा घञ् ॥ ९० ॥

कुक वृक आदाने ॥ कोकते । चुकुके । कोकितेत्यादि । चुकुकिषते । चुकोकिषते । कुकित्वा । कोकित्वा । 'रलो व्युपधादि'ति क्त्वविकल्पः । कुकितमनेन, कोकितमनेन । प्रकुकित । प्रकोकितः । प्रकुकितवान् । प्रकोकितवान् । 'उदुपधादि'ति क्त्वविकल्पः । प्रकोकनम् । प्रकोकणम् ॥ 'हलश्चेजुपधात्' ॥ हलादेरिजुपधात्परो यः कृत् तत्स्थस्य नकारस्य उपसर्गस्थान्निमित्तात्परस्य वा ण इति णत्वविकल्पः । 'कृत्यच' इत्यस्यापवादः । कोकः । देवसेवमेषादयः पचादिषु द्रष्टव्या इत्यादिशब्दस्य प्रकारार्थत्वादिगुपधात्क बाधित्वा ऽच् प्रत्ययः । कोकिलः । 'सलिकल्यनिमहिव[1]डिभडिभगिदशगिदपिरिन्दतुगिडकुकिभूभ्य इलजि'ति इलच् । कोकिला । जातिलक्षणं ङीष बाधित्वा ऽजादित्वाट्टाप् । वृक । वर्कते । ववृके । वर्कितेत्यादि । विवर्किषते । वरीवृक्यते । 'रीगृदुपधस्य च' ॥ ऋत्वतोभ्यासस्य रीगिति रीगागमः, वरीवृकां चक्रइत्यादावल्लोपस्य स्थानिवत्त्वा'न्न धातुलोप' इति वा गुणाभावः । वर्वर्क्ति । वरिवर्क्ति । वरीवर्क्ति । वर्वृकीति । वरिवृकीति । वरीवृकीति । 'रुग्रिकौ च लुकी'ति ऋत्वतोभ्यासस्य रुग्रिकौ चकाराद्रीक् । ईटि 'नाभ्यस्तस्याचि पिती'त्यगुणत्वम् । एवं वर्वृक्त इत्यादि । ववर्का चकारेत्यादौ यङ्लुकोऽनैमित्तकत्वात् 'न धातुलोप' इति गुणनिषेधाभावः । अवर्वृकीत् । अवर्वर्क्

[1] वडीति पञ्चपादीवृत्तौ नास्ति ।

स्यातेत्यत्र 'स्कोः' इति कलोपो भिन्नपदत्वान्नेति सोक्तावुक्तम् । लुङि सार्वधातुकाश्रये गुणे 'नाभ्यस्तस्ये'ति निषिद्धेऽपि सिजाश्रयो भवत्येव प्रत्ययलक्षणेन, अवर्कीत् । अवर्किष्टामित्यादि । हलन्तलक्षणा वृद्धि'र्नेटी'ति निषिध्यते । वर्कयति । अववर्कत् । अवीवृकत् ॥ 'उऋत्' ॥ चङ्परे णावुपधाया ऋकारस्य वा ऋकार इत्यृकारः । इररारामपवादः । वृकः । इगुपधलक्षणः कः । मृगविशेष आयुधजीविसङ्घविशेषश्च । तत्र द्वितीयार्थाभिधायिनो 'वृकाट्टेण्यण्' इति स्वार्थे टेण्यणि वार्केण्यः । 'ञ्याद्यस्तद्राजाः' । 'पूगाञ्ञ्यो ग्रामणीपूर्वादि'त्यारभ्यापादपरिसमाप्तेर्वक्ष्यमाणाः प्रत्ययास्तद्राजसञ्ज्ञा इति टेण्यस्य तद्राजत्वे 'तद्राजस्य बहुषु तेनैवास्त्रिया'मिति लुकि बहुषु वृकाः । तेनैवेति वचनाद्यदि बहुत्वं तद्राजकृतमेवेत्यवगतेर्वार्केण्यमतिक्रान्ता अतिवार्केण्या इत्यादावर्थान्तरकृते बहुत्वे लुग् न भवति । तथा । अस्त्रियामितिवचनात् स्त्रियां टित्त्वात् ङीपि 'हलस्तद्धितस्य' । हल उत्तरस्य तद्धितयकारस्य लोपो भवतीति परत इत्या'देः परस्ये'ति यकारलोपे 'यस्येति चे'त्यकारलोपे वार्केणी । वार्केण्यौ । वार्केण्य इति भवति । वर्करस्तरुणः पशुः । बाहुलकादरच् ॥ ९२ ॥

चक तृप्तौ प्रतिघाते चेति धनपालमैत्रेयादयः । चक तृप्तावित्येव क्षीरस्वामिशाकटायनौ । चकते । चेके । चकितेत्यादि । चकोरः । 'कठिचकिभ्यामोरन्नि'त्योरन् । अयं घटादावपि ॥ ९३ ॥

ककि वकि श्वकि त्रकि ढौकृ त्रौकृ ष्वष्क वस्क मस्क टिकृ टीकृ रघि लघि गत्यर्थाः ॥ कङ्कते । चकङ्के । कङ्कितेत्यादि । वङ्कते । ववङ्के । वङ्कितेत्यादि । प्रवङ्कनम् । प्रावङ्कनम् । 'कृत्यच' इति णत्वम् 'इजादेः सनुमः' इति नियमान्न भवति । कङ्कतम् । बाहुलकादतच् । कङ्कत एव कङ्कतिका । सञ्ज्ञायां कनि टापि 'प्रत्ययस्थादि'तीत्वम् । श्वङ्कते । शश्वङ्के । श्वङ्किता । त्रङ्कते । तत्रङ्के । त्रङ्किता ॥ ढौकते । डुढौके । ढौकिता ॥ त्रौकते । तुत्रौके । त्रौकिता । ष्वष्कते । षष्वष्के । ष्वष्किता । 'सुब्धातुष्ठिवुष्वष्कतीनां सत्वप्रतिषेधो वक्तव्य' इति सत्वनिषेधः ।

वस्कते । ववस्के । वस्किता । मस्कते । ममस्के । मस्किता । टेकते । टिटिके । टेकिता । 'असंयोगाल्लिट् किदि'ति कित्त्वान्न गुणः । टीकते । टिटीके । टीकिता । रङ्घते । ररङ्घे । रङ्घिता । लङ्घते । ललङ्घे । लङ्घितेत्यादि । ढौकतित्रौकत्योर्यङ्लुकोरभ्यासस्य ह्रस्वे गुणः । न च ह्रस्वस्य 'दीर्घोकित' इत्यनेन बाधः । अभ्यासविकारेष्वपवादा नोत्सर्गान् विधीन् बाधन्तइति तत्राकित इत्यनेन ज्ञापितत्वात् । अस्ति च दीर्घस्य दीर्घत्वे प्रयोजनं ह्रस्वनिवृत्तिः । कृते तु ह्रस्वे तस्य दीर्घ ऊकारो न भवति, 'गुणो यङ्लुकोरि'त्यस्य निर्विषयत्वप्रसङ्गात् । ढौकतित्रौकतिटेकतिटीकतीनामृदित्त्वाणणौ चङ्युपधाया ह्रस्वाभावः । अडुढौकत् । अतुत्रौकत् । अटिटेकत् । अटिटीकदित्यादि । लघु । 'लङ्घिबह्योर्नलोपश्चे'त्युप्रत्ययनलोपौ । लघिमा । 'पृथ्वादिभ्य इमनिज्वे'ति भावकर्मणोरिमनिच् । 'टे'रितीट्टिमेयस्य लोपः । वायहणा'दिगन्ताच्च लघुपूर्वा'दिति अणि लाघवमिति, लघुपूर्वान्तादिति सूत्रार्थः । रघुः । 'बालमूललघ्वङ्गुलीनां वा लो रत्वमापद्यत'इति पक्षे लकारस्य रेफः । श्वङ्कतिः संमतायां दन्त्यादिः पठ्यते । अत्र दण्डके तिक्ष तीक्ष इति क्व चित्पठ्येते, तदपि तिकः प्रतीक इति दर्शनाद् ग्राह्यमेव, इगुपधलक्षणकान्तो । तिकस्यापत्यं, तैकायनिः । 'तिकादिभ्यः फिञि'ति फिञ् । फस्यायन्नादेशः । तैकायनयश्च कैतवायनयश्च किककितवाः । 'तिककितवादिभ्यो द्वन्द्व'इति द्वन्द्वे बहुषु फिञो लुक् । लघि भोजननिवृत्तौ चेति स्वाम्यादयः । लघि शोषणइत्यये । भाषार्थोयं चुरादौ ॥ १०६ ॥

अघि वघि मघि गत्याक्षेपे ॥ आक्षेपो निन्दा, गतौ गमनारम्भे चेति स्वामी । अङ्घते । आनङ्घे । अङ्घितेत्यादि । अञ्जिघिषते । 'न न्द्राः' इति नवर्ज द्विरुच्यते । अभ्यासस्य चुत्वेन झकारे जश्त्वे जकारः । अङ्घयति । आञ्जिघत् । वङ्घते । मङ्घते । इत्यादि । प्राङ्घनमित्यादौ 'इजादेः सनुम' इति नियमादणत्वम् । मघि कैतवे च ॥ १०९ ॥

राघृ लाघृ सामर्थ्ये ॥ राघते । रराघे । राघितेत्यादि । रिराघिषते । राराघ्यते । राराघीति । राराघि । लङि । आराराक् । राघयति । अरराघत् ।

ऋदित्त्वादुपधाह्रस्वनिषेधः । एवमितरयोरपि । उल्लाघः । 'अनुपसर्गात्फुल्लक्षीबकृशोल्लाघाः' इति क्ते इडभावस्तलोपश्च निपात्यते । उल्लाघेतिवचनाद् अनुपसृष्टादन्योपसृष्टाच्च लाघितः प्रलाघित इति भवति । द्राघृ आयामे च । आयामो दैर्घ्यक्रियेति कौशिकः । कदर्थनमिति स्वामी । ध्राघृ इति तवर्गचतुर्थादिमपि केचित्पठन्ति ॥ १११ ॥

श्लाघृ कत्थने ॥ कत्थनं श्लाघनम् । देवदत्ताय श्लाघते । देवदत्त स्तुवंस्त्वमेव बोधयितुमिच्छतीत्यर्थः । 'श्लाघह्नुङ्स्थाशपां ज्ञीप्स्यमानः' । श्लाघादीनां प्रयोगे ज्ञीप्स्यमानो ज्ञापयितुमिष्यमाणः संप्रदानमिति देवदत्ताच्चतुर्थी. केचिदाहुः । आत्मानं परं वा स्तुवन् तां स्तुतिं बोधयितुमिच्छतीत्यर्थ इति । तथा च भट्टिः, श्लाघमानः परस्त्रीभ्यस्तत्रागाद्राक्षसेश्वर इति । देवदत्तं श्लाघत इति ज्ञीप्स्यमानत्वाविवक्षायां कर्मत्वम् ॥ शीकादय उदात्ता अनुदात्तेतो गताः ॥ ११२ ॥

अथ परस्मैपदिन आह ॥

फक्क नीचैर्गतौ ॥ इतः शिष्यन्ता उदात्ता उदात्तेतः । नीचैर्गतिर्मन्दगमनमसद्व्यवहारो वेति स्वामी । फक्कति । पफक्क । फक्किता । फक्किष्यति । फक्कतु । अफक्कत् । फक्केत् । आशिषि फक्क्यात् । अफक्कीत् । अफक्किष्यत् । कर्मादौ फक्क्यत इत्यादि । पिफक्किषति । पाफक्क्यते । पाफक्कीति । पाफक्ति । फक्कयति । अपफक्कत् ॥ ११३ ॥

तक हसने ॥ तकति । तताक । तेकतुः । तकिता । अतकीत् । अताकीद् इत्यादि । 'अतो हलादे'रिति वा वृद्धिः । व्यतितकन्ति । प्रतिषेधे हसादीनामिति तङ्निषेधः । तक्यम् । 'तकिशसी'ति यत् ॥ ११४ ॥

तकि कृच्छ्रजीवने ॥ तङ्कति । ततङ्क । तङ्कितेत्यादि । यङ्लुकि लङि ईडभावे अतातन् । अस्यानन्तरं मैत्रेयः शुक गताविति पठित्वा शोकति, शुकः, शुक्र इत्युदाजहार, अस्मिन्हि सति शुकवल्कोल्का इति शुभेः कनि भलोपे शुकशब्दनिपातनमनर्थकं स्यात्, इगुपधलक्षणेन कप्रत्ययेनैव सिद्धत्वात्, तथा शुकेरन्विधानेनापि शुक्रशब्दे सिद्धे ऋज्रेन्द्रादौ शुचेर्निपातनमनर्थकं स्यादित्यस्य पाठो ऽनार्ष इव प्रतीयते ॥ ११५ ॥

बुक्क भषणे ॥ भषणमिह श्वरवः । बुक्कति । बुबुक्क । बुक्कि तेत्यादि । अथ चुरादावपि ॥ ११६ ॥

कख हसने ॥ कखति । चकाख । कखितेत्यादि । अकखीत् । अकाखीत् । 'अतो हलादे'रिति वा वृद्धिः ॥ ११७ ॥

ओखृ राखृ लाखृ द्राखृ ध्राखृ शोषणालमर्थयोः ॥ ओखति । ओखां चकार । ओखितेत्यादि । ओचिखिषति । ओखयति । मा भवानोचिखत् । 'द्विर्वचनेचो'ति णिलोपस्य स्थानिवत्त्वात् खिशब्दस्य द्वितीयस्यैकाचो द्विर्वचनमृदित्त्वाच्चोपधाह्रस्वः । इदमेव ऋदित्त्व ज्ञापकमन्तरङ्गादपि द्विर्वचनात्पूर्वमुपधाह्रस्वत्व भवतीत्यस्य । अस्य च प्रयोजन मा भवानिदिधदिति सिद्धिरित्येधताबुक्तम् । प्रोखति । 'एङि पररूपम्' । अवर्णान्तादुपसर्गादेङि परे पूर्वपरयोः पररूपमिति पररूपत्वम् । राखति । अराखत् । लाखति । द्राखति । ध्राखतीत्यादि ॥ १२२ ॥

शाखृ श्लाखृ व्याप्तौ ॥ शाखति । श्लाखतीत्यादि । शाखा । 'गुरोश्चे'त्यकारः । शाखेव शाख्यम् । 'शाखादिभ्यो य' इति इवार्थे यः । प्रतिशाखं भवं प्रातिशाख्यम् । 'अव्ययीभावाच्चे'ति भवार्थे ण्यः । शाखा अस्य सन्तीति, शाखी । 'व्रीह्यादिभ्यश्चे'ति इनिः । विशिष्टा शाखा विशाखा । सा प्रयोजन प्रयोजिका यस्य वैशाखो मन्थः । 'विशाखाषाढादण्मन्थदण्डयो'रिति प्रयोजने णप्रत्ययः । विशाखेति नक्षत्रं तत्र जातः । 'सन्धिवेलाद्यृतुनक्षत्रेभ्योऽण्'त्यण् । तस्य 'श्रविष्ठाफल्गुनी'त्यादिना लुकि 'लुक् तद्धितलुकी'ति स्त्रीप्रत्ययस्य लुकि विशाखो माणवकः ॥ १२४ ॥

उख उखि वख वखि मख मखि णख णखि रख रखि लख लखि इख इखि ईख वल्ग रगि लगि अगि वगि मगि तगि त्वगि श्रगि श्लगि इगि रिगि लिगि गत्यर्थाः ॥ द्वितीयान्ताः पञ्चदश, तृतीयान्तास्त्रयोदश ॥ ओखति । प्रोखति । 'एङि पररूपम्' । उवोख । ऊखतुः । उवोखिथ । उवोख । गुणविषये 'ऽभ्यासस्यासवर्णे'इति अभ्यासस्येवर्णोवर्णयोरसवर्णेऽचि परत इयङुवङावित्युवङ् । लिटि पिद्वचनेषु गुणः, गुरुमानयं धातु-

रिति तेषां स्थानिवत्त्वेन लिट्त्वाद् आम् प्राप्तः सन्निपातपरिभाषया निवर्त्तते । आमि गुणनिमित्तप्रत्ययस्य 'आम' इति लुक् स्यात् । ऊखतु-रित्यादौ सवर्णदीर्घस्यान्तवत्त्वेनाभ्यासत्वाद् ह्रस्वो न भवति, अभ्यास-मात्राश्रयत्वेनान्तरङ्गेऽस्मिन् पूर्वपराश्रयस्य बहिरङ्गस्य सवर्णदीर्घस्य 'असिद्धं बहिरङ्गमन्तरङ्गे' इत्यसिद्धत्वात् । ओखितेत्यादि । लुङि 'नेटी'ति वृद्धेर्नि-षेधे लघूपधगुणेन मा भवानोखीदिति भवति । ओचिखिषति । लघूपधगुणे कृते द्वितीयस्यैकाचो द्विर्वचनम् । ओखयति । मा भवानुचिखत् । द्विर्वच-नात् पूर्वमेवोपधाह्रस्वत्वमिति ज्ञापितम् । ओखित्वा । 'न क्त्वा सेडि'ति अकित्त्वाद्गुणः । भावादिकर्मणोर्निष्ठायां 'मुदुपधादि'ति कित्त्वविकल्पना-दुखितमनेन, ओखितमनेनेत्यादि नेयम् । उखो मुनिः । इगुपधत्वात्कः । उखेन प्रोक्त औखीयः श्लोकः । 'तित्तिरिवरतन्तुखण्डिकोखाच्छणि'ति तृतीयान्तात् प्रोक्तार्थे छण्, णित्त्वाद्वृद्धिः । यदा तु प्रोक्तं छन्दो ब्राह्मणं वा तदा 'छन्दोब्राह्मणानि च तद्विषयाणी'ति नियमाद् अध्येतृवेदितृ-प्रत्ययविषयमेव, तेन 'तदधीते तद्वेदे'ति औखीयशब्दाद् द्वितीयान्ताद् अध्येतृवेदित्रोरण्, तस्य 'प्रोक्ताल्लुगि'ति प्रोक्तप्रत्ययाच्छणः परत्वेन लुकि औखीयो माणवकः । औखीया ब्राह्मणीत्यत्र प्रत्ययलक्षणेनाणन्तत्वाद् 'टिड्ढाणञ्' इति ङीब् भवति, अत इत्यनुवर्त्याणोऽकारस्य च विशेषण-विशेष्यत्वाश्रयणाद् वर्णाश्रयत्वाद् 'वर्णाश्रये नास्ति प्रत्ययलक्षण'मिति प्रत्यय-लक्षणनिषेधात् । उखायां संस्कृतमुख्यम् । 'शूलोखाद्यदि'ति सप्तम्य-न्तात्संस्कृतमित्यर्थे यत् । प्रोखणम् । 'कृत्यच' इति णत्वम् । उङ्खति । उङ्खां चकार । उङ्खिता । उञ्चिखिषति । उङ्खयति । औञ्चिखदित्यादि । प्रोङ्खणम् । 'इजादेः सनुम' इति णत्वम् । वखति । ववाख । वखिते-त्यादि, ववखतुरित्यादौ किति लिटि वकारादित्वादेत्वाभ्यासलोपौ न । लुङि 'अतो हलादे'रिति वा वृद्धिः । अवखीत् । अवाखीदिति । एवं परेषाम-निदिताम् । वङ्खति । प्रवङ्खनम् । 'इजादे'रिति नियमादणत्वम् । मखति । ममाख । मखितेत्यादि । मङ्खति । नखति । नङ्खति । मूर्धन्यादेरुपदेश 'उपसर्गादि'ति णत्वेन प्रणखतीत्यादावपि यथा स्यादिति । रखति । रङ्खति ।

प्ररङ्खणम् । 'रषाभ्यामि'ति णत्वम् । इजादेरिति नियम उपसर्गात्खल्यच इति प्राप्तस्यैव । लखति । लङ्खति । एखति । इयेख । एखितेत्यादि । ओखतिवत् । इङ्खति । इङ्खां चकार । ईखति । ईखां चकार । यद्यपि मैत्रेयेणादितस्त्रय इदित उखिवखिमखयः । मूर्द्धन्यादिर्नखिरनिदित्, इखिश्च न पठ्यते, तथापि इतरानेकव्याख्यातृणां प्रामाण्यादस्माभिः पठितः । अत्र चन्द्रो मुखिमपि पपाठ । समतायां तु त्रख त्रखि शिखि इति त्रयः पठ्यन्ते । द्रविडास्तु शिखिमपि पठन्ति, एवमेकोनविंशतिः खान्ताः । वल्गति । रङ्गति । रङ्गन्त्यस्मिन् प्रेक्षकाणां मनांसीति, रङ्गः । 'हलश्चे'ति संज्ञायामधिकरणे घञ् । रञ्जेर्वा घो द्रष्टव्यः । लङ्गति । विलगितः । अनिदितां नलोपे लङ्गिकम्प्योरुपतापशरीरविकारयोरुपसंख्यानमिति नलोपः । उपतापादन्यत्र लङ्गितः । अङ्गति । अङ्गत्यत्रावयवीत्यङ्गम् । रङ्गवद् घञ् । अङ्गन्त्यत्रेति अङ्गा जनपदः । पूर्ववद् घञ् । अङ्गिरगतौ विपरीतलक्षणया प्रवर्तते, दर्श इत्यत्र दृशिवत् । न दृश्यतेऽस्मिन् चन्द्र इति हि दर्शशब्दो धूर्त्तस्वामिना व्युत्पादितः । कल्याणान्यङ्गान्यस्याः सन्तीति अङ्गना । 'अङ्गात् कल्याण'इति पामादित्वात् मत्वर्थीयो नः, विशिष्टं विहीनं वाऽङ्गमस्येति व्यङ्गः, तस्यापत्यं व्याङ्गि'रत इञ्' 'स्वागतादीनां चे'ति वृद्धिप्रतिषेधैजागमयोर्निषेधः । एवं स्वाङ्गिरित्यत्रापि । सर्वाङ्गं व्याप्नोतीति सर्वाङ्गीणः स्नायुः, 'तत्सर्वादेः पथ्यङ्गकर्मपत्रपात्रं व्याप्नोती'ति सर्वादेः पथ्याद्यन्ताद् द्वितीयान्ताद्व्याप्नोतीत्यर्थे खः । अग्निः । 'अङ्गेर्नि नलोपश्चे'ति निप्रत्ययो नलोपश्च । अग्निर्देवता अस्य, आग्नेयं हविः । सर्वत्रा'ग्निकलिभ्यां ढग्वक्तव्य'इति ढक् प्रत्ययः । सर्वत्रेति वचनादर्थान्तरेप्ययमेव । अग्नीषोमौ । अग्नीवरुणौ । 'ईदग्नेः सोमवरुणयो'रिति देवताद्वन्द्वलक्षणस्यानङोपवाद ईकारः । अग्नीवरुणौ देवता अस्याग्निवारुणम् । 'देवताद्वन्द्वे चे'त्युभयपदवृद्धिः । 'इद्वृद्धा'विति वृद्धिमत्युत्तरपदे अग्नेरिकार ईत्वापवादः । अग्नायी । 'वृषाकप्यग्निकुसितकुसिदानामुदात्त'इति पुंयोगे ङीप्युदात्तैकारान्तादेशे आयादेशः । अग्नायी देवता अस्य आग्नेयम् । लिङ्गविशिष्टपरिभाषया 'सर्वत्राग्निकलिभ्यां ढगि'ति ढकि

'भस्याढे तद्धिते' इति पुंवद्भावपर्युदासे स्त्रीभ्यो ढको ग्रहणमिति कैयटादावुक्तत्वात्पुंवद्भावः। अग्निमिन्द्धइत्यग्निमिन्द्धः। 'भ्राष्ट्राग्न्योरिन्धे मुम्वक्तव्य' इति मुम्। अयम्। 'रुद्रेन्द्रार्थे'ति निपातनाद्रकि नलोपः। अग्रे भवमग्रिमम्। 'अग्रादिपश्चाड्डिमच्' इति डिमच्। अङ्गारः। 'अगिमगिनन्दिभ्य आर' इत्यारन्। अङ्गुलिः। 'हनत्यञ्जी'त्यादिना उलिप्रत्ययः, अङ्गुरिः। 'बालमूले'त्यादिना पक्षे रः। पञ्चाङ्गुलयः प्रमाणमस्य पञ्चाङ्गुलः। 'तद्धितार्थोत्तरपदसमाहारे च' तद्धितार्थे विषयभूते उत्तरपदे परतः समाहारे चाभिधेये दिक्संख्ये समानाधिकरणेन सह समस्येते इति प्रमाणे तद्धितार्थे विषयभूते समासः। 'सङ्ख्यापूर्वो द्विगु'रिति द्विगुत्वे 'द्विगुश्चे'ति तत्पुरुषत्वात्तत्र 'प्रमाणे द्वयसज्दघ्नञ्मात्रच' इति प्रमाणोपाधिकादस्मात्प्रमाणिनि मात्रच्, तस्य 'द्विगोर्लुङ् नित्य'मिति लुकि 'तत्पुरुषस्याङ्गुलेः सङ्ख्याव्ययादे'रित्यचि 'यस्येति चे'तीकारलोपः। अत्यङ्गुलम्। 'अत्यादयः क्रान्ताद्यर्थे' इति तत्पुरुषः, अव्ययादित्वादच्। शोभनाङ्गुलिः स्वङ्गुलिः। 'न पूजनात्'। यान् शब्दानुपादाय समासान्तो विधीयते ते यदा पूजावचनात्परे भवन्ति तदा समासान्तो नेत्यत्राचोऽभावः। कुत्सिताङ्गुलिः किमङ्गुलिः। 'किं क्षेपे'। क्षेपे यः किंशब्दः स समानाधिकरणेन सुबन्तेन समर्थेन समस्यत इति तत्पुरुषः। 'किमः क्षेप' इति क्षेपवचनादस्मात्परस्य समासान्तनिषेधाद् अच्न भवति। नाङ्गुलिः, अनङ्गुलिः। तत्र 'नञस्तत्पुरुषा'दिति समासान्तनिषेधः। नञः परे ये वक्ष्यमाणा ऋगादयस्तदन्तात्तत्पुरुषाच्चेति सूत्रार्थः। पञ्चाङ्गुलिसदृशा अवयवा अस्य पञ्चाङ्गुल एरण्डः। धान्यादीनां विक्षेपदारु च पञ्चाङ्गुलमाहुः। 'अङ्गुलेर्दारुणी'ति बहुव्रीहौ षच्। अङ्गुलीयमेवाङ्गुलीयकम्। संज्ञायां कन्। 'जिह्वामूलाङ्गुलेश्छः' इति सप्तम्यन्ताद्भवार्थे छः। वङ्गतीति वङ्गाः जनपदः। [illegible]। मङ्गतीति मङ्गलम्। 'मङ्गेरलच्' इत्यलच्। तङ्गति। त्वङ्गति। श्रङ्गति। श्लङ्गति। इङ्गति। रिङ्गति। लिङ्गति। लिगि चित्रीकरण इति तुदादौ च ॥ १५२ ॥

त्वगि कम्पने च ॥ त्वङ्गति ॥ १५३ ॥

युगि जुगि रुगि वर्जने ॥ युङ्गति। जुङ्गतीत्यादि ॥ १५६ ॥

घघ हसने ॥ घघति। जघाघ। घघितेत्यादि ॥ १५७ ॥

मघि मण्डने ॥ मङ्घति। मङ्घते कन्या स्वयमेव। अमङ्घिष्ट कन्या स्वयमेव, भूषाकर्मत्वाच यक्चिणौ। मङ्घनः। 'क्रुधमण्डार्थेभ्यश्चे'ति युच् ॥ १५८ ॥

शिघि आघ्राणे ॥ शिङ्घति। शिङ्घानको रोगविशेषः। 'लूशिघिधाभ्यश्चे'त्यादिनानक् प्रत्ययः ॥ फक्कादय उदात्ता उदात्तेतः ॥ १५९ ॥

अथ क्रमप्राप्तांश्चवर्गान्तानात्मनेपदिन आह ॥

वर्च दीप्तौ ॥ एतदादय ईजन्ता उदात्ता अनुदात्तेतः ॥ वर्चते। ववर्चे। वर्चिता। वर्चिष्यते। वर्चताम्। अवर्चत। वर्चेत। आशिषि वर्चिषीष्ट। अवर्चिष्ट। अवर्चिष्यत। भावे वर्च्यते इत्यादि। विवर्चिषते। वावर्च्यते। वावर्चीति। वावर्क्ति। अवावर्चीत्। अवावर्क्। 'रात्सस्ये'ति नियमाच संयोगान्तलोपः। अवावर्क् स्यातेत्यादौ कुत्वस्यासिद्धत्वात् 'स्कोरि'ति कलोपो न भवति, यद्वा तत्र निमित्तनिमित्तिनोः समानपदस्थत्वएव सलोप इतीह नैव प्रसङ्गः। वर्चयति। अवर्चत्। वर्चः दीप्तिः पुरीषं च। 'असुनि'त्यसुन्। वर्चस्कः पुरीषम्। सञ्ज्ञायां कन्, 'सोपदादा'विति विसर्जनीयस्य सत्व, 'कुप्वो'रित्यस्यापवादः। ब्रह्मवर्चसम्। हस्तिवर्चसम्। 'ब्रह्महस्तिभ्यां वर्चस' इत्यच् समासान्तः। पल्यवर्चसम्। राजवर्चसम्। 'पल्यराजभ्याञ्चे'त्यच्। ब्रह्मवर्चसनिमित्त संयोग उत्पातो वा ब्रह्मवर्चस्यम्। 'तस्य निमित्तप्रकरणे ब्रह्मवर्चसादुपसङ्ख्यानमि'ति यत्। वर्च्यम्। ण्यति 'चजोः कुघिण्ण्यतो'रिति कुत्वं न भवति। 'न क्वादे'रित्यत्र क्वाद्यजिव्रजियाचिरुच्यादीनां न प्रतिषेधो निष्ठायामनिटः कुत्ववचनात्। अस्यार्थः। 'चजोः कुघिण्ण्यतोर्निष्ठायामनिट' इति सूत्र कर्त्तव्यं, तेन 'न क्वादे' 'अजिव्रज्योश्चे'ति योगद्वयं 'यजयाचरुचप्रवचर्चश्चे'त्यत्र याचिरुच्यृचिग्रहणं न कर्त्तव्य भवतीति। तेषां सेट्त्वादित्यभिप्रायः। अयमत्र विवेकः। ये क्वादयोऽन्ये वा निष्ठायामनिटस्तेषां कुत्वं ये तु सेटस्तेषां नेति। एवञ्चात्र मते ग्लुचादीनां कवर्गादित्वेपि निष्ठायाम-

निट्त्वात्कुत्वेन भाव्यम्। अत्र हरदत्तः। यथोत्तरं मुनीनां प्रामाण्यमिति वार्त्तिककारानुसारेण कुत्वस्य भावाभावौ व्यवस्थाप्याविति। कथन्तर्हि शोकः समद्भ इति। यतः शुच्युञ्जी निष्ठायां सेटौ। अत्र भाष्य, शुच्युच्योर्घञि कुत्व वक्तव्यमिति। अत्र हरदत्तः। तच्च यथान्यासेपि वक्तव्य घञ्येव यथा स्याद् ण्यति माभूदिति, तदेव वार्त्तिककारपक्षे विध्यर्थं भविष्यतीति॥ १६०॥

षच सेचने॥ अय सेवनार्थोपि, तथा च ऋग्व एनां महिमानः सचन्तइत्यत्र सुरभत्रुभस्त्रांयियोः सचते सेवतइति निरुक्ते च सक्तः सचित इति, सेव्यमानस्येति। अस्यैतौ वाचकावित्यर्थः। 'प्रनूमहित्वं वृषभस्य वोच य पूरवो वृत्रहणं सचन्त'इति। सचते। सेचे। सचिता। सचिष्यते। सचताम्। असचत। सचेत। आशिषि सचिषीष्ट। असचिष्ट। सिसचिषते। 'स्तौतिण्योरेवे'त्यषत्वम्। सासच्यते। सासक्ति। साचयति। असीषचत्। सक्तुः। सितनिगमिमसिसच्यविधाञ्क्रुशिभ्यस्तु'नि'ति तुन्। 'तितुत्रेत्ती'त्तिनिषेधः। सक्तुलः। 'सिध्मादिभ्यश्चे'ति मत्वर्थे लः। सचिवः। बाहुलकाद्वुप्रत्ययः। यद्वा सचिः सेवा, इन् प्रत्ययः, ता वातीति सचिवः, 'आतोनुपसर्गे कः'। यद्वा 'केशाद्वोन्यतरस्या'मिति वप्रत्ययः 'अन्येभ्योपि दृश्यत इति मणिवराजीवादिवदस्मादपि। अय समवाये स्वरितेदयं॥ १६१॥

लोचृ दर्शने॥ लोचते। लुलोचे। लोचितेत्यादि। लुलोचिषते। लोलोच्यते। लोलोचीति। लोलोक्ति। लोचयति। अलुलोचत्। ऋदित्वाण्णौ चङि ह्रस्वाभावः। भाषार्थोय चुरादौ॥ १६२॥

शच व्यक्तायां वाचि॥ शचते। शेचे। शचितेत्यादि। शची। इनन्तात्'दिकारादक्तिन' इति ङीष्॥ १६३॥

श्वच श्वचि गतौ॥ श्वचते। शश्वचे। श्वचिता। श्वञ्चते। शश्वञ्चे। श्वञ्चितेत्यादि। शच्यादयस्तालव्यादयः॥ १६५॥

कच बन्धने॥ कचते। चकचे। कचितेत्यादि। कचते यूनां मनांसि बध्नातीति कचः। पचाद्यच्। काचः। 'हलश्चे'ति संज्ञाया घञ्॥ १६६॥

कचि काचि दीप्तिबन्धनयोः ॥ कञ्चते । चकञ्चे । कञ्चिता । काञ्चनइत्यादि । कञ्चुकः । बाहुलकादुकः प्रत्ययः । काञ्चनम् । अनुदात्तेत्वाद्युच् । काञ्चनस्य विकारः । काञ्चनम् । 'प्राणिरजतादिभ्योऽञि'ति रजतादित्वादञ् 'नित्य वृद्धशरादिभ्य'इति मयटोपवादः । काञ्चिः । काञ्ची । इनन्ता'त्कृदिकारादक्तिन' इति वा ङीष् । काञ्चिकम् । संज्ञायां कल्कने कन् । दीप्तौ चेति वक्तव्ये बन्धनग्रहणं प्रपञ्चार्थम् ॥ १६८ ॥

मच मुचि कल्कने ॥ कल्कन दम्भः शाठ्यं चेति मैत्रेयः । दम्भः कत्थन चेति स्वामी । मचते । मेचे । मचिता । मुञ्चते । मुमुञ्चे । मुञ्चितेत्यादि । मुचेति चन्द्रः । तन्मते मोचतइति । मुच्लृ मोक्षणइति तुदादौ । मुच प्रमोचनइति चुरादौ ॥ १७० ॥

मचि धारणोच्छ्रायपूजनेषु ॥ मञ्चतइत्यादि । मञ्चः । पचाद्यच् । शाकटायनस्तु मुञ्चि हित्वा द्वावेव धातू पपाठ । मचि कल्कने । मञ्चु धारणोच्छ्रायपूजनेष्विति । तेन चानुदात्तेत्स्थाने इड्विक्रियते । तस्य स्थाने वेदित्, धनपालस्तावत् शाकटायनानुसारी ॥ १७१ ॥

पचि व्यक्तीकरणे ॥ पञ्चते । पङ्कः । 'चजोः कुघि ण्यतो'रिति कुत्वम् । वार्त्तिकमते न्यङ्क्वादिर्द्रष्टव्यः । तेन हि निष्ठायामनिट कुत्वमुच्यते । पञ्चन् बाहुलकात्कनिन् बहुवचनान्तः । तत्र 'ष्णान्ता षडि'ति षड्संज्ञाविधानात् 'षड्भ्यो लुगि'ति जश्शसोर्लुक् । पञ्चानामित्यत्र 'षट्चतुर्भ्यश्चे'त्यामो नुट् 'नोपधायाः' । नान्तस्योपधाया नामि दीर्घ इति दीर्घे 'न लोपः प्रातिपदिकान्तस्ये'ति नलोपः, स्त्रियामपीदमेव रूपम् । 'न षट्स्वस्रादिभ्य'इति टापो ङीपश्च निषेधात् । अस्ति च टापः प्रसङ्गो नकारे लुप्ते । पञ्चानामपत्यं, पाञ्चिः । बाह्वादित्वादिञ् । 'नस्तद्धिते' । नान्तस्य भस्य तद्धिते टिलोप इति टिलोपः । पङ्क्तिः । 'पङ्क्तिविंशतित्रिंशच्चत्वारिंशत्पञ्चाशत्षष्टिसप्तत्यशीतिनवतिशत'मिति 'तदस्य परिमाणमि'ति विषये तिप्रत्ययो निपात्यते । पञ्च परिमाणमस्य वर्गस्य पञ्चत् । 'पञ्चद्दशतौ वर्गे वे'तिड त्यन्तो निपातितः । वाग्रहणा'त्सङ्ख्याया अतिशदन्तायाः कनि'ति कनि पञ्चकः । पचेति दुर्गः । तथा वर्धमा-

नोपि, यदाह । अनिड्विधौ पच्यादिसूत्रे डुपचष्याके पच व्यक्तीकरण इति, समतायां तु वर्धमानवदुक्त्वाऽन्यैस्त्वयमिदित् पठ्यतइत्युक्तम् । 'तिङो गोत्रादीनी'त्यत्र पचतिगोत्रमित्युपादाय पच व्यक्तीकरणइति पठन् न्यासकारः परस्मैपदिनं च मन्यते । डुपचष्याकइत्यग्रे । पचि विस्तारवचनइति चुरादौ ॥ १७२ ॥

ष्टुच प्रसादे ॥ स्तोचते । 'धात्वादेः षः सः' । ष्टुत्वं निमित्ताभावान्न भवति । सत्वात्पूर्वं तु पूर्वत्रासिद्धत्वेन न भवति । तुष्टुचे । 'शर्पूर्वाः खय'इति शेषः । स्तोचितेत्यादि । तुस्तुचिषते । तुस्तोचिषते । स्तुचित्वा । स्तोचित्वा 'रलो व्युपधादि'ति कित्त्वविकल्पः । 'स्तौतिण्योरेवे'ति नियमात्सन्यषत्वम् । तोष्टुच्यते । तोष्टुचीति । तोष्टोक्ति । स्तोचयति । अतुष्टुचत् । स्तोकः । घञ् । उदश्वित्स्तोकम्, अल्पमुदश्विदित्यर्थः । 'पोटायुवतिस्तोककतिपयगृष्टिधेनुवशावेहद्बष्कयणीप्रवक्तृश्रोत्रियाध्यापकधूर्तैर्जातिः' । पोटादिभिः समानाधिकरणैः जातिवाचि सुबन्तं समस्यतइति तत्पुरुषः । अत्रैव निर्देशाद् वार्त्तिककारमते कुत्वम् । स हि 'चजोः कु घिण्ण्यतोर्निष्ठायामनिट'इति सूत्रं न्यास्यत् । स्तोकान्मुक्तः । स्तोकेन मुक्तः । स्तोकत्वेन मुक्त इत्यर्थः । 'करणे च स्तोकाल्पकृच्छ्रकतिपयस्यासत्त्ववचनस्ये'ति तृतीयापञ्चम्यौ । असत्त्ववचनस्येति वचनात् स्तोकेन विषेण हत इति सत्त्ववचनात्तृतीयैव । स्तोकान्मुक्त इत्यत्र 'स्तोकान्तिके'त्यादिना समासे 'पञ्चम्याः स्तोकादिभ्य' इत्यलुग्वचनात्तदेव रूपम् । सस्तोज इति अर्णविकाराभ्युपगमादिति मैत्रेयः १७३ ॥

ऋज गतिस्थानार्जनोपार्जनेषु ॥ अयं पाठो मैत्रेयस्य । ऊर्जनेष्विति क्षीरस्वामिधनपालशाकटायनाः । अर्जते । 'उरण् रपर'इति रपरो गुणः । आनृजे । अत्र ऋजशब्दस्य द्विर्वचने हलादिशेषे 'उरदि'ति ऋवर्णान्ताभ्यासत्वाद् भव'दुरण् रपर' इति रपरः । पुनर्हलादिशेषे 'अत आदे'रिति दीर्घे 'तस्मान्नुड् द्विहल'इति नुट् । ऋकारैकदेशस्यापि रेफस्य हल्त्वाश्रयणाद् द्विहल्त्वम् । तत्र हि द्विहल्ग्रहणं गौणस्येदृशस्य हलः परिग्रहार्थम् । अन्यथा तस्मान्नुडित्येव ब्रूयात् । न चाटतुरित्यादावेकहल्यतिप्रसङ्गः ।

'अश्नोतेश्चे'त्यनेनाद्विहलो यदि भवत्यश्नोतेरेवेति नियमात्, अस्याश्नातिमात्रनिवृत्त्यर्थत्वे नाश्न इत्येव ब्रूयात् । 'ऐभ्रौजि'त्यत्र द्विहल्ग्रहणं न करिष्यतइति भाष्यम् । तत्र कैयटे । अवर्णोपधस्य यदि भवति अश्नोतेरेवेति नियमाश्रयेण द्विहल्ग्रहणं प्रत्याख्याय नुडुक्तः । अर्जिता । आर्जिष्यते । अर्जताम् । आर्जत । आर्शिषि । अर्जिषीष्ट । आर्जिष्ट । आर्जिष्यत । अजादित्वादाडागमः । अर्जिजिषते । सनीटि गुणे 'न न्द्राः' इति रेफवर्जं द्विरुच्यते । अर्जयति । आर्जिजत् । प्रार्ज्यतइत्यत्र कर्मादौ यकि । 'उपसर्गादृति धातौ' । अवर्णान्तादुपसर्गादृकारादौ धातौ परे पूर्वपरयोर्वृद्धिरेकादेश इति आर्वृद्धिः । अर्जित्वा । 'न क्त्वा सेडि'त्यकित्त्वाद्गुणः । ऋज्यम् । 'ऋदुपधाच्चाक्लृपिचृतेरि'ति भावकर्मणोः क्यप् ॥ १७४ ॥

ऋजि भृजी भर्जने ॥ द्वितीय ईदित् । भर्जनं पाकविशेषः । ऋञ्जते । प्रार्ञ्जते । 'उपसर्गादृती'ति वृद्धिः । ऋञ्जा चक्रे । आनृञ्जइति संमतातरङ्गिण्योः । तदसत् । नुम्विधावुपदेशिवद्वचनात् । अत एव काश्यपमैत्रेयादय आममेव सर्वउदाजह्रुः । ऋञ्जिता । ऋञ्जिष्यते । ऋञ्जताम् । आर्ञ्जत । ऋञ्जेत । ऋञ्जिषीष्ट । आर्ञ्जिष्यत । 'आटश्चे'ति वृद्धिः । ऋञ्जिजिषते । 'न न्द्राः' इति नवर्जं द्विरुच्यते । ऋञ्जयति । मा भवान् ऋञ्जिजत् । भर्जते । बभृजे । भर्जितेत्यादि । बिभर्जिषते । बरीभृज्यते । 'रीगृदुपधस्य चे'ति रीक् । बर्भृजीति । बरिभृजीति । बरीभृजीति । बर्भर्क्ति । बरिभर्क्ति । बरीभर्क्ति । 'रुग्रिकौ च लुकी'ति रुग्रिकौ, भर्जयति । अबीभृजत् । उर्चृद्धा । अन्यदा अबभर्जत् । भृक्तः । भृक्तवान् । 'श्वीदितो निष्ठायामि'ति अनिट्त्वम् । भर्गः । घञि कुत्वम् । भ्रस्ज पाकइति तुदादौ ॥ १७६ ॥

एजृ भ्रेजृ भ्राजृ दीप्तौ । एजते । प्रेजते । 'एङि पररूपम्' । एजां चक्रे । एजितेत्यादि । एजिजिषते । एजयति । मा भवानेजिजत् । ऋदित्त्वाच्चोपधाह्रस्वः । अन्यथा इदिधदित्यादिवद् द्विर्वचनात्पूर्वमेवोपधाह्रस्वः स्यात् । अङ्गमेजयतीत्यङ्गमेजय. । 'एजेः खशि'ति ण्यन्तादस्मात्कर्मण्युपपदे खशः शित्त्वात्सार्वधातुकत्वाच्छपि गुणायादेशौ । अन्यथार्धधातुकत्वात् 'णयल्लोपे'त्यादिना गुणं बाधित्वा णिलोपः स्यात् । खित्त्वा'दरु

द्विषदजन्तस्ये'ति पूर्वपदस्य मुम् । वृत्तौ तु एजृ कम्पनइति परस्मैपदित्वस्यात्मगुक्त, उदेजयतीत्युदेजय: । 'अनुपसर्गाल्लिम्पे'त्यादिना उत्पूर्वात् ण्यन्तादस्माच्छ प्रत्यये अपि गुणायौ । अनुपसर्गग्रहणमर्थादन्यविशेषणम् । अत्राप्युपसर्गान्तरनिवृत्त्यर्थं च, तेन समुद' इत्यादौ अचि णिलोप. । भ्रेजते । भ्रेजितेत्यादि । बिभ्रेजिषते । बेभ्रेज्यते । बेभ्रेजीति । बेभ्रेक्ति । भ्रेजयति । अबिभ्रेजत । 'ह्रस्व' इति इकारोऽभ्यासस्य, पूर्ववदृदित्त्वाच्चोपाधाह्रस्व: । भ्राजृ इत्यादि भ्रेजिवत् । 'व्रश्चभ्रस्जे'त्यादिना झलि पदान्ते च विधीयमानं षत्वमस्य नास्ति । राजिसाहचर्यात्फणादिपठितस्यैव तत्र ग्रहणादिति मैत्रेयक्षीरस्वामिसमताकारादय: । एवं चावश्यपठितव्येन फणादिकेन भ्राजनइत्यादीना सिद्धेरिह पाठो ऽनार्ष इवेति न्यासोक्त दुरुक्त, यद्वा तत्रापीवशब्देन पूर्वोक्त एव पक्ष: सूच्यते । भ्राजयति । अबिभ्रजत् । अबभ्राजत् ।'भ्राजभासभाषदीपजीवमीलपीडामन्यतरस्यामि'ति चङ्परे णौ उपधाह्रस्वविकल्प: । एवं चास्य ऋदित्त्वमनुदात्तेत्त्वमात्रफलम् । भ्राजिष्णु: । 'भुवश्चे'ति चकारादिष्णुच् । विभ्राक् । 'भ्राजभासधुर्विद्युतोर्जिपृजुग्रावस्तुव: क्विप्' इति ताच्छीलिके क्विपि 'चो: कु'रिति कुत्वम् । व्रश्चादिसूत्रे राजिसाहचर्यात् फणादिकस्यैव ग्रहणमित्युक्तत्वान्न षत्वम् । यत्तु वृत्तौ क्विप्सूत्रे विभ्राडिति कृतषत्वस्यैवोदाहरण तद्धानुबन्धकत्वेपीह फणादिकमपि एजृतइति सूचयितु न त्वस्यापि षत्वमस्तीति । अत्र रेजिरपि क्वचित्पठ्यते, तदनार्षमिव । यदाह भट्टभास्कर: । रेजते अग्ने पृथिवीमखेभ्य इत्यत्र राजतेश्छान्दसत्वमिति ॥ १७९ ॥

ईज गतिकुत्सनयो: ॥ ईजते । ईजां चक्रे । ईजितेत्यादि । कर्म्मणि ईज्यतइत्यादि । ईजिजिषते । ईजयति । मा भवानिजिजत् । द्विर्वचनात्पूर्वं 'णौ चङी'ति ह्रस्व इत्युक्तम् । वर्चादय उदात्ता अनुदात्तेत: ॥ १८० ॥

शुच शोके ॥ एतदादयो व्रजन्ता उदात्ता उदात्तेत: ॥ शोचति । शुशोच । शोचिता । शुशुचिषति । शुशोचिषति । शुचित्वा । शोचित्वा, कित्त्वविकल्प: । शोशुच्यते । शोशुचीति । शोशोक्ति । शोचयति । अशूशुचत् । 'दीर्घो लघो:' । शोचन: । 'जुचङ्क्रम्यदन्द्रम्यसृगृधिज्वलशुचलषपतप.

द'इति तच्छीलादौ युच् । प्रशुचितः । प्रशोचितः । 'उदुपधादिति' किस्त्वविकल्पः । शूद्रः । 'शुचेर्दश्चे'ति रक्प्रत्यये दकारोन्तादेशः दीर्घश्च, 'शूद्रा चामहत्पूर्वा जाति'रित्यजादिपाठात् 'जातेरस्त्रीविषयादि'ति ङीषं बाधित्वा स्त्रियां टापि शूद्रा । जातिवचनात्पुंयोगे शूद्रीति ङीष् भवति । अमहत्पूर्वेत्युक्तेर्महाशूद्रशब्दाज्जातिलक्षणो ङीषेव भवति महाशूद्रीति । महाशूद्रशब्दो ह्याभीरजातिवचनः । अयमेवामहत्पूर्वस्येतिप्रतिषेधो ज्ञापकः स्त्रीप्रत्ययेषु तदन्तविधेः । शोकः । घञ् । वार्त्तिकमते 'तुन्दशोकयोरि'ति निपातनात् कुत्वमेष्टव्यम् । शुचिर् पूतीभावइति दिवादौ ॥ १८१ ॥

कुच शब्दे तारे ॥ कोचति । चुकोच । कोचितेत्यादि पूर्ववत् । कुचः । इगुपधात्कः । कुच गताविति स्वामी, अय सपर्चनार्थे ज्वलादौ, पुनः पाठे प्रयोजन तत्रैव वक्ष्यते । सङ्कोचनार्थस्तुदादौ ॥ १८२ ॥

कुञ्च क्रुञ्च कौटिल्याल्पीभावयोः ॥ दन्त्योपधौ । गतिकौटिल्याल्पीभावयोः, गतौ कौटिल्ये द्रव्याल्पत्वे चेति क्षीरस्वामी । कुञ्चति । चुकुञ्च । कुञ्चितेत्यादि । चुकुञ्चिषति चोकुच्यते । 'अनिदिता'मिति नलोपः । चोकुञ्चीति । 'न लुमताङ्गस्ये'ति निषेधात् प्रत्ययलक्षणेन नलोपो न भवति, 'चोः कु'रिति कुत्वेन चकारे निवर्त्तिते निमित्ताभावे नैमित्तिकस्याप्यभाव इति ञकारे निवृत्ते ऽनुस्वारस्य पुनः परसवर्णो ङकारः । अचोकुञ्चीत् । अचोकुन् । सयोगान्तलोपे सति पूर्ववन्निमित्ताभावात् ञकारे ऽनुस्वारे च निवृत्ते नकारो ऽवतिष्ठते । कुञ्चयति । अचुकुञ्चत् । चङ्परेऽऽ'निदिता'मिति नलोपो णिलोपस्य स्थानिवत्त्वा'दसिद्धवदत्रे'त्यसिद्धत्वाद्वा व्यवधानाच्च भवति । कुचितः, कुचितवान् । 'अनिदिता'मिति नलोपः । कुञ्चित्वेत्यत्र तु 'न क्त्वा सेडि'त्यकित्त्वान्नलोपो न भवति । निकुचितमनेनेत्यादौ भावादिकर्मणोः 'उदुपधादि'ति किस्त्वविकल्पो न भवति,'सन्निपातलक्षणो विधिरनिमित्त तद्विघातस्ये'ति । तथा चास्याः परिभाषायाः प्रयोजनवार्तिकम् । उदुपधत्वमकित्त्वस्य निकुचितमिति, इदमेवास्य नोपधत्वे मानम् । अत एवोदित्पाठिनौ चन्द्र*तरङ्गिणीकारौ प्रत्युक्तौ,

* आभरणकाराविति २ पु॰ पाठ॰ ।

यनस्तन्मते 'उदितो वे'ति क्त्वायामिटो विकल्पनान्निष्ठायां 'यस्य विभाषे'ति प्रतिषेधात्सेटो निष्ठाया एवाभावः । इदित्पाठोऽप्यनेनैव प्रत्युक्तः । यत इदित्त्वान्नलोपस्य नैव प्रसङ्गः, निकुचितमित्यत्र 'तितुत्रतथसिसुसरकसेषु चे'ति तिप्रत्ययस्य विधीयमानमनिट्त्वं तितुत्रेष्वग्रहादीनामित्युक्तत्वान्न भवति । एवं क्रुञ्चतीत्यादि । क्रुङ् । 'ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चां चे'ति क्विन् । तस्य सर्वापहारी लोपः । पदत्वे चकारस्य संयोगान्तलोपे 'क्विन्प्रत्ययस्य कुः' क्विन्प्रत्ययो यस्माद्विहितस्तस्य पदस्य कवर्गादेश इति नकारस्य ङकारः । संयोगान्तलोपात्पूर्वं प्रत्ययलक्षणेना 'निदितामि'ति लोपो न भवति । ऋत्विगित्यादिभिर्निपातनैः साहचर्यात् । अन्यस्याप्यलाक्षणिकस्य कार्यस्य ज्ञापनात् । तदुक्तं वृत्तौ । नलोपः कस्मान्न भवति । ऋत्विगित्यादिनिपातनैः साहचर्यादिति । अत एव साहचर्यादुपपदाधिकारेऽपि केवलात् क्विन्प्रत्ययः । क्रुञ्चा । अजादिपाठाद्धलन्तादपि टाप् । क्रुञ्चैव क्रौञ्चः । 'प्रज्ञादिभ्यश्चे'ति स्वार्थेऽण् प्रत्ययः । क्रुञ्चा अस्मिन्सन्तीति क्रुञ्चकीयो देशः । 'क्रुञ्चा ह्रस्वत्वं चे'ति नडादिपाठात् चातुरर्थिकः छप्रत्ययस्तत्संनियोगेन कुगागमो ह्रस्वत्वं च । 'चोः कुरि'त्यत्र यदुक्तं वामनेन । क्रुञ्चेत्यत्र सङ्गीतिवचनाज्ञकारस्य चकारे झलि परतः कुत्वं न भवति, युजिक्रुञ्चा चेति निपातनाद्वा । नकारोपधो वा धातुरपरै रेफवर्जितः कुञ्च कौटिल्याल्पीभावयोरिति पठ्यते, नलोपो निकुचित इत्यत्र दृश्यते, युजिक्रुञ्चामिति तस्यैव रेफाधिको नलोपाभावश्च निपात्यतइति तत्क्रुञ्चेर्नोपधत्वेऽपि क्रुञ्चाशब्दे दोष इत्येवंपरं न त्वयं धातुर्नास्ति । यद्वा ञकारोपध इत्येव परम् । स्पष्टं चैव तत्र न्यासपदमञ्जर्यो, नं त्वासेडि'त्यत्र च द्वावपि धातू न्यासकृतोपात्तौ । तथा 'ऋत्विगा'दिसूत्रे जयादित्यश्च, क्रुञ्चेर्नलोपः कस्मान्न भवति, निपातनैः साहचर्यादिति ॥ १८४ ॥

लुञ्च अपनयने ॥ लुञ्चतीत्यादि पूर्ववत् । लुचित्वा । लुञ्चित्वा । 'वञ्चिलुञ्च्यृतश्चे'ति सेटः क्त्वः कित्त्वविकल्पनात् पक्षे नलोपः । के चिदमुमुदितं पठन्ति तदनार्षं, राजदन्तादिषु लुचितमिति पाठाद्, उदित्त्वे हि

क्त्वाया'मुदितो वे'तीटो विकल्पनाद् निष्ठायां 'यस्य विभाषे'ति प्रतिषेधा-ल्लुञ्चितमिति न स्यात् ॥ १८५ ॥

अञ्चु गतिपूजनयोः ॥ अञ्चति । आनञ्च । अञ्चितेत्यादि । गतौ व्यत्यञ्चतीत्यत्र 'न गतिहिंसे'ति तङ्निषेधः । पूजायां तु 'नाञ्चेः पूजायामि'ति नलोपनिषेधादञ्च्यते गुरुः, अञ्च्यादिति भवति । अञ्चि-त्वा । अङ्क्त्वा । 'उदितो वे'ति इड्विकल्पः । इटि 'न क्त्वा सेडि'त्यकि-त्त्वान्नलोपाभावः । निष्ठायां 'यस्य विभाषे'तीटः प्रतिषेधात्समक्तमिति, 'अञ्चोऽनपादान'इति निष्ठानत्वम् । अपादाने तूदक्तमुदकं कूपादिति । पूजायां तु क्त्वानिष्ठयोः 'उदितो वे'ति विकल्प 'यस्य विभाषे'ति निषेधं च बाधित्वा'अञ्चेः पूजाया'मिति नित्यमिट् । अञ्चित्वा । अञ्चितोऽस्य गुरुः । 'मतिबुद्धिपूजार्थेभ्यश्चे'ति वर्त्तमाने क्तः । मतिरिच्छा, बुद्धिर्ज्ञानं, पूजा सत्कारः, 'क्तस्य च वर्त्तमान'इति 'न लोकाव्यये'ति निषेध बाधित्वा कर्त्तरि षष्ठी । अस्याश्च 'क्तेन च पूजाया'मिति समासो निषिध्यते । पूजितो यः सुरासुरैरपीत्यत्र वर्त्तमानक्तेन तक्रकौण्डिन्यन्यायेन भूते क्तस्य बाधात् तृतीया चिन्त्या । यद्वा तेनेत्यधिकार, 'उपज्ञात'इति भूते क्तेन निर्देशाद् अयं वर्त्तमानक्तेन न बाध्यतइति सामान्येन ज्ञापकाश्रयणेनाय प्रयोगः समर्थनीयः । तैलमुदच्यतेस्मिन्निति तैनोदङ्कश्चर्ममयस्निकाण्टिः । 'उदङ्कोऽनुदक'इति घञ्निपात्यते । उदके तूदकोदञ्चनम् । ल्युट् । 'पुंसि संज्ञाया'मिति घस्तु न प्रत्युदाहृतः, घघञो रूपे स्वरे वा विशेषाभावात् । घञोपि क्दुत्तरपदप्रकृतिस्वरमाद्युदात्तत्व बाधित्वा 'थाथघञ्क्ताजबित्र-काणा'मिति उत्तरपदं घञन्तोदात्तमेव । प्रत्यञ्चतीति प्रत्यङ् । 'ऋत्वि-गि'त्यादिना क्विनि 'अनिदिता'मित्यादिना नलोपे सौ 'उगिदचां सर्वनाम-स्थाने'इति नुमि हल्ङ्यादिसंयोगान्तलोपयोः 'क्विन्प्रत्ययस्य कु'रिति कुत्वं ङकारः, प्रत्यञ्चावित्यादि । भसंज्ञायां तु 'अचः' । लुप्तनकारस्याञ्चते-रकारस्य लोपो भसंज्ञायामित्यल्लोपे 'चौ' लुप्तनकारेऽञ्चतौ परे पूर्वपदस्य दीर्घ इति दीर्घे प्रतीच इत्यादि, हलादौ जश्त्वे प्रत्यग्भ्यामित्यादि । प्रत्यक्ष्वित्यत्र 'खरि चे'ति चर्त्वम् । नपुंसके तु स्वमोर्लुकि प्रत्यक् । द्विव-

मिथ्याफलाख्यानमनीन्यत्र वञ्चयति वञ्चयतइत्युभय भवति । वङ्क्त्वा । वञ्चित्वा । 'उदितो वे'तीड्विकल्पः । 'वञ्चिलुञ्च्यृतश्चे'ति सेटः क्त्वो वा कित्त्वविधानात्पत्ते नलोपः । वक्तः । वक्तवान् । 'यस्य विभाषे'त्यनिट्त्वं वञ्च्य वञ्चन्ति वणिजः । गन्तव्य गच्छन्तीत्यर्थः । 'ऋहलोर्ण्यदि'ति ण्यति 'चजोः कु घिण्यतो'रिति कुत्वं 'वञ्चेर्गता'विति निषिध्यते । अन्यत्र वङ्क्य काष्टमिति कुत्व भवति । कुटिलमित्यर्थः । वक्रम् । 'स्फायितञ्ची'त्यादिना रक् । वञ्चतीत्यादि पूर्ववत् । चञ्चत् । चञ्चन्निव कश्चिद् विशेषश्चञ्चत्कः । यश्च मण्यादिः स्वयमचञ्चन्नपि प्रभया चञ्चन्निव लक्ष्यते सोपि चञ्चत्कः । 'स्थूलादिभ्यः प्रकारवचने कनि'त्यत्र चञ्चद्बृहतोरुपसंख्यानात् कः । प्रकारश्च भेदः सादृश्यं च । अपरे चञ्चाबृहतोरुपसंख्यानमिति पठन्ति, तृणमयः पुरुषश्चञ्चा, तत्प्रकारश्चञ्चकः । 'केऽण' इति ह्रस्वः । तञ्चति । तक्रम् । 'स्फायितञ्ची'त्यादिना रक् । त्वञ्चति । मुञ्चति । मुञ्चति । म्रोचति । म्लोचति । अम्रुचत् । अम्रोचीत् । अम्लुचत् । अम्लोचीत् । 'जृस्तम्भुम्रुचुम्लुचुग्रुचुग्लुचुग्लुञ्चुश्विभ्यश्चे'ति च्लेर्वा ऽङ् । मुम्रुचिषति । मुम्रोचिषति । म्रुचित्वा । म्रोचित्वा । 'रलो व्युपधादि'ति कित्त्वविकल्पः । भावादिकर्मणो'रुदुपधादि'ति कित्त्वविकल्पनाद् म्रुचितमनेन, म्रोचितमनेनेत्यादि । एवं म्लुचेरपि सर्वेषामुदित्त्वेन क्त्वायामिड्विकल्पनान्निष्ठायामनिट्त्वम् । वच प्रलम्भनइति चुरादौ । तञ्चू संकोचनइति रुधादौ ॥ १९४ ॥

ग्रुचु ग्लुचु कुजु खुजु स्तेयकरणे ॥ ग्रोचति । जुग्रोच । ग्रोचितेत्यादि । ग्लोचनीत्यादि म्रुचिवत् । जृस्तम्भुसूत्रे ग्रुचिमपि के चित्पठन्ति । कोजति । खोजति । इमावपि म्रुचिवत्, अङभावो विशेषः । प्रणिकोजति । प्रणिखोजति । 'शेषे विभाषे'ति उपसर्गस्थान्निमित्तात्परस्य नेर्णत्व तत्रैव सूत्रे कखादावषान्तउपदेशइति पर्युदासान्न भवति, शेषश्च गदादिर्व्यतिरिक्तो धातुः । कोक्यं, खोक्यं, घञण्यतो'श्चजोः कु घिण्ण्यतो'र्निष्ठायामनिटइति वार्त्तिकसूत्रेण कुत्वम् ॥ १९८ ॥

ग्लुञ्चु षस्ज गतौ ॥ ग्लुञ्चति । जुग्लुञ्च । ग्लुञ्चितेत्यादि ।

लुङि 'जृस्तम्भ्व'त्यादिना वा ऽङ्नलोपे। अग्लुचत्। अग्लुञ्चीत्। अङ्विधौ ग्लुचिग्लुञ्च्योरेकतरोपादानेनापि अग्लुचदग्लोचीदिति सिद्धौ उभयोपादनमर्थभेदादिति केचित्। अपरे तूभयोपादानसामर्थ्याद् ग्लुञ्चेर्नलोपो न भवतीति अग्लुञ्चदिति चतुर्थमपि रूपमाहुः। इदमुद्भाष्यमन्यतरोपादानेनापि रूपत्रयसिद्धेरन्यतरद्धक्यमकर्त्तुमिति प्रतिपादितत्वात्। अनेकार्थत्वाद् धातूनामत्र विषये ऽर्थभेदो न प्रयोजक इति तत्र कैयटे। ग्लुचित्वा। सज्जति। 'धात्वादेः षः स'इति द्वितीयस्य सकारस्य जश्त्वेन शकारे तस्य 'झलां जश् झशी'ति जश्त्वेन जकारः। ससज्ज। सज्जितेत्यादि। सिसज्जिषति। 'स्तौतिण्योरेवे'ति नियमादणत्वषत्व, 'हेतुमति चे'त्यत्र यदभिप्रायेण सज्जतइति भाष्यप्रयोगादयमात्मनेपद्यपि, अतो ऽस्यात्मनेपदं दूषयन्तो वर्द्धमानक्षीरस्वाम्यादय एव दुष्टाः। अत्र सश्चिमपि केचित्पठन्ति तमजिक्रोसश्चतेत्यादि च दृश्यते॥ २००॥

गुजि अव्यक्ते शब्दे॥ गुञ्जति। जुगुञ्ज। गुञ्जितेत्यादि। गुञ्जा। 'गुरोश्च हल'इत्यकारः। गुञ्ज्यते। इदित्त्वान्नलोपाभावः। अत्र स्वामी अनिदिदित्येकइति स्वसूत्रे। सुधाकरस्तु अनिदित्पारायणेष्वपाठीत्, लक्ष्ये पुनरिदमविगीतमिति। शाकटायनस्तु द्वावपि पपाठ। गुञ्जशब्दइति तुदादौ॥ २०१॥

अर्च पूजायाम्॥ अर्चति। आनर्च। अर्चितेत्यादि। अयं युजादौ स्वरितेत् पठिष्यति। तत एवार्चतीति सिद्धे क्रियाफलस्य कर्तृगामित्वे परस्मैपदार्थ इह पाठः। अयमात्मनेपदीति शाकटायनः, प्रयोजनं तु तन्मते क्रियाफलस्याकर्त्तृगामित्वेपि तङ्। यः पूर्णादुदर्चति अविघ्नीमुदचन्त्वाप इत्यादिदर्शनात्। अञ्च इत्येकइत्याभरणोक्तं युक्तम्॥ २०२॥

म्लेच्छ अव्यक्ते शब्दे॥ इहाव्यक्तशब्दोस्फुटशब्दोपशब्दश्च। उक्तं हि पस्पशायां 'तस्माद्ब्राह्मणेन न म्लेच्छितवै नापभाषितवै म्लेच्छोह वा एष यदपशब्द इति, न म्लेच्छितवाइत्यस्य पर्यायो नापभाषितवाइति कैयटे। म्लेच्छति। मिम्लेच्छ। म्लेच्छितेत्यादि। 'दीर्घात्'दीर्घाच्छकारे परतो

दीर्घस्य तुगिति तुक् 'तस्मिन्निति निर्दिष्टे पूर्वस्ये'ति सप्तमीनिर्देशे पूर्वस्य षष्ठी प्रकल्प्येति दीर्घस्य तुगागमः। ननु 'तस्मादित्युत्तरस्ये'ति पञ्चमीनिर्देशे उत्तरस्य षष्ठी प्रकल्प्येत्युक्तत्वादिह चानवकाशया दीर्घादितिपञ्चम्या 'छे चे'त्यत्र सावकाशाया छइति सप्तम्या एव षष्ठी प्रक्लृप्तिर्युक्ता, ततश्च तुकः कित्त्वेन छकारात्परत्वे चुत्वचर्त्वयोर्म्लेच्छतीति द्विचकारकं रूपं स्यात्। नैष दोषः। यतः 'विभाषा सेनासुराच्छाये'तिनिर्देशाल्लिङ्गात् पञ्चम्या एव षष्ठी प्रकल्पयिष्यते। मिम्लेच्छिषति । मेम्लेच्छ्यते । मेम्लेच्छीति । मेम्लेष्टि । मेम्लेष्टः। मेम्लेच्छति, इत्यादि, झलि 'व्रश्चा'दिना षत्वे ष्टुत्वम्। म्लेति। 'षढोः कः सीति' कत्वे षत्व, मेम्लेश्मि मेम्लेश्म इत्यत्र 'च्छ्वोः शूडनुनासिके च' च्छकारवकारयोर्यथासङ्ख्यं शकारोठौ भवतोऽनुनासिकादौ प्रत्यये झलादौ च क्ङितीति च्छकारस्य शकारः। अयं च 'क्रमश्च क्त्वि' 'च्छ्वो'रितिनिर्देशात्सतुक्कस्य। अन्त्यादेशस्तु न भवति नानर्थकेऽलोन्त्यस्य विधिरिति नङो ङित्करणाद्वा, अन्त्यादेशे विश्न इत्यत्रानिगुपधत्वादेव गुणाप्रसङ्गात् किं कित्त्वेन। अत एव ङित्त्वाच्छ्वोरितिनिर्देशः मनुक्रम्येन्यपि ज्ञायते, ये तद्विधौ क्ङितीति नानुवर्त्तयन्ति तेषां झलादिमात्रे शकारे कृते तस्यैव 'व्रश्चा'दिना षत्व द्रष्टव्यम्। अत्र मते तत्र छग्रहणं व्यर्थं स्यात्, वृत्तिप्रदीपे तु छस्य शावादेश उक्तः, तुगभावस्त्वकृतव्यूहाः पाणिनीयाः, कृतमपि शास्त्रं निवर्त्तयन्तीति। म्लिष्टम्। 'क्षुब्धस्वान्तध्वान्तलग्नम्लिष्टविरिब्धफाण्टबाढानि मन्थमनस्तमःसक्ताविस्पष्टस्वरानायासभृशेष्वि'ति अविस्पष्टार्थे निपातितः। अपशब्दे तु म्लेच्छितमिति भवति, अस्य शपि पाठो म्लेच्छन्तीति 'शप्श्यनोर्नित्य'मिति नित्यनुमर्थः, शे हि विकल्पः स्यात्, स्वरे भेदः। शपि शपः पित्त्वाद् 'अनुदात्तौ सुप्पिता'विति अनुदात्तः, शस्तु प्रत्ययस्वरेणाद्युदात्तः। एवमीदृशामन्येषामपि धातूनां विकरणभेदे फलत्रयम्। अयञ्चुरादावपि ॥ २०३ ॥

लछ लाछि लक्षणे ॥ लच्छति । ललच्छ । लाञ्छितेत्यादि । 'छे च' ह्रस्वस्य छे परतस्तुगिति तुक्। अलच्छीदित्यत्रान्तरङ्गत्वात्पूर्वं तुकि अकारस्यालघुत्वाद् 'अतो हलादे'रिति वा वृद्धिर्न भवति। तथा ललच्छे-

त्यादा'वत उपधाया' इति वृद्धिरनुपधात्वान्न भवति । लाञ्छतीत्यादि पूर्ववत्, लालाञ्छ्यत इत्यादावादिदित्त्वान्नलोपो न भवति । लाञ्छः । 'क्विबि'ति सोपपदनिरुपपदसाधारणे क्विपि तस्य लोपे 'च्छ्वोः शूडि'त्यत्र द्विच्छकारनिर्देश एकः सतुक्को ऽपरः केवल इति न्यासपदमञ्जर्यादिषूक्तत्वात् लान् लाशौ लाश इत्यादि भवति । च्छ्वोरिति निर्देशः पूर्वं वितुक्कसतुक्कयोः समाहारद्वन्द्वे पश्चाद् वकारेणेतरेतरयोगे द्विवचनयथासख्ययोरुपपत्तिः, 'द्वन्द्वाच्चुदषहान्तादि'ति समासान्तः सौत्रत्वान्न भवति । हरदत्तस्तु सतुक्छकारवकारयोः समाहारद्वन्द्वे पश्चाद् वितुक्छेनेतरेतरयोग इति समासान्ताभावो द्विवचनोपपत्तिश्चेति । अत्र मते सतुक्कस्यापि च्छकारस्योठ् स्यादिति तदभावे यत्नः कर्तव्यः, एवं च यङ्लुक्यपि शत्वे लालाष्टि लालाष्ट इत्यादि पूर्ववद्भवति । शूड्विधौ क्ङिद्ग्रहणानुवृत्तिपक्षे लालाष्टीत्यादौ व्रश्चादिसूत्रे छग्रहणे षत्वम्, । तत्रापि पूर्ववत् केवलोपि छो गृह्यते ॥ २०५ ॥

वाञ्छि इच्छायाम् ॥ वाञ्छतीत्यादि लाञ्छिवत् ॥ २०६ ॥

आञ्छि आयामे ॥ आञ्छति । आञ्छ । अत्र लिट्यभ्यासह्रस्वे 'अत आदे'रित्यत्र तपरकरणं स्वाभाविकह्रस्वपरिग्रहार्थमिति न्यासकारहरदत्तादिभिः प्रतिपादितत्वाद् दीर्घाभावाद् नुडभावे सवर्णदीर्घः । अन्ये तु तपरकरणं मुखसुखार्थमिति आनाञ्छेत्युदाहरन्तीति मैत्रेयः । आञ्छितेत्यादि । आञ्चिच्छिषति । 'न न्द्राः' इति नकारवर्जं द्वितीयैकाच् द्विरुच्यते । आञ्छयति । आञ्चिच्छत् ॥ २०७ ॥

ह्रीच्छ लज्जायाम् ॥ ह्रीच्छति । जिह्रीच्छ । ह्रीच्छितेत्यादि म्लेच्छिवत् । ह्री लज्जायामिति जुहोत्यादौ ॥ २०८ ॥

हुर्छा कौटिल्ये ॥ इह कौटिल्यमपसरणमिति मैत्रेयस्य मतम् । हूर्छति । जुहूर्छ । हूर्छितेत्यादि । 'उपधायां चे'तीको दीर्घः, जुहूर्छिषति । जोहूर्छीति । जोहोर्त्ति । जोहूर्त्तः । जोहूर्षति । जोहोर्षि । जोहोर्मि । जोहूर्वः । जोहूर्मः । 'राल्लोप' इति रेफात्परयोः छ्वोर्लोपः क्वौ झलादावनुनासिकादौ

प्रत्यये। अत्र मतुङ्कस्य छस्याभावात् केवलो गृह्यतइति वृत्त्यादौ। हूः। हुरौ। हुरः। 'राल्लोप.', तत्र पदत्वे च 'र्वोरुपधाया दीर्घ' इति रेफवकारान्तस्य धातोः पदस्योपधाया इको दीर्घ इति इको दीर्घः। हूर्णः। हूर्णवान्। 'आदितश्चेत्य'निट् निष्ठायाम्। राल्लोपे 'रदाभ्या'मिति नत्वे 'रषाभ्या'मिति णत्वम्। भावादिकर्मणोस्तु 'विभाषा भावादिकर्मणो'रिति आदितो निष्ठायाः पक्षे इड्विधानाद् हूर्णमनेन, हूर्छितमनेनेत्यादि द्रष्टव्यम् ॥ २०९ ॥

मूर्छा मोहसमुच्छ्राययोः ॥ मूर्छति। हूर्छिवत्। विशेषस्त्वनिटो निष्ठायां 'न ध्याख्यापॄमूर्छिमदा'मिति नत्वनिषेधः। मूर्त्तः। मूर्त्तवान्। मूर्त्तमनेनेत्यादि। मूर्छास्य सञ्जाता.मूर्छितः। 'तदस्य सञ्जातं तारकादिभ्य इतच्'। तदिति प्रथमासमर्थात् सञ्जातोपाधिकादस्येत्यर्थादितच् ॥ २१० ॥

स्फुर्छा विस्तृतौ ॥ स्फूर्छति। पुस्फूर्छेत्यादि पूर्ववत्। अभ्यासे खयः शेषः ॥ २११ ॥

युच्छ प्रमादे ॥ युच्छति। युयुच्छ। युच्छितेत्यादि म्लेच्छादिवत्। अन्तरङ्गत्वात्तुकि अलघूपधत्वाच्च गुणः। 'वार्णादाङ्गं बलीय'इत्याङ्गस्य बलीयस्त्वं यत्राङ्गवार्णयोर्युगपत्प्राप्तिः समानाश्रयत्वं च तत्रेति, इह वैपरीत्याच्च भवति ॥ २१२ ॥

उछि उञ्छे ॥ उञ्छः कणश आदानं कणिशाद्यर्जनं शिलमिति यादवप्रकाशः'। एवं विज्ञानेश्वरोपि। 'उञ्छति' सूत्रे उञ्छति उच्चिनोतीत्यर्थे इति न्यासो बदराण्युञ्छति बादरिकः। श्यामाकानुञ्छति श्यामाकिक इत्युदाहरतो वृत्तिकारस्यापि व्यापित्वेनोच्चयनार्थ इत्यभिप्रायो लक्ष्यते। उञ्छति। उञ्छा चकार। उञ्छितेत्यादि। इदित्त्वाद् उञ्छ्यते इत्यादौ नलोपो न भवति। उञ्चिच्छिषति। 'न न्द्रा'इति छादेर्द्विर्वचनमभ्यासस्य चर्त्वं ह्रस्वे 'छे चे'ति तुकि हलादिशेषो न भवति, अवयवभक्तत्वेनाभ्यासभक्तत्वाभावात्। न च स्वङ्गुलिर्देवदत्त इत्यादिवत् इहावयवावयवस्य समुदायावयवत्वम्। यतः 'छे चे'त्यात्रागमिनो भावादेव पूर्वसूत्रात् ह्रस्वस्येत्यनुवृत्तिसद्भावपि चकारेण तदनुकृष्यते,पूर्वसूत्रे ह्रस्वान्तस्येति स्थितम्। इह तु तथा माभूदिति हि यत्नः। उञ्छयति। मा भवानुञ्चिच्छत्। अयं

तुदादौ पठिष्यते। स पाठ उञ्छती उञ्छन्तीति शीनद्योर्नुम्विकल्पार्थो ऽव-श्याभ्युपगन्तव्य इति इह पाठः किमर्थं इति चेत् स्वरार्थः। उञ्छतीत्यत्र शपि 'अनुदात्तौ सुप्पिता'विति शप्तिपोरनुदात्तत्वेन 'धातोः' । धातोरन्त उदात्त इत्युकारस्योदात्तत्वे 'उदात्तादनुदात्तस्य स्वरित' इति शबकारस्य स्वरितत्वे 'स्वरितात् संहितायामनुदात्ताना'मिति तिकारस्य प्रचयत्वे अचः क्रमेणोदात्तस्वरितप्रचया भवन्ति, शे तु आद्युदात्तत्वे प्रत्ययादित्वेनाकारस्योदात्तत्वे 'अनुदात्त पदमेकवर्जं' यत्र पदे उदात्तः स्वरितो वा विधीयते तत्र तं वर्जयित्वा ऽन्यदनुदात्तमिति धातोरप्यनुदात्तत्वे पूर्ववत्तिपः स्वरितत्वे ऽचोनुदात्तोदात्तस्वरिता भवन्ति । विपर्ययः कस्मान्न भवति धातोरन्तोदात्तत्वे शस्यानुदात्तत्वमिति यतोऽयं स्वरभेदो न स्यात् । नैतदस्ति । सति शिष्टस्वरो बलीयानिति यस्मिन्नसति यः शिष्यते स बलीयानित्यर्थः । नन्वन्यत्र विकरणेभ्य इत्यपि तत्र पठ्यते। नायं पर्युदासो धातुस्वरविषयः । किंतु लसार्वधातुकस्वरविषयः । लादेशस्य सार्वधातुकस्य प्रत्ययाद्युदात्तत्वं सति शिष्टोपि विकरणस्वरो न बाधतइति, अस्य च ज्ञापक तादृशमेव । तथाहि। 'तास्यनुदात्तेन्ङिददुपदेशाल्लसार्वधातुकमनुदात्तमन्ह्विङो'रिति तासेः परस्य सार्वधातुकस्य सति शिष्टस्वरेणानुदात्तत्वेपि सिद्धे पुनर्विधानाज् ज्ञायतेऽन्यत्र विकरणेभ्य इति तच्च लसार्वधातुकविषयम् ॥ २१३ ॥

उच्छी विवासे ॥ समाप्तिर्विवास इति तरङ्गिण्यां, विपूर्वश्चायं प्रायः प्रयुज्यतइति पुरुषकारे । व्युच्छति । व्युच्छां चकार । व्युच्छितेत्यादि । आम्विधावागमनिमित्ता गुरुमत्ता गृह्यते, अत एवानृच्छ इति प्रतिषेधः । उचिच्छिषति । अत्र द्विर्वचने तुकि श्चुत्वस्य पूर्वत्रासिद्धत्वात् हलादिशेषेण तकारस्य शेषे प्राप्ते 'खर्पूर्वाः खय इति वक्तव्यं' शर्पूर्वाः खय इत्यत्र शर्ग्रहणमपनीय खर्ग्रहणं कर्त्तव्यमित्यर्थः । तेन खर्पूर्वाः खयः शिष्यन्ते अन्ये निवर्त्तन्तइति तकारस्य निवृत्तौ छकारस्य 'अभ्यासे चर्चे'ति चर्त्वे रूपम् । अभ्यासचर्त्वस्य तुक्यसिद्धत्वादुकारस्य पुनस्तुङ्क भवति अभ्यासजश्त्वचर्त्वमेत्वतुकोः सिद्ध वक्तव्यमिति चर्त्वस्य सिद्धत्वात् । अत्र पूर्वत्रासिद्धीयमद्विर्वचनइति अनाश्रित्योक्तं खर्पूर्वाः खय इति । यदा-

यमादेशविकल्प., थलि तु भवत्येव यतस्तत्रेड्विकल्पित इति । ननु विव्यतुरित्यादौ द्विर्वचनात्पूर्वं परत्वादियङि 'द्विर्वचनेचीति' तस्य द्विर्वचने कर्त्तव्ये स्थानिवत्त्वात्पुनरखण्ड जग्मतुरित्यादिवत् आदेशरूपमेवावतिष्ठतेति कुतो यणः प्रसङ्गः । उच्यते । द्विर्वचनार्थमियङि निवृत्ते पुनरयमिच्छतावश्य प्रवर्त्तयितव्य, तत्र दशाया 'मसिद्धवदत्रे'तीयङोऽसिद्धत्वादङ्गस्यानेकाच्त्वादपवादत्वेन वा यणेव भविष्यतीति इट किटेत्यत्रायमर्थः प्रपञ्चयिष्यते । अजिता । वेता । अजिष्यति । वेष्यति । अजतु । आजत् । आशिषि । वीयात् । वलाद्यार्द्धधातुकत्वान्नित्यं वीभावः । आजीत् । अवैषीत् । आजिष्यत् । अवेष्यत् । अजिजिषति । विवीषति । 'इको झलि'ति सनः कित्त्वान्न गुणः । आर्द्धधातुकइत्यस्य विषयसप्तमीत्वात् प्रागेव प्रत्ययोत्पत्तौ वीभावे हलादित्वाद्यङि वेवीयते । नात्र यङ्लुगस्ति । यतो लुका यङार्द्धधातुकस्य विषयत्वापहारान्नार्द्धधातुकाभिव्यक्तिरिति वीभावस्य नैव प्रसङ्गः, उक्तञ्चैव 'न लुमताङ्गस्ये'त्यत्र कैयटे, न लुमता यस्मिन्निति चेत् हनिणिङादेशा न सिद्ध्यन्तीति भाष्यवार्त्तिकयोरुक्ते 'लुङि चे'त्यादौ विषयसप्तम्याश्रयणेनादेशाः सेत्स्यन्तीत्याशङ्क्य लुका लुङो विषयत्वापहाराद्विषयसप्तम्याश्रयणेप्यसिद्धिरिति । वाययति, अवीवयत्, कर्मादौ वीयतइत्यादि, स्यादिषु स्यसिच्सीयुट्तासिषु वा चिण्वदिडिति वृद्ध्याययोः । वायिष्यते । अवायिष्यत । अवायिष्येथ । अवायिष्यताम् । वायिषीष्ट । अवायिष्टेत्यादि । चिण्वदिटोऽभावे वेष्यते, अवेष्यत, अवेष्ट । वेषीष्ट, वेतेत्यादि । अत्र पक्षे वलाद्यार्धधातुकसद्भावात्पक्षे व्यादेशाभावे अजिष्यते । आजिष्यत । आजिषाताम् । अजिषीष्ट । अजितेत्यादि, इति त्रैरूप्यम् । लिटि ध्वमि चिण्वत्पक्षे वृद्ध्यायादेशयोः 'विभाषेटः' इति मूर्द्धन्यो विकल्पेन, अन्यदा 'त्विणः षीध्व'मिति नित्यो व्यादेशाभावश्चेति चानुरूप्यम् । वायिषीध्वम् । वायिषीढ्वम् । वेषीढ्वम् । अजिषीध्वमिति । लुङि तु 'धि चे'ति सिचो लोपे चिण्वदिटि व्यादेशस्य वृद्ध्याययोर्मूर्द्धन्यस्य पूर्ववद्विकल्पः । अचिण्वत्पक्षे तु नित्यः, आदेशाभावे च सिज्लोपे इडमङ्गमिणन्तमिति नित्यो मूर्धन्यः । अवायिध्वम् । अवायिढ्वम् । अवेढ्वम् । आजिढ्वमिति चानूरूप्यम् । येषां तु दर्शन'मिणः षीध्व'मित्यत्रेण्-

ग्रहणेनेटो न ग्रहणमिति तेषां मूर्द्धन्याभावात् लिङ्वदेव रूपाणि । कर्मकर्त्तरि तशब्दे 'अचः कर्मकर्त्तरी'ति चिणो विकल्पनात्पक्षे सिचि चिण्वदिटि च अवायि । अवेष्ट । अवायिष्टेति त्रैरूप्यम् । अन्यत् सर्वं कर्मवत्, संभवति च क्षेपणार्थस्य कर्मकर्त्ता । प्रवयणम् । प्राजनम् । 'वा यावि'ति वीभावविकल्पः,'कृत्यच' इति विभाषा णत्वम् । समजः पशूना सघ इत्यर्थः, उदजः तेषामेव प्रेरणम् । 'समुदोरजःपशुष्वि'त्यप् । धात्वर्थस्यापशुविषयत्वे समाजः । उदाज इति घञेव । 'अघञपोरि'ति पर्युदासाच्च वीभावः । 'अजिव्रज्योश्चे'ति अकुत्वम् । समज्या । 'संज्ञायां समजनिषदनिपतमनविदषुञ्शीङ्भृञिणः' इति स्त्रियां भावादौ क्यप् । 'प्रतिषेधे क्यप उपसंख्यानमि'ति वीभावनिषेधः । प्रवेयम् । आर्द्धधातुकइत्यस्य विषयसप्तमीत्वात् प्रागेव वीभावे 'अचो यत्', अन्यथा ण्यति वृद्धौ प्रवैयमिति स्यात् । वातमृजा मृगाः । खश्प्रकरणे 'वातशुनीतिलशर्धेष्वजधेट्तुदजहातिभ्य उपसंख्यानमि'ति खश् । अस्य शित्त्वेन सार्वधातुकत्वाच्च वीभावः । अजिरम् । 'अजिरशिशिरे'ति निपातितः । वेणुः । 'अजिवृरीभ्यो निदि'ति णुः । वेणुकीयम् । 'नडादीना कुक् चे'ति चातुरर्थिकश्छः कुगागमश्च । आजिः । 'अज्यतिभ्या चे'तीणि वृद्धिः,'पादस्य पदाज्याती'ति निर्देशाच्च वीभावः । अच्, अजा । अजादिपाठाट्टाप् । अत एव वीभावाभावः । अजानां समूह आजिकम् । 'गोत्रोक्षोष्ट्रोरभ्रराजराजन्यराजपुत्रवत्समनुष्याजाद्वुञि'ति वुञ् ॥ २२८ ॥

तेज पालने ॥ तेजति । तितेज । तेजितेत्यादि । तेजः । 'असुन् तिज' इति नित्यासुवन्तः । क्षमार्थोयं । तिज निशानइति चुरादौ ॥ २२९ ॥

खज मन्थे ॥ खजति । चखाज । खजितेत्यादि । अखजीत् अखाजीत् । 'अतो हलादे'रिति वा वृद्धिः । खजाको मन्थः । 'खजेराक' इत्याकः । अत्र केचित् कज मदइत्यपि पठन्ति ॥ २३० ॥

खजि गतिवैकल्ये ॥ खञ्जति । चखञ्ज । खञ्जितेत्यादि । इदित्वान्नलोपाभावः ॥ २३१ ॥

एजृ कम्पने ॥ एजति । एजां चकार । एजिता । एजिजिषति । एजयति । मा भवानेजिजत् । ऋदित्त्वान्नोपधाह्रस्वः । एजतिर्दीप्तौ गतः ॥ २३१ ॥

टुओस्फुर्जा वज्रनिर्घोषे ॥ टुशब्दस्य 'आदिर्ञिटुडवः' इतीत्त्वे लोपः । 'ट्वितोऽथुजि'त्यथुचि स्फूर्जथुरिति । ओकार 'ओदितश्चे'ति निष्ठानत्वार्थः । स्फूर्णवान् । 'आदितश्चे'त्यनिट्त्वम् । ननु निष्ठानत्वार्थादोदित्करणसामर्थ्यादेवानिट्त्व मिष्टम् । एवं तर्हि 'विभाषा भावादिकर्म्मणो'रिति इड्विकल्पार्थमादित्त्वम् । स्फूर्णमनेन स्फूर्जितमनेनेत्यादि । स्फूर्जति । पुस्फूर्ज । स्फूर्जिता । पुस्फूर्जिषति । पोस्फूर्ज्यते । पोस्फूर्क्ति । अपोस्फूर्क् । स्फूर्जयति । अपुस्फूर्जत् । अस्य दीर्घोपदेशे 'नोपधाया चे'ति दीर्घस्यानित्यत्वज्ञापनात् । मुर्छति हुर्छति स्फुर्छतीत्यपि भवतीति केचिदिति मैत्रेयप्रतिपादिते ॥ २३३ ॥

क्षि क्षये ॥ अनिट् स्वरान्त इत्ययमनिट्, इह पाठस्तु उत्तरधातुसाम्यादिति मैत्रेये प्रतिपादितम् । क्षयति । चिक्षाय । चिक्षियतुः । चिक्षेथ । चिक्षयिथ । चिक्षियिव । क्रादिनियमादिट् थल्य 'चस्तास्वदि'ति निषेधाद् भारद्वाजनियमाच्च विकल्पितः । अजादौ 'अचि श्नुधात्वि'त्यादिनेयङ्, 'एरनेकाच' इति यण् तु संयोगपूर्वत्वान्न भवति । क्षेता । क्षेष्यति । क्षयतु । अक्षयत् । क्षयेत् । आशिषि क्षीयात् । 'अकृत्सार्वधातुकयो'रिति दीर्घः । अक्षैषीत् । सिचि वृद्धिः । कर्मादौ क्षीयत इत्यादि वीवत् । अन्तर्भावितण्यर्थोऽयं सकर्मकः । न क्षीयत इत्यन्तरमिति भाष्ये दर्शनात् । चिक्षीषति । 'अज्झनगमां सनी'ति झलादौ सनि दीर्घः । चेक्षीयते । चेक्षयीति । 'सार्वधातुकार्द्धधातुकयोरिति गुणः' । 'नाभ्यस्तस्ये'ति निषेधो लघूपधगुणस्य । क्षीणः । क्षीणवान् । क्षीणमिदम् । अस्य ध्रौव्यार्थत्वात् क्तोऽधिकरणे क्तः । 'अधिकरणवाचिनश्चेति' तद्योगे कर्तरि षष्ठी, 'निष्ठायामण्यदर्थे'इति क्षियो दीर्घः, ण्यदर्थौ भावकर्मणी, 'क्षियो दीर्घादि'ति निष्ठानत्वम् । ण्यदर्थे तु क्षितमनेन क्षितायमनेन क्षीणस्तपस्वी । क्षीणो जाल्मः । क्षित इति, 'वाक्रोश दैन्ययो'रिति क्षियो निष्ठायां वा दीर्घः । पूर्ववद्दीर्घपक्षे

न्तत्वम्। क्षेतुं शक्यः क्षय्यः। 'क्षय्यजय्यौ शक्यार्थे' इति निपातनादयादेशो भवति। प्रक्षीय। 'क्षिय' इति ल्यपि दीर्घः। क्षी निवासगत्योरिति तुदादौ। क्षिष् हिंसायामिति क्र्यादौ। क्षिणु हिंसायामिति तनादौ ॥२३३॥

क्षीज अव्यक्ते शब्दे॥ क्षीजति। चिक्षीज। क्षीजिता। चिक्षीजिषति। चेक्षीज्यते। चेक्षीक्ति। क्षीजयति। अचिक्षिजत्। 'णौ चङी'ति ह्रस्वः। कूजिना सहायं न पठितोऽप्रसिद्धत्वात् ॥ २३४ ॥

लज लजि भर्त्सने ॥

लाज लाजि भर्त्सने च ॥ चकारो भिन्नक्रमः। एतावपि भर्त्सनइति मैत्रेयः। भर्त्सनग्रहणं भर्जनस्याप्युपलक्षणमिति पुरुषकारः। लजति। ललाज। लेजतुः। लजिता। अलजीत्, अलाजीत्। 'अतो हलादे'रिति वा वृद्धिः। लिलजिषति। लालज्यते। लालक्ति। लाजयति। अलीलजत्। लञ्जति। ललञ्ज। लञ्जिता। लिलञ्जिषति। लालञ्ज्यते। इदित्त्वान्नलोपाभावः। लालङ्क्ति। लञ्जयति। अललञ्जत्। एवं लाजति लाञ्जतीत्यादि। लाजः। ओलजी ओलस्जी व्रीडनइति तुदादौ। लज प्रकाशनइति कथादौ। लजिति दण्डके भाषार्थः ॥ २३८ ॥

जज जजि युद्धे ॥ जजति। लजिवत्। जङ्गलम्। बाहुलकात् कलप्रत्ययः कुत्वं च। कुरुजङ्गलेषु भवं कौरुजाङ्गलम्, कौरुजङ्गलम्। 'तत्र भव' इत्यण्। 'जङ्गलधेनुवलजान्तस्य विभाषितमुत्तरमि'ति पूर्वपदस्य नित्या वृद्धिः, उत्तरपदस्य तु वा ॥ २४० ॥

तुज हिंसायाम् ॥ तोजति। तुतोज। तोजिता। तुतोजिषति। तुतुजिषति। तुजित्वा। तोजित्वा। 'रलो व्युपधादि'ति क्त्वाविकल्पः। तोतुज्यते। तोतोक्ति। तोजयति। अतूतुजत्। भावादिकर्मणो'रुदुपधादि'ति क्त्वविकल्पनात् तुजितमनेन तोजितमनेनेत्यादि ॥ २४१ ॥

तुजि पालने ॥ तुञ्जति। तुतुञ्ज। तुञ्जिता तुतुञ्जिषति। तोतुञ्ज्यते। तोतुङ्क्ति। अतोतुन्। तुञ्जयति। अतुतुञ्जत्। तुङ्गः। वार्त्तिकमते न्यङ्क्वादित्वात् कुत्वम्। भाषार्थोऽयं युजादौ ॥ २४२ ॥

गज्ज गज्जि गृज्ज गृज्जि मुज्ज मुज्जि शब्दार्थाः ॥ गज्जति । गञ्जतीत्यादि । नञ्जर्नाजिवत् । जगञ्जुरित्यादावादेशादित्वान्नेत्वाभ्यासलोपौ । गञ्जः । अच् । गञ्जा तु मदिरागृहम् । गर्जति । जगर्ज । गर्जिता । जिगर्जिषति । जरीगृज्यते । जरीगृञ्जीतीत्यादि पूर्ववत् । गर्जयति । अजगर्जत् । अजीगृजत् । 'उर्ऋत्' । गृञ्जति । जगृञ्ज । गृञ्जिता । जिगृञ्जिषति । जरीगृञ्ज्यते । 'रीगृत्वत' इति रीक् । जरिगृञ्जीतीत्यादि । मोजति । मुञ्जतीत्यादि । तुजिवत् । मृजमृञ्जीति स्वामिचन्द्रौ । गज मदने च । अथ चुरादावपि शब्दार्थः । गर्ज शब्दइत्यत्र ॥ २४८ ॥

वज व्रज गतौ ॥ वजति । ववाज । ववजतुः । वजितेत्यादि । 'न शसददवादिगुणे'त्येत्वाभ्यासलोपनिषेधः । अवजीत् । अवाजीत् । 'अतो हलादेर्'नि वा वृद्धिः । वाजः । वाज्यम् । घञ्ण्यतौ । 'अजिव्रज्योश्चे'ति चकारेण कुत्वनिषेधः । व्रजतीत्यादि । लुङि 'वदव्रजे'ति नित्या वृद्धिः । अव्राजीदिति । व्रज्या । 'व्रजयजोर्भावे क्यबि'ति क्यप् । व्रजः । 'गोचरसञ्चरवहव्रजव्यजापणनिगमाश्चे'ति अधिकरणे घजन्तो निपातितः । परिव्राट् । 'परौ व्रजेःषः पदान्त इति क्विपि षत्वं दीर्घश्च । एतौ चुरादावपि ॥ शुचादय उदात्ता उदात्तेतः त्विवर्जम् ॥ २५० ॥

अथ क्रमेण प्राप्तानात्मनेपदिनष्टवर्गीयान्तानाह ॥

अट्ट अतिक्रमहिंसयोः ॥ इतः शाठन्ता उदात्ता अनुदात्तेतः । दोपधोयं स्मर्यतइति मैत्रेयः । तोपधोयमिति 'ष्टुना ष्टुरि'त्यत्र न्यासवृत्तिप्रदीपकारादयः । स्वाम्यपि क्विपि अदिति तकारश्रवणार्थं तोपधत्वमुक्त्वा दोपधत्वमप्याह । मैत्रेयस्तु स्वमते दोपधत्वमुक्त्वा तोपधत्वं मतान्तरमाह । अड्ड इति डान्तपाठः प्रकरणविरोधादुपेक्ष्यः । अट्टते । आनट्टे । अट्टताम् । आट्टत । अट्टेत । आशिषि । अट्टिषीष्ट । मा भवानट्टिष्ट । आट्टिष्यत् । ष्टुत्वं सर्व्वत्र, डोपधत्वे चर्त्वं अटिट्टिषते । तोपधत्वे 'पूर्वत्रासिद्धीयमद्विर्वचन'इति ष्टुत्वस्यासिद्धत्वाभावाद् द्विटकारस्य सनन्तस्य द्विर्वचने हलादिशेषे रूपम् । यद्यपि प्राणिणिषतीत्यादौ णत्वे कृते तस्यासिद्धत्वाभावात्सणस्य द्विर्वचनेनैवेष्टसिद्धौ 'उभौ साभ्यासस्ये'ति

पुनर्णत्वविधानात् 'पूर्वत्रासिद्धीयमद्विर्वचन'इत्यस्यानित्यत्वज्ञापनात् ष्टुत्वस्यासिद्धत्वात् [illegible] तदापि 'शर्पूर्वाः खय'इति टकारस्यैव शेषादिदमेव रूपम् । एवं च पुरुषकारादिषु अतिट्टिषतीति तकारस्य शेषेणोदाहरणप्रदर्शनं चिन्त्यम् । दोपधत्वे तु 'पूर्वत्रासिद्धीयमद्विर्वचन'इत्यस्य द्विर्वचनविषयत्वा'न्न न्द्रा' इति द्विर्वचननिषेधे प्रवृत्त्यभावात् ष्टुत्वस्यासिद्धत्वात् दकारवर्जं द्विरुच्यते, दकारस्य पुनष्टुत्वे चर्त्वे च अट्टिटिषतइति भाव्यम् । अट्टयति । आटिट्टत् । दोपधत्वे तु आट्टिटत् । अट्टा । 'गुरोश्चे'त्यकारः । अट्टां करोति । अट्टायते । अटाट्येत्यादिना क्यप् । अयमनादरे चुरादिः ॥ २५१ ॥

वेष्ट वेष्टने ॥ वेष्टते । विवेष्टे । वेष्टिता । विवेष्टिषते । वेवेष्ट्यते । वेवेष्टीति । वेवेष्टि । वेवेष्टः । लङि अवेवेट् । वेष्टयति । अविवेष्टत् । अववेष्टत् 'विभाषा वेष्टिचेष्ट्योरि'ति चङ्परे णावभ्यासस्य पक्षे ऽकारः । कर्मादौ वेष्ट्यतइत्यादि ॥ २५२ ॥

चेष्ट चेष्टायाम् ॥ वेष्टिवत्, अकर्मकस्त्वयम् ॥ २५३

गोष्ट लोष्ट संघाते ॥ गोष्टते । जुगोष्टे । गोष्टिता । लोष्टते । लुलोष्टे । लोष्टितेत्यादि, वेष्टिवत् ॥ २५५ ॥

घट्ट चलने ॥ घट्टते । जघट्टे । घट्टितेत्यादि । अयं चुरादावपि ॥ २५६ ॥

स्फुट विकसने ॥ स्फोटते । पुस्फुटे । स्फोटितेत्यादि । पुस्फुटिषते । पुस्फोटिषते । स्फुटित्वा । स्फोटित्वा । 'रलो व्युपधादि'ति कित्त्वविकल्पः । पोस्फुट्यते, पोस्फुटीति । पोस्फोट्टि । अपोस्फोट् । स्फोटयति । अपुस्फुटत् । अयं तुदादावपि, विशरणार्थोऽयं परस्मैपदिषु, भेदनार्थश्चुरादौ ॥ २५७ ॥

अठि गतौ ॥ अण्ठते । आनण्ठे । अण्ठिता । अण्टिटिषते । अण्ठयति । आण्टिटत् । 'न न्द्राः' इति नवर्जं द्विरुच्यन्ते ॥ २५८ ॥

वठि एकचर्यायाम् ॥ एकचर्या सहायगमनम् । वण्ठते । ववण्ठे । वण्ठिता । विवण्ठिषते वावण्ठीति । वावण्टि । ष्टुत्वम् । चर्त्वम् । लोटि

रेर्द्वित्वे ष्टुत्वे जश्त्वे चावयिठ । लङि अवावत् । वण्ठयति । अवव-ण्ठत् । अयमनिदित् स्यौल्यार्थः परस्मैपदिषु ॥ २५९ ॥

मठि कठि शोके ॥ इह शोक आध्यानम् । मातुर्मण्ठते उत्कण्ठ-तइत्यर्थः । 'अधीगर्थे'ति कर्मणि शेषे षष्ठी । मठ मदनिवासयोः, कठ कृच्छ्रजीवनइत्ययं परस्मैपदिष्वनिदितौ । कठि शोकइतीदित् चुरा-दौ ॥ २६१ ॥

मुठि पालने ॥ मुण्ठतइत्यादि ॥ २६२ ॥

हेठ विबाधायाम् ॥ अमु परस्मैपदिष्वपि केचित् पठन्ति । विबाधन शाठ्यम् । हेठते । जिहेठे । हेठिता । इत्यादि, हेठयति । अजीहिठत् अजिहेठत् । 'काण्यादीना वे'ति णौ चङ्युपधाया ह्रस्व-विकल्पः । काणिरणिस्तथा श्राणिर्भाणिर्हेठिर्लुठिरपीति ण्यन्तस्य भाष्यकारेण काण्यादित्व प्रदर्शितम् ॥

बोधिन्यासकृता लोठिर्लोपिर्वाणिश्च व्हायिना ।
सहिताः पूर्वमुक्ताश्च काण्यादौ परिकीर्त्तिताः ॥
दुर्गश्चाणि च काण्यादि मन्यते शाकटायनः ।
लोटिं तदेव मैत्रेयो धातवो द्वादश स्मृताः ॥ २६३ ॥

एठ च ॥ विपूर्वोयमिति स्वामिकाश्यपौ । मैत्रेयादयस्तु केवलमे-वोदाजह्रुः । एठते । एठाचक्रे । एठिता । एटिठिषते । एठयति । मा भवा-निटिठत् । द्विर्वचनात् पूर्वमुपधाह्रस्व इत्युक्तम् ॥ २६४ ॥

हिडि गत्यनादरयोः ॥ हिण्डते । जिहिण्डे । हिण्डिता । जिहि-ण्डिषते । जेहिण्ड्यते । जेहिण्डि । अजेहिन् । अजिहिण्डत् ॥ २६५ ॥

हुडि सघाते ॥ हुण्डते । जुहुण्डे । हुण्डितेत्यादि पूर्ववत् । अत्र काश्यपः । आर्यास्तु न पठन्ति । द्रविडास्तु पठन्तीति । भाष्यादौ-तु हुण्डेन्त्यविगीतमुदाह्रियते ॥ २६६ ॥

कुडि दाहे ॥ कुण्डनइत्यादि । कुण्डः । कुण्डम् । अच् । स्त्रियां कुण्डी । 'जानपदकुण्डगोणस्थलभाजनागकालनीलकुशकामुककबराद्

त्यमत्रावपनाकृत्रिमाश्रयाणस्थौल्ययोनाच्छादनायोविज्ञारमैथुनेच्छाकेशविशेषु' इति अमत्रे ङीष् । अन्यत्र कुण्डा । वैकल्यार्थोत्रैव पठिष्यते, दाणार्थश्चुरादौ ॥ २६७ ॥

वडि विभाजने ॥

मडि च ॥ अत्र स्वामी वडि विभाजने, मडि चेति पृथक् सूत्रणात्थोन्तरेपि । नन्दी तु वडि विभाजने, मडि वेष्टनइति भङ्क्त्वा पठतीति । वण्डते । ववण्डे । वण्डिता । मण्डते । ममण्डे । मण्डितेत्यादि । मण्डूकः । 'शरिमण्डिभ्यामूकण्' त्यूकण् । कूपमण्डूकः । उदपानमण्डूकः । कच्छमण्डूकः 'पात्रेसमितादयश्चे'ति क्षेपे सप्तमीतत्पुरुषः । क्षेपश्च कूपे मण्डूक इवेत्यदृष्टविस्तारताद्यवगमात् । 'क्रुधमण्डार्थेभ्यश्चे'ति युज्विधौ भूषणार्थ एव वृत्तौ उदाहृतः । तस्यानुदात्तेत इति युचः सद्भूत्वाच्च त्वस्य युज् नेतीति । मण्डि भूषायामित्ययं परस्मैपदिषु, णौ र्थे च ॥ २६९ ॥

भडि परिभाषणे ॥ परिहास इति देवः । परितो भाषणं परिभाषमिति स्वाम्यादयः । यः सनिन्द उपालम्भस्तत्र स्यात्परिभाषणमिति रघण्टुः । भण्डतइत्यादि । भण्डिलो दूतः । 'सलिकल्यनिमहिभडिभण्डी'त्यादिना इलच् । कल्याणार्थश्चुरादौ ॥ २७० ॥

पिडि सघाते ॥ पिण्डतइत्यादि । पिण्डिलो माणवकः । पूर्ववदिलच् । चुरादावप्ययम् ॥ २७१ ॥

मुडि मार्जने ॥ शुद्धिन्यग्भावौ मार्जनम् । मुण्डतइत्यादि । खण्डनार्थः परस्मैपदिषु ॥ २७२ ॥

तुडि तोडने ॥ तोडनं दारणं हिंसनं च । तुण्डनइत्यादि । तुण्डिः । नि'तीन्प्रत्ययो नाभिवृद्धौ । सास्यास्तीति तुण्डिलः । 'तुण्डादिभ्य इलचे'त्यत्र स्वाङ्गाद् वृद्धाविति गणसूत्रेण वृद्धौ वृत्तात्स्वाङ्गादस्मादिलच् । तुण्डिल एव तुण्डिभः । 'तुण्डिवलिवटेर्भ, इति मत्वर्थीयो भः । तुण्डिलो बहुभाषी । 'सलिकल्यनी'त्यादिनेलच् । अयमनिदित्परस्मैपदिषु ॥ २७३ ॥

हुडि वरणे ॥ वरणं स्वीकारः । हरणमिति मैत्रेयः । हुण्डते । जुहुण्डे । हुण्डिनेत्यादि । स्फुडि विकसनइत्येके पठन्ति ॥ २७४ ॥

चडि कोपे ॥ चण्डतइत्यादि । चण्डनः । 'क्रुधमण्डे'ति वा 'अनुदात्तेत'इति वा युच् । चण्डालः । 'चण्डपतिभ्यामालजि'त्यालच् । चण्डालस्यापत्य, चाण्डालकिः । अत इञि 'सुधातुरकङ् च' 'व्यासवरुडनिषादचण्डालबिम्बाना'मित्यकङादेशोऽन्त्यस्य । चाण्डालीति शार्ङ्गरवादित्वान् ङीनि नद्युकार्दिति सूत्रप्रकरणे 'कुलालवरुडनिषादचण्डालमित्रामित्रेभ्यश्छन्दस्युपसंख्यान'मिति उक्तत्वाच्छान्दसः । चण्डालः । चण्डीति 'कृदिकारादक्तिन'इति ङीष् । अथ चुरादौ च ॥ २७५ ॥

शडि रुजायां सङ्घाते च ॥ तालव्योष्मादिः । शण्डतइत्यादि । शण्डः, असुरपुरोहितः । शण्डिलः तीर्थमृषिश्च । 'सलिकल्यनी' त्यादिनेलच् ॥ २७६ ॥

तडि ताडने ॥ तण्डतइत्यादि । तण्डः । अच् । वतण्डः । वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोरित्युपसर्गस्याल्लोपः । वतण्डस्य गोत्रापत्य, वातण्ड्यः । वातण्डः । गर्गादिभ्यो यञ्', 'शिवादिभ्योऽण्'ति यञणौ । यदा त्विदमपत्यमाङ्गिरसं भवति तदा 'वतण्डाच्चे'ति शिवाद्यणं बाधित्वा यञेव, अपत्ये तु स्त्रीलिङ्गे 'लुक् स्त्रिया'मिति लुक् । 'शार्ङ्गरवाद्यञो ङीनि'ति ङीना वतण्डी । अनाङ्गिरसे तु लुगभावात् वातण्ड्यायनी । 'प्राचां ष्फ तद्धित' इति यञन्तात् ष्फः, फस्यायनादेशः । षित्करणसामर्थ्यात् स्वार्थे ङीष् । ष्फप्रत्ययाभावे 'यञश्चे'ति ङीपि 'यस्येति चे'त्यल्लोपे 'आपत्यस्य च तद्धितेनाति'आपत्ययकारस्यानकारादौ भसंज्ञानिमित्ते तद्धितइति च परे लोपे वातण्डी । अनातीति वचनात् वातण्ड्यायनीत्यत्र यलोपो न भवति । वितण्डा, तण्डुला । 'कुटितनितण्डिभ्य उलजि'त्युलच् ॥ २७७ ॥

पडि गतौ ॥ पण्डते । पण्डितः । गोष्ठेपण्डितः । 'पात्रेसमितादयश्चे'ति क्षेपे सप्तमीतत्पुरुषः । तत्रैव पाठादलुक्, गोष्ठएव पण्डितो न सदसीति क्षेपावगतिः । पण्डः । अच् । पणतेर्वा 'अमन्ताड्डः' । पण्डस्या-

पत्य, पाषडारः । आरगुदीचा मित्यत्र रकापि गोधार इति सिद्धे आरव-चनादन्यत्रापि भवतीति वृत्तावुक्तम् । नाशार्थश्चुरादौ ॥ २७८ ॥

कण्ड मदे ॥ कण्डतइत्यादि । भेदने चुरादिः । अनिदिदिहैव । अदादौ च परस्मैपदी ॥ २७९ ॥

खडि मन्थे ॥ खुडीत्यप्येके पठन्ति । खण्डते । खण्डः । खडि भेदने चुरादिः ॥ २८० ॥

हेडृ होडृ अनादरे ॥ हेडते । जिहेडे । हेडिता । जिहेडिषते । जेहेड्यते । जेहेड्डि । हेडयति । अजिहेडत् । ऋदित्त्वान्नोपधाह्रस्वः । एवं होडते । जुहोडइत्यादि । होडः । पचाद्यच् । होडइवाचरति । होडते । 'आचारेऽवगल्भक्लीबहोडेभ्यः क्विब्वेति' क्विपि 'सनाद्यन्ता' इति धातुत्वे लादयः । होडादीनामकारस्यानुदात्तत्वानुनासिकत्वयोः प्रतिज्ञानात् 'अनुदात्तङित' इति तङ् । तथा च भाष्यम् । सर्वप्रातिपदिकेभ्यः क्विबि-त्युक्त्वा न तर्हीदानीं गल्भाद्यनुक्रमण कर्त्तव्यं, कर्त्तव्य च, आत्मनेपदा-र्थमनुबन्धानासङ्क्ष्यामीति क्विब् भवति, 'कर्तुः क्यङ्सलोपश्चे'ति उपमा-नात्कर्तुः सुबन्तादाचारे क्यङिति क्यङ् । उपमानस्य कर्तृत्व संनिधाना-दाचरणक्रियापेक्ष, लोपश्चेति चशब्दस्यान्वाचयशिष्टत्वात् यत्रान्त्यः सकारःसंभवति तस्य लोपः, स च व्यवस्थितविभाषया, होडायते । अनु-नासिकत्वप्रतिज्ञानं क्विप्संनियोगेनैवेतीत्संज्ञाया अभावा'दकृत्सार्वधातुक-योर्'रिति दीर्घः । हेडृ वेष्टनइति घटादौ । होडृ गतावित्यये परस्मै-पदी ॥ २८२ ॥

वाडृ आप्लाव्ये ॥ वशादिः । आप्लवनमाप्लवः । वाडते । अववाड-तेत्यादिं ॥ २८३ ॥

द्राडृ ध्राडृ विशरणे ॥ द्राडते । ध्राडतइत्यादि ॥ २८५ ॥

शाडृ श्लाघायाम् ॥ शाडतइत्यादि । लडयोरैक्यात् शालतइति काश्यपः । अत एव मैत्रेये रूपशाली शालेत्युदाहृतं, 'लस्ये'त्यत्र भाष्य-कैयटयोः शालेति श्यतेर्लप्रत्यये व्युत्पादनीयः । शालीनः, अधृष्टः । 'शाली-नकौपीने अधृष्टाकार्ययो' रिति खञि निपातितः । गवा शाला, गोशालं,

गोशाला । 'विभाषा सेनासुराच्छायाशालानिशाना'मिति सेनाद्यन्तस्य तत्पुरुषस्य वा नपुंसकत्व, गोशाले जातः । गोशालः । 'तत्र जात' इत्यण्, 'स्थानान्तगोशालखरशालाच्चे'ति लुक् । लिङ्गविशिष्टपरिभाषया गोशालाशब्दादप्यणो लुभवति । एव खरशालः । वत्सशालाया जातः, वत्सशालः । वात्सशालो वा । 'वत्सशालाभिजिदश्वयुक्छतभिषजो वे'ति अणो वा लुक् । शालिः, इनितीन् । शालीना भवनं क्षेत्र, शालेयम् । 'व्रीहिशाल्योर्ढगि'ति ढक् ॥ अट्टादय उदात्ता अनुदात्तेतः ॥ २८६ ॥

शौटृ गर्वे ॥ इतो गद्यन्ता उदात्ता उदात्तेतः । शौटति । शुशौट । शौटिता । शौटिष्यति । शौटतु । अशौटत् । आशिषि शौट्यात् । अशौटीत् । अशौटिष्यत् । शुशौटिषति । शोशौट्यते । शोशौट्टि । अभ्यासस्य ह्रस्वः । गुणः । शौटयति, अशुशौटत् । शौटीरः । 'कृशॄपृकटिपटिशौटिभ्य ईरनि'तीरन् ॥ २८७ ॥

यौटृ बन्धे ॥ यौटतीत्यादि ॥ २८८ ॥

म्रेटृ म्रेडृ उन्मादे ॥ द्वितीयस्तृतीयान्तः । तथा च 'तस्य परमाम्रेडित'मिति दृश्यते, अत्र न्यासे आम्रेडते आधिक्येनोच्यतइति, टान्तमध्ये पाठस्तु तदर्थसाम्यादायातिवत् । म्रेटति । म्रेडतीत्यादि ॥ २९० ॥

कटे वर्षावरणयोः ॥ अयमनेदिदये । कटति चकाट । कटिते-त्यादि । अकटीत् । 'अतो हलादे'रिति वा वृद्धिः 'ह्म्यन्तक्षणश्वसजागृणिश्व्येदिता'मिति एदितां निषिध्यते । कटः । पचाद्यच् । कटी । कटात्तु ओणिवचनइति ङीप् । निकटे वसति नैकटिकः, 'निकटे वसती'ति सप्तम्यन्तादुमत्यर्थे ठक् । काटोह्नन,मधिकरणे सञ्ज्ञायां घञ् । कटीरः । जघनं कन्तुकम् । कृशश्इत्यादिना ईरन् । कटिरं चर्म । असिचादिनेरन् । कटित्रं चर्म । अशित्रादिभ्य इतीत्रः । कटकम् । 'क्वुन् शिल्पिसंज्ञयो'रिति क्वुन् । कटुः । बाहुलकादुप्रत्यय' । कट्वरः । 'छित्वरछत्वरधीवरपीवरमीवरचीवरतीवरगह्वरकट्वरसयद्वरा' इति वरचि निपात्यते । चटेत्येकइति काश्यपः । चटतीत्यादि पूर्ववत् । चाटुः । सनिजनिचटिरहिभ्य उणिति उण् । चटुः । बाहुलकादुकारः । चटुलः । बाहुलकादु-

लच् । चटकः । 'क्वुन् शिल्पिसंज्ञयोरि'ति क्वुन् । चटका । अजादिपाठाट्टाप्, 'प्रत्ययस्थादि'तीत्वाभावश्च । चटकाया अपत्यं, चाटकैरः । 'चटकाया ऐरगि'त्यैरक् । चटकाच्चेति वक्तव्यात् चटकस्यापत्यमपि चाटकैरः, स्त्रिया त्वपत्ये 'स्त्रियामपत्येऽलुग्वक्तव्य' इति ऐरको लुकि चटकेति भवति । भेदनार्थोऽय चुरादौ ॥ २९१ ॥

अट पट गतौ ॥ अटति । आट । अटिता । अटिष्यति । अटतु । आटत् । अटेत् । आशिषि अट्यात् । मा भवानटीत् । 'नेटि' इति सिचि वृद्ध्यभावः । अटिटिषति । अटाट्यते । 'सूचिसूत्रिमूत्र्यट्यर्त्यशूर्णोतीनामुपसंख्यानमिति' यङ्, अजादित्वात् ट्यशब्दस्य द्विर्वचने ऽभ्यासस्य 'दीर्घोऽकित'इति दीर्घः । नन्वत्र यङेव कार्यो निमित्तं च, एकस्य कार्यनिमित्तत्वे च विरुद्धे । नैतत् । आकारभेदात्, अनभ्यासाकारेण कार्यो यङाकारेण निमित्तम्, तथा हि । देवदत्तशालाया ब्राह्मण आनीयतामित्युक्ते यदि देवदत्तोऽपि ब्राह्मणश्च शालास्थश्च भवति तदा सोऽप्यानीयते, यङ्लुकि 'सन्यङो'रित्यस्य षष्ठ्यन्तत्वात् यङपेक्षया पूर्वस्य कार्याभावात् 'न लुमते'ति प्रत्ययलक्षणस्य प्रतिषेधाभावाद्यङन्तत्वाद् अटशब्दस्य द्विर्वचने हलादिशेषे 'दीर्घोऽकित' इति दीर्घे सवर्णदीर्घे च तिपष्टुत्वे आट्टि इति भवति । ईट्पक्षे तु । आटीति । आट्टः । आटति । आट्सि । आट्टः । आटाचकारेत्यादि । आड्ढीत्यत्र हेर्धिभावे ष्टुत्वे पूर्वस्य जश्त्वं डकारः । लङि हल्ङ्यादिना तिस्योर्लोपे आट् । अटतीत्यटा । अचि टाप् । तां करोति । अटायते । अटाद्येत्यादिना क्यङ्. कुलस्य अटा कुलटा । शकन्ध्वादित्वात् 'कुलटाया वे'ति निर्देशाद्वा पररूपं, कुलटाया अपत्यं, कौलटिनेयः । कौलटेयः । स्त्रीभ्यो ढकि 'कुलटाया वे'ति पक्षे इनङादेशोऽन्त्यस्य । यदायं कुलटाशब्दः क्षुद्रायां वर्त्तते क्षुद्रा दुःशीला अङ्गहीना वा तदा 'क्षुद्राभ्यो वे'ति ढ्रकि कौलटेर इति भवति, तदभावे वाशब्देन ढकि कौलटेय इति । अटाट्या । 'परिचर्यापरिसर्यामृगयाटाट्यानामुपसंख्यान'मिति गमनमात्रे शप्रत्यये यकि द्विर्वचनहलादिशेषाभ्यासदीर्घेषु निपात्यते । पटति । पपाट । पेटतुः । पेटिथ । पटिता अपटीत् । अपाटीत् ।

'अतो हलादे'रिति वृद्धिः । पिपटिषति । पापट्यते, पापटीति । पापट्टी-त्यादि । पाटयति । अपीपटत् । पाटूपटः । ण्यन्तात्पचाद्यचि 'पाटेर्णि-लुक् चोक् च'भ्यामम्ये'ति णिलुक्, द्विर्वचनमभ्यासस्योगागम उपधादी-र्घश्च, उको दीर्घोच्चारणसामर्थ्यात् ह्रस्वस्याभावः । अस्यागमत्वसामर्थ्याच्च हलादिशेषः । अन्यथादेशमेव विदध्यादुकारम् । 'अभ्यासस्यानची'ति वा हलादिशेषह्रस्वयोरभाव' अभ्यासस्य यदुक्तं तदचि नेति 'णेरनिटी'ति णिलोपे सिद्धे लुग्वचनं प्रत्ययलक्षणे वृद्धेरभावार्थं, पाट्यका सुराविशेषः । पाट्यकालावदातहुरायामिति स्थूलादिपाठात् ण्यन्तादस्मात् क्वुन् । पटुः, 'फलिपाटिनमिमनिजनां गुक्पटिनाकिधतश्चे'त्युप्रत्यये यथासंख्या-त्पटादेशः, अत्र गुगेक आगमः, अन्ये आदेशाः, पटोर्भावकर्मणी । पटि-मा । 'पृथ्वादिभ्य इमनिज्वे'तीमनिच्, 'टे'रिति टिलोपः । तदभावे 'इग-न्ताच्च लघुपूर्वादि' त्यणि पाटवम् । गोष्ठेपटुः । 'पात्रेसमितादयश्चे'ति क्षेपे सप्तमीतत्पुरुषः तत्रैव पाठादलुक्, गोष्ठएवपटुर्न सदसीति क्षेपाव-गतिः । पटाका । शलिपटिपर्दिभ्यो निदित्याकिच्चिच्च । पटलम् । 'वृषा-दिभ्यश्चिदि'ति कलप्रत्ययः चिच्च । पटलिका, सञ्ज्ञायां कन् । पटीरः । कृगृदन्यादिनेरन् । पाटलम् । ण्यन्तात्कलप्रत्ययो बाहुलकात् । पाटली । 'जातेरस्त्रीविषयादयोपधा'दिति ङीष् । पाटल्याः पुष्पाणि, पाटलानि । 'बिल्वादिभ्योऽण्'ति विकारावयवयोरण्, तस्य 'पुष्पफलमूलेषु बहुल'मिति लुप् तत्रैव बहुलग्रहणाच्च भवति, लुपि हि कौशीतक्याः फलानीत्यादि-वत् 'लुपि युक्तवद्व्यक्तिवचने'इति युक्तवद्भावः स्यात् ॥ २९३ ॥

रट परिभाषणे ॥ रटतीत्यादि । परिराटी । 'संपृचानुरुधा-ङ्यमाङ्यसपरिसृसंसृजपरिदेविसंज्वरपरिक्षिपपरिरटपरिवदपरिदहपरिमुह-दुषद्विषद्रुहदुहयुजाक्रीडविविचत्यजरजभजातिचरापचरामुषाभ्याहनश्चे'ति परिपूर्वादस्मात्ताच्छीलिको घिनुण् । परिराटकः । 'निन्दहिंसे'त्यादिना वुञ् ताच्छीलिकः ॥ २९४ ॥

लट बाल्ये ॥ लटतीत्यादि । लट्वा । 'अशुप्रुंशुपुटिलटिकणिखटिपि-

शिभ्यः क्वि'ति क्वन् । लाटयतीति लाटः । एयन्तादच् । केवलाद्वा संज्ञायां घञ् ॥ २९५ ॥

शट रुजाविशरणगत्यवसादनेषु ॥ शटतीत्यादि । शाटकः । घञन्तात्सञ्ज्ञाया कन् । शाटी । जातिलक्षणो ङीष् ॥ २९६ ॥

वट वेष्टने ॥ वटति । ववाट । ववटतुः । वादित्त्वादेत्त्वाभ्यासलोपाभावः । वटिः । 'इनि'तीन्प्रत्ययः । वटिभः । 'तुन्दवलिवटेर्भ'इति मत्वर्थे भः । वटकः । सञ्ज्ञायां कन् । वटका अवमस्या पौर्णमास्यां वटकिनी पौर्णमासी । 'तदस्मिन्नन्नं प्राये सञ्ज्ञाया'मित्यत्र 'वटकेभ्य इनिर्वक्तव्य' इतीन् । घटादावयं परिभाषणार्थः । पट वट ग्रन्थइति कथादौ । वट वेष्टनइति क्षीरस्वामी । यस्तु तत्र विभाजनार्थे. त वटीति शाकटायनादयः पठन्ति । वटी विभाजनइति इहैवार्थे चुरादौ चानदन्तेषु ॥ २९७ ॥

किट खिट त्रासे ॥ केटति । चिकेट । केटिता । चिकिटिषति । चिकेटिषति । किटित्वा । केटित्वेत्यादि, एवं खेटतीत्यादि । खेटः । 'हलश्चे'ति सञ्ज्ञाया घञ्, इह त्रासो भयोत्पादनम् । किटिर्गत्यर्थोऽपि भविष्यति । इहैके न पठन्ति । मैत्रेयादीनामर्थभेदात् पुनः पाठ इत्यभिप्रायः ॥ २९९ ॥

शिट षिट अनादरे ॥ आद्यस्तालव्यादिः, अपरो मूर्द्धन्यादिः । शेटति । सेटतीत्यादि किटिवत् । सिसेटिषतीत्यत्र 'स्तौतिण्योरेवे'ति नियमान्न षत्व, षोपदेशफलं तु सेषिष्यते, । असीषिटदित्यादौ ॥ ३०१ ॥

जट झट सङ्घाते ॥ जटति । जजाट । जेटतुः । जटिता । जटा । अजादित्वाट्टाप् । निन्दिता जटा अस्य जटालो जटिलः । जटाघटाकलाः क्षेपइति सिध्मादौ पिच्छादौ च पाठाल्लजिलचौ । जटीति भाष्यकारप्रयोगाद् अनदन्तत्वेपीनिः । झटति । जझाट । जझटतुः । झटितेत्यादि ॥ ३०३ ॥

भट भृतौ ॥ भटति । भटित्रं शूलेन संस्कृत मांसमिति निघण्टुः । वेतनमित्युणादिवृत्तौ । अशित्रादिभ्य इतीत्रः । अयं घटादिः परिभाषणार्थः ॥ ३०४ ॥

तट उच्छ्राये ॥ तटति । तटोऽस्या अस्तीति तटिनी । 'अत इनिठना'विति मत्वर्थे इनिः । तटी । गौरादिपाठात् ङीष् । तड आघात इति डकारान्तश्चुरादौ ॥ ३०५ ॥

खट काङ्क्षायाम् ॥ खटति । खट्वा । अशुप्रुषीत्यादिना क्वन् । खट्वारूढो जाल्मः । 'खट्वा क्षेप'इति क्षेपे गम्यमाने द्वितीयान्तस्य खट्वाशब्दस्य क्तान्तेन तत्पुरुषः ॥ ३०६ ॥

णट नृतौ ॥ अत्र पुरुषकारे णट नृत्तावित्यपि क्षीरस्वामी, इत्युभयथापि नर्तनमेवार्थ इति, अयं णोपदेशः । नृतिनन्दीति णोपदेशपर्युदासवाक्ये नाटीति सवृद्धिकस्य ग्रहणादस्य घटादित्वान्मित्त्वात् नाटिरूपाभावादग्रहणम् । यदाह हरदत्तः । 'जासिनिप्रहणे'त्यत्र नट नृताविस्यस्य घटादिपठितस्याग्रहणं, विकृतनिर्देशादिति, अत एव णोपदेशपर्युदासविवरणेऽपि न्यासपदमञ्जरीपुरुषकारादिभिरवस्यन्दनार्थस्य चौरादिकस्य ग्रहणं कृतम् । ननु क्षीरस्वामी घटादौ नट नृताविति पठित्वा नटयति शास्त्रा इत्युदाहृत्य वृत्तौ नाटयतीति वक्ष्यति, अवश्य हरदत्तादिभिरप्युभयत्र पाठसामर्थ्यादस्य नाटयतीत्यङ्गीकार्यं, तत्कथमुक्तं विकृतनिर्देशादिति । उच्यते । द्वयोर्ग्रहणे नटीत्येव निर्द्दिशेत् न नाटीति विकृतं, तत्सामर्थ्यात् यस्य नाटीत्येव रूप तस्यैव पर्युदासो विज्ञास्यते न तु यस्य नटिरूपं नाटिरूपं च । ननु योऽस्ति घटादिधातुर्नित्यं नटिरूपमापन्न', स एव विकृतनिर्द्देशेन व्यावर्त्यते, मैवम् । ये ऽन्यत्र पठिता घटादौ पठ्यन्ते न ते पृथग् धातवः, किन्तु मित्त्वार्थमेव तेषामनुवाद इति तत्र स्थितत्वात् । इह नृत्तिर्नर्त्तनं, यत्कारिषु नटव्यपदेशः । न तु मार्गदेशीशब्दाभ्यां प्रसिद्धं नृत्तं नृत्यं च, यत्कारिषु नर्त्तकव्यपदेशः । तत्र वाक्यार्थाभिनयो नाट्य, पदार्थाभिनयस्तु नृत्यम् । अभिनयशून्यः पुनः शास्त्रोक्ताङ्गभङ्ग' स्वगात्रविक्षेपो नृत्त इति तद्विदः, नैघण्टुकानां तु ताण्डवं नटनं नाट्यं लास्यं नृत्यं च नर्त्तनमिति अभेदव्यवहारो निरूढलक्षणया नेयः । प्रणटतीत्यादि । नटी । गौरादित्वात् ङीष् ॥ ३०७ ॥

पिट शब्दसङ्घातयोः ॥ पेटति । पिपेट । पेटितेत्यादि । पिपिटि-

षति । पिपेटिषति । पिटित्वा । पेटित्वा । पेटयति । अपीपिटत् । पिटकम् । 'क्कुन् शिल्पिसञ्ज्ञयो'रिति क्कुन् । पिटाकः । पिटाकादयश्चेत्याकः ॥ ३०८ ॥

हट दीप्तौ ॥ हटति । जहाट । हटिता । अहटीत् । अहाटीदित्यादि । हाटकम् । 'सञ्ज्ञाया चे'ति ण्वुल्, बाहुलकादस्त्रियामपि हाटशब्दात् कन्वा ॥ ३०९ ॥

षट अवयवे ॥ सटति । ससाट । सेटतुः । सटिता । सिसटिषति । 'स्तौतिण्योरेवे'त्यषत्वम् । साटयति । असीषटत् । सटा । अजन्ताट्टाप् ॥ ३१० ॥

लुट विलोडने ॥ एतदादयः पाठत्यन्तास्टवर्गतृतीयान्ता इति कौशिककाश्यपनन्दिद्रविडाः । ते चास्मादनन्तरे पिटहटी च पेठुः । लोटति । लुलोट । लोटिता । लुलुटिषति । लुलोटिषति । लुटित्वा । लोटित्वा । लोटयति । अलूलुटत् । अलुलोटत् । काण्यादित्वादुपधाह्रस्वविकल्पः । लूसूत्रे सुधाकरः, लुल विलोडन इति लान्तोपि दृश्यते । लोलभ्दुजाकारबृहत्तरङ्गमिति माघः । डलयोरेकत्वस्मरणमिति वा प्रतिविधेयमिति । अयं दिवादावपि । भाषार्थश्चुरादौ । प्रतिघाते द्युतादौ इति । स्तेयार्थः परस्मैपदिषु । लुठतिः चुरादौ ॥ ३११ ॥

चिट परप्रेष्ये ॥ चेटतीत्यादि । पूर्ववत् । काण्यादित्वाभावो विशेषः । चेटी । इनन्ता'त्सर्वतोक्तिचर्यादित्येक'इति ङीष् ॥ ३१२ ॥

विट शब्दे ॥ वेटतीत्यादि । विटः । इगुपधलक्षणः कः । विटपः । विटपविष्टपविशिपोलपा इति निपातितः ॥ ३१३ ॥

बिट आक्रोशे ॥ बशादिः । बेटतीत्यादि । हिठेत्यत्र केचित्पठन्ति, हेठतीत्यादि ॥ ३१४ ॥

इट किट कटी गतौ ॥ अत्र मैत्रेयः । कटीति ह्रस्वान्त पठन्तीति चतुर्थं धातुमुक्त्वा मतान्तरेण दीर्घान्त पठन्ई इति चतुर्थं धातुं दीर्घमुक्त्वा फलं च व्यपदेशिवद्भावेन गुरुमत्त्वे इजादित्वात् अयाचकारेत्यामसिद्धि-

हृस्वे णिलोपे तस्य स्थानिवत्त्वेन यिशब्दस्य द्विर्वचनम् । इतः । इतवान् । प्रेत्य । ल्यपि 'यत्वतुकोरसिद्ध'इति एकादेशस्यासिद्धत्वाद् ह्रस्वनिबन्धनस्तुक् । क्रिटेति मैत्रेयमतेन त्रासे गतः । कटिश्च वर्षावरणयोः ॥ ३१७ ॥

मडि भूषायाम् ॥ मण्डति । ममण्ड । मण्डितेत्यादि । मण्डते कन्या स्वयमेव । अमण्डिष्ट कन्या स्वयमेव । भूषाकर्मत्वाद्यक्चिणोर्निषेधः । मिमण्डिषति । मामण्ड्यते । अमामन् । मण्डयति । अममण्डत् । मण्डनः । क्रुधमण्डार्थेभ्यश्चे'ति युच् । मण्ड इति विभागे गतः ॥ ३१८ ॥

कुडि वैकल्ये ॥ कुण्डतीत्यादि । कुण्डतइति दाहे गतम् । अत्र स्वामी । कुटीति कौशिकदुर्गाविति, शाकटायनः पुनः प्रकरणानुरोधेन डान्तमेवाध्यगीष्ट ॥ ३१९ ॥

मुट प्रमर्दने ॥ मोटति । मुमोट । मोटिता । मुमुटिषति । मुमोटिषति । मुटित्वा । मोटित्वा । 'रलो व्युपधा'दिति कित्त्वविकल्पः । मुडेति धनपालः । पुडिति पकारादिडान्त इति शाकटायनः । क्षीरस्वामी तु द्वावपीदितौ पपाठ । मैत्रेयस्त्वमुं टान्तमेव पठित्वा मुडि खण्डन इति चाग्रे पठित्वा पुडि चेत्येकइत्याह । मुट प्रमर्दनाक्षेपयोरिति तुदादौ । मुड सञ्चूर्णनइति चुरादौ ॥ ३२० ॥

चुडि अल्पीभावे ॥ चुण्डतीत्यादि । चुटेति दुर्गः । चुट छेदनइति तुदादौ । चुट्चुटी द्वावपि चुरादौ ॥ ३२१ ॥

मुडि खण्डने ॥ मुण्डतीत्यादि । मुण्डः, तं करोतीति मुण्डयति । 'मुण्ड'मिश्रश्लक्ष्णलवणव्रतवस्त्रहलकलकृततूस्तेभ्यो णिजि'ति करोत्यर्थे णिचि णाविष्ठवदिति टिलोपः । यवनमुण्डः । काम्बोजमुण्डः । मयूरव्यंसकादित्वाद्विशेषणस्य परनिपातः । अत्र मैत्रेयः । पुडि चेत्येके । पुण्डति । पुण्डः । पुण्डरीकमिति । इकारवत् पवर्गादिप्रकरणादिहायं निर्दिश्यते, मुडि भूषायामित्युकारवच्च भवति इति डकारान्तोप्यकारवत्त्वादादौ निर्दिष्ट इति मैत्रेयः । अत्र शुटि खण्डनप्रमर्द्दनयोरि'ति क्व चिद्धातुकोशे पठ्यते । मैत्रेयादयस्तु न पठन्ति । तत्राद्यपाठ एव ज्यायान्यदिहैवाग्रे शुठि

शोपणइति भविष्यति, अस्मिन् हि सति तस्य रूपाभेदाद् शोपणग्रहण-मपीहैव कर्त्तव्य स्यात् ॥ ३२२ ॥

रुठि लुठि स्तेये ॥ रुण्ठति । लुण्ठतीत्यादि । रुण्ठिलुण्ठीन्येकइति क्षी-रस्वामी । शाकटायनस्तूभौ दान्तौ पपाठ । लोठतीति विलोडने गतम् । लुठ प्रतिघातइति युजादौ । रुठ रोपणइति चुरादौ । तत्र रुठेत्येके ॥ ३२४ ॥

स्फुठिर्विशरणे ॥ अय पाठो मैत्रेयादीनाम् । स्फोठति । पुस्फोठ । स्फोठिता । पुस्फुठिपति । पुस्फोठिषति । स्फुठित्वा । स्फोठित्वा इत्यादि । इकाररेफयो 'रुपदेशेजनुनासिक इत्' 'हलन्त्य'मितीत्त्व, तेन लुङि 'इरितो वे'ति परस्मैपदे विधीयमानो ऽङ् विकल्पो भवति । अस्फुटत् । अस्फोटीदिति । 'इदितो नुम् धातो' रिति नुम् अन्तेदितो विधानादस्य न भवति । स्फुटेति चन्द्रः । अस्याङ् नास्ति । स्वामिकाश्यपौ तु स्फट स्फुठि स्फुटिरिति त्रीन् धातून् पठतः । स्फुण्ठति । स्फोटतीत्यादि । स्फुटा । अच्, टाप् । स्फुट विकाशनइत्यात्मनेपदिपु टान्तः ॥ ३२५ ॥

पठ व्यक्तायां वाचि ॥ पठति । पपाठ । पेठतुः । पठिता । अपाठीत् । पाठयति श्लोकं पुत्रमित्यादि ॥ ३२६ ॥

वठ स्थौल्ये ॥ वठति । ववाठ । वठितेत्यादि । वादित्वाद्वैत्वाभ्यास-लोपौ । वठि एकचर्यायामात्मनेपदी गतः ॥ ३२७ ॥

मठ कठ मदनिवासयोः ॥ अय पाठो मैत्रेयस्य । अन्येषा मठ मद-निवासयोः । कठ कृच्छ्रजीवनइति । मठति । कठति । इत्यादि । कठः । अच । कठेन प्रोक्त छन्दः 'कलापिवैशम्पायनान्तेवासिभ्यश्चे' ति वैशम्पाय-नान्तेवासित्वाण्णिनिः । तस्य 'कठचरकाल्लुगि'ति लुक् । 'छन्दोब्राह्म-णानि च तद्विपयाणी'ति नियमा'त्तदधीते तद्वेदे'ति अध्येतृवेदितृप्रत्ययान्त एव प्रयोगार्हः । तस्य चाणः 'प्रोक्तात् लुगि'ति लुक् । तदेव कठेन प्रोक्त छन्दोधीयमानोपि कठः । कठिनम् । औणादिक इन् । वशकठिने व्यव-हरति वाशकठिनिकः । 'कठिनान्तप्रस्तारसंस्यानेपु व्यवहरती' ति कठिना-

* देवेत्यधिकं २ पु ।

न्तादिभ्यः सप्तम्यन्तेभ्यो व्यवहरतीत्यर्थे ठगिति ठक्। कठोरम्। कठिचक्रिभ्यामोरजित्योरच्। अनन्तरं मठ गताविति क्व चित्पठ्यते। मैत्रेयादयस्तु न पठन्ति ॥ ३२९ ॥

रठ परिभाषणे ॥ रठतीत्यादि ॥ ३३० ॥

हठ प्लुतिशठत्वयोः ॥ हठति। जहाठेत्यादि। हठ बलात्कारइति चन्द्रदुर्गौ ॥ ३३१ ॥

रुठ लुठ उठ उपघाते ॥ रोठति। लोठतीत्यादि। अत्र मैत्रेयः। उठेत्यप्येकइति। धनपालशाकटायनौ तु रुठलुठेत्येव पेठतुः। क्षीरस्वामी तु उठिं पठित्वा रुठ लुठ इत्यपि दौर्गा इत्याह। उठति। उवोठ। ऊठतुः। ओठितेत्यादि। पठतिवत्प्रक्रिया। लुठः कण्ड्वादित्वात् अलूलुठत्। अनुलोठदिति भवति। अथ श्लेषणे तुदादिः। लुठि आलेख्ये प्रतिघाते च। रुठि लुठि गताविर्त्यथे इदितौ। लुठ श्लेषणइति तुदादौ। असौ डान्त इत्येकइति मैत्रेयः। तथा च स्वामी लुठतीति लक्ष्यदर्शनात् तुदादौ पाठ इति। लुठ प्रतिघातइति द्युतादौ ॥ ३३४ ॥

पिठ हिंसासंक्लेशनयोः ॥ पेठतीत्यादि। पीठम्। घञ्। 'अन्येषामपि दृश्यत'इति दीर्घः। पीठी। इञन्तात् 'कृदिकारादक्तिन'इति ङीष् ॥ ३३५ ॥

शठ कैतवे च ॥ चकाराद्धिंसासंक्लेशनयोश्च। शठति इत्यादि। स्वाम्यादयः पुनश्चकारं नैव पेठुः। गत्यसंस्कारयोरयं चुरादौ। तत्रैव श्लाघायामात्मनेपदिषु, सम्यगवभाषणे कठादौ ॥ ३३६ ॥

शुठ गतिप्रतिघाते ॥ प्रतिघातइत्येव धनपालः। तथा च कुठि इत्युपाख्यातौ प्रतिहतिमात्रं प्रतीयते इत्यर्थ इति स एवाह। शोठतीत्यादि। शुठीति क्षीरस्वामी। आलस्यइति चुरादौ। शुठि शोषणइत्यत्रैवाग्रे॥ ३३७ ॥

कुठि च ॥ कुण्ठतीत्यादि। कुण्ठः ॥ ३३८ ॥

लुठ आलस्ये प्रतिघाते च ॥ लुण्ठतीत्यादि। लोठतीत्युपघाते गतम् ॥ ३३९ ॥

शुठि शोषणे ॥ शुण्ठति । शुण्ठः । शुण्ठी । शोठतीति गतिप्रतिघाते गतः ॥ ३४० ॥

रुठि लुठि गतौ ॥ अर्थभेदात्पुनः पाठो लुण्ठेरित्याहुः । रुण्ठति । लुण्ठन्तीत्यादि ॥ ३४२ ॥

चुड्ड भावकरणे ॥ भावकरणमभिप्रायसूचनम् । चुड्डति । चुचुड्ड । चुड्डितेत्यादि । चुचुड्डिषति । चोचुड्यते । अचोचुत् । अयं दोपध इति सयोगान्तलोपे तकारस्य श्रवणम् । चुड्डयति । अचुचुड्डत् ॥ ३४३ ॥

अड्ड अभियोगे ॥ अयमपि दोपध इति क्विप्यदिति भवति । अड्डति । आनड्ड । अड्डिता । अड्डिडिषति । 'न न्द्राः' इति दकारवर्ज्जस्य द्विर्वचनम् । अड्डयति । आड्डिडत् ॥ ३४४ ॥

कड्ड कार्कश्ये ॥ कड्डतीत्यादि । अस्यापि दोपधात्वाच्चङ्लुकि क्विपि च । अचीकत् कद् इति च भवति । कच्च तत् जलं च कज्जलम् ॥ ३४५ ॥

क्रीडृ विहारे ॥ क्रीडति । चिक्रीड । क्रीडिता । चिक्रीडिषति । चेक्रीड्यते । चेक्रीट्टि । अचेक्रीट् । आक्रीडते । 'क्रीडोऽनुसम्परिभ्यश्चे'ति अन्वादिपूर्वाच्चकारादाङ्पूर्वात्तङ्, एवमनुक्रीडत इत्याद्युदाहार्यम् । समासाहचर्यादनोरुपसर्गस्य ग्रहणं, तेन 'तृतीयार्थे'इति यदानोः कर्मप्रवचनीयत्वं तदा तङ् न भवतीति माणवकमनुक्रीडतीति, माणवकेन सह क्रीडतीत्यर्थः । 'कर्मप्रवचनीययुक्ते द्वितीये'ति माणवकाद् द्वितीया । सक्रीडन्ति शकटानीत्यत्र 'समोऽकूजनइति वक्तव्य'मिति उक्तत्वात्र तङ् । कूजन्ति शकटानीति ह्यस्यार्थः । आक्रीडी । 'संपृचे'त्यादिना घिनुण् । चिक्रीडः । 'कृञादीनां के द्वे भवत' इति कप्रत्यये द्विर्वचनम् ॥ ३४६ ॥

तुडृ तोडने ॥ तोडनं दारणं हिंसनं चेत्युक्तम् । तोडति । तुतोड । तोडितेत्यादि । तड इति स्वामिशाकटायनौ, तुडत इत्यात्मनेपदी गतः ॥ ३४७ ॥

हूडृ हुडृ होडृ गतौ ॥ हूडति । जुहूड । हूडिता । हूडयति । अजुहूडत् । होडति । जुहोड । होडिता । होडयति । अजुहोडदित्यादि । हुडृ हूडृ गताविति धनपालशाकटायनौ । होडत इत्यनादरे गतः ॥ ३५० ॥

द्वित्वाभ्निस्त्वम् । त्रपित्वा । त्रप्त्वा । त्रप्तः । त्रप्तवान् । 'यस्य विभाषे'ति निष्ठायामिण्निषेधः । त्राप्यम् । 'आसुयुवपिरपिलपित्रपिचमश्चे'ति भावे ण्यत् 'पोरदुपधादि'ति यतोऽपवादः । त्रपा । 'षिद्भिदादिभ्योऽङि'ति स्त्रियामङ् । अपत्रपिष्णुः । 'अलङ्कृञ्निराकृञ्प्रजनोत्पचोत्पतोन्मदरुच्यपत्रपवृतुवृधुसहचर इष्णुजि'ति तच्छीलादाविष्णुच् । त्रपु । 'शस्वृस्निहित्रप्यसिवसिहनिक्लिदिबन्धिमनिभ्यश्चे'त्युप्रत्ययः । त्रपुणो विकारस्त्रापुषम् । 'त्रपुजतुनोः षुगि'ति षुगागमोऽण्प्रत्ययश्च ॥ ३७१ ॥

कपि चलने ॥ कम्पते । चकम्पे । कम्पितेत्यादि । कम्पयति । 'निगरणचलने'ति नित्यं परस्मैपदम् । कम्रः । 'नमिकम्पिस्म्यजसकमहिंसदीपो रः' इति तच्छीलादौ रः । वा सरूपविधिना 'अनुदात्तेत' इति वा 'चलनशब्दे'ति वा युचि कम्पनः । ननु पदेरनुदात्तेत्त्वादेव युचि सिद्धे 'जुचङ्क्रम्यादि'ना पुनर्युज्विधानेन ताच्छीलिकेषु वासरूपविधिर्नेति ज्ञापितम् । अन्यथा 'लषपतपदे'त्युकञा अनुदात्तेल्लक्षणयुचः समावेशे सिद्धे पुनस्तद्विधानमनर्थकं स्यात् । नैतदस्ति । 'सूददीपे'ति युज्निषेधादस्यानित्यत्वज्ञापनात्, नित्ये हि 'नमिकम्पी'त्यादिना विशेषविहितेन रप्रत्ययेन युचो बाधस्य सिद्धत्वात् किं तन्निषेधेन । विकम्पितः । विकृतशरीर इत्यर्थः । 'लगिकम्प्योरुपतापशरीरयो'रिति नलोपः । कपिः । 'कुटिकम्प्योर्नलोपश्चे'तीन्प्रत्यये नलोपः । कपेर्भावकर्मणी कापेयम् । 'कपिज्ञात्योर्ढ'गिति' ढक् । वृषो धर्मस्तस्याकपिः, अकम्पिता, वृषाकपिः विष्णुः रुद्रश्च । वृषाकपायी । श्री गौरी च । 'वृषाकपी'त्यादिना पुंयोगलक्षणे ङीषि अन्त्यस्यैकारः । कपिलः । 'कपेश्चे'तीलच्प्रत्ययः बाहुलकादत एव निर्देशाद्वा नलोपः । कबलः कम्बलः, बाहुलकात् कलप्रत्ययः पकारस्य बकारः पक्षे मलोपश्च । कम्बल्यमूर्णापलशतम् । कम्बलाय हितमिति विषये 'कम्बलाच्च संज्ञाया'मिति यत् । द्वाभ्यां कम्बल्याभ्यां क्रीता शाटी द्विकम्बल्या । 'तद्धितार्थोत्तरपदसमाहारे चे'ति तद्धितार्थे समासे 'द्विगुश्चे'ति द्विगुत्वे 'प्राग्वतेष्ठञि'ति प्राग्वतीयेष्वर्थेषु विहितस्य ठञोऽ'ध्यर्द्धपूर्वद्विगोर्लुगसंज्ञाया'मिति लुक् ।

अत्र 'द्विगो' रिति प्राप्तस्य ङीपो'ऽपरिमाणबिस्ताचितकम्बल्येभ्यो न तद्धितलुकि' इति निषेधः । अपरिमाणान्तात्परिमाणत्वेपि बिस्ताद्य-न्ताच्च द्विगोस्तद्धितलुकि सति ङीन्नेति सूत्रार्थः । पाण्डुकम्बलेन परि-वृतो रथः पाण्डुकम्बली । 'पाण्डुकम्बलादिनिरि'ति पाण्डुकम्बलशब्दा-त्तृतीयान्तात् परिवृतो रथ इत्यर्थे इनिः । येन तत्परिवृतं तत्तस्यास्ति इति मत्वर्थीयेन सिद्धे इदं वचनं ठनो निवृत्त्यर्थम् ॥ ३७२ ॥

रबि लबि अबि शब्दे ॥ रम्बते । ररम्बे । रम्बिता । रिरम्बि-षते । रारम्ब्यते । रारम्बीति । रारम्प्ति । अरारन् । हे इति रम्बतइति हेरम्बः । लम्बतइत्यादि । अम्बते । आनम्बे । अम्बिबिषते । अम्बयति । आम्बिबत् । त्रीण्यम्बकानि चक्षूंषि अस्येति त्र्यम्बकः, त्रयाणां लोका-नामम्बः पितेत्यागमविदः । द्यौर्भूमिरापस्तिस्रोम्बा अस्य इति भार-तम् । अम्बः त्रयः शब्दा अकारोकारमकाराः प्रतिपादका अस्येति भट्ट-भास्कर', स एव सृष्टिस्थितिसंहारविषयास्तिस्रो वा शक्तयोस्येति च । अम्बरीषम् । 'भ्राष्टमम्बरीष मिति निपात्यते । अम्बा । हे अम्ब । 'अम्बार्थनद्यो'रिति ह्रस्वः सम्बुद्धौ ॥ ३७५ ॥

लबि अवस्रंसने च ॥ 'नजि लम्बेर्नलोपश्चे'ति नञ्युपपदे उकारप्र-त्ययो नलोपश्च णिद्वद्भावात् वृद्धिश्च ॥ ३७६ ॥

कबृ वर्णे ॥ कबते । चकबे । कबिता । चिकबिषते । चाकब्य-ते । चाकप्ति । काबयति । अचकाबत् । कबरः । बाहुलकादरः । कबरी । 'जानपदे'त्यादिना केशवेशे ङीष्, अन्यत्र कबरा । कर्बुरः । बाहुलकादुरः प्रत्ययो रेफोपजनश्च ॥ ३७७ ॥

क्लीबृ अधार्ष्ट्ये ॥ क्लीबते । चिक्लीबे । क्लीबिता । क्लीबयति । अचिक्लीबत् । क्लीब इवाचरति क्लीबते । 'आचारेवगल्भक्लीबे'ति क्विप्, तत्सन्नियोगेन चैषामकारस्यानुदात्तताऽनुनासिकताप्रतिज्ञानादनुदात्त-त्वात्तङिति होडतो प्रतिपादितम् । क्विबभावे 'उपमानादाचार'इति क्यङि क्लीबायते ॥ ३७८ ॥

क्षीबृ मदे । क्षीबते । चिक्षीबे । क्षीबिता । क्षीबयति । अचिक्षीबत् । क्षीबः । 'अनुपसर्गात्फुल्लक्षीबे'ति निष्ठायामिडभावस्तलोपश्च, इत्वद्वलोपो वा निपात्यते ॥ ३८९ ॥

शीभृ कत्थने ॥ शीभते । शिशीभे । शीभिता । शिशीभिषते । शेशीभ्यते । शेशीब्धि । 'झषन्तथो'रिति तकारस्य धकारे 'झलां जश् झशी'ति भकारस्य बकारः । शीभयति । अशिशीभत् । शीभरः बाहुलकादरः ॥ ३९० ॥

चीभृ च ॥ चीभतइत्यादि ॥ ३९१ ॥

रेभृ शब्दे ॥ रेभते । अरेभतेत्यादि । विरिब्धः । 'क्षुब्धस्वान्ते'त्यादिना स्वरे निष्ठायामिडभावे उपधाह्रस्वत्वं च निपात्यते । अन्यत्र रेभितः । अभिरभी च क्वचित्पठ्येते । अम्भते रम्भतइत्यादि । अम्भः । असुन् । अम्भसोपत्य आम्भिः । 'अम्भसः सलोपश्चे'ति बाह्वादिपाठादिञि सलोपः ॥ ३९२ ॥

ष्टभि स्कभि प्रतिबन्धे ॥ स्तम्भते । तस्तम्भे । खयः शेषः । स्तम्भिता । तिस्तम्भिषते । 'स्तौतिण्योरेवे'त्यषत्वम् । षोपदेशफलं ण्यन्तात्सनि तिष्टम्भयिषतीति षत्वम् । उत्तम्भते । उत्तम्भिता । उत्तम्भितः । 'उदः स्थास्तम्भोः पूर्वस्ये'ति उदः परयोरनयोः सकारस्थाने पूर्वस्य सवर्ण इति तकारः । 'स्तम्भे'रित्यादावुपसर्गात्परस्य षत्वविधौ स्तम्भुस्तुम्भ्वित्यानि प्रतिपदोक्तस्यैव ग्रहणं स्तम्भेः, न त्वस्य लाक्षणिकस्येति विस्तम्भइत्यादौ न षत्वम् । 'उदः स्थास्तम्भो'रित्यत्र तु नायं न्यायः, यतस्तम्भुरूपमुभयोरपि लाक्षणिकम् । अत्र स्वामिमैत्रेयौ ष्टभेष्टकारमेकीयमतेनौपदेशिकमाहतुः । तत्र ष्टम्भते विष्टम्भतइत्यादौ सर्वत्र ष्टुत्वेन षत्वे लिडादावभ्यासे टकारस्य शेषे तष्टम्भइत्यादि भवति । स्कम्भते । चस्कम्भे । स्कम्भितः । स्कभितः । 'ग्रसितस्कभिते'ति निपातनं तु छन्दसि 'वेः स्कभ्नातेर्नित्य'मिति [illegible] षत्वानिर्देशात् सौत्रस्यैव नास्येति विस्कम्भितइति भवति । स्तम्भु स्तुम्भु स्कम्भु स्कुम्भु इति सौत्राश्चत्वारो धातवस्ते च 'स्तम्भुस्तुम्भु-

स्कम्भुस्कुम्भुस्कुञ्भ्यः श्नुश्चे'ति वा श्नाश्नुविकरणा इति तत्रोदाह्रियते। स्तोभत इत्यये स्तम्भार्थे ॥ ३८४ ॥

जभी जृभि गात्रविनामे ॥ जभीत्येके, जब्धमिति मैत्रेयः। अयमेव पाठः प्रायेण वृत्तिकारस्य समतः। यदाह। 'रधिजभोरचि'इत्यत्र अज्ग्रहणप्रत्युदाहरणे जब्धमिति अनीदित्त्वे इटा भाव्यमिति कथमेवमुदाहरेत्। जम्भते। जजम्भे। जम्भिता। जम्भिष्यते। जम्भताम्। अजम्भत। जम्भेत। जम्भिषीष्ट। अजम्भिष्ट। अजम्भिष्यत। जिजम्भिषते। 'रधिजभोरचि' इति अजादौ प्रत्यये नुम्। जञ्जभ्यते। 'लुपसदचरजपजभदहदशगृभ्यो भावगर्हायामि'ति यङ्। भावो धात्वर्थस्तस्य गर्हा भावगर्हा। अय च यङ् पूर्वसूत्राणि यङ्ग्रहणानुवृत्त्या [illegible] क्रियासमभिहारे यङो बाधक इति भाष्यादौ स्थितम्। 'जपजभदहदशभञ्जपशां चे'ति अभ्यासस्य यङि यङ्लुकि च नुगागमः। इदं च नुग्ग्रहणमनुस्वारोपलक्षणार्थं 'नुगतोनुनासिकान्तस्ये'ति अत्रान्तग्रहणात्,तद्धि तदन्तविधिनाप्यनुनासिकान्तस्य धातोरभ्यासस्य नुकि सिद्धे तदन्तस्य यत्कार्यं तद्यथा स्यादिति। न च नुकोन्त्यत्वे किं चित्कार्यमस्ति, अस्ति चानुस्वारस्य 'वा पदान्तस्ये'ति परसवर्णविकल्पः। 'कर्तुः क्यङ् से'तिवदनुनासिकेत्यविभक्तिको निर्देशः। तेन जञ्जभ्यते इत्यत्रानुस्वारस्यापि पक्षे श्रवणं भवति। जञ्जभीति। जञ्जब्धि। जञ्जब्धः। जञ्जम्भतीत्यादि। 'रधिजभोरची'त्यत्र प्रकृतिग्रहणे यङ्लुगन्तस्यापि ग्रहणमिति अजादौ नुमागमः। जम्भयति। अजजम्भत्। जम्भो दन्तविशेषोऽभ्यवहार्यं च, शोभनो जम्भोस्यास्तीति सुजम्भा। 'जम्भासुहरिततृणसोमेभ्य' इति स्वाद्यादेर्जम्भात् बहुव्रीहेरनिचि 'सर्वनामस्थाने चासम्बुद्धावि'ति नान्तस्योपधाया दीर्घः। पदत्वे 'न लोपः प्रातिपदिकान्तस्येति'ति नलोपः भसंज्ञाया'मल्लोपोन'इत्यल्लोपः। सुजम्भ इत्यादि। ङौ तु 'विभाषा ङिश्योरि'ति विकल्पित इति सुजम्भ्नि सुजम्भनीति भवतः। सम्बुद्धौ 'न ङिसम्बुद्ध्योरि'ति नलोपनिषेधः। नपुंसके तु 'वा नपुंसकानामि'ति पक्षे न लोपः। अन्यत्र तु नित्यः, दीर्घस्तु न भवति असर्वनामस्थानत्वात्। शौ सर्वनामस्थानपरत्वात् सुजम्भानीति 'विभाषा ङिश्योरि'ति

श्यामल्लोपविकल्पनात् सुजम्भी सुजम्भनी इति भवतः। स्त्रियां 'ऋन्नेभ्य' इति ङीपो 'ऽनो बहुव्रीहे'रि ति निषिद्धत्वात् पुंसीव रूपम् । यदा तु 'डाबुभाभ्यामन्यतरस्या'मन्नन्तात्प्रातिपदिकादनन्ताद्बहुव्रीहेश्च डाबिति डाप्तदा डित्त्वाट्टिलोपे सुजम्भा सुजम्भे इत्यादि। ङीप् प्रतिषेधस्य डापः श्रवणस्य च वचनद्वयप्रामाण्यादेव सिद्धौ अन्यतरस्याग्रहणेन भिन्नेन योगेन ङीपोऽभ्यनुज्ञानात् सुजम्भीत्याद्यपि भवति। अत्र च योगे 'अनो बहुव्रीहे'रित्येवानुवर्त्तते न तु 'मन' इति सीमादेः प्रातिपदिकाद् ङीबभावः। सुजम्भीत्यादौ तु अन्तबहुव्रीहित्वाद्भवत्येव । सुपर्वा सुशर्मेत्यादौ तु 'अन उपधालोपिनोऽन्यतरस्यामि'ति नियमान्न भवति । सिद्धे सत्यारभ्यमाणाय नियमार्थः । यदन्यतरस्यां ङीब्विधानं तदुपधालोपिन एवेति, अत्र ह्यल्लोपो 'न संयोगाद्वमन्ता'दि ति निषिध्यते । वमन्तात् संयोगात् भसंज्ञानिमित्ते प्रत्यये परे ऽल्लोपो नेति सूत्रार्थः । 'जम्भा सुहरितृण'त्यत्र जम्भेति भाविना समासान्तेन निर्देशात्समासार्थे तदुत्तरपदादकृते एव समासे समासान्ता इत्ययं पक्षो ज्ञाप्यते । तेन द्विपुरीत्यादि सिध्यति । यदि ह्यत्र 'ऋक्पूरब्धू'रित्यकार समासे कृते स्यात् तदा समासस्याकारान्तोत्तरपदत्वाभावात् 'अकारान्तोत्तरपदो द्विगुः स्त्रियामिष्यत इति स्त्रीलिङ्गता न स्यात् । जृम्भते । जृम्भितेत्यादि । यङ्लुको 'रीगृत्वत' इति वचनाद्रुग्रिगीकौ भवन्ति । जरीजृम्भ्यते । जरीजृम्भीति । इत्यादि । जृम्भयति । अजजृम्भत् । जृम्भिति विनाशनार्थे चुरादौ । भाषार्थीय परस्मैपदित्वपि इति केचित् ॥ ३८६ ॥

शल्भ कत्थने ॥ शल्भते । शशल्भे । शल्भितेत्यादि ॥ ३८७ ॥

वल्भ भोजने ॥ दन्त्योष्ठ्यादिः । वल्भते । णौ निगरणार्थत्वात् नित्यं परस्मैपदम् । वल्भयति ॥ ३८८ ॥

गल्भ धार्ष्ट्ये ॥ गल्भते । प्रगल्भः । अवगल्भ इवाचरति अवगल्भते । 'आचारे ऽवगल्भे'ति क्विप्, तत्सन्नियोगेनाकारस्यानुदात्तत्वानुनासिकत्वप्रतिज्ञानात्प्रागेवोक्तमित्यनुदात्तत्वात्तङ् क्विपोरभावे क्यङि अवगल्भायते । अवगल्भेति विशिष्टग्रहणादनुपसृष्टादन्योपसृष्टाच्चाचारक्विपि गल्भते । प्रगल्भतीति भवति ॥ ३८९ ॥

श्रम्भु प्रमादे ॥ तालव्योष्मादिः, एवं काश्यपः । दन्त्यादिरिति चन्द्र । स्वामी चैव पठित्वा मतान्तरेण स्रम्भेति दन्त्यान्तमप्याह । मैत्रेयस्य त्वयमेव पक्षः । यदाह स सयोगान्तसाधर्म्येण सान्तोऽप्यत्र निर्दिश्यते । द्युतादावप्ययं पठिष्यते । तस्यैव च ध्वंसुसमाहचर्याल्लुङीत्याहुः । दन्त्ये पुनरसाहचर्यमिच्छतीति । दैवेऽप्येवमेवोक्तम् । तत्र तावदयं पक्षो वृत्तितद्व्याख्याकृतामनभिमत इव प्रतीयते, यद्वृत्त्वसूत्रे उभयोर्ग्रहणं नोक्तं सूत्रे नास्येति चाहुः । सति ह्येवमवश्यवक्तव्य, तथैव स्वामिचन्द्रयोरपि पाठोऽनभिमत इव । यत् 'वौ कषलसकत्थस्रम्भ'इत्यत्र स्रम्भु विश्वासइति वदन्नमु नोपाददते, वृत्तिकारो ऽग्रहणे कारणं चाचष्ट । तथा व्याख्याकृतोपि न वृत्तिकारवचनमुपन्नलनाच्छता नान्यग्रहणे कारणम् । श्रम्भते । शश्रम्भे । श्रम्भिता । श्रम्भित्वा । श्रब्ध्वा । उदित्त्वादिड्विकल्पः 'न क्त्वासेडि'त्यकित्त्वान्नलोपाभावः । श्रब्धः । 'यस्य विभाषे'त्यनिट्त्वम् ॥ ३९० ॥

ष्टुभु स्तम्भे ॥ स्तोभते । तुष्टुभे । स्तोभितेत्यादि । तुस्तुभिषते । तुस्तोभिषते । स्तुभित्वा । स्तोभित्वा । 'रलो व्युपधादि'ति वा कित्त्वम् । उदित्त्वात्पक्षे क्त्वायामिडभावे 'निष्ठे'ति निष्ठाया 'यस्य विभाषे'ति स्तुब्धम्, सनि 'स्तौतिण्यो'रेवेत्यषत्वं, निष्टोभिता । निष्टोब्धा । 'उपसर्गात्सुनोती'त्यादिना 'प्राक् सितादड्व्यवायेपी'ति च षत्व, नितुस्तोभिषते इत्यत्राभ्यासेन व्यवायाद् स्यादित्वाच्च 'स्तौतिण्योरेवे'ति नियम एवावतिष्ठते । अनुष्टुप् । पूर्ववत् षत्व, त्रिष्टुप् 'सुषामादिषु चे'ति षत्वम् । अनुष्टबेवानुष्टुभम् । एव त्रैष्टुभं, छन्दसः प्रत्ययविधाने नपुसके स्वार्थेऽउपसख्यानमिति स्वार्थे उत्सादिभ्यः प्राग्दीव्यतीयोण्, स्वार्थेपि प्राग्दीव्यतीयः । तिप्यादय उदात्ता अनुदात्तेतः तिपिवर्जम् ॥ ३९१ ॥

गुपू रक्षणे ॥ एतदादयः शुम्भान्ता उदात्ता उदात्तेतः ॥ 'गुपूधूपविच्छिपणिपनिभ्य आय' इत्यायः स्वार्थे । 'आयादय आर्द्धधातुके वे'ति आर्द्धधातुके विषये विकल्पेनायमुत्पाद्यते । तस्मिन् लघूपधगुणः, आयादय आये यङ्णिङः । 'सनाद्यन्ता धातव'इति धातुत्व, गोपायति । गोपायां चकार । कास्प्रत्यया'दि'त्याम् । गोपायिता । गोपायिष्यति । गोपायतु । अगो-

स्तृन' इति टिलोपः । अत्र शाकटायनः क्षीरस्वामी सचति चाहुरित्युक्त्वा भवति सचिव इत्यप्याह ॥ ३९८ ॥

रप लप व्यक्तायां वाचि ॥ रपति । लपतीत्यादि जपिवत् । विलापयति पुत्रमित्यत्र जल्पन्यादित्वात्प्रयोज्यस्य कर्मत्वम् । अलीलपत् । अललापत् । काण्यादित्वाद् उपधाह्रस्वविकल्पः । राप्यः । लाप्यः । 'आसुयुवपिरपिलपित्रपी'ति ण्यत् । यतोऽपवादः । अत एव जपतिना समानार्थत्वपि पृथङ्निर्देशः । रिपुः । 'रपेरिच्चोपधायाः' इति उप्रत्यय उपधाया इकारः ॥ ३९९ ॥

चुप मन्दायां गतौ ॥ चोपयति । चुचोप । चोपिता । चुचुपिषति । चुचोपिषषि । चुपित्वा । चोपित्वा । 'रलो व्युपधादि'ति कित्त्वविकल्पः । चोचुप्यते । चोचुपीति । चोचोप्ति । चोपयति । अचूचुपत् । चोपनः । चलनार्थत्वाद् युच् । णौ नित्यं परस्मैपदम् । गले चोप्यते गलेचोपकः । 'कृत्यल्युटो बहुलमि'ति बहुलवचनाद् ण्यन्तादस्मात्कर्मणि ण्वुल् । 'कर्तृकरणे कृता बहुलमि'ति बहुलवचनात् सप्तम्यन्तस्यापि समासः । 'तत्पुरुषे कृति बहुलमि'ति अलुक्, 'अमूर्द्धमस्तकात्स्वाङ्गादकामे' इति वा, उदुपधाद्भावादिकर्मणोर्निष्ठायां वा कित्त्वे चुपितमनेन । चोपितमनेनेत्यादि । चुप्रम् । ऋज्रेन्द्रादौ रक्ि निपातितः । 'स्वरेण नीचेन शपिच्छुपिं छिपिमि'त्यनिट्कारिकापाठो द्वितीयादेरिति तत्र तौदादिकस्य छुप सम्पर्शनइत्यस्यैव ग्रहणं न त्वस्य ॥ ४०० ॥

तुप तुम्प त्रुप त्रुम्प तुफ तुम्फ त्रुफ त्रुम्फ हिंसार्थाः ॥ तोपतीत्यादि चुपिवत् । तुम्पति । तुतुम्पतुः । सयोगान्तत्वाल्लिटो न कित्त्वम् । तुम्पिता । तुम्पिष्यति । तुम्पतु । अतुम्पत् । तुप्यात् । 'किदाशिषी'ति कित्त्वा दनिदितामि'ति नलोपः । अतुम्पीत् । अतुम्पिष्यत् । तुतुम्पिषति । तोतुप्यते । तोतुम्पीति । तोतुम्प्ति । तोतुप्तः । तुम्पयति । अतुतुम्पत् । प्रस्तुम्पति गौः । प्रात्तुम्पतौ गवि कर्त्तरीति सुट् । तुम्पतेस्तुम्पनाविति धातुनिर्द्देशो न तिङन्तानुकारणमिति प्रस्तुम्पः प्रस्तुम्पक इत्यादावपि भवति, प्रतोतुम्पीतीत्यादावत एव श्तिपा निर्देशाद भव-

ति । त्रोपति । त्रुम्पति । त्रोफति, तुम्फति । त्रोफति । त्रुम्फतीत्यादि तुपितुम्फिवत् । तत्रारेफसरेफयोः सानुषङ्गपद्वितीयान्तयोः सेट्त्वाद् 'नोपधात्थफान्ताद्वे'ति कित्त्वविकल्पनात् पक्षे नलोपे त्रुपित्वा । त्रुम्पित्वा । त्रुफित्वा । त्रुम्फित्वा इति भवति । अरेफाश्चत्वारस्तुदादावपि । आद्यस्तु चुरादावपि । तत्र त्वर्दनमर्थः ॥ ४०८ ॥

पर्प रफ रफि अर्ब पर्ब लर्ब बर्ब मर्ब कर्ब खर्ब गर्ब शर्ब षर्ब चर्ब गतौ ॥ आद्यः प्रथमान्तः । परौ द्वावपि द्वितीयान्तौ । एकादश परे तृतीयान्ताः । द्वितीयतृतीयौ मुक्त्वा सर्वे रोपधाः । पर्पति । पपर्प । पर्पितेत्यादि । पर्प्यतेऽनेनेति पर्पः, येन पीठेन पङ्गवश्चरन्ति स उच्यते । 'हलश्चे'ति घञ् । पर्पेण चरति, पर्पिकः । 'पर्पादिभ्यष्ठनि'ति तृतीयान्ताच्चरत्यर्थे ष्ठन् । षित्त्वात् स्त्रियां पर्पिकी । रफति । अर्बति । आनर्ब । अर्बिता । पर्बति । लर्बति । बर्बति । मर्बति । कर्बति । खर्बति । गर्बति । शर्बति । सर्बति । असिषर्बत् । चर्बति । अर्बादयो नोपधा इति कौशिकः ॥ ४२२ ॥

कुबि छादने ॥ कुम्बतीत्यादि । कुम्बा । गुरुमत्त्वादकारः । 'चिन्तिपूजिकथिकुम्बिचर्चश्चे'त्यङ्विधौ चौरादिकस्य ग्रहणम् ॥ ४२३ ॥

लुबि तुबि अर्दने ॥ लुम्बति । तुम्बतीत्यादि । तुम्बी अलाबूः । गौरादित्वान् ङीष् ॥ ४२५ ॥

चुबि वक्त्रसंयोगे ॥ चुम्बतीत्यादि । लुम्ब्यादयस्त्रयश्चुरादौ ॥ ४२६ ॥

षृभु षृम्भु हिंसार्थौ ॥ अत्र मैत्रेय एव पठित्वा षिभु षिम्भु इत्येकइति ऋकारस्य स्थाने इकारमप्याह । तरङ्गिण्या तु ऋकारवन्तौ दन्त्यादौ पठित्वा षोपदेशपर्युदासे स्रग्रहणेनानर्थकस्यापि ग्रहणमित्युक्तम् । सर्भति । ससर्भ । सर्भितेत्यादि । सिषर्भिषति । मैत्रेयपाठे 'स्तौतिण्योरेवे'त्यषत्वम् । सरीसृभ्यते । सरीसृभीति । सरिसृभीति । सर्सृभीति । सरीसृब्धि । सरिसृब्धि । सर्सृब्धि । सर्भयति । अससर्भत् । असीसृभत् । उर्त्सृद्वा । सिषर्भिषति । तरङ्गिणीमते तु षत्वं न भवति ।

वाणिज्यमिति 'दूतादिभ्यश्चे'त्यणन्ताद् वाणिजशब्दात् 'गुणवचनब्राह्मणादिभ्यः कर्मणि चे'ति ब्राह्मणादेराकृतिगणत्वात् ष्यञ् । कर्मणि चेति चकारेण भावः समुच्चीयते । विविधमत्र पणन्तइति विपणिः । इनिर्नात् । पणमम् । पणपर्याय· । 'अत्यविचमितमिनमिरभिलभिनभितपिपनिपनिपणिमहिभ्योऽसज्' इत्यमच् । 'गुपूधूपे'त्यायो व्यवहारार्थस्य नेत्युक्तान्युदाहरणानि तद्विपर्याणि । तथा च वृत्ति, स्तुत्यर्थेन पनिना साहचर्यात्तदर्थः पणिः प्रत्ययमुत्पादयतीति । एव न्यासपदमञ्जर्यादिष्वपि । अत एव नरङ्गिण्यामपि । न चोपलेभे वणिजा पणाया इति प्रयुञ्जानो भट्टिर्भ्रान्त इत्युक्तम् । पणायति राजानम् । पणायां चकार । पणायितेत्यादि । आर्द्धधातुकविवक्षायामायानुत्पत्तौ उक्तान्येवोदाहरणानि । गुप्यादिवदायोत्पत्तिविकल्पस्य प्रयोजन पणइत्यादिसिद्धिः । पणा चकारेत्यादिनिवृत्तिश्च । निवृत्तिविकल्पे हि प्रत्ययलक्षणेन प्रत्ययान्तादाम् स्यात् । एवमन्यत्रापि प्रयोजनानि गुपिवद्बोध्यानि । अत्र स्वामिकाश्यपसमतात्कारवासुदेवादयः पणायतइत्यायान्तादात्मनेपदमुदाहरन्ति । तदसत् । यदस्यानुदात्तत्व व्यवहारार्थस्यायाभावात् स्तुत्यर्थस्यार्द्धधातुकआयविकल्पनात् प्रकृतावेव चरितार्थम् । अवयवे चाचरितार्थं लिङ्गं समुदायस्य विशेषक यथा जुगुप्सतइति, स्पष्ट चैव 'गुपूधूपे'त्यत्र न्यासपदमञ्जर्यादिषु । अत्र मैत्रेन्द्रन्यासे पणते. सार्वधातुकेऽप्यायो विकल्प उक्तः । तथा सुधाकरकाश्यपनरङ्गिणीकाराश्च विच्छेस्तुदादिपाठाल्लिङ्गात् सार्वधातुके ऽपि विकल्पमाहुः । नित्ये ह्याये विच्छायतीति शपापि सिद्ध्यतीति किं तत्र पाठेन, न चास्ति स्वरभेदः । शे कृते प्रत्ययस्वरेण तस्योदात्तत्वे धातुर्वर्ज्यमानस्वरेणानुदात्तः, शपि तु अस्य पित्त्वेनानुदात्तत्वात् धातोरन्त इति धातुरन्तोदात्तः । तत्र 'एकादेश उदात्तेनोदात्त' इत्युभयथापि विकरणान्तस्योदात्तत्वात् । अनेनैवाभिप्रायेण च्छ्वोः शूडि'त्यत्र न्यासे गा विच्छति गोविडित्युक्तम् । नैतत्साधु । विच्छायती विच्छायन्ती, 'आच्छीनद्यो'रिति नुम्विकल्पस्य प्रयोजनस्य संभवात् । शपि तु 'शप्श्यनोर्नित्य'मिति नित्यो नुम् स्यात् । 'गुपूधूपवि-

च्छी'त्यत्र कैयटपदमञ्जर्यादिष्वप्येवमेव स्थितम् । विच्छ गतावित्यत्रा-त्रेयमैत्रेयावप्येवमेवाहतुः । तथा देवोऽपि विच्छेरपि शतुर्वा नुम् स्यादिति तुदादित्वेति । अत्र पुरुषकारे तुदादौ विच्छिः पठ्यते, न तु विच्छाय-तिरिति विच्छेरेवानन्तरेण शेन भाव्यम् । स चैव भवन्नायविकल्पस्य कल्पकः स्यादेव । अत्रैवा'यादय आर्द्धधातुके वे'त्यत्र न्यासान्तरम्, आयादयः शपि नित्यमिति भाष्ये चानुक्तम् । नित्ये विच्छेराये शब्ग्र-हणं शित उपलक्षणमिति कल्प्यं स्यादिति सुधाकराद्युक्तमेव समर्थितं, नाय भाष्यस्यार्थः । तत्र हि परसप्तमीत्वमाश्रित्य सूत्रं दूषयित्वा तत्प-रिहाराय सार्वधातुके नित्यमित्यभिहितम् । तत्राप्यायेनानवकाशेन विक-रणाना बाधदोषमुद्भाव्य तत्परिहारायैव यथा पुनरयं सूत्रभेदेन परि-हारः, यदि पुनः शपि नित्यमित्युच्यते सिध्यतीत्युक्त, तेनापि न्यासेन सार्वधातुके नित्यमित्यनेन समानफलेन भाव्यं, तच्च शब्ग्रहणस्य शित उपलक्षत्वएव युज्यते, अतश्चोपलक्षणत्वमेष्टव्यम् । तत्तत्र यथा-न्यासमेवास्तु इति सूत्रमेव विषयसप्तम्याश्रयणेन सिद्धान्तितम् । अत एव च तत्र कैयटेन तौदादिकाद्विच्छेः शेन भाव्यं न तु शपा, एवं तर्हि न्यासभेदोपलक्षणार्थमिदं शिति नित्यमिति न्यासः कर्त्तव्य इत्युक्तम् । यदप्युक्तं पुरुषकारे 'तुदादिभ्यः श' इति हि शो विधीयते न तु विच्छा-येः, विच्छेरेव तुदादिषु पाठात्तच्चैतद्विच्छेः शविधानमाये नित्ये सति आयान्ताद्भावात्परिक्षिश्यतइति, तदपि सूत्रस्वभावादाये नित्ये सति गुणादिष्वनुबन्धकरणवत् विच्छेः पाठोऽपि समुदायार्थतया युज्यतइति न संकटम् । तथा च हरदत्तः । विच्छिरयं तुदादौ पठ्यते तत्सामर्थ्या-दायप्रत्ययान्तादपि शविकरणो भवति न तु शप्, यथा जुगुप्सते इत्या-त्मनेपदं, तेन विच्छायती विच्छायन्तीति 'आच्छीनद्यो'रिति नुम्विकल्पो भवतीति । पनायतीत्यादि । पणिवत् । पनसः । 'अत्यमी'त्यादिना असच् ॥ ४३६ ॥

भाम क्रोधे । भामते । बभामे । भामितेत्यादि । बिभामिषति । बाभान्ति । बाभान्मि । बाभान्वः । बाभान्मः । 'नुगत' इति तपरक-

रत्वात् यङ्लुकोरभ्यासस्य न नुगागमः । 'म्वोश्च'ेति मकारान्तस्य धातोर्नकारादेशो भवति मकारवकारयोः परत इति मकारस्य नकारः । लुङि ग्रबाभात् । 'मो नो धातो' रिति नकारः पदस्येति शेषः । एवं क्विपि भान् । भामः क्रोधः सोऽस्यास्तीति भामिनी । देवदत्ताय भामतइत्यत्र 'क्रुधद्रुहेर्ष्यासूयार्थाना यं प्रति कोप'इति कोपविषयत्वेन देवदत्तस्य सम्प्रदानत्वम् । अमर्षः क्रोधः । अपकारो द्रोहः । अक्षमा ईर्ष्या । गुणेषु दोषाविष्करणमसूया ॥ ४३७ ॥

क्षमूष् सहने ॥ क्षमते । चक्षमे । चक्षमिषे । चक्षसे । चक्षमिध्वे । चक्षन्ध्वे । चक्षमिवहे । चक्षण्वहे । चक्षमिमहे । चक्षण्महे । ऊदित्त्वात्सर्वत्र वलाद्यार्द्धधातुकइड्विकल्पः । अनिट्पक्षे 'म्वोश्चे'ति नत्वे 'रषाभ्या'मिति णत्व, क्षमिष्यते । क्षस्यते । क्षमताम् । अक्षमत । क्षमेत । आशिषि । क्षमिषीष्ट । क्षमीष्ट । अक्षमिष्ट । अक्षस्त । अक्षमिष्यत् । अक्षस्यत् । कर्मादौ क्षम्यते । अक्षमि । 'नोदात्तोपदेशस्य मान्तस्यानाचमे'रिति चिणि ञ्णिति कृति च वृद्धिनिषेधः । चिक्षमिषते । चिक्षमते । चङ्क्षम्यते । चङ्क्षमीति । चङ्क्षन्ति । 'नुगत' इत्यभ्यासस्य नुक् । लुङि 'ह्म्यन्ते'ति वृद्धिनिषेधात् अचङ्क्षमीत् । क्षमयति । अचिक्षमत् । 'जनीजॄष्क्नसुरञ्जोमन्ताश्चे'ति अमन्तत्वलक्षणे मित्त्वे 'मितां ह्रस्व'इत्युपधाया ह्रस्वः । क्षमित्वा । क्षान्तः । क्षान्त्वा । 'यस्य विभाषे'त्यनिट्त्वम् । क्षमः । घञ् । क्षमकः । ण्वुल् । अपराधक्षमः । अपराधक्षमा । 'ईक्षिक्षमिभ्यां चे'त्यणोपवादो णः । अणि हि ङीप्स्यात् । क्षमा । 'षिद्भिदादिभ्योऽङ्'ित षित्त्वात् स्त्रियामङ्, ण्यन्तस्यास्य 'चिण्णमुलोर्दीर्घोऽन्यतरस्या'मिति चिण्णमुल्परे णौ मितामुपधाया दीर्घविकल्पनात् अक्षमि । अक्षामि । क्षमंक्षमम् क्षामंक्षाममिति भवति । 'आभीक्ष्ण्ये णमुल् च' । अस्मिन् गम्यमाने समानकर्तृकत्वे पूर्वकाले च णमुलिति णमुल् । चकारः क्त्वासमुच्चयार्थः । आभीक्ष्ण्ये द्वे भवत इति द्विर्वचनम् । पौनःपुन्यमाभीक्ष्ण्यम् । स्यादिष्वपि दीर्घविकल्पः चिण्वदिट्पक्षे भवति । क्षामिष्यते । क्षमिष्यते । अक्षामिषाताम् । अक्षमिषाताम् । क्षामिषीष्ट ।

क्षमिषीष्ट। क्षमिता। क्षमितेत्यादि। णिच्वदिटोभावे क्षमयिष्यते। अक्षमिषाताम्। क्षमयिषीष्ट। क्षमयितेति। लुङ्येकवचने चिण्परो णिरिति पक्षे दीर्घो भवति। अक्षमि, अक्षामीति। यङ्लुगन्तादपि चिण्णमुलोश्चिण्वदिटि च अयं दीर्घविकल्पो द्रष्टव्यः। अचङ्क्षामि। अचङ्क्षमि। चङ्क्षामंचङ्क्षामम्। चङ्क्षमंचङ्क्षम्। चङ्क्षामिष्यते। चङ्क्षमिष्यते इत्यादि। अत्राप्यचिण्वत्पक्षे चङ्क्षमिष्यतइत्यादि। अत्र 'चिण्णमुलोरन्यतरस्या'मिति ह्रस्वविकल्पेनापि सिद्धे दीर्घग्रहणं ण्यन्तात्प्रङन्ताच्च णौ चिण्णमुल्परे दीर्घतार्थम्, अक्रियमाणेऽस्मिन् णिलोपाल्लोपयोः परनिमित्तयोः पूर्वस्य ह्रस्वविकल्पे कर्त्तव्ये स्थानिवत्त्वाच्च चिण्णमुल्परे णौ मिदङ्गमनन्तरमित्यसौ न स्यात्, क्रियमाणे तु दीर्घविधिं प्रति न स्थानिवदिति स्थानिवत्त्वं निषिद्ध्यते। नन्वेवमपि दीर्घे कर्तव्ये ण्यल्लोपयो'रसिद्धवदत्रे'त्यसिद्धत्वात् व्यवधानं दुर्वारम्। नैतत्। व्याश्रयत्वेनासिद्धत्वाभावात्, तथा च वामनः, णौ हि णियङोर्लोपः, चिण्णमुल्परे णावङ्गस्येति दीर्घत्वमिति। अयमपि दिवादौ ॥ ४३८ ॥

कमु कान्तौ ॥ 'कमेर्णिङि'ति स्वार्थे णिङ्, अयमार्द्धधातुके विकल्पेनोत्पद्यते। अत्राप्युत्पत्तिविकल्पस्य प्रयोजनं गुपिवद् द्रष्टव्यम्। कामयतेर्ङित्त्वात्तङ्, कामयाञ्चक्रे। कामयिता कामयिष्यते। कामयताम्। अकामयत। कामयेत। आशिषि कामयिषीष्ट। अचीकमत। णिग्रहणेष्वयमपि गृह्यतइति 'णिश्रीति' कर्तरि चङ्। 'णेरनिटी'ति णिलोपे 'णौ चङी'ति ह्रस्वः। चिकामयिषते। कामयति। णिङन्तादणौ 'णेरनिटी'ति लोप। कामयित्वा। कामना। 'ण्यासश्रन्थे'ति युच्। मांसकामः। मांसकामा। 'शीलिकामिभिक्षिचरिभ्यो णः' इति अणो ऽपवादो णः। अणि हि सति स्त्रिया ङीप्स्यात्। णिङभावे चकमे। कमिता। कमिष्यते। कमिषीष्ट। अचकमत। 'कमेरुपसंख्यान'मिति कर्तरि चङ्। अकमिष्यत। चिकमिषते। चङ्कम्यते। अत्र यङ्लुङ् नेति गुपू रक्षणइत्यत्र स्थापितं तत एवागन्तव्यम्। कामयति। 'न कम्यमिचमा'मिति, मित्त्वनिषेधाद् वृद्धिः। 'चिण्णमुलो'रिति दीर्घविकल्पो मिद्धि-

स्यानुकम्पमुन्त्वयार्थत्वात् घः । कणिका । 'संज्ञायां कनि प्रत्ययस्यादि'तीत्वम् । कण्ठः । कणिष्ठः । बाहुलकात् ठस्येकाभावः । अथ निमीलनार्थश्चुरादौ । क्वणति । चक्वाण । क्वणितेत्यादि । क्वाणः । क्वणः । निक्वाणः निक्वणः । कल्याणप्रक्वणा वीणा । कल्याणप्रक्वाणेति वा । 'क्वणो वीणायां च' । अनुपसृष्टान्निपूर्वात् वीणाविषयाच्च क्वणतेः ऽप्प्रत्ययः । सोपसर्गार्थं वीणाग्रहणम् । कुणालो धान्यं यज्ञोपकरणं च । 'पीयुक्वणिभ्यां कालन् ह्रस्वः सम्प्रसारणं चे'ति कालन्प्रत्ययः यथासंख्यात्सम्प्रसारणं च । कुणपम् । 'क्वणः सम्प्रसारणं च' इति पन्प्रत्ययः सम्प्रसारणं च । कङ्कणीका । प्रतिसरः । 'चङ्क्वणेः कङ्कणश्चे'ति यङ्लुगन्तादीकन्प्रत्ययः कङ्कणादेशश्च । व्रणति । वव्राण । व्रणितेत्यादि । अयं बशादिः क्वचित्पठ्यते । दन्तोष्ठ्यादिरेव सर्वत्र, तथा च यादवः, व्रणशब्दार्थविषये, व्रणगात्रचूर्णनइति गात्रचूर्णनार्थोऽयं कथादिः । भ्रणति । बभ्राण । भ्रणिता । ध्वणति । दध्वाण । ध्वणितेत्यादि । ध्रणिरपि संमतायामत्र पठ्यते ॥ ४४९ ॥

ओणृ अपनयने ॥ ओणति । प्रोणति । ओणां चकार । ओणिता । ओणिणिषति । ओणयति । मा भवानौणिणत् । ऋदित्त्वाच्चोपधाह्रस्वः । इदमेव ऋदित्त्वं द्विर्वचनात् पूर्वमुपधाह्रस्वत्वे ज्ञापकमित्युक्तम् । अवावा । 'अन्येभ्योऽपि दृश्यत'इति वनिपि 'विड्वनोरनुनासिकस्यात्' इति णकारस्याकारे ऽवादेशे 'सर्वनामस्थान'इत्युपधादीर्घे नलोपः । स्त्रियामवावरी । 'वनो र चे'ति वन्नन्तप्रातिपदिकत्वान् ङीब्रौ । 'वनो न हशः' । हशन्ताद्यो वन् विहितस्तदन्तान् ङीब्रौ नेत्ययं प्रतिषेधः प्रायिकत्वादत्र नेति न्यासादौ ॥ ४५० ॥

शोणृ वर्णगत्योः ॥ शोणति । शुशोण । शोणिता । शुशोणिषति । शोशोण्यते । शोशोण्टि । शोणयति । अशुशोणत् । शोणितम् । शोणः । शोणी । शोणा । 'शोणात्प्राचामि'ति वा ङीप् ॥ ४५१ ॥

श्रोणृ संघाते ॥ श्रोणतीत्यादि । श्रोणिः । इन्प्रत्ययः । श्रोणी । कृदिकारत्वाद्वा ङीष् । श्रोणा । नक्षत्रम् । अजन्ताट्टाप् ॥ ४५२ ॥.

श्लोणृ च ॥ श्लोणतीत्यादि । शोणादयः तालव्योष्मादयः ॥ ४५३ ॥

पैणृ गतिप्रेरणश्लेषणेषु ॥ लेणृ इति क्वचित्पठ्यते । पैणतीत्यादि ॥ ४५४ ॥

ध्रण शब्दे ॥ उपदेशे नान्तोयमिति प्रागस्य निर्देशो न कृतः । तस्य प्रयोजनं यङ्लुकीति मैत्रेय', अतोस्य दण्डके पाठः प्रत्युक्तः । ध्रणतीत्यादि । 'रषाभ्या'मिति णत्वम् । यङ्लुकि दन्ध्रन्ति दन्ध्रान्त इत्यादौ णत्वस्य 'नश्चापदान्तस्ये'त्यनुस्वारे ऽसिद्धत्वात् कृते तस्मिन्परसवर्णे., तस्यासिद्धत्वात् पुनर्णत्व न भवति । अभ्यासस्य 'नुगत' इति नुक् । अस्मादनन्तर क्वचित् कोशे बण भण धण इति त्रयः पठ्यन्ते, तत्र भणिर्मैत्रेयानुसारेण दण्डके पठितः । धणिरपि समतायामिति तत्रैवोक्तम् । बणति । बणः । उद्गुण इत्यच् ॥ ४५५ ॥

कनी दीप्तिकान्तिगतिषु ॥ कनति । चकान । कनितेत्यादि । कन्या । कन्याया अपत्य कानीनः । 'कन्यायाः कनीन चे'ति अण् कनीनादेशश्च । अत एव निर्देशाद्यत्, स्वरितान्तत्व तु 'तित्यशिक्यमर्त्यकाश्मर्यधान्यकन्याराजन्यमनुष्याणामन्त' इति, अन्यथा 'यतोनाव' इति यदन्तस्य द्व्यचो विधीयमान आद्युदात्तः स्यात् । कनकम् 'कुन् शिल्पिसंज्ञयो'रिति कुन् ॥ ४५६ ॥

ष्टन वन शब्दे ॥ स्तनति । तस्तान । स्तनितेत्यादि । तिस्तनिषति । तंस्तन्यते । तंस्तनीति । तंस्तन्ति । ध्वनतिवत्प्रक्रिया । स्तनयति । अतिष्टनत् । अभिनिष्टानः । विसर्जनीयः । 'अभिनिसः स्तनः शब्दसंज्ञाया'मि'ति षत्वम्, अन्यत्राभिनिस्तनति मृदङ्गः । अत्र न्यासे सकारादिरय पठितः । तदस्य पोपदेशपर्युदासवाक्ये उपादानान्निर्मूलम् । अत एव पुरुषकारे मूर्द्धन्यादिरेवायं दर्शितः । स्तान्यम् । ण्यत् । स्तनः । अच् । स्तन्यम् । 'शरीरावयवाद्यत्' इति भवार्थे यत् । स्तनितम् । स्तनयतीति देवशब्दार्थस्य कथादिपठितस्य । वनति । ववान । ववनतुः । वनितेत्यादि । वनितम् । वनित्वा । वतिः । क्तिनि 'तितुत्रे'तीण्निषेधा'दनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति' इत्यनुनासिकलोपे

वतिरिति भवति। अनुदात्तोपदेशा यमिरमिनमिहनिगमिमन्यतयः। प्रवत्य। 'आ ल्यपी'त्यनुदात्तोपदेशादीनां विधीयमानोऽयमनुनासिकलोपविकल्पो व्यवस्थितविभाषाविज्ञानात् नान्तेषु नित्यः, अन्यत्र विकल्प इतीह नित्यः। वन्तिः। क्तिच् 'न क्तिचि दीर्घश्चे'ति दीर्घानुनासिकलोपयोर्निषेधः। 'अनुदात्तोपदेशवनती'तिश्तिपा निर्देशात् ववान्त इत्यादावनुनासिकलोपो न भवति। वनोतिनिवृत्त्यर्थं तु श्तिपा निर्देशो न भवति तनोत्यादित्वेन तस्यानुनासिकलोपस्येष्टत्वात्। वनिष्ठः। अपान मांसविशेषश्च। क्तन्यादिवनितन्यादिनेट्च्। वनम्। अच्। वनानां समूहो वन्या। 'पाशादिभ्यो य'इति समूहे यः। तदेतत्स्वभावात् स्त्रीलिङ्गम्। वन्यम्। दिगादित्वाद्भवार्थे यत्। वानेयम्। पूर्वनगरीति नद्यादित्वात् ढक् शैषिकः। वनिः। वनी। 'कृदिकारादक्तिन'इति वा ङीष् ॥ ४५८ ॥

वन षण सम्भक्तौ ॥ वनेरर्थभेदात्पुनः पाठ इति मैत्रेयः। तथैवोदाहरणानि। सनति। ससान। सेनतुः। सनितेत्यादि। सायात्। सन्यात्। 'क्रिडाशिर्यतीति' क्रित्वात्। 'ये विभाषा'जनसनखनां यकारादौ क्ङित्यात्वं वेति तद्विकल्पः। एवं यङ्यङ्लोरपि। धातुपारायणे तु 'लोपो यी'तिवद्वर्णमात्रे निर्देशाद्य इत्यत्वतो निर्देशाद्यासुट्यात्वं नेत्युक्तम्। सिसनिषति। सिषासति। 'सनीवन्तर्धभ्रस्जदम्भुश्रिस्वृयूर्णुभरज्ञपिसनां'मितीड्विकल्पः। इडभावे'जनसनखनां सञ्झलो'रिति झलादौ सनि क्ङिति विधीयमानमात्वं भवति। सासायते। संसन्यते। 'ये विभाषे'त्यात्वम्। इदं च क्ङित्येवेति ण्यति न भवति सान्यमिति। संसनीति। ससन्ति। ससातः। प्रकृतिग्रहणन्यायेन 'जनसने'त्यात्वे 'अनुनासिकस्ये'तिदीर्घं परत्वाद् बाधित्वा ऽत्रापि भवति। सातिः। सातः। सातवान्। आत्वसूत्रे च झलादिसन् जनखनोर्न सम्भवतीति सनोतेरेव विशेषणमिति वदता वृत्तिकारेण सनोतेः 'सनीवन्ते'ति पक्षइडागमः, तदिह सनोत्यर्थमेव सन्ग्रहणमित्यभिधानादिड्विधावात्वे च तानादिकस्यैव ग्रहणमिति च प्रतीयते। अन्ये तु पुनरुभयत्रोभयोर्ग्रहणमाहुः। एवं वृत्तौ सनोतेरित्युपादानं तस्यानुनासिकलोपादात्वं विप्रतिषेधेनेति वक्ष्यामीत्येवमर्थं मन्तव्यम्। सानुः। 'दृस-

निजनिर्चरिचटिभ्यो उणि'ति उणप्रत्ययः। वनु याने, षणु दानइति इय तनादौ ॥ ४६० ॥

अम गत्यादिषु ॥ कनी दीप्तिगतीत्यत्र गतेः परयोः शब्दसभक्त्योरादिशब्देन ग्रहः। अमति। आम। आमतुः। अमितेत्यादि। अमिमिषति। आमयतीत्यत्र 'न कम्यमिचमा'मिति मित्त्वनिषेधा'न्मितां ह्रस्व' इति ह्रस्वाभावः। अम्यम्। अमितवान्। 'पोरदुपधादि'ति यत्। अमित्त्वात् निष्ठाया 'ह्रुष्यमत्वरसघुषास्वना'मितीड्विकल्पनात् अमितः। आन्तः। अमितवान्, आन्तवान् इति भवति। इडभावे 'अनुनासिकस्य क्विझलोः क्ङिती'ति दीर्घे क्विपि पूर्ववत्। दीर्घे 'मो नो धातो'रिति नत्वे आनिति भवति। नलोपस्तु न भवति असिद्धत्वादिति प्रागेवोक्तम्। अमः। घञि 'नोदात्तोपदेश' इति वृद्धिनिषेधः। अत एव चिण्यपि णयन्तात् 'न कम्यमी'ति मित्त्वनिषेधात्। णयपेक्षया वृद्धौ मा भवान् आमीति भवति। आमय इत्यम रोगइति चौरादिकस्य। अमत्रम्। 'अमिनक्षियजिवधिपतिभ्यो ऽत्रनि'त्यत्रन्। अमित्र। 'अमेर्द्विषि चित्त्वे'तीत्रप्रत्ययः। आम्रः। 'अमितम्योर्दीर्घश्चे'ति रप्रत्यये दीर्घ। आन्त्रम्। 'अत्यमिचमिशसिभ्यः क्तनि'ति क्तन् ॥ ४६१ ॥

द्रम हम्म मीमृ गतौ ॥ द्रमति। दद्राम। द्रमितेत्यादि। लुङि 'ह्म्यन्ते'ति वृद्धिनिषेधात् अद्रमीत्। दिद्रमिषति। दन्द्रम्यते। दन्द्रमीति। दन्द्रन्ति। दन्द्रान्त इत्यादि। उत्तमे'म्वोश्चेति' नत्वे णत्वम्। दन्द्रण्मीत्यादि। अदन्द्रवित्यत्र तिप्सिपोर्हल्ङ्यादिलोपे 'मो नो धातो' रिति नत्वे 'पदान्तस्ये'ति णत्व न भवति। द्रमयति। अदिद्रमत्। अमन्तत्वान्मित्त्वम्। अद्रमि। अद्रामि। द्रमंद्रमम्। द्रामंद्रामम्। 'चिण्णमुलो'रिति दीर्घविकल्पः। स्यादिषु चिण्वदिट्पक्षे दीर्घविकल्पे णिलोपे च द्रमिष्यते द्रामिष्यतइत्यादि। शुद्धे पुनरिटि णेर्गुणायादेशयोर्द्रमयिष्यतइत्यादि। अणयन्तात् चिणि 'नोदात्तोपदेशे'ति वृद्धिनिषेधात् अद्रमीत्येवेति। एवं णिति क्तति च द्रमः द्रमक इत्यादि। दन्द्रमणः। 'जुचङ्क्रम्ये'त्यादिना तच्छीलादौ यङन्तादस्माद्युचि अल्लोपयलोपौ। द्रमिडः। 'जमन्ताड्ड'

इति इः । 'नेड्वशि कृती'ति निषेधो बाहुलकान्न भवति । हम्मति । जहम्म । हम्मितेत्यादि । जिहम्मिषति । जेहम्म्यते । जहम्मीति । जंहन्ति जहन्त इत्यादावनुपधात्वाच्चोपधादीर्घः । लङि हल्ङ्यादिसंयोगान्तलोपयो'र्मो नो धातो'रिति नत्वे अजहन् । हम्मयति । अजहम्मत् । हम्मित्वा । हम्मितः । ज्ञान, गत्यर्था बुद्ध्यर्थः, न हम्मितः अहम्मितः अज्ञानम् । यद्वा अहमिति मतिः । अहशब्दो मान्तोऽहङ्कारवचनोऽयम् । मीमति । मिमीम । मिमीमतु । मीमितेत्यादि । मिमीमिषति । मेमीम्यते । मेमीमीति । मेमीन्त इत्यादि । लङि अमेमीन् । मीमयति । अमिमीमत् । मीमित्वा । मीमितः । अयं शब्दे चेति क्वचित्पठ्यते ॥ ४६४ ॥

चमु छमु जमु झमु अदने ॥ चमति । चचाम । चेमतुः । चमितेत्यादि । आङ्पूर्वत्वे 'ष्ठिवुक्लमुचमां शिती'ति दीर्घः । आचामति । आचामतु । आचामत् । आचामि । आचामयति । चिण्णि ञिति णिति कृति च 'नोदात्तोपदेश'ेति वृद्धिनिषेधात् अचमि । चमः । चमक इत्यादि । अत्रापि अनाचमीति वचनाद् आचामि आचाम इति वृद्धिरेव । ननु वार्त्तिके अचमिकमिवमीनामिति केवलस्योपादानात् सर्वत्र वृद्ध्या भाव्यम् । नैतत् । यत इदं वार्त्तिकं धात्वन्तरमपि पर्युदसनीयं न केवलं सूत्रोपात्त इत्येवं परम् । तथा च भाष्ये अध्यगीष्ट । अन्यल्पमिदमुच्यते अनाचमेरिति । अत एव न्यामश्चमेस्तावत् अनाचमेरिति सूत्रएवोपादानात् प्रतिषेधदर्शनं । तथा वर्द्धमानेऽपि उपसर्गोपादानात् अचमि, पर्यचमीति । अपि च वृत्तावपि वार्त्तिकस्योदाहरणमाङ्पूर्वमेव दर्शितम् । चिचमिषति । चञ्चम्यते । चञ्चन्ति । चञ्चान्त इत्यादि । अत्रापि प्रकृतिवदाङः पूर्वत्वे चिण्णि ञिति णिति कृति वृद्धिः, अन्यत्र तदभावश्च । चामयति । 'न कम्यमिचमा'मिति मित्त्वनिषेधः । चम्यतेऽनेनेति चमसः । 'अत्यविचमी'त्यसच् । चमूः । 'कृषिचमितनिधनिसर्जिभ्य ऊ'रित्यूकारप्रत्ययः । छमति । चच्छाम । छमितेत्यादि । चिच्छमिषति । चञ्छम्यते । चञ्छमीति । चञ्छन्ति । चञ्छान्त इत्यादि । छमयति । अमन्तत्वान्मित्त्वम् । चिण्णमुल्परे णौ 'चिण्णमुलोर्दीर्घोऽन्यतरस्या'मिति

वा दीर्घः । अचमि । अचामि, चमंचमम् । चामचाममिति । चिण्वदिटि वृद्धेर्भावाभावाभ्यां, णिलोपे चमिष्यते, चामिष्यते इत्यादि । शुद्धे पुनरिटि गुणाययोः चमयिष्यतइत्यादि । णिचोभावे चिणि ञिति णिति कृति च 'नोदात्तोपदेशस्ये'ति वृद्धिनिषेधात् अचमि इत्यादिरेव भवति । जमति । जजाम । जेमतुः । जमिता । झमति । जझाम । झमितेत्यादि पूर्ववत् । अत्र मैत्रेयः । जिमि के चिदिच्छन्ति, जेमनमिति । एषामुदित्त्वात्क्त्वायामिड्विकल्पे चमित्वा । चान्त्वेत्यादि भवति । निष्ठायां 'यस्य विभाषे'त्यनिट्त्वाच्चान्त इत्यादि । अनिटि । 'अनुनासिकस्य क्विझलोः क्ङिती'ति दीर्घ ॥ ४६८ ॥

क्रमु पादविक्षेपे ॥ क्रामति । चक्राम । चक्रमतुः । क्रमिता । क्रमिष्यति । क्रामतु । अक्रामत् । क्रामेत् । आशिषि । क्रम्यात् । अक्रमीत् । 'ह्म्यन्ते'ति वृद्धिनिषेधः । अक्रमिष्यत् । 'क्रमः परस्मैपदेष्वि'ति परस्मैपदे शिति दीर्घः । क्रामेत्यत्र हेर्लुकि प्रत्ययलक्षणेन परस्मैपदपरशित्परत्वेन दीर्घः । न च 'न लुमते'ति निषेधः । तस्य लुमता लुप्तप्रत्ययनिमित्ताङ्गसंज्ञाविषयत्वात् । इह च हौ विकरणान्तमङ्गं क्रमस्तु विकरणे, विकरणश्च नित्यत्वात् पूर्वमत्र भवति । 'वा भ्राशभ्लाशभ्रमुक्रमुक्लमुत्रसित्रुटिलष' इति शब्विषये पक्षे श्यनो विधानात् क्राम्यति, क्राम्यतु, अक्राम्यत् । क्राम्येदित्यपि भवति । पूर्ववद्दीर्घः । चिक्रमिषति । चङ्क्रम्यते । चङ्क्रमीति । चङ्क्रन्ति । इत्यादि । क्रमयति । अचिक्रमत् । 'मितां ह्रस्व'इत्यत्र वृत्तिः । के चिदत्र वेत्यनुवर्त्तयन्ति सा च व्यवस्थितविभाषा, तेन संक्रामयतीत्येवमादि सिद्धं भवति, अविगीतस्तु संक्रमयतीत्ति, अत्रैव रसातले संक्रमितेत्यादिप्रयोगोनुकूलः । क्रमते । चक्रमे । क्रन्ता । क्रंस्यते । अक्रमत । क्रमेत, क्रंसीष्ट । अक्रस्त । अक्रस्यत । 'अनुपसर्गाद्वे'ति पक्षे तङ् । अत्रापि शब्विषये वा श्यनि क्रम्यतइत्यादि 'वृत्तिसर्गतायनेषु क्रम' इति वृत्त्यादिषु नित्यस्तङुदाहार्यः । वृत्तिरप्रतिबन्धः । सर्ग उत्साहः । तायनं स्फीतता, अयं वृत्त्यादिविषयस्तङ्'पपराभ्या'मिति सिद्धे सत्यारम्भान्नियमादस्योपसृष्टात्र भवति, तेन संक्रामतीति परस्मैपदमेव । यदायमाङ्पूर्वे उद्गमनार्थ-

स्तदा 'आङ उद्गमन'इति वचनान नित्यस्तङुदाहार्य' । आक्रमते भानु-रित्यादि । अत्र 'ज्योतिरुद्गमनइति वक्तव्य'मित्युक्तत्वात् आक्रामति धूमो हर्म्यतलादित्यत्र न भवति । उद्गमने वर्तमानोयमकर्मक इति कैयटेनोक्तम् । पदमञ्जर्यां तु आक्रमति धूमो हर्म्यतलमिति वृत्तिमुपादाय उद्गमने क्रमि-रकर्मकः तस्मादाक्रामति धूमो हर्म्यतलादिति पठितव्यमित्युक्तम् । यद्वा उद्गमनपूर्विकायां व्याप्तौ अत्र क्रमिर्द्रष्टव्य इति द्वितीया समर्थिता । नभः समाक्रामति चन्द्रमा इत्यत्र नोद्गमनं विवक्षितं किं तर्हि व्याप्तिरिति परस्मैपदमिति तत्रैवोक्तम् । विक्रमते । सुष्ठु पदानि विक्षिपतीत्यर्थः । अश्वादीनां गतिविशेषो विक्रम इति वृत्तिः । 'वेः पादविहरणे'इति नित्यस्तङ्, अन्यत्र विक्रामत्यजिनसन्धिरिति । त्रुट्यतीत्यर्थः । प्रक्रमते भोक्तुम् । उपक्रमते भोक्तुम् । 'प्रोपाभ्यां समर्थाभ्या'मिति नित्यस्तङ् । समर्थौ समानार्थौ । तच्च समानार्थत्वमादिकर्मणि । अन्यत्र प्रक्रामति उपक्रामतीति, आगच्छति उपगच्छतीति चार्थः । आत्मनेपदेषु वलाद्या-र्धधातुकस्य 'स्नुक्रमोरनात्मनेपदनिमित्त'इतीडभावः । स्नुक्रमोर्वलाद्या-र्धधातुकस्येडागमो भवति आत्मनेपदनिमित्ताभावइत्यक्षरार्थः । तद-र्थादनयोरुदात्तत्वादेवेटः सिद्धावारम्भादात्मनेपदनिमित्तत्वे निषेधार्थं सूत्रं भवति । निमित्तग्रहणं कुर्वद्रूपताप्रतिपत्त्यर्थं न तु योग्यतापर-मिति कर्मकर्तृविषयाद्भावकर्मविषयाच्चास्मात् कृतः सत्यामपि योग्य-तायामात्मनेपदाभावात् प्रक्रमिता प्रक्रमितुं प्रक्रमितव्यमितीड् भव-त्येव । न चार्थविशेषादुपसर्गविशेषाच्चात्मनेपदस्य निमित्तं न क्रमिति-रिति कथमस्यात्मनेपदनिमित्तत्वमिति मन्तव्यम् । यतस्तेषां विषयतया विशेषणत्वात् तद्विशिष्टो धातुरेव निमित्तम् । चिक्रंसतइत्यादौ 'पूर्ववत् सन'इत्यतिदेशात्प्रकृतिगतमेव सनन्तेयात्मनेपदस्य निमित्तमिति तस्य क्रमिनिमित्तत्वादिडभावः । चिक्रंस्यतइत्यादौ भावकर्मणोरपि परत्वात् 'पूर्ववत् सन' इत्यात्मनेपदमिति प्रकृतेरेवात्मनेपदनिमित्तत्वमितीडभावः सिद्धः । अस्ति च विप्रतिषेधः, 'भावकर्मणो'रित्यात्मनेपदक्रमिनिमित्तत्वा-भावादिट् स्यात्, अनेन तु सति नेति । यदा तु सनन्ताण्णिच् तदात्मने-

पदस्य क्रमिनिमित्तत्वाभावात् चिक्रमीषयतीतीटा भाव्यम् । तथा विक्रमिषते स्वयमेवेति कर्मकर्त्तर्यपि । अत्र हि कर्मवदतिदेशनिमित्तमेवात्मनेपदं न तु क्रमिनिमित्तम् । अत्र हरदत्तः । सिद्धं त्वक्रमोरात्मनेपदेन समानपदस्थस्येण्निषेधात् । 'क्रमेश्चे'ति वार्त्तिककारवचनादिहाप्यात्मनेपदेन समानपदस्थत्वाभावादिटा न भाव्यमित्याह। भाष्यवार्त्तिकपूर्वापरपर्यालोचनाया समानपदस्थत्वे तात्पर्यं नेति प्रतीयते। यतस्तु वार्त्तिककार आत्मनेपदे परे स्नुक्रमोर्नेडित्येव सूत्रार्थे आश्रीयमाणे निर्दिष्टपरिभाषया आनन्तर्य एव भाव्यत्वात् प्रचिक्रंसिष्यतइत्यत्र स्येन व्यवधानात् प्रक्रंसिष्टेत्यत्र च सीयुट आत्मनेपदभक्तत्वात् प्रक्रंस्यते इत्यत्र व्यपवर्गाभावात् आत्मनेपदपरत्वाभावादिण्निषेधाप्रसङ्गादात्मनेपदपरतङ्परसीयुडेकादेशेषु च प्रतिषेधो वक्तव्य इत्युक्तत्वात्, परिहारमात्राय सिद्धं त्वात्मनेपदेन समानपदस्थस्येण्निषेधादित्याह। भाष्यकृता च यथान्यासमेवास्त्विति सूत्रमेव स्थापितम्। न च तत्र समानपदस्थत्वावगतिः, तथा वृत्तावपि, न चेत्स्नुक्रमी आत्मनेपदस्य निमित्ते, निमित्तग्रहणं सीयुडादेस्तत्परस्य च प्रतिषेधार्थमित्युक्तम् । गतमदः, प्रक्रान्तेन्यादावात्मनेपदाभावेपि क्रमेस्तु कर्त्तर्यात्मनेपदविषयादसत्यप्यात्मनेपदे प्रकृतिप्रतिषेधो वक्तव्य इति इडभावः । अनुपसर्गात् क्रमेः क्रन्ता क्रमितेत्युभयमपि भवति । 'अनुपसर्गाद्वे'ति विकल्पेनात्मनेपदविषयादित्येके । अन्ये त्वात्मनेपदविषयादिति अनन्यभावे विषयशब्दं वर्णयन्तः क्रमितेत्येव भवितव्यमित्याहुरिति । पदमञ्जर्याम् [illegible] त्मनेपदे तासावनिट्त्वात् 'उपदेशेत्वत' इति थल इण्निषेधो [illegible]क्रः । यतः परस्मैपदे तासौ सेट्त्वान्नित्यानिट्त्वाभावः । क्रान्त्वा क्रमित्वा । उदित्त्वादिड्विकल्पः । इडभावे 'क्रमश्च क्त्वी'ति वा दीर्घः । क्रान्तः । 'यस्य विभाषे'तीण्निषेधः । क्रमः । घञ् । 'नोदात्तोपदेश'इति वृद्धिनिषेध । क्रममधीते क्रमकः । 'क्रमादिभ्यो वुन्'इति तदधीते तद्वेदेति विषये वुन् । चङ्क्रमणः । 'जुचङ्क्रम्ये'ति युच् । न क्रामतीति नक्रः । 'डोन्यत्रापि दृश्यत'इति डः । 'नभ्राणनपान्नवेदानासत्यानमुचिनकुलनखनपुंसकनक्षत्रनक्रनाकेषु प्रकृत्ये'ति निपातनान्नञो नलोपाभावः । क्रिमिः । क्रमिगमिनमिस्य-

भ्रामच इच्चेतीत्' त्यये अकारस्येकारः । क्रिमिणः । 'लोमादिपामादि-पिच्छादिभ्यः शनेलच'इति पामादिपाठान्मत्वर्थीयो नः ॥

*यज्ञनारायणार्येण प्रक्रियेयं प्रपञ्चिता ।
तस्या निःशेषतस्सन्तु बोद्धारो भाष्यपारगाः ॥

अणादय उदात्ता उदात्तेतः ॥ ४६९ ॥

अय वय पय मय चय तय णय गतौ ॥ इत आरभ्य रेवत्यन्ता उदात्ता अनुदात्तेतः । अयते । अया चक्रे । दयायासश्चे'त्याम् । अयिता । अयिष्यते । अयताम् । आयत । अयेत । आशिषि । अयिषीष्ट । आयिष्यत । अस्य लुङ्लिटोर्ध्वमि 'विभाषेट' इति मूर्द्धन्यविकल्प उदाहार्यः । एवमन्येष्वपि यान्तेषु । अयियिषते । आययति । माभवानयियत् । आयः । अयः । घञचौ । चलनार्थत्वेपि नास्य युजस्ति, 'न य'इति यान्तानां तद्विधेधात् । तेन अयितेति सामान्यस्तृन् भवति । प्लायते । 'उपसर्गस्यायतौ'-विति उपसर्गस्थस्य रेफस्यायतिपरत्वाल्लत्वम् । नन्वेकादेशस्य स्थानिवत्त्वाद्रेफस्यायतिः परो न भवति । सत्यम् । येन नाव्यवधानं तेन व्यवहितेपि वचनप्रामाण्यादिति एकेन वर्णेन व्यवधानमाश्रयिष्यते । न चास्ति पूर्वत्रासिद्धे न स्थानिवदिति, तस्य दोषः संयोगादिलोपलत्वणत्वेष्विति तस्य सापवादत्वात् । एव च पल्ययतइत्यत्रापि लत्व भवति । न चानन्तरो निर्दुरो रेफोवकाश इति वाच्यम् । तर्हि लाघवार्थं तावेवोपाददीत । येषामुपसर्गविशेषणमयतिग्रहणम् अयतिपरस्योपसर्गस्य यो रेफ इति तेषां नैवास्य चोद्यस्यावसर, किं तु प्रत्यय इत्यत्रापि लत्वं स्यात् । भवितव्यमेवेति तेषामेव केचित्, अपरे तु प्रतिपूर्वस्यायतेर्नैव प्रयोग इति, तेषां प्रत्ययशब्दः प्रतिपूर्वादिणोचि, प्रत्ययितशब्दोप्यस्मादेव तारकादित्वादितचि । निरयते । दुरयते । इति प्रयोगस्सान्तयोर्द्रष्टव्यः । नह्यत्र लत्वप्रसङ्गः, 'ससजुषो'रित्यस्यासिद्धत्वात् । वयते । ववये । वादित्वान्नैत्त्वाभ्यासलोपौ ।

* एतद्ग्रन्थकर्तुः द्वादशोऽह्नि पित्रा कृतं नाम, सायणेति तु कुलनामेति भूमिकायामस्माभिर्निरधारि ।

वयितेत्यादि पूर्ववत् । विवयिषते । वावय्यते । वावयीति । वावति । वावतः । वावयति । वावयीषि । वावसि । वावथः । वावथ । वावयीमि । वावामि । वावावः । वावामः । वलि यलोपः । यङ्लुगादौ तु कृते लोपे 'अतो दीर्घो यञी'ति दीर्घः । क्वौ यलोपात्पूर्वं नित्यत्वादूठ्प्राप्ते वत्परत्वाभावाद्यलोपाभावः, लोटि सेर्हिभावात् परत्वात्पूर्वं वलि लोपे तदनन्तरं हिरादेशः, तस्यैवा'तो हे'रिति लुकि वावेति भवति । पूर्वं तु हिभावे तमाश्रित्य वलि लोपे सन्निपातपरिभाषया हेर्लुङ् न स्यात्, उत्तमे तु नित्यत्वादाटि यलोपाप्रसङ्गात् वावयानीत्यादि भवति, लङि तिप्सिपो परमपि हल्ङ्यादिलोपं यलोपो बाधतइति अवावत्, अवाव इति भवति । इह च व्योर्वलि लोप इत्यनुवादपूर्वं विधेय निर्दिश्य तस्य पूर्वनिर्देशेन विध्यन्तराद्बलीयस्त्वज्ञापनादवगम्यते, यत्तु तत्र वृत्तावुक्तं पूर्वनिर्देशस्य फलं वेरपृक्तलोपात्पूर्वं वलि लोप इति, तद्विध्यन्तरोपलक्षणम् । आहुश्चैवं तत्र व्याख्यातारः । यद्वा प्रकृतिविशेषं प्रत्ययविशेषं चापेक्षमाणाद्धल्ङ्यादिलोपात् वर्णमात्रापेक्षत्वादन्तरङ्गो वलि लोप इति पूर्वमेवासावत्र प्रवर्त्तिष्यते । पयते । पेये । पयिता । मयते । मेये । मयिता । चयते । चेये । चयिता । तयते । तेये । तयिता । नयते । नेये । नयितेत्यादि । चयिवत् । नयतेर्णोपदेशत्वात् प्रणयतइति णत्वं भवति । अत्र षयीति मूर्द्धन्योष्मादिरपि क्वचित् कोशे पठ्यते, मैत्रेयादिभिस्तु न पठ्यते । नयादीनामपि अयिवत् 'न य' इति युङ्निषेधात् तच्छीलादौ तृन्नेव । णय रक्षणे चेति मैत्रेयः । तय णयेत्येके । अयादीनां क्वौ वलि लोपे तुकि यत्. वत्, इत्यादि भवति । अतो लोपस्तु न भवति, आर्द्धधातुकोपदेशे यदकारान्तं तस्य तद्विधानात् ॥ ३७६ ॥

दय दानगतिरक्षणहिंसादानेषु ॥ सर्पिषो दयते । सर्पिर्दयते । 'अधीगर्थदयेशां कर्मणी'ति कर्मणि शेषे षष्ठी । अशेषे तु द्वितीयैव । दयां चक्रे । 'दयायासश्चे'त्याम् । दयितेत्यादि । वयिवत् । दयालुः । 'स्पृहिगृहिपतिदयिनिद्रातन्द्राश्रद्धाभ्य आलुजि'ति ताच्छीलिक आलुच्, दया । दयतिर्भेदादिषु द्रष्टव्यः ॥ ४७७ ॥

रय गतौ ॥ रयतइत्यादि वयिवत् । रायः, घञ् । रयस्तु अचि ॥ ४७८ ॥

ऊयी तन्तुसन्ताने ॥ ऊयते । ऊया चक्रे । 'इजादेश्च गुरुमत' इत्याम् । ऊयिनेत्यादि । ऊययति । मा भवानूयियत् । द्विर्वचनात्पूर्वमुपधाह्रस्वत्वमित्युक्तम् । ऊयित्वा. ऊत., ऊतवान् । ईदित्त्वान्निष्ठायामनिट्त्वम् । ऊति' । बाहुलकात् क्तिन् । 'ऊतियूती'ति निपातनमञ्वतेः क्तिनि उदात्तार्थमिति वृत्तावुक्तम् ॥ ४७९ ॥

पूयी विशरणे दुर्गन्धे च ॥ पूयते । पुपूये । पूयितेत्यादि । पुपूयिषते । पोपूय्यते । पोपूयीति । पोपोति । पोपूतः । इत्यादि वयतिवत् । तसादौ ङित्त्वान्न गुणः । पूययति । अपूपुयत् । पूयित्वा । पूतः । पूतवान् । ईदित्त्वान्निष्ठायामनिट्त्वम् । पूतिः । 'गन्धस्येदुत्पूती'त्यादिनिर्देशात् क्तिन् । पूयः । पचाद्यच् ॥ ४८० ॥

क्नूयी शब्दे उन्दे च ॥ क्नूयते । चुक्नूये । क्नूयितेत्यादि पूयतिवत् । क्नोपयति 'अर्तिह्रीव्लीरीक्नूयीक्ष्माय्यातां पुङ्णावि'ति पुकि यलोपे 'पुगन्तलघूपधस्य चे'ति गुणः । अचुक्नुपत् । क्नतेपि गुणे णौ 'चङी'ति ह्रस्वः । क्नूयीति सानुबन्धकस्य निर्देशाद्यङ्लुकि चोक्नूयीतीति भवति । चेलक्नोपं वृष्टो देवः । 'चेले क्नोपे'रिति ण्यन्तादस्मात् कर्मणि चेलउपपदे वर्षप्रमाणे गम्यमाने णमुल् । यावता वर्षेण चेलं क्नूयते तावद् वृष्ट इत्यर्थः । चेलइत्यर्थग्रहणमिति वस्त्रक्नोपमित्याद्यपि भवति । अस्यापीदित्त्वान्निष्ठायामनिट्त्वम् ४८१ ॥

क्ष्मायी शब्दे विधूनने ॥ क्ष्मायते । चक्ष्माये । क्ष्मायितेत्यादि । चिक्ष्मायिषते । चाक्ष्माय्यते । चाक्ष्मायीति । चाक्ष्माति । तसादौ क्ङिति सार्वधातुके 'श्नाभ्यस्तयोरातः' 'ईहल्यघोरि'तीत्वम् । चाक्ष्मीत इत्यादि । लोटि तातङ्पक्षे तस्य ङित्त्वात् चाक्ष्मीतादिति भवति, हेरप्यपित्त्वात् ङित्त्वात् चाक्ष्मीहि । लङि नित्यत्वाद्यलोपात्पूर्वं 'सिजभ्यस्ते'ति जुसभावो भवति । अचाक्ष्मायीत् । अचाक्ष्मीताम् । अचाक्ष्मायुरित्यादि ।

ल्मापयति । अचिल्मपत् । 'अर्त्तिह्री'त्यादिना पुक् । अस्यापि सानुबन्धकस्य निर्द्देशात् यङ्लुकि चाल्मायतीति । ईदित्त्वान्निष्ठायां ल्मातः । ल्मातवान् ॥ ४८२ ॥

स्फायी ओप्यायी वृद्धौ ॥ स्फायते । पस्फाये । अभ्यासे 'शर्पूर्वाः खय' इति खयः शेषः । स्फायितेत्यादि ल्मायिवत् । णौ 'स्फायो व' इति यकारस्य वकारे स्फावयति । अपिस्फवदिति भवति, स्फीतः, स्फीतवान् 'स्फायः स्फी निष्ठायामि'ति स्फीभावः । वत्वस्फीभावौ प्रकृतिग्रहणन्यायेन यङ्लुक्यपि भवत इति पास्फावयति । स्फीतः । स्फीतवानिति भवति । स्फायतइति स्फाः । क्विपि वलि लोपः । अय वेरपृक्तलोपात्पूर्वं भवतीति वयतौ प्रतिपादितम् । स्फाश्च तदण्ड च स्फाण्डम् । एवं स्फान्त्रम् । वृद्धाण्डमुच्यते । स्फारः । स्फायितञ्चीत्यादिना रक् । प्यायते । पिप्ये । पिप्यिषे । पिप्याथे । पिप्यिध्वे । पिप्यिवहे । परत्वात् 'लिड्यङोश्च' इति प्यायः पीभावः । पुनः प्रसङ्गविज्ञानात् पीशब्दस्य द्विर्वचनम् । 'एरनेकाच' इत्यजादौ यण् । प्यायितेत्यादि पूर्ववत् । लुङि 'दीपजन-बुधपूरितायिप्यायिभ्योन्यतरस्या'मिति कर्त्तरि तशब्दे वा चिणि अप्यायि अप्यायिष्टेति भवति । यङि लिड्वत् पीभावे पेपीयतइत्यादि । यङ्लुकि तु पाप्याति । पाप्यात इत्यादि पूर्ववत् । पीनः पीनवान् । 'प्यायः पी निष्ठाया'मिति वा पीभावात् । इयं च व्यवस्थितविभाषेति अनुपसृष्टे नित्यम्, उपसृष्टे तु नैव । आप्यानः प्रप्यानश्चन्द्रमा इति, आङ्पूर्वादन्धूधसोर्भवत्येव । आपीनोन्धुः, आपीनमूध इति । 'ओदितश्चे'ति निष्ठानत्वम् । ईदित्त्व पीभावाभावे निष्ठाया इणनिवृत्त्यर्थम् । ईदितोनन्तराया निष्ठाया नत्वार्थमिदमोदित्त्वम् । कृते पीभावे स्वरान्तत्वादनिट्स्वरान्तइत्यनिट्त्वे सावकाश इति पीभाव इणिनवृत्तेर्न ज्ञापकः । स्फायेस्त्वीदित्त्वे स्फीभावस्य नित्यत्वात् स्वरान्तत्वादनिट्त्वे सिद्धे अनुदात्तत्त्वमात्र फलम् । न च सत्यपीटि सवर्णदीर्घत्वेनेदमेव रूपमिति मन्तव्यम् । परत्वादियङ्प्रसङ्गात् ॥ ४८४ ॥

तायृ सतानपालनयो ॥ संतानः प्रबन्धः । तायते । तताये ।

तायितेत्यादि पूर्ववत् । लुङि 'दीपजनेत्या'दिना कर्त्तरि तशब्दे वा चिणि अतायि अतायिष्टेति भवति । ऋदित्त्वाण्णौ चङ्युपधाया ह्रस्वाभावात् अततायत् । अनीदित्त्वान्निष्ठायां तायितः तायितवान् ॥ ४८५ ॥

शल चलनसंवरणयोः ॥ शलते । शेले । शलिता । शलिष्यते । शलताम् । अशलत । शलेत । आशिषि शलिषीष्ट । अशलिष्ट । शाशल्यते । शाशलीति । शाशल्ति । लङि तिप्सिपोर्हल्ङ्यादिलोपः । अशाशल् । शालयति । अशीशलत् । शलित्वा । शलितः । शलभः । 'कृशृशलिभ्यो भच्' । शल्कम् । 'इणिकापाशलि'ति कन् । शलाका । 'शलिपतिपटिभ्यो नि'दित्याक । शलूकः । 'शलिमण्डिभ्यामूकणि'त्यूकण् । शललं, कलप्रत्ययस्त्वन्यत्र प्रत्ययस्य पूर्वनिर्देशस्य धात्वन्तरादप्ययं भवतीति सूचनार्थत्वात् कुण्डलादिवत् कल प्रत्ययः । शलली । पिप्पल्यादित्वात् ङीष् जातिलक्षणो वा । शलालुः । गन्धद्रव्यविशेषः, शलालुः पण्यं व्यवहार्यमस्य शलालुकः । 'शलालुनोऽन्यतरस्या'मिति प्रथमान्तादस्य पण्यमित्यर्थे ष्ठन्, षित्त्वात् स्त्रियां शलालुकी । अन्यतरस्यांग्रहणात् 'प्राग्वहतेष्ठगि'ति ठकि 'किति चे'त्यादिवृद्धौ शालालुकः । उभयोरपि ठशब्दयोः ठकः परत्वात् 'इसुसुक्तान्तात्क'इति कादेशः । अत एव शलालुन इति निर्देशादालुप्रत्ययः । शालेति शालतावुक्तम् । अथ गत्यर्थाः ज्वलादौ परस्मैपदी ॥ ४८६ ॥

वल वल्ल संवरणे सञ्चरणे च ॥ वलते । ववले । वलितेत्यादि शलिवत् । णौ घटादित्वाद्वलयतीति । वालः । 'हलश्चे'ति करणे घञ् । वारः । वालमूलेत्यादिना पक्षे रः । वलिः । वली । इन्नन्तात् 'कृदिकारादक्तिन' इति वा ङीष् । वलिनः । पामादित्वान्मत्वर्थे नः । वलिभः । 'तुन्दिवलिवटेर्भः,' अयमपि मत्वर्थीय । वलिः । 'वलेर्वलश्चाहिरण्य' इति इनप्रत्यये वलादेशः । वलभी । बाहुलकादभचि पिप्पल्यादिदर्शनात् ङीष् । वलयः । 'वलिमलितनिभ्यः कयन्'ति कयन् । वल्गुः । 'वलेर्गुक्चे'ति उक्प्रत्ययो गुगागमश्च । वलाकः । 'बलाकादयश्चे'त्याकन्नन्तो निपातितः । वलाकाया अपत्यं वालाकिः ।

'बाह्वादिभ्यश्चे'तीञ्प्रत्ययः । अत्र पाठात् जातिलक्षणङीषं बाधित्वा टाप् अजादित्वाद्वा । बलाका अस्य सन्तीति बलाकी, 'व्रीह्यादिभ्यश्चे'ति मत्वर्थ इनिः । बलिकं लिप्तम् । 'अलीकादयश्चे'तीकन् । वल्मीके बाहुलकान्मुडागमः । वल्लते । ववल्ले । वल्लितेत्यादि । यङ्लुकि तिप्सिपोर्हल्ङ्यादिलोपे संयोगान्तलोपे च अवावल् । वल्लभः । 'रासिवल्लिभ्या चे'त्यभच् । वल्लरी । बहुलकादरप्रत्यये पिप्पल्यादिदर्शनात् ङीष् । वल्लिः वल्ली इति कृदिकारत्वाद्वा ङीष् । वल्लूरं शुष्कमांसम् । खर्जपिञ्जादिभ्य ऊरोलचाविति ऊरः ४८८ ॥

मल मल्ल धारणे ॥ मलते । मेले । मलिता । मल्लतइत्यादि पूर्ववत् । माला । 'अकर्त्तरि च कारक'इति कर्मणि घञ् । 'लस्ये'त्यत्र भाष्यकैयटयोर्मादेः ऽय लप्रत्यय उक्तः । माली । व्रीह्यादित्वादिनिः । मालभारी । 'इष्टकेषीकामालानां चिततूलभारिष्वि'ति यथासंख्यान्मालाया भारिण्युत्तरपदे ह्रस्वः । के चित्तु तत्र हारीति पठन्ति । माल्यम् । 'ऋहलोर्ण्यत्' । मलयः । वलिमलीति कयन् । शरीरं धार्यतइति मलम् । अच् । मृजेर्वा व्युत्पादयिष्यते । मलिनः मलीमसः । 'ज्योत्स्नातमिस्राशृङ्गिणोर्जस्विन्नूर्जस्वलगोमिन्मलिनमलीमसाः' इतीनचीमसजन्तौ मत्वर्थे निपातितौ । केन मल्यतइति कमलम् । घञर्थे कविधानमिति कः, 'कर्तृकरणे कृते'ति समासः । कमेर्वा कलप्रत्यये व्युत्पादनीयः । आमलकी । 'कृन् शिल्पिसंज्ञयोरपूर्वस्यापि इति कृनि गौरादित्वान्ङीष् । मल्लः । अच्प्रत्ययः । मल्लिका । 'संज्ञायामि'ति स्त्रियां ण्वुल् । मल्लकः । कृन् । मल मल्लते धारयतीति मलमल्ल कौपीनम् ॥ ४९० ॥

भल भल्ल परिभाषणहिंसादानेषु ॥ भलते । भल्लतइत्यादि । भालम् । 'अकर्त्तरि च कारकइ'ति घञ् । भा दीप्तिं लातीति वा भालः । भलूकः श्वापदः । 'उलूकादयश्चे'ति ऊकनन्तो निपातितः । भल्लूकोप्युलूकादिः । भल्यते हिंस्यतेऽनेनेति भल्लः । 'पुंसि संज्ञायामि'ति घः, 'हलश्चे'ति घञ् वा । भल्ली । 'जातेरस्त्रीविषयादयोपधादि'ति ङीष् । अयमाभण्डने चुरादिः ॥ ४९२ ॥

दन्त्यादिमपि वदन्ति । तथा च 'परिनिविभ्यः सेवे'त्यत्र न्यासेपि षोपदेशस्य 'सात्पदाद्यो'रिति निषेधे प्राप्ते ऽपरस्य त्वप्राप्ते चेति तदिदं षोपदेशलक्षणपर्युदासे सेक्सृवर्ज्जमिति स्त्यायतिवदनुपादानाद्भाष्यकारस्यानभिमतत्वमिव प्रतीयते । अत एव 'परिनिविभ्य' इत्यत्र हरदत्तः । सेवतिर्भ्वादिष्वनुदात्तेदित्याह न तु सेव्रितीति । गेवते । ग्लेवते । पेवते । म्लेवते । शेवते । खेवते । क्ष्वेवते । क्लेवृ इत्यपि क्व चित्पठ्यते ॥ ५०१ ॥

रेवृ प्लवगतौ ॥ प्लवगतिः प्लुतिगतिः । रेवत इत्यादि । रेवा । अचि टाप् । रेवणः । अनुदात्तेत्त्वाद्वा चलनार्थत्वाद्वा युच् । अत्र मैत्रेयः प्लव इति धात्वन्तरमाह, तच्चिन्त्य, यदि हि स्यात् आप्लवशब्दस्यास्मात् घञि सिद्धौ तदर्थं 'विभाषाङि रुप्लुवोरि'ति प्लुवः पक्षे घञ्विधानमनर्थकं स्यात् । तथा प्लुङ्णौ वृध्यावादेशयोश्चङि णौ कृतस्य स्थानिवत्त्वात् प्लुशब्दस्य द्विर्वचनेऽपुप्लवदिति नित्ये प्राप्ते पक्षे अपिप्लवदिति सिद्ध्यर्थं 'स्रवतिशृणोतिद्रवतिप्रवतिप्लवतिच्यवतीनां वे'त्युकारस्येत्त्वविधानमनर्थकं स्यादिति, सति ह्यस्मिन्ननेनैवापिप्लवदिति भविष्यति । अत एव क्षिलापरतुष्य मैत्रेयोपि प्लव इत्येक इत्याह । आयादय उदात्ता अनुदात्तेतः ॥ ५०२ ॥

मव्य बन्धने ॥ एतदादयो वन्यन्ता उदात्तेतः । मव्यति । ममव्य । मव्यिता । मव्यिष्यति । मव्यतु । अमव्यत् । मव्येत् । आशिषि मव्यात् । 'हलो यमां यमि लोप' इति वा यलोपः । अमव्यीत् । 'नेटी'ति न वृद्धिः 'ह्म्यन्ते'ति वा, मिमव्यिषति । मामव्यते । अत्र तृजादौ यदा 'हलो यमा'मिति धातुयकारस्य लोपः, तदार्धधातुकमाश्रित्याल्लोपे, 'यस्य हल' इति यङोपि लोपः । मामवितेत्यादि यदा 'हलो यमा'मिति न भवति तदा पूर्ववद्यङो लोपे मामव्यितेत्यादि । मामव्यीति । मामति । इडभावे 'लोपो व्योर्वली'ति वयोर्लोपः, मामीतः । यलोपे वकारस्याङ्गान्त्यत्वाद्वलि लोपमपवादत्वाद्बाधित्वोठि वृद्धिः । मामव्यति । अद्भावो नित्यत्वाद्वलि लोपं बाधते । मामव्यीषि । मामसि । व्योर्लोपः ।

मामैथः । मामैथ । यलोपः ऊठि वृद्धिः । मामव्मीमि, मामैमि । अनुनासिकत्वादूठि वृद्धिः, मामैवः, व्योर्लोपः,'अतो दीर्घो यञी'ति दीर्घः । मामैमः । मामव्यीतु । मामतु । मामैतात् । मामैताम् । मामव्यतु । मामैहि । मामैतात् । मामैतम् । मामैत । मामव्यानि । मामव्याव । उत्वहित्वाभ्यां परत्वात्पूर्वमेव व्योर्लोपे पश्चात् 'तुह्यो'रिति तातङि तदाश्रय उठ् नाशङ्कनीयः । पूर्वमेव वकारस्य लुप्तत्वात्, 'हस्वतो हे'रिति लुक् । उत्तमे नित्यत्वादाटि न व्योर्लोपः । अमामव्यीत् अमामैताम् । अमामव्युः । अमामः । अमामव्यम् । अमामाव । अमामैम । तिप्सिपोर्हल्ङ्यादिलोपादन्तरङ्गत्वाट्टूनि लोपः । झिमिपोर्जुस्भावाम्भावौ वलि लोपं नित्यत्वाद् बाधेते । वसि व्योर्लोपे 'ऽतो दीर्घो यञी'ति दीर्घः । मसि यलोपेऽनुनासिकादित्वादूठि वृद्धिः । मव्ययति । अममव्यन् । मव्यित्वा । मव्यितः । क्विपि 'लोपो व्योर्वली'ति विधेयस्य लोपस्य पूर्वनिर्देशाद् वेरपृक्तलोपाद्वलोपस्य बलीयस्त्वस्य ज्ञापनादपृक्तलोपात् पूर्वं यकारस्य वलि लोपः, वकारस्य त्वपवादेनोठा बाधाच्च भवतीति ऊड्वृद्धोर्मौः । यथा तु भाष्ये तथास्य न यङ्लुगस्ति तच्च तैवतावुक्तमुपपादितं च ॥

अत्रापि शिष्यबोधाय प्रक्रियेयं प्रपञ्चिता ।
यज्ञनारायणार्येण बुद्धता भाष्यपारगैः ॥ ५०३ ॥

सूर्क्ष्य ईर्क्ष्य ईर्ष्य ईर्ष्यार्थाः ॥ सूर्क्ष्यति । सुषूर्क्ष्य । सूर्क्षिता । सूर्क्षिष्यति । सूर्क्ष्यतु । असूर्क्ष्यत् । सूर्क्ष्येत् । आशिषि । सूर्क्ष्यात् । असूर्क्ष्यीत् । असूर्क्षिष्यत् । सुसूर्क्षिषति । 'स्तौतिण्योरेवे'ति नियमाच्च षत्वम् । सोसूर्क्ष्यते । 'हलो यमा'मिति पक्षे यलोपः । अन्यदा तु यकारद्वयम् । सोसूर्क्ष्यीति । सोसूर्ष्टि । बहूनां समवाये द्वयोरपि संयोगसंज्ञाया आश्रितत्वात् 'स्कोः'रिति कलोपः । लङि तिप्सिपोर्हल्ङ्यादिलोपे पदान्तसंयोगादित्वात् कलोपे जश्त्वचर्त्वयोरसोसूर्ट् । सर्वत्र यकारस्य वलि लोपः । सूर्क्ष्ययति । असुसूर्क्ष्यत् । सूर्क्ष्य आदरेऽप्ययं । ईर्क्ष्यति । ईर्क्ष्यां चकार । ईर्क्षिता । ईर्क्षिष्यति । ईर्क्ष्यतु । ऐर्क्ष्यत् । ईर्क्ष्येत् । ईर्क्ष्यात् । ऐर्क्षिष्यत् । ईर्चिक्षिषति । 'न न्द्राः' इति रेफवर्जस्य द्विर्वचनहलादिशेषे चर्त्वम्,

उभयथा रूपे न विवादः । फलितेत्यादि । अफालीदित्यत्र 'तो लरान्तेति' वृद्धिः । पिफलिषति । पम्फुल्यते । पम्फुलीति । पम्फुल्तः । पम्फुल्मि । 'चरफलोश्चे'ति यङि यङ्लुकि अभ्यासस्य नुक् । अत्रापि पूर्ववत् सानुबन्धकस्यापि 'उत्परस्यात' इत्यभ्यासात्परफलाकारस्योत्वम् । तपरकरणं लघूपधगुणनिवृत्त्यर्थम् । फालयति । अपीफलत् । फलम् । अच् । फलित्वा । फुल्लः । अन्याकर्मकत्वात्कर्तृभावाधिकरणे क्तः । 'आदितश्चे'ति निषेधे 'अनुपसर्गात्फुल्लक्षीबकृशोल्लाघा' इति निपातनान्निष्ठातकारस्य लत्वम् । अत एव निपातनादुत्वं च । यद्वा 'न ध्याख्यापॄमूर्छि... तकारादिप्रत्ययपरत्वा'त्ति चे'त्युक्ते 'आदितश्चे'ति निषेधस्य 'विभाषा भावादिकर्मणो'रिति विकल्पनात् फलितमित्यपि भवति । अनुपसर्गादिति वचनादुपसृष्टस्योत्वे लत्वाभावात्प्रफुल्तमिति भवति । समुत्पूर्वत्वे तु 'उत्फुल्लसंफुल्लयोरुपसंख्यान'मिति लत्वम् । क्तवतोरप्येतल्लत्वमिष्यतइति वृत्तिः । तेन फुल्लवानिति भवति । फलुः । फलिपाटीत्यादिना प्रत्यये गुणागमः । क्विपि फल् । फलिवाचरतीति 'सर्वप्रातिपदिकेभ्य'इति क्विपि फलो धातुत्वे फलति । पफाल । फेलतुः । फेलुः । पम्फुल्यतइत्यादि प्रकृतिवत् । प्रत्ययान्तधातुत्वे आम् न भवति, कास्यनेकाच इति उक्तत्वात् । निष्ठायां फलितमिति नित्यमिडेवादित्त्वाभावात् ॥ ५११ ॥

मील श्मील स्मील निमेषणे ॥ निमेषणं संकोचः । द्वितीयस्तालव्यादिः । तृतीयो दन्त्यादिः । मीलति । मिमील । मीलिता इत्यादि । मिमीलिषति । मेमील्यते । मेमीलीति । मेमील्ति । मीलयति । अमीमिलत् । अमिमीलत् । भ्राजभासे त्यादिना णौ चङ्युपधाया ह्रस्वविकल्पः । श्मीलति । स्मीलतीत्यादि । मिल श्लेषणइति ह्रस्वोपधस्तुदादौ ॥ ५१४ ॥

पील प्रतिष्टम्भे ॥ प्रतिष्टम्भो रोधनम् । पीलति । पिपील । पीलितेत्यादि । पीला नाम का चित् । इगुपधलक्षणे कप्रत्यये टाप् । पीलाया अपत्यं पैलः । 'पीलाया वे'त्यण् । तदभावे ठक् च इति पैलेयः । अणन्तादपत्याञि तस्य पैलादिभ्यश्चे'ति लुकि पैलः पुत्रः । पीलुः । मृगय्वादिभ्यश्चेति उप्रत्ययः । पीलोः पाकः, पीलुकुणः, 'तस्य पाकमूले

पील्वादिकर्णादिभ्यः कुणज्जाहचा'विति पञ्चम्यन्तात्पीलवादेः कर्णादेश्च यथासंख्य पाकमूलयोः कुणज्जाहचोर्विधानादस्मात् कुणप्, ककारस्य 'लश क्वतद्धित'इति तद्धितत्वादित्त्वम् ॥ ५१५ ॥

णील वर्णे ॥ नीलति । प्रणीलति । निनील । नीलिता इत्यादि । नीलः । इगुपधलक्षणः कः । नीली ओषधिर्वडवा च । 'जानपदे' त्यत्र नीलादोषधौ प्राणिनि चेति ङीप् । अन्यत्र नीला शाटी । जानपदाभावे च संज्ञया वेति वचनात्संज्ञाया नीली नीलेत्युभय भवति नील्या रक्तं वस्त्र नील, 'तेन रक्तं रागात्' । रज्यते नेनेति रागः, शुक्लस्य वर्णान्तरापादनमिह रञ्जेर्धर्म इति वृत्तिः । रागवचनात्तृतीयान्तात्रक्तार्थे यथाविहित प्रत्यय इत्यणि प्राप्ते 'नील्या अन्वक्तव्य' इत्यन् । णिल गतै इति ह्रस्वोपधस्तुदादौ ॥ ५१६ ॥

शील समाधौ ॥ शीलतीत्यादि । शीलम् । इगुपधलक्षणः कः, घञ् च । शीले समाधाने भवा वृत्तिः शैली । अणि ङीप् । शील उपधारण इति चुरादौ । शिल उञ्छ इति ह्रस्वोपधस्तुदादौ ॥ ५१७ ॥

कील बन्धने ॥ कीलतीत्यादि । कीलः । इगुपधलक्षणः कः, 'हलश्चे'ति घञ् वा । कीलकं, संज्ञाया कन्, क्वुन्वा ॥ ५१८ ॥

कूल आवरणे ॥ कूलतीत्यादि । कूल पूर्ववत्कः ॥ ५१९ ॥

शूल रुजायां सघाते च ॥ शूलति । शूलम् । शूलेषु संस्कृत शूल्यम् 'शूलोखाद्य'दिति सप्तम्यान्तात्संस्कृतमित्यर्थे यत् । शूले पचति शूला करोति । शूले प्रोप्य पचतीत्यर्थः, 'शूलात्पाक'इति कृञो योगे डाच् । 'डाचि बहुलं द्वे भवत' इति द्वित्वम् अव्यक्तानुकरणस्य डाजन्तस्य नेष्यतइत्युक्तत्वान्न भवति । 'ऊर्यादिच्विडाचश्चे'ति डाजन्तस्य निपातत्व गतित्व च तत्र निपातत्वेऽव्ययत्वात्सोर्ल्लुक्, गतित्वात्तु शूलाकृत्येत्यत्र 'कुगतिप्रादय'इति समासे क्त्वो ल्यप्, अय.शूलेनान्विच्छति आयःशूलिकः । 'अयःशूलदण्डाजिनाभ्यां ठक्ठञा'विति तृतीयान्तादस्मादन्विच्छतीत्यर्थे यथासंख्य ठक् । अयःशूलशब्देन क्रूराकार उच्यते ॥ ५२० ॥

तूल निष्कर्षे ॥ निष्कर्षो निष्कोषणं, तच्चान्तर्गतस्य बहिर्निःसारणम् । तूलति । तूलम् । तूलेनानुकुष्णाति, अनुतूलयति । 'सत्यापपाशे' त्यादिना णिचि टिलोपः । णौ चङ्यग्लोपित्वादतुतूलत् ॥ ५२१ ॥

पूल सघाते ॥ पूलति । पूलः ॥ ५२२ ॥

मूल प्रतिष्ठायाम् ॥ मूलति । मूलम् । मूले जातो मूलकः । 'पूर्वाह्णापराह्णार्द्रामूलप्रदोषावस्कराद्वुन्नि'ति तत्र जात इति विषये वुन् । नक्षत्राणोपवादः । उन्पाटनीय मूलमस्य इति मूल्यो मुद्गः । 'मूलमस्याबर्हि'त्यैपाधिकात्प्रथमान्तान्मूलादस्येत्यर्थे यत् । आबर्हीति बृह् उद्यमन इत्यस्माद्भावे घञा बर्हः । सोस्यास्तीतीनिः । उद्यमनमिहोत्पाटनं, ये सुपक्का मूलोत्पाटनमन्तरेण ग्रहीतुं न शक्यन्तइति ते एवमुच्यन्ते, मुद्गादिषु मध्यतो लूयमानेषु कोशा अपि लूयेरन्नित्यवश्यमेषां मूलमुत्पाटनीयम्, मूलेनानाम्य मूल्य लाभाख्य द्रव्यम् । 'नौवयोधर्मविषमूलमूलसीतातुलाभ्यस्तार्य्यतुल्यप्राप्यवध्यानाम्यसमसमितसमितेष्वि ति यथासख्य मूलादानाम्ये यत्, आनाम्यमभिभवनीय शेषीक्रियमाणमित्यर्थः । मूलं नाम पादादीनामुत्पत्त्यर्थं वणिग्भिर्विनियुक्त द्रव्य, तेन हि स्वस्मादतिरिक्तं लाभाख्य शेषीक्रियते । आत्मन उपकारक क्रियते, यतः स्वय तेन सगुणी, गुणो भाग, इदमेव मूलमस्य भागीकरणं, तत्प्रति मूलस्योपकारकत्व शेषत्वमानाम्यत्व च । मूलेन समो मूल्यः पटः । उपादानसमानफल इत्यर्थः । अनेनैव सूत्रेण तृतीयान्तान्मूलात्समे यत् । न विद्यते मूलमस्याः साऽमूला । 'पाककर्णे'त्यादिना प्राप्त ङीष बाधित्वा 'मूलान्नञ' इत्यजादिपाठाट्टाप् । शतमूली । 'पाककर्णे'त्यादिना ङीष् । अयं रोहणार्थश्चुरादिः ॥ ५२३ ॥

फल निष्पत्तौ ॥ फलति इत्यादि ञिफलावत् । फलितमिति निष्ठायामिडेव । फलतीति फलं, संफला । 'पाककर्णे'ति ङीष बाधित्वा 'सम्भस्त्राजिनशणपिण्डेभ्यः फला'दित्यजादिपाठाट्टाप् । भस्त्रफलादयोप्येवम् । 'ड्यापोः सञ्ज्ञाच्छन्दसोर्बहुलमि'ति ह्रस्वः । अल्प फलं, फलिका । ततोन्यत्फलम् । फलं च तत्फलिका च फलाफलिका । 'कृतापकृतादीनामुपसंख्यान'मिति कर्मधारयः । 'अन्येषामपि दृश्यत'इति दीर्घः पूर्वपदस्य । 'एकमेव

फलमवस्थाभेदादल्पत्वमहत्वाभ्यां युज्यते। त्रिफला । अजादिदर्शनाट्टाप्। फलिनः । 'फलबर्हाभ्यामिनच्वक्तव्य'इति मत्वर्थे इनच् । फलकं, सञ्ज्ञायां कन् । निष्पाद्यते कृषिरनेनेति फालः । 'हलश्चे'ति करणे घञ् ॥ ५२४ ॥

चुल्ल भावकरणे॥ भावकरणमभिप्रायाविष्कारः । चुल्लिः। चुल्ली। इन्नन्तत्वाद्वा ङीष् ॥ ५२५ ॥

फुल्ल विकसने ॥ फुल्लति । फुल्लः । अच् । फुल्लित्वा । फुल्लित. ॥ ५२६ ॥

चिल्ल शैथिल्ये भावकरणे च ॥ चिल्लति । चिल्लः । तिल गतौ इति दुर्गमैत्रेयौ। तिल्लेत्यन्ये । तेलतीत्यादि । तिलः। इगुपधलक्षणः कः । तिल स्नेहनइति तौदादिकाद्वा । तिलाना भवन क्षेत्रं तिल्यं तैलीनम् । 'विभाषा तिले'ति यत्खञौ। तिलेभ्यो हित तिल्यम् । 'खलयवमाषति-लवृषब्रह्मणश्चे'ति चतुर्थ्यन्ताद्धितार्थे यत् । निष्फलस्तिलः तिलपेजः । तिलपिञ्जः । 'तिलान्निष्फलात्पिञ्जपेजा'विति तौ। तिलकम् । संज्ञायां कन् । तिल स्नेहनइति चुरादौ च ॥ ५२७ ॥

वेल्ल चेल्ल केल्ल खेल्ल क्ष्वेल्ल वेल्ल चलने॥ वेलतीत्यादि। वेला । 'गुरोश्चे'त्यकारः। चेलति। चेलः । पचादौ चेलडिति पाठात् अच्, टित्त्वं स्त्रियां ङीबर्थं, चिल वसनइत्यस्माद्वा चेलम् । प्रसङ्गादत्र किं चिदुच्यते। कुत्सिता ब्राह्मणी ब्राह्मणिचेलीति 'कुत्सितानि कुत्सनैः' कुत्साहेतुधर्मवचनैः समानाधिकरणैः समस्यन्तइति तत्पुरुषः । 'घरूपे'त्यादिना ह्रस्वः। चेलादयो वृत्तिविषये कुत्सनवचना इति भवनावुक्तम् । तत्र चेलमकुलीनेन तन्तुवायेनोत्पादित भवति, तत्सादृश्याद् ब्राह्मण्यादिषु वृत्त्या चेलशब्दस्य कुत्सनवचनत्वम् । स्त्रिचेली,स्त्रीचेली वा, वामोरुचेली,वामोरूचेली वा । 'नद्याः शेषस्यान्यतरस्यामि'ति ह्रस्वविकल्पः । ङ्यन्तं च या नदी ङ्यन्तं च यदेकाच् स शेषः, तस्य घादिषु वा ह्रस्व इति सूत्रार्थः । अत्रान्तरेणापि शेषग्रहणं पूर्वसूत्रव्यतिरिक्तविषयत्वे सिद्धे तत्सामर्थ्यात्पूर्वश्रुतङ्यन्तानेकाजपेक्षं शेषत्व बोधयितुं, तेन यदङ्यन्तमनेकाच्च ङ्यन्तमेकाच् तत्रैवायं

तूल निष्कर्षे ॥ निष्कर्षो निष्कोषणं, तच्चान्तर्गतस्य बहिर्निःसरणम् । तूलति । तूलम् । तूलेनानुकुष्णाति, अनुतूलयति । 'सत्यापपाशे त्यादिना णिचि टिलोपः । णौ चङ्यग्लोपित्वादन्वतूतुलत् ॥ ५२१ ॥

पूल सङ्घाते ॥ पूलति । पूलः ॥ ५२२ ॥

मूल प्रतिष्ठायाम् ॥ मूलति । मूलम् । मूले जातो मूलकः । 'पूर्वाह्णापराह्णार्द्रामूलप्रदोषावस्कराद्वुन्'ति तत्र जात इति विषये वुन् । नक्षत्राणोपवादः । उत्पाटनीयं मूलमस्य इति मूल्यो मुद्गः । 'मूलमस्याबर्हि'त्यौपाधिकात्प्रथमान्तान्मूलादस्येत्यर्थे यत् । आबर्हीति बृह् उद्यमन इत्यस्माद्भावे घञा बर्हः । सोऽस्यास्तीतीनिः । उद्यमनमिहोत्पाटनं, ये सुपक्वा मूलोत्पाटनमन्तरेण ग्रहीतु न शक्यन्तइति ते एवमुच्यन्ते, मुद्गादिषु मध्यतो लूयमानेषु कोशा अपि लूयेरन्नित्यवश्यमेषां मूलमुत्पाटनीयम्, मूलेनानाम्य मूल्य लाभाख्य द्रव्यम् । 'नौवयोधर्मविषमूलमूलसीतातुलाभ्यस्तार्य्यतुल्यप्राप्यवध्यानाम्यसमसमितसमितेष्वि'ति यथासख्य मूलादानाम्ये यत्, आनाम्यमभिभवनीय शेषीक्रियमाणमित्यर्थः । मूलं नाम पादादीनामुत्पत्त्यर्थं वणिग्भिर्विनियुक्त द्रव्य, तेन हि स्वस्मादतिरिक्त लाभाख्य शेषीक्रियते । आत्मन उपकारक क्रियते, यतः स्वयं तेन सगुणी, गुणो भाग, इदमेव मूलमस्य भागीकरणं, तत्प्रति मूलस्योपकारकत्व शेषत्वमानाम्यत्व च । मूलेन समो मूल्यः पटः । उपादानसमानफल इत्यर्थः । अनेनैव सूत्रेण तृतीयान्तान्मूलात्समे यत् । न विद्यते मूलमस्याः साऽमूला । 'पाककर्णे'त्यादिना प्राप्त ङीपं बाधित्वा 'मूलावज' इत्यजादिपाठाट्टाप् । शतमूली । 'पाककर्णे'त्यादिना ङीष् । अयं रोहणार्थश्चुरादिः ॥ ५२३ ॥

फल निष्पत्तौ ॥ फलति इत्यादि ञिफलावत् । फलितमिति निष्ठायामिडेव । फलतीति फलं, संफला । 'पाककर्णे'ति ङीषं बाधित्वा 'सभस्त्राजिनशणपिण्डेभ्यः फला'दित्यजादिपाठाट्टाप् । भस्त्रफलादयोऽप्येवम् । 'ङ्यापोः सञ्ज्ञाच्छन्दसोर्बहुलमि'ति ह्रस्वः । अल्प फलं, फलिका । ततोऽन्यत्फलम् । फलं च तन्फलिका च फलाफलिका । 'कृतापकृतादीनामुपसंख्यान'मिति कर्मधारयः । 'अन्येषामपि दृश्यत'इति दीर्घः पूर्वपदस्य । 'अक्रमेव

फलमवस्थाभेदादल्पत्वमहत्वाभ्यां युज्यते। त्रिफला । अजादिदर्शनाट्टाप् । फलिनः । 'फलबर्हाभ्यामिनज्वक्तव्य' इति मत्वर्थे इनच् । फलकं, सञ्ज्ञायां कन् । निष्पाद्यते कृषिरनेनेति फालः । 'हलश्चे'ति करणे घञ् ॥ ५२४ ॥

चुल्ल भावकरणे ॥ भावकरणमभिप्रायाविष्कारः । चुल्लिः । चुल्ली । इनन्तत्वाद्वा ङीष् ॥ ५२५ ॥

फुल्ल विकसने ॥ फुल्लति । फुल्लः । अच् । फुल्लित्वा । फुल्लित. ॥ ५२६ ॥

चिल्ल शैथिल्ये भावकरणे च ॥ चिल्लति । चिल्लः । तिल गतौ इति दुर्गमैत्रेयौ । तिल्लेत्यन्ये । तेलतीत्यादि । तिलः । इगुपधलक्षणः कः । तिल स्नेहनइति तौदादिकाद्वा । तिलाना भवन क्षेत्रं तिल्य तैलीनम् । 'विभाषा तिले'ति यत्खञौ । तिलेभ्यो हित तिल्यम् । 'खलयवमाषतिलवृषब्रह्मणश्चे'ति चतुर्थ्यान्ताद्धितार्थे सत् । निष्फलस्तिलः तिलपेजः । तिलपिञ्जः । 'तिलान्निष्फलात्पिञ्जपेजा'विति तौ । तिलकम् । सञ्ज्ञायां कुन् । तिल स्नेहनइति चुरादौ च ॥ ५२७ ॥

वेल्ल चेल्ल केल्ल खेल्ल क्ष्वेल्ल वेल्ल चलने ॥ वेलतीत्यादि । वेला । 'गुरोश्चे'त्यकारः । चेलति । चेलः । पचादौ चेलडिति पाठात् अच्, टित्त्व स्त्रियां ङीबर्थं, चिल वसनइत्यस्माद्वा चेलम् । प्रसङ्गादत्र किं चिदुच्यते। कुत्सिता ब्राह्मणी ब्राह्मणिचेलीति 'कुत्सितानि कुत्सनैः' कुत्साहेतुधर्मवचनैः समानाधिकरणैः समस्यन्तइति तत्पुरुषः । 'घरूपे'त्यादिना ह्रस्वः । चेलादयो वृत्तिविषये कुत्सनवचना इति भवतावुक्तम् । तत्र चेलमकुलीनेन तन्तुवायेनोत्पादित भवति, तत्सादृश्याद् ब्राह्मण्यादिषु वृत्त्या चेलशब्दस्य कुत्सनवचनत्वम् । स्त्रिचेली, स्त्रीचेली वा, वामोरुचेली, वामोरूचेली वा । 'नद्याः शेषस्यान्यतरस्यामि'ति ह्रस्वविकल्पः । अङी च या नदी ङ्यन्तं च यदेकाच् स शेषः, तस्य घादिषु वा ह्रस्व इति सूत्रार्थः । अत्रान्तरेणापि शेषग्रहणं पूर्वसूत्रव्यतिरिक्तविषयत्वे सिद्धे तत्सामर्थ्यात्पूर्वश्रुतङ्यन्तानेकाजपेक्षं शेषत्वं बोधयितुं, तेन यदङ्यन्तमनेकाच्च ङ्यन्तमेकाच् तत्रैवायं

विकल्प इति यद्भाषितपुंस्कमामलक्यादि यच्च समानायामाकृतौ अभाषितपुंस्कं द्रोण्यादि पूर्वसूत्राविषय तत्र न भवति । लक्ष्मीवेली । यवागूवेली । इत्यादौ च ङ्यन्तनदीत्वपि 'कृदङ्गाः प्रतिषेध' इत्युक्तत्वान्नाय विधिर्भवति । श्रीवेलीत्यादौ तु नदीग्रहणान्नास्य प्रसङ्गः । नापि पूर्वसूत्रस्य, ङ्यन्तानेकाच्त्वाभावात् । विदुषीवेलीत्यादौ 'उगितश्च' उगितः परा या नदी तस्या ह्रस्व विकल्पः । विदुष्यूरसोः पुंवद्भावोऽत्र पक्षे वक्तव्य इति वृत्तावुक्तत्वात् विद्वद्वेलीत्यपि भवति । केलति । केलिः । इन्प्रत्यये केली । अप्रत्ययः केला । केलयति । 'कण्ड्वादिभ्यो यगि'ति स्वार्थे यकि सनाद्यन्तत्वेन धातुत्वे लडादि । खेलति । खेला । अयमपि कण्ड्वादिः । वेल्लति । वेल्लो विषम् । सञ्ज्ञाया घञ् । वेल्लयति । वेल्लादीनां पञ्चानामृदित्त्वाच्चङ्यनि ह्रस्वाभावादवेवेलदिति भवति । वेल्लस्त्वनुपधात्वाच्च ह्रस्वप्रसङ्गः ॥ ५३३ ॥

पेलृ शेलृ फेलृ गतौ ॥ पेलति । अपिपेलत् । पेला, गुह्यमुञ्झनम् । शेलति । अशिशेलत् । अत्र क्वचित्खेलृपेलृसेलृ इत्यपि त्रयः पठ्यन्ते । तत्र खेलतिर्मैत्रेयाद्यनुसारेणाग्रे पठिष्यते । सेलतेस्तु दन्त्यादेः पाठः षोपदेशपर्युदासवाक्येनुपादानादनार्षः । मूर्द्धन्यादिस्तु सेलुः श्लेष्मान्तक इत्यादिदर्शनाद् ग्राह्यः ॥ ५३६ ॥

स्खलृ सञ्चलने ॥ स्खलति । चस्खाल । अस्खालीत् । णौ घटादित्वात् स्खलयति ॥ ५३७ ॥

खल सञ्चये ॥ खलति । चखाल । अखालीत् । खलति पापानि सञ्चिनोतीति खलः । खल्यते सञ्चीयते धान्यादिकमिति खलम् । 'खनो घ चे'त्यत्र वृत्तिः । खलं भगः पद चेति वक्तव्यमिति । अत्र हरदत्तः । घित्करणसामर्थ्यादन्येभ्योऽप्ययं भवति, नहि खनः कश्चिदवयवः कुत्वभागस्ति । खलानां समूहः, खल्या । 'खलगोरथा'दिति षष्ठ्यन्तात्समूहे यत्, खलिनी । 'इनित्रकट्यचश्चे'ति पूर्वत्रैव विषये इन्यादिविधानादिह यथासंख्यादीनि. । सर्वएते यादयः स्वभावात् स्त्रीविषयाः । खलाय हितं खल्या । 'खलयवे'ति यत् । यस्मिन्काले खले यवा भवन्ति स. कालो

खलेयवः । एव खलेबुसम् । 'तिष्ठद्गुप्रभृतीनि चे'त्यव्ययीभावः । तत्र ह्येव पठ्यते, खलयवादीनि प्रथमान्तानि विभक्त्यन्तरेण न सम्बध्यन्ते, अन्यपदार्थे च वर्त्तन्तइति । नैतौ प्रथमान्तावेव । अव्ययीभावा'दव्ययीभावश्चे'ति नपुंसकत्वम् । खलन्ति मचलन्ति केशा अस्मादिति खलतिः । अयं च भीमादिषु पाठात् 'भीमादयोऽपादान इ'त्यपादानविषयः । अत्रैव पाठादेवातिप्रत्यये धातूनामनेकार्थत्वात्सचलने वृत्ति । यद्वा पूर्वस्यैव धातोर्भीमादिषु पाठात् सलोपः । खलतइत्यपि निपातितः । शास्त्र शाठ्य शिरोमध्य च ॥ ५३८ ॥

गल अदने ॥ गलति । अगालीत् । गलः । 'गोचरसंचरे'त्यादौ चकारेण 'पुंसि सञ्ज्ञायां घः प्रायेण', गिरतेर्वा ॥ ५३९ ॥

षल गतौ ॥ सलति । सालयति । असीसलत् । सालः । 'अकर्त्तरि च कारके' इति सञ्ज्ञायां घञ् । सलिलम् । सलिकलीत्यादिनेलच् ॥ ५४० ॥

दल विशरणे ॥ दलति । णौ घटादित्वाद्दलयति । दाडिमम् । दालशब्दात् घञन्तात्तेन निर्वृत्तमित्यत्र विषये 'भावप्रत्ययान्तादिमब्वक्तव्य' इतीमच्, डलयोश्चाभेदः । कु दलतीति कुद्दालः, पृषोदरादिः । अयं घटादावपि ॥ ५४१ ॥

श्वल श्वल्ल आशुगमने ॥ श्वलति । शश्वाल । अश्वालीत् । शिश्वलिषति । शाश्वल्यते । श्वालयति । अशिश्वलत् । श्वल्लति । अश्वल्लीत् । अत्राङ्गान्त्यस्य लकारस्याकारसमीपत्वाभावा'दतो ल्रान्तस्ये'ति वृद्धिर्न भवति ॥ ५४३ ॥

खोल्ट खोर्ऋ गतिप्रतिघाते ॥ खोलति । चुखोल । खोलयति । अचुखोलत् । ऋदित्त्वान्नोपधाह्रस्वः । खोडः खञ्जः । पचाद्यच्, डलयोरभेदः । एवं खोरतीत्यादि ॥ ५४५ ॥

धोर्ऋ गतिचातुर्ये ॥ धोरति । धोरिता । अदुधोरत् । धोरितकोऽश्वानां गतिविशेषः । निष्ठान्तात्सञ्ज्ञायां कन् ॥ ५४६ ॥

त्सर छद्मगतौ ॥ त्सरति । तत्सार । तत्सरतुः । त्सरिता । अत्सारीत् । 'अतो ल्रान्तस्ये'ति वृद्धिः । तित्सरिषति । तात्सर्यते । तात्सरीति ।

दृश्यन्त' इति भूते । चर्माण्यस्याः सन्ति चर्मण्वती नदी । 'आसन्दीवदष्ठीवच्चक्रीवत्कक्षीवद्रुमण्वच्चर्मण्वती'ति मतुपि नलोपाभावो णत्वं च सञ्ज्ञाया निपात्यते । चर्मी । 'व्रीह्यादिभ्यश्चे'ति मत्वर्थ इनिः 'नस्तद्धित इति टिलोपः । चर्मिणोऽपत्यं चार्मिकायणिः । 'वाकिनादीनां कुक्चे'ति फिञ् कुक्चागमः । कुकि नान्तत्वाभावेऽपि चर्मवर्मिणोर्नलोपश्चेति वचनाल्लोपः । सर्वचर्मणा कृतः सर्वचर्मीणः । सार्वचर्मीणः । 'सर्वचर्मणः कृतः खखञा'विति कृत इत्यर्थे तृतीयान्तात् अस्मात् खखञौ, सर्वचर्मण इत्यसमर्थः समासः, यतः सर्वशब्दस्य कृत इत्यनेन सम्बन्धो वृत्त्यादावुक्तः । चर्मणः कोशश्चार्मः । 'चर्मणः कोश उपसङ्ख्यानमि'ति टिलोपः, अन्यत्र नेति प्रकृतिभावाच्चार्मणं वस्तु । चारु । दृसनिजनिचरीति ञुण् प्रत्ययः । चरु । भृमृशीतृचरीत्युप्रत्ययः । अयं हि भीमादित्वदपादाने चरन्त्यस्मादिति हि व्युत्पत्तिः । चरक वुन्, चरकेण प्रोक्तमपि चरकम् । 'तेन प्रोक्त'मित्यण्, कठचरकाल्लुगि'ति लुक्, चरको नाम वैशम्पायनः । उक्तं च कलापिवैशम्पायनान्तेवासिभ्यश्चे'त्यत्र अलम्बिश्चरकः प्राचां पतिलिटिकमलानुभावान्युपादाय चरको नाम वैशम्पायन इति, तत्राभेदविवक्षाया भव्यादीनामिद विशेषणं, चरकाय हितं चारकीणम् । 'माणवचरकाभ्यां खञि'ति तस्मै हितमिति विषये खञ् । चर सञ्चयनइति चुरादौ ॥ ५५२ ॥

ष्ठिवु निरसने ॥ सुब्धातुष्ठिवुष्वष्कतीनां प्रतिषेध इति प्रतिषेधः सत्वस्य । अस्य द्वितीयस्यकारष्टकारो वेति वृत्तिः, आचार्येण शिष्येभ्य उभयथा प्रतिपादनात् उभयमपि प्रमाणमिति व्याख्यातारः । ष्ठीवति । 'ष्ठिवुक्लमुचमां शिती'ति दीर्घः । तिष्ठेव । तिष्ठिवतुः । अभ्यासे खयः शेषः । ष्ठेविता । ष्ठेविष्यति । ष्ठीवतु । आशिषि ष्ठीव्यात् । 'हलि चे'ति दीर्घः । अष्ठेवीत् । तिष्ठेविषति । तुष्ठ्यूषति । 'सनीवन्तर्द्धे'ति सनः पक्षे इडागमः, अन्यदा च 'हलन्ताच्चे'ति सनः कित्त्वे वलि लोपं बाधित्वा 'च्छ्वोः शूडि'ति ऊठि यणादेशे द्विर्वचनम् । अत्र वर्णमात्राश्रयत्वेन चान्तरङ्गे यणि कर्तव्ये बाह्यप्रकृतिप्रत्ययाश्रयत्वेन बहिरङ्गस्योठोऽसिद्धत्वं न

भवति नाजानन्तर्यइति निषेधात् । तेष्ठीव्यते । ष्ठेवयति । अतिष्ठिवत् । ऊठ्वाविना वकारान्ताना यङ्लुङ्नास्तीति तैवतावुक्तम् । टकारपक्षे सर्वत्राभ्यासे टकार उदाहार्यः । टिष्ठेवेत्यादि । ष्ठेवित्वा । ष्ठ्यूत्वा, उदित्त्वादिड्विकल्प इति 'न क्त्वासेडि'ति कित्त्वनिषेधाद्गुणः, अन्यदा तु कित्त्वादूठि यणादेशः । ष्ठ्यूतः । ष्ठ्यूतिः । 'यस्य विभाषे'तीतुक्त्येनिट्त्वम् । ष्ठीवनम् । ष्ठेवनम् । पृषोदरादित्वात्पक्षे दीर्घः, तथा च चान्द्रसूत्रम् । ष्ठिवुसिवोर्दीर्घश्चेति । अथ दिवादावपि ॥ ५५३ ॥

जि जये ॥ अत्र मैत्रेय उत्तरधातुपाठ्याानुरोधेनाजन्तोऽप्यत्र निर्दिश्यतइति । इह जय उत्कर्षप्राप्तिरित्यकर्मकोऽयम् । यस्त्वयेऽभिभवार्थः स सकर्मकः । यदाह देवः ।

जयति[illegible]ऽसावकर्मकः ।
उत्कर्षप्राप्तिरर्थोऽर्थो, द्वितीयेर्थे सकर्मक इति ॥

जयति । जिगाय । जिग्यतुः । जिगयिथ । जिगेथ । जिग्यिव । 'सन्लिटोर्जे'रित्यभ्यासादुत्तरस्य कुत्वं गकारः । अजन्तत्वादनिट्त्वे क्रादिनियमादिट्, थलि तु भारद्वाजनियमादिड्विकल्पः । अजादौ क्ङिति लिटि 'एरनेकाच' इति यण् । जेता । जेष्यति । जयतु । अजयत् । जयेत् । जीयात् । 'अकृत्सार्वधातुकयो'रिति दीर्घः । अजैषीत् । जिगीषति । 'इको झलि'ति सनः कित्त्वान्न गुणः । 'अज्झनगमां सनि' अजन्तानां हन्तेर्गमेश्च झलादौ सनि दीर्घ इति दीर्घः । पूर्ववदभ्यासात्परस्य कुत्वम् । जेजीयते । जेजयीति । जेजेति । जेजितः । जेज्यति । अजादौ क्ङिति यण् । जापयति । 'क्रीङ्जीनाणौ' वित्येचः स्थाने आत्वे पुगागमः । अजीजपत् । विजयते । पराजयते । 'विपराभ्यां जे'रिति तङ् । अथ प्रकृतिग्रहणन्यायेन यङ्लुगन्तादपि इति विजेजिते पराजेजितइति । यङ्लुगन्तात्सनि 'सन्लिटोर्जे'रिति कुत्वं न भवति, तत्र प्रत्यासत्त्या सन्लिड्निमित्तस्यैवाभ्यासस्य ग्रहणात् । तथा च वृत्तिः । सनि लिटि च प्रत्यये जेरङ्गस्य योऽभ्यास इति । विपराभ्यां मिति अत्रोपसर्गयोर्ग्रहणात्

णा जयन्ति मेनेत्यादौ तङ् न भवति । अस्याकर्मकत्वात्सर्वे कृतो न सन्तीति तत्क्रियाभिमवार्थं प्रदर्शयिष्यन्ते ॥ ५५४ ॥

जीव प्राणधारणे ॥ प्राणानलक्षणस्य कर्मणो धात्वर्थेनोपसंग्रहणादकर्मकोऽयम् । जीवति । जिजीव । जीवितेत्यादि । जिजीविषति । जेजीव्यते । वकारान्तानामूङ्भाविना यङ्लुङ् नास्तीति तेवतावुक्तम् । जीवयति । अजिजीवत् । अजीजिवत् । भ्राजभासेत्यादिना णौ चङ्युपधाह्रस्वविकल्पः । यावज्जीवम् । यावति विन्दजीवो रिति यावत्युपपदे णमुल् । जीविका । धात्वर्थनिर्देशे ण्वुल् वक्तव्य इति ण्वुल् । जीवनस्य मूतो जीमूतः । पृषोदरादिपाठाज्जीभावः । उणादौ तु जेर्मूट् चोदात्त इति जयतौ व्युत्पादितः । जीवातु । 'जीवेरातु'रित्यातुप्रत्ययः । जैवातृकः । 'जीवेरातृकन् वृद्धिश्चे'ति आतृकनि वृद्धिः । जीवन्तः । 'रुहिनन्दिजीविप्राणिभ्यो झच् षिदाशिषी'ति झच्, षित्त्वाभावात् स्त्रियां ङीषि जीवन्ती । जीवन्तस्य गोत्रापत्यं जैवन्तायनः । 'द्रोणपर्वतजीवन्तादन्यतरस्या'मिति गोत्रापत्ये वा फक् । तदभावे इञि जैवन्तिः ॥ ५५५ ॥

पीव मीव तीव णीव स्थौल्ये ॥ पीवति । पिपीव । पीविता । पिपीविषति । पेपीव्यते । पीवयति । अपीपिवत् । एवं मीवति । नीवतीत्यादि । प्रणीवति । 'उपसर्गादसमासेऽपी'ति णत्वम् । पीवरः स्थूलः । मीवरः मार्गः । तीवरो निषादः । नीवरो वणिक् । 'छित्वरेत्यादि'ना वरचि वलि लोपे निपात्यन्ते । टित्त्वात् स्त्रियां ङीपि पीवरीत्यादि । उणादिवृत्तौ तु पा पाने तेवृ देवने, मार्ग मार्गणे, णीञ् प्रापणे, इत्येतेभ्य एते व्युत्पादिता ॥ ५५९ ॥

ष्ठिवु निरसने ॥ ष्ठीवतीत्यादि । उदित्त्वात् क्त्वायामिड्विकल्पः । ष्ठीवित्वा । ष्ठ्यूत्वा । इडभावे ऊठि यणादेशः । निष्ठायां 'यस्य विभाषे'तीड्निषेधात् ष्ठ्यूतः । ष्ठेवु निरसन इति चन्द्रः । ष्ठेवतीत्यादि ॥ ५६० ॥

उर्वी तुर्वी थुर्वी धुर्वी दुर्वी हिंसार्थाः ॥ ऊर्वति । ऊर्वां चकार । ऊर्विता । ऊर्विष्यति । ऊर्वतु । और्वत् । ऊर्वेत् । ऊर्व्यात् । और्वीत् ।

ऊर्विविषति । ऊर्वयति । मा भवानूर्विर्वत् । रेफोपधत्वा'दुपधायां चे'ति सर्वत्र दीर्घः । ऊर्णः । ऊर्णवान् । ईदित्त्वान्निष्ठायामनिट्त्वे झलादिप्रत्ययपरत्वा'द्राल्लोप'इति वलोपे रेफस्य हल्परत्वाद्'हलि चे'ति दीर्घः । 'रदाभ्या'मिति निष्ठानस्य णत्वम्, एव क्विप्यपि । 'राल्लोप' इति वलोपे 'र्वोरुपधाया' इति पदत्वे दीर्घः, ऊः उरौ उर इत्यादि । तूर्वति । तुतूर्व । तूर्विता । तुतूर्विषति । तोतूर्यते । 'हलो यमा'मिति वकारस्य लोपो यथासख्यान्न भवति । तोतूर्वीति । तोतोर्त्ति । तोतूर्त्तः । तोतूर्वति इत्यादि । पिट्वचनेष्वनिट्त्वे वकारस्य झल्परत्वेनानुनासिकादिप्रत्ययपरत्वेन च राल्लोपे लघूपधगुणः । 'हलि चे'ति दीर्घत्वं तु गुणे पूर्वत्रासिद्धम् । ङित्स्वरेनैव दीर्घः । तोतूर्तीत्यत्र परत्वान्नित्यत्वाद् राल्लोपात्पूर्वमिड्भावे कृते झल्परत्वाभावान्न राल्लोपः । 'उपधाया चे'ति रेफोपधत्वाद्दीर्घः । तोतूर्त इत्यत्र वलि लोपे 'हलि चे'ति दीर्घः । अझलादित्वादननुनासिकत्वाच्च राल्लोपस्य न प्रसङ्गः । तोतोर्तु । तोतूर्तात् । तोतूर्हि । तोतूर्त्तम् । उत्तमे राल्लोपस्यानित्यत्वादाडागमः । लुङि तिप्सिपोः परत्वाद्राल्लोपे हल्ङ्यादिलोपे अतोतोः'रिति । अतोतूर्वुरित्यत्र परत्वाद् जुसि झल्परत्वाभावान्न राल्लोपः । तूर्वयति । अतुतूर्वत् । तूर्वित्वा । तूर्णः । तूर्णवान् । ईदित्त्वान्निष्ठायामनिट्त्वम् । एवं थूर्वति, दूर्वति, धूर्वतीत्यादि । धूः । धुरौ । 'भ्राजभासभाषे'त्यादिना क्विपि राल्लोपः । पदत्वे 'र्वोरि'ति दीर्घः । धूर्ष्वित्यत्र 'खरवसानयो'रिति विसर्जनीयो 'रोः सुपि' रोरेव सुपीति नियमान्न भवति । धूर्पतिः । 'अहरादीनां पत्यादिषु उपसंख्यान'मिति विसर्जनीयापवादः पत्ते रेफ । उभयत्राप्यादिशब्दः प्रकारइति हरदत्तः । रेफाभावे विसर्जनीयो धूःपतिः । अत्र विसर्जनीयस्य 'कुप्वोः ≍क ≍पौ चे'ति पवर्गपरत्वेन पत्तउपध्मानीय उदाहार्यः । 'इणः ष'इति षत्वमपदादिकवर्गपवर्गपरविसर्जनीयविषयमितीह न भवति । धुर्यो धौरेयः । 'धुरो यड्ढकावि'ति द्वितीयान्ताद्वहतीत्यर्थे यड्ढकौ । धुर्यमित्यत्र 'हलि चे'ति दीर्घस्य 'न भकुर्छुरा'मिति प्रतिषेधः । 'र्वोरि'ति दीर्घस्तु 'यचि भ'मिति भत्वेन पदत्वस्य बाधान्न भवति ।

परा जयति मेनेत्यादौ तङ् न भवति । अस्याकर्मकत्वात्सर्वे कृतो न सन्तीनि तन्त्रेणाभिभवार्थे प्रदर्शयिष्यन्ते ॥ ५५४ ॥

जीव प्राणधारणे ॥ प्राणलक्षणस्य कर्मणो धात्वर्थेनोपसंग्रहणादकर्मकोऽयम् । जीवति । जिजीव । जीविततेत्यादि । जिजीविषति । जेजीव्यते । वकारान्तानामुङभावे विना यङ्लुङ् नास्तीति तेवतावुक्तम् । जीवयति । अजिजीवत् । अजीजिवत् । भ्राजभासेत्यादिना णौ चङ्युपधाह्रस्वविकल्पः । यावज्जीवम् । यावति विन्दजीवोरिति यावत्युपपदे णमुल् । जीविका । धात्वर्थनिर्देशे ण्वुल् वक्तव्य इति ण्वुल् । जीवनस्य मूतो जीमूतः । पृषोदरादिपाठाज्जीभावः । उणादौ तु जेर्मुट् चोदात्त इति जयतौ क्षुन्दिनः । जीवातु । 'जीवेरातुरि'त्यातुप्रत्ययः । जैवातृकः । 'जीवेरातृकन् वृद्धिश्चे'ति आतृकनि वृद्धिः । जीवन्तः । 'रुहिनन्दिजीविप्राणिभ्यो झच् षिद्वदाशिषी'ति झच्, षिद्वद्भावात् स्त्रियां ङीषि जीवन्ती । जीवन्तस्य गोत्रापत्य, जैवन्तायनः । 'द्रोणपर्वतजीवन्तादन्यतरस्या'मिति गोत्रापत्ये वा फक् । तदभावे इञि जैवन्तिः ॥ ५५५ ॥

पीव मीव तीव णीव स्थौल्ये ॥ पीवति । पिपीव । पीविता । पिपीविषति । पेपीव्यते । पीवयति । अपीपिवत् । एव मीवति । तीवतीत्यादि । प्रणीवति । उपसर्गादसमासेपी'ति णत्वम् । पीवरः स्थूलः । मीवर मार्गो । तीवरो निषादः । नीवरो वणिक् । 'छित्वरेत्यादि'ना वरचि वलि लोपे निपात्यन्ते । टित्वात् स्त्रियां ङीपि पीवरीत्यादि । उणादिवृत्तौ तु पा पाने तेवृ देवने, मार्ग मार्गणे, णीञ् प्रापणे, इत्येतेभ्य एते क्षुन्यादिताः ॥ ५५९ ॥

ष्ठीवु निरसने ॥ ष्ठीवतीत्यादि । उदित्त्वात् क्त्वायामिड्विकल्पः । ष्ठीवित्वा । ष्ठ्यूत्वा । इडभावे ऊठि यणादेशः । निष्ठायां 'यस्य विभाषे'तीडनिषेधात् ष्ठ्यूतः । ष्ठेवु निरसनइति चन्द्रः । ष्ठेवतीत्यादि ॥ ५६० ॥

उर्वी तुर्वी थुर्वी धुर्वी दुर्वी हिंसार्थाः ॥ ऊर्वति । ऊर्वा चकार । ऊर्विता । ऊर्विष्यति । ऊर्वतु । और्वत् । ऊर्वेत् । और्व्यात् । और्वीत् ।

ऊर्विविषति । ऊर्वयति । मा भवानूर्विवत् । रेफोपधत्वा दुपधाया चे'ति सर्वत्र दीर्घः । ऊर्णा । उर्णवान् । ईदित्त्वान्निष्ठायामनिट्त्वे झलादिप्रत्ययपरत्वा द्राल्लोप'इति वलोपे रेफस्य हल्परत्वाद्'हलि चे'ति दीर्घः । 'रषाभ्या'मिति निष्ठानस्य णत्वम्, एवं क्विप्यपि । 'राल्लोप' इति वलोपे 'र्वोरुपधाया' इति पदत्वे दीर्घः, ऊः उरौ उरः इत्यादि । तूर्वति । तुतूर्व । तूर्विता । तुतूर्वषति । तोतूर्य्यते । 'हलो यमा'मिति वकारस्य लोपो यथासङ्ख्यात्र भवति । तोतूर्वीति । तोतोर्त्ति । तोतूर्त्तः । तोतूर्वति इत्यादि । पितुवनेष्वनिट्त्व वकारस्य झल्परत्वेनानुनासिका-दिप्रत्ययपरत्वेन च राल्लोपे लघूपधगुणः । 'हलि चे'ति दीर्घत्व तु गुणे पूर्वत्रासिद्धम् । ङितस्वरेनैव दीर्घः । तोतूर्वतीत्यत्र परत्वान्नित्यत्वाद् राल्लोपात्पूर्वमद्भावे कृते झल्परत्वाभावान्न राल्लोपः । 'उपधाया चे'ति रेफोपधत्वाद्दीर्घः । तोतूर्त इत्यत्र वलि लोपे हलि चे'ति दीर्घ. । अझलादित्वादनुनासिकत्वाच्च राल्लोपस्य न प्रसङ्ग. । तोतोर्तु । तोतू-र्तात् । तोतूर्हि । तोतूर्त्तम् । उत्तमे राल्लोपस्यानित्यत्वादाडागमः । लुङि तिप्सिपोः परत्वाद्राल्लोपे हल्ङ्यादिलोपे अतोतोरिति । अतोतूर्वुरित्यत्र परत्वाद् जुसि झल्परत्वाभावान्न राल्लोपः । तूर्वयति । अतुतूर्वत् । तूर्वित्वा । तूर्णः । तूर्णवान् । ईदित्त्वान्निष्ठायामनिट्त्वम् । एवं थूर्वति, दूर्वति, धूर्वतीत्यादि । धूः । धुरौ । 'भ्राजभासभाषे त्यादिना क्विपि राल्लोपः । पदत्वे 'र्वोरि'ति दीर्घः । धूर्ष्वित्यत्र 'खरवसानयो'रिति विसर्जनीयो 'रोः सुपि' रोरेव सुपीति नियमान्न भवति । धूर्पतिः । 'अहरादीना पत्यादिषु उपसङ्ख्यान'मिति विसर्जनीयापवादः पक्षे रेफ । उभयत्राप्यादिशब्दः प्रकारइति हरदत्तः । रेफाभावे विसर्जनीयो धूःपतिः । अत्र विसर्ज-नीयस्य 'कुप्वोः ᳲक ᳲपौ चे'ति पवर्गपरत्वेन पक्षउपध्मानीय उदाहार्यः । 'इणः ष'इति षत्वमपदादिकवर्गपवर्गपरविसर्जनीयविषयमिनीह न भवति । धुर्यो धौरेयः । 'धुरो यड्ढकावि'ति द्वितीयान्ताद्वहतीत्यर्थे यड्ढकौ । धुर्यमित्यत्र 'हलि चे'ति दीर्घस्य 'न भकुर्छुरामि'ति प्रतिषेधः । 'र्वोरि'ति दीर्घस्तु 'यचि भ'मिति भत्वेन पदत्वस्य बाधान्न भवति ।

सर्वधुरं वहति सर्वधुरीणः । 'ख. सर्वधुरादि'ति खः । ख इति योगविभागादुत्तरधुरीणः । उत्तरधुरीण इति वृत्तिः । योगविभागस्येष्टसिद्ध्यर्थत्वाद् धुरीण इत्यपि द्रष्टव्यम् । अत्र 'ऋक्पूरब्धूःपथामानक्षे'इति ऋगाद्यन्ते समासे ऽकारस्य समासान्तस्य विधानात्परवल्लिङ्गं द्वन्द्वतत्पुरुषयो'रिति परवल्लिङ्गतया सर्वधुराया इति निर्द्दिष्टव्ये सर्वधुरादिति निर्देशः शब्दरूपापेक्ष इति वृत्तावुक्तम् । अनक्ष इति वचनादक्षस्य धूरक्षधूः दृढा धूरस्य दृढधूरक्ष इत्यादावकारो न भवति । सुधूरतिधूः किंधूरधूरित्यत्र 'न पूजनात्' 'किमः क्षेपे' 'नञस्तत्पुरुषा'दि'ति समासान्ताभावः । पूजायां स्वती परिगणितौ । 'किमः क्षेप'इत्यत्र न्यासान्तरेणापि क्षेपग्रहणे लक्षणप्रतिपदोक्तपरिभाषया 'किं क्षेप'इति विहितस्य क्षेपविषयस्यैव तत्पुरुषस्य लाभे तत्करणात्सा च नेहास्तीति कुत्सिता धूरस्य किंधू शकट इत्यत्रापि समासान्तो नेत्युक्तं पदमञ्जर्या, तद्भाष्यविरोधादुपेक्ष्यमिति । अयं चाकारः समासार्थादुत्तरपदादक्रतएव समासे भवति, तेन द्विधुरीत्यादावकारान्तोत्तरपदत्वाद् 'द्विगो'रिति ङीप्सिद्धः । एतच्च जेमतावुपपादितम् । एकधुरं वहति, एकधुरीणः । एकधुरः । 'एकधुराल्लुक् चे'ति लुक् खश्च पक्षे । धूर्त्तो हस्ती । हसिमृग्रिण्वामिन्यादिना तन् । अक्षेषु धूर्त्तः । 'सप्तमी शौण्डै'रिति सप्तम्यन्तं शौण्डादिना समस्यते,ब्राह्मणधूर्त्तः 'पोटायुवती'त्यादिना समासः ॥ ५६५ ॥

गुर्वी उद्यमने ॥

मूर्वी बन्धने ॥ गूर्वति । मूर्वति । मुमूर्वेत्यादि । गूर्वा । 'गुरोश्चे'त्यकारप्रत्ययः । मौर्वी । 'तस्य विकार' इत्यण्, ङीप् ॥ ५६७ ॥

पूर्व पर्व मर्व पूरणे ॥ पूर्वति । 'उपधायां चे'ति दीर्घः । क्विपि वाल्लोपे पूः । पिपर्त्तौ च व्युत्पादयिष्यते । पुरि भवादि पौरेयम् । नद्यादिभ्यो ढगि'ति शैषिको ढक् । वृत्तौ पूर्वनगरीति पठित्वा केचित्पूर्वनगरीति पठन्ति विच्छिद्य च प्रत्ययं कुर्वन्ति, उभयमपि प्रमाणमित्युक्तम् । द्विपुरी 'ऋक्पूरब्धू'रित्यकारः समासान्तः, स चाक्तएव समासइति जम्भतावुक्तं, तेनाकारान्तोत्तरपदद्विगुत्वे ङीप् पूर्ववदत्रापि । स्वतिकिनञः परत्वे समासान्तो न

भवति। पूर्वः । अच् । 'सर्वादीनि सर्वनामानि' अमज्ञोपसर्जनानि सर्वादीनि सर्वनामसञ्ज्ञानीति सर्वनामत्वे 'सर्वनाम्नः स्मै' इति ङेः स्मैभावः । पूर्वस्मै । 'पूर्वादिभ्यो नवभ्यो वे ति पूर्वस्मात् । पूर्वात् । पूर्वस्मिन् । पूर्वे । इति पूर्वस्य स्मात्स्मिनौ, आमि सर्वनाम्नः सुडि'ति पूर्वेषामित्यामः सुडागमः, 'बहुवचने झल्ये'दित्येत्वे षत्वम् । 'जसि च' 'पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसञ्ज्ञाया'मिति जसः कार्यं प्रति सर्वनामसञ्ज्ञाविकल्पनात् सर्वनामत्वे 'जसः शी'ति शीभावे पूर्वे । पूर्वाः । जसः कार्यं प्रतीत्युक्तत्वा'दव्ययसर्वनाम्नामकच् प्राक् टे'रित्यकचि सञ्ज्ञाया विकल्पनाभावात्पूर्वके। पूर्वका इति भवति । व्यवस्था नाम स्वाभिधेयापेक्षो ऽवधिनियम. । मासेन पूर्वाय मासपूर्वायेत्यत्र 'पूर्वसदृशेति' तृतीयासमासत्वे तृतीयासमास'इति सर्वनामत्वाभावः । अत्र समासइति प्रकृते पुनः समासवचनाद्वाक्येपि नेय सञ्ज्ञा । स्त्रियां तु 'सर्वनाम्नः स्याड् ह्रस्वश्चे'ति ङिद्वचनेषु स्याडागमे ह्रस्वत्वे पूर्वस्यै पूर्वस्याः२, पूर्वस्यामिति । शीभावाद्यनदन्तत्वान्न भवति । पूर्वस्मिन्नहनि, पूर्वेद्युः । 'सद्यः परुत्परार्यैषमःपरेद्यव्यद्यपूर्वेद्युरन्येद्युरन्यतरेद्युरितरेद्युरपरेद्युरधरेद्युरुभयेद्युरुत्तरेद्युरि'ति द्युप्रत्यये यस्येति लोपो निपात्यते । 'तद्धितश्चासर्वविभक्ति'रिति अव्ययश्चायम् । पुरो वसति । पुरत आगत , पुरो रमणीयम् । 'पूर्वाधरावराणामसिपुरधवश्चैषामि'ति सप्तमीपञ्चमीप्रथमान्तेभ्य. पूर्वादिभ्यो ऽसिप्रत्ययः स्वार्थे तत्सन्नियोगेनैषां यथासङ्ख्यं पुरादय आदेशा इत्यसिप्रत्यये पूर्वस्य पुरादेशः पुरस्ताद्वसति । पुरस्तादागतः । पुरस्ताद्रमणीयम् । 'अस्ताति च' अस्तातौ परतः पूर्वादिभ्यः पूर्ववत् पुराद्यादेशाः । पूर्वतः । पूर्वत्र । 'किंसर्वनामबहुभ्यो ऽद्व्यादिभ्य'इत्यधिकृत्य 'पञ्चम्यास्तसिल्' 'सप्तम्यास्त्रलि'ति स्वार्थे तसिल्त्रलौ, पुरो भव पौरस्त्यम् । 'दक्षिणापश्चात्पुरसस्त्यकि'ति शैषिकस्त्यक्, पुरस्कृत्य 'पुरोव्ययमि'ति क्रियायोगे गतित्वा'त्कुगती'ति समासे क्त्वो ल्यप् । 'नमस्पुरसोर्गत्योरि'ति कुप्वोः परतो विसर्जनीयस्य सत्वम्, गतिसञ्ज्ञायामव्ययवचनात् पुरः कृत्वेत्यत्रानव्ययत्वेन गतित्वाभावात् सत्वसमासयोरभावः। पूर्वं कृतमनेन पूर्वी । 'पूर्वादिनिरि'ति प्रथमा-

सर्वधुरं वहति सर्वधुरीणः । 'खः सर्वधुरादि'ति खः । ख इति योगविभागादुत्तरधुरीणः । उत्तरधुरीण इति वृत्तिः । योगविभागस्येष्टसिद्ध्यर्थत्वाद् धुरीण इत्यपि द्रष्टव्यम् । अत्र 'ऋक्पूरब्धूःपथामानक्षे' इति अकारान्ते समासे ऽकारस्य सामासान्तस्य विधानात् 'परवल्लिङ्गं द्वन्द्वतत्पुरुषयो'रिति परवल्लिङ्गतया सर्वधुराया इति निर्देष्टव्ये सर्वधुरादिति निर्देशः शब्दरूपापेक्ष इति वृत्तावुक्तम् । अनक्ष इति वचनादक्षस्य धूरक्षधूः दृढा धूरस्य दृढधूरक्ष इत्यादावकारो न भवति । सुधूरतिधूः किंधूर्धूरित्यत्र 'न पूजनात्' 'किमः क्षेपे' 'नञस्तत्पुरुषादि'ति समासान्ताभावः । पूजायां स्वती परिगणितौ । 'किमः क्षेप' इत्यत्र न्यासान्तरेणापि क्षेपग्रहणं लक्षणप्रतिपदोक्तपरिभाषया 'किं क्षेप' इति विहितस्य क्षेपविषयस्यैव तत्पुरुषस्य लाभे तत्करणात्सा च नेहास्तीति कुत्सिता धूरस्य किंधूः शकट इत्यत्रापि समासान्तो नेत्युक्तं पदमञ्जर्यां, तद्भाष्यविरोधादुपेक्ष्यमिति । अयं चाकारः समासार्थादुत्तरपदादकृत एव समासे भवति, तेन द्विधुरीत्यादावकारान्तोत्तरपदत्वाद् 'द्विगो'रिति ङीप्सिद्धः । एतच्च जेमतावुपपादितम् । एकधुरं वहति, एकधुरीणः । एकधुरः । 'एकधुराल्लुक् चे'ति लुक् खश्च पक्षे । धूर्त्तो हस्ती । हसिमृग्रिण्वामित्यादिना तन् । अक्षेषु धूर्त्तः । 'सप्तमी शौण्डै'रिति सप्तम्यन्तं शौण्डादिना समस्यते, ब्राह्मणधूर्तः 'पोटायुवती'त्यादिना समासः ॥ ५६५ ॥

गुर्वी उद्यमने ॥

मूर्वी बन्धने ॥ गूर्वति । मूर्वति । मुमूर्वेत्यादि । गूर्वा । 'गुरोश्चे'त्यकारप्रत्ययः । मौर्वी । 'तस्य विकार' इत्यण्, ङीप् ॥ ५६७ ॥

पूर्व पर्व मर्व पूरणे ॥ पूर्वति । 'उपधायां चे'ति दीर्घः । क्विपि राल्लोपे पूः । पिपर्त्तौ च व्युत्पादयिष्यते । पुरि भवादि पौरेयम् । 'नद्यादिभ्यो ढगि'ति शैषिको ढक् । वृत्तौ पूर्वनगरीति पठित्वा केचित्पूर्वनगरीति पठन्ति विच्छिद्य च प्रत्ययं कुर्वन्ति, उभयमपि प्रमाणमित्युक्तम् । द्विपुरी 'ऋक्पूरब्धू'रित्यकारः समासान्तः, स चाकृत एव समास इति जेमतावुक्तं, तेनाकारान्तोत्तरपदद्विगुत्वे ङीप् पूर्ववदत्रापि । स्वातिकिनञः परत्वे समासान्तो न

भवति। पूर्वः । अच् । 'सर्वादीनि सर्वनामानि' असंज्ञोपसर्जनानि सर्वादीनि सर्वनामसंज्ञानीति सर्वनामत्वे 'सर्वनाम्नः स्मै' इति ङेः स्मैभावः । पूर्वस्मै । 'पूर्वादिभ्यो नवभ्यो वे'ति पूर्वस्मात् । पूर्वात् । पूर्वस्मिन् । पूर्वे । इति पूर्वस्य स्मात्स्मिनौ, 'आमि सर्वनाम्नः सुडि'ति पूर्वेषामित्यामः सुडागमः, 'बहुवचने झल्ये'दित्येत्वे षत्वम् । 'जसि च' 'पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसंज्ञाया'मिति जसः कार्यं प्रति सर्वनामसंज्ञाविकल्पनात् सर्वनामत्वे 'जसः शी'ति शीभावे पूर्वे । पूर्वाः । जसः कार्यं प्रतीत्युक्तत्वा'दव्ययसर्वनाम्नामकच् प्राक् टे'रित्यकचि संज्ञाया विकल्पनाभावात्पूर्वके। पूर्वका इति भवति । व्यवस्था नाम स्वाभिधेयापेक्षो ऽवधिनियमः। मासेन पूर्वाय मासपूर्वायेत्यत्र 'पूर्वसदृशे'ति तृतीयासमासत्वे 'तृतीयासमास' इति सर्वनामत्वाभावः । अत्र समास इति प्रकृते पुनः समासवचनाद्वाक्येऽपि नेयं संज्ञा । स्त्रियां तु 'सर्वनाम्नः स्याड् ह्रस्वश्चे'ति ङिद्वचनेषु स्याडागमे ह्रस्वत्वे पूर्वस्यै, पूर्वस्याः२, पूर्वस्यामिति । शीभावाद्यनदन्तत्वान्न भवति । पूर्वस्मिन्नहनि, पूर्वेद्युः । 'सद्यः परुत्परार्यैषमः परेद्यव्यद्यपूर्वेद्युरन्येद्युरन्यतरेद्युरितरेद्युरपरेद्युरधरेद्युरुभयेद्युरुत्तरेद्युरि'ति द्युप्रत्यये यस्येति लोपो निपात्यते । 'तद्धितश्चासर्वविभक्ति'रिति अव्ययश्चायम् । पुरो वसति । पुरत आगतः, पुरो रमणीयम् । 'पूर्वाधरावराणामसि पुरधवश्चैषा'मिति सप्तमीपञ्चमीप्रथमान्तेभ्यः पूर्वादिभ्यो ऽसिप्रत्ययः स्वार्थे तत्संनियोगेनैषां यथासंख्यं पुरादय आदेशा इत्यसिप्रत्यये पूर्वस्य पुरादेशः पुरस्ताद्वसति । पुरस्तादागतः । पुरस्ताद्रमणीयम् । 'अस्ताति च' अस्तातौ परतः पूर्वादिभ्यः पूर्ववत् पुराद्यादेशाः । पूर्वतः । पूर्वत्र । 'किंसर्वनामबहुभ्यो ऽद्व्यादिभ्य' इत्यधिकृत्य 'पञ्चम्यास्तसिल्' 'सप्तम्यास्त्रलि'ति स्वार्थे तसिल्त्रलौ, पुरो भवं पौरस्त्यम् । 'दक्षिणापश्चात्पुरसस्त्यगि'ति शैषिकस्त्यक्, पुरस्कृत्य 'पुरोऽव्यय'मिति क्रियायोगे गतित्वात् 'कुगती'ति समासे क्त्वो ल्यप्। 'नमस्पुरसोर्गत्योरि'ति कुप्वोः परतो विसर्जनीयस्य सत्वम्, गतिसंज्ञायामव्ययवचनात् पुरः कृत्वेत्यत्रानव्ययत्वेन गतित्वाभावात् सत्वसमासयोरभावः । पूर्वं कृतमनेन पूर्वी । 'पूर्वादिनिरि'ति प्रथमा-

न्विकृणव्योर चेति शब्विषये उप्रत्यय, अकारश्चान्तादेशः । तस्यातो लोपः, तस्य स्थानिवत्त्वात् उप्रत्ययमपेक्ष्य लघूपधगुणो न भवति, तस्य पित्सु गुण । धिनोति । धिनुत. । धिन्वन्ति । अन्तादेशे यणादेशः । धिनोषि । धिनुवः । धिन्वः । लोपश्चास्यान्यतरस्यां म्वोः' । असंयोगपूर्वो य उकारस्तदन्तस्य प्रत्ययस्य वकारमकारादौ प्रत्यये वा लोप इति पक्षे उलोपः । पिति तु परत्वाद्गुणे उकारस्याभाव' । धिनोतु । धिनु । 'उतश्च प्रत्ययादसंयोगपूर्वात्' । योऽयमुकारो ऽसंयोगपूर्वः तदन्तात्प्रत्ययात् परस्य हेर्लुगिति लुक् । धिनवानि । नित्यत्वाद्गुकारलोपात् पूर्वमाट् । अधिनोत् । अधिनुताम् । अधिनोः । अधिनवम् । अधिन्व । अधिनुव । धिनुयात् । अन्यत्र लकारे पूर्ववत् । धिन्वयतीत्यादि । जिन्व तीत्यादि देवने गतम् ॥ ५८६ ॥

रिवि रवि धवि गत्यर्थाः ॥ रिण्वति । धन्वतीत्यादि । धन्वा । 'कनिन्युवृषितक्षिराजिधन्विद्युप्रतिदिव' इति कनिन् । उणादिवृत्तौ धन्विः सौत्रो धातुरुच्यते । नान्तत्वादसंबुद्धौ सर्वनामस्थाने दीर्घः । भसंज्ञायां 'न संयोगाद्वमन्तादि'ति अल्लोपनिषेधात् धन्वन इति । स्त्रियाम् 'अनो बहुव्रीहे'रिति ङीपो निषेधात् सुधन्वा सुधन्वानावित्यादि । यदा 'डाबुभाभ्यामि'ति डाप् तदा सुधन्वा सुधन्वे इत्यादि । अत्रान्यतरस्याग्रहणात् यत् इ पेऽभ्यनुज्ञानमुक्त तदुपधानोपित एवेति जैमताबुक्तम् ॥ ५८९ ॥

कृवि हिंसाकरणयोश्च ॥ चकाराद्गतौ । कृणोति । 'धिन्विकृण्व्योर, चे'ति शब्विषये उकारप्रत्ययोऽकारश्चान्तादेश. । अल्लोपादिसर्वं धिन्विवत् । अथ स्वादौ च ॥ ५९० ॥

मव बन्धने ॥ मवति । ममाव । मेवतुः । मविता । अमवीत् । अमावीत् । 'अतो हलादे'रिति वा वृद्धिः । मिमविषति । मामव्यते । मामवीति । मामोति । मामूत. । मामवति । मामोषि । मामोमि । मामावः । मामूमः । 'ज्वरत्वरश्रिव्यविमवामुपधायाश्च । ज्वरादिनामुपधावकारयोः क्वौ झलादावनुनासिकादौ च प्रत्यये परे ऊठ् इत्यूडादेशे पिति गुणः । मामवतीत्यत्र परत्वात् नित्यत्वात वृद्धावे ऽझलादित्व पर्यवसन्नमिति ऊठ्न भवति । मामावेत्यत्र वलि लोपे 'अतो दीर्घो यञी'ति दीर्घः । 'ज्वरत्वरेत्य'त्र क्व चित्

वृत्तिकारैः क्वौ झलादौ क्ङितीति न पठ्यते तत्र क्ङिद्ग्रहणं सपाततायानम् । अवतेस्तुन्योरितिदर्शनात्, तथा अनुनासिकादिग्रहणं चावश्यमत्रानुवर्त्यम् । अवतेर्मनिन्प्रत्यये तस्य च टिलोपे ओमिति दर्शनात् । तथा च 'न धातुलोप'इत्यत्र कैयटे आस्रेमाणमिति उपादाय छान्दसत्वाद्वकारस्य ऊण् न भवतीत्युक्तम् । मामोतु । मामौतात् । मामौहि । मामवानि । नित्यत्वादाटि अझलादित्व पर्यवसन्नमित्यूडभावः । लङि तिप्सिपोर्हलि अमामोत् । अमामोः । मिपि नित्यत्वादम्भावे अमामवम् । मावयति । अमीमवत् । षकारान्तानामूड्विना यङ्लुङ् नेति यदुक्तं तत् 'च्छ्वोरि'ति ऊड्विषय द्रष्टव्यम् । क्विपि मूः, मुवौ ॥ ५९१ ॥

अव रक्षणगतिकान्तिप्रीतितृप्त्यवगमप्रवेशश्रवणस्वाम्यर्थयाचनक्रियेच्छादीप्त्यवाप्त्यालिङ्गनहिंसादानभागवृद्धिषु ॥ अवति । आव । आवतुः । अविता । मा भवानवीत् । अविविषति । आवयति । मा भवानविवत् । क्विपि 'ज्वरत्वरे'त्यादिनोठ् । ऊतिः । ऊतियूती त्यादिना क्तिनि निपात्यते । स्त्रियां क्तिनि सिद्धे निपातनमुदात्तार्थम् । अविषः । 'अविमह्योष्टिषच्' इति टिषचि टित्वात् स्त्रियामविषी । ऊनः । 'इण्सिञ्जिदीङुष्यविभ्यो नगि'ति नकि कित्त्वादगुणत्वम् । ओम् । 'अवतेष्टिलोपश्चे'ति मन् तस्य च टिलोपः ऊठ् गुणः, ओतु । सितनीत्यादिना तुनि ऊठि गुणः, कृष्णोतुः । 'ओत्वोष्ठयोः समासे वा' इति वा पररूपम् । अन्यदा 'वृद्धिरेची'ति वृद्धिः । अविः । इन्नितीन् । अविरेवाविकः 'अवेः क' इति स्वार्थे कप्रत्ययः । अवनिः । 'अर्त्तिसृधृधम्यम्यशाववितृभ्योऽनि'रित्यनिः, अवनी । कृदिकारत्वात् ङीष् । अवी । 'अवितृस्तृतन्त्रिभ्य ईः' इति ईप्रत्ययः ॥ अव्यादय उदात्तेता जयतिवर्जम् ॥ ५९२ ॥

धावु गति शुध्योः ॥ उदात्तः स्वरितेत् । 'स्वरितञितः कर्त्रभिप्राये क्रियाफल'इति क्रियाफलस्य प्रधानस्य कर्तृगामित्वविवक्षाया लङ् । धावति । दधाव । दधावतुः । धावितेत्यादि । तङ्पक्षे धावते । इत्यादि । यदा क्रियाफलस्य कर्तृगामित्वमुपपदेन प्रतीयते तदा 'विभाषोपपदेन प्रतीयमान'इति परस्मैपद भवति । स्वार्थं धावतीति । दिधाविषति । दिधाविषते । 'पूर्वव-

त्मन' इति क्रियाफलस्य कर्तृगामित्वे तङ् । दाधाव्यते । धावयति । अदीधवत् । धावित्वा । धौत्वा । 'उदितो वे'तीड्विकल्पः । इडभावे 'च्छ्वोः शूडि'ति ऊठि 'एत्येधत्यूठ्स्वि'ति वृद्धिः, निष्ठायां 'यस्य विभाषे'ति अनिट्त्वात् धौतः । धौतवान् । अत्र मैत्रेयः कथं धावितो धावितवानिति उपक्रम्य कश्चित्तु तितनुनीनामीदित्त्वं 'यस्य विभाषे'त्यस्यानित्यत्वे ज्ञापकमाह, नित्यत्वे ह्यनेन 'सेऽसिचि कृतचृतच्छृदतृदनृत' इति सकारादावेवेटो विकल्पनात् निष्ठायामनिट्त्वस्य सिद्धत्वात्किं तदर्थेनेदित्त्वेन ॥ ५९३ ॥

अथ ऊष्मान्ता आत्मनेपदिनः ॥

धुक्ष धिक्ष संदीपनक्लेशनजीवनेषु ॥ धुक्षते । दुधुक्षे । धुक्षिष्यते । धुक्षताम् । अधुक्षत । धुक्षेत । धुक्षिषीष्ट । अधुक्षिष्ट । दुधुक्षिषते । दोधुक्षीति । दोधुष्टि । अनिटि 'स्कोरि'ति कलोपः । तस्यासिद्धत्वात् न लघूपधगुणः । दोधुक्षि । अनिट्त्वे 'स्कोरि'ति कलोपे 'षढोः कः सी'ति कत्वे मिपः षत्वम् । दोधुष्ट । दोधुड्ढि । । अत्र सेर्हिः, तस्य धित्वे 'झलां जश् झशी'ति डकारः । दोधुक्षाणि । लङि तिप्सिपोर्हल्ङ्यादिलोपे पदान्तसंयोगत्वात् कलोपे 'झलां जशोऽन्ते' इति जश्त्वस्य 'वावसाने' इति चर्त्वे अदोधोट् । धुक्षयति । अदुधुक्षत् । धुक्षः । एवं धिक्षतइत्यादि ॥ ५९५ ॥

वृक्ष वरणे ॥ वृक्षते । ववृक्षे । द्विर्वचने उरदत्वे च हलादिःशेषः । वृक्षितेत्यादि । विवृक्षिषते । वरीवृक्ष्यते । 'रीगृत्वत' इति रीगागमः । वर्वृष्टि । वरिवृष्टि । इत्यादि । वृक्षयति । अववृक्षत् । वृक्षः । वृक्षाः ॥ ५९६ ॥

शिक्ष विद्योपादाने ॥ शिक्षते । शिशिक्षइत्यादि धुक्षिवत् । अत्र मरट्टिशीकरादयः 'शिक्षेर्जिज्ञासायाम्' इति वचनं नियमार्थम् इति आचक्षाणा जिज्ञासाया अन्यत्र परस्मैपदमाहुः । तदयुक्तम् । शकेः सन्नन्तस्य शिक्षार्थसंभवात्, न च विध्यसंभवे नियमो युज्यते, एवमेव समर्थितः न्यासकैयटपदमञ्जर्यादिषु ॥ ५९७ ॥

भिक्ष भिक्षायाम् अलाभे लाभे च ॥ भिक्षतइत्यादि पूर्ववत् । अयं द्विकर्मकः, तत्राप्रधाने दुहादीनामिति वचनात् लकृत्यक्तखलर्था अप्रधाने भवन्ति पौरवो गां भिक्ष्यते। भिक्षितव्यः भिक्षितः सुभिक्ष इत्यादि। षष्ठी तु द्वितीयावदुभयत्र भवति । भिक्षिता गौः पौरवस्येति । अप्रधाने तूभयथा गोणिकापुत्र इति भाष्य उक्तत्वात् पौरवमिति द्वितीयापि भवति। भिक्षितव्यो राजा देवदत्तेनेत्यत्रानभिहिते कर्मणि कर्त्तरि च 'कर्तृकर्म्मणो'-रिति षष्ठ्या उभयप्राप्तौ कृति प्रतिषेध इत्युक्तत्वात् न भवति । सर्वमेतन्न्यायतावुपपादित तत एवावगन्तव्यम् । भिक्षुः । 'सनाशसभिक्ष-उरि'ति ताच्छीलिक उप्रत्ययः। भिक्षाकः । 'जल्पभिक्ष'ेति षाकन् । षित्त्वात् स्त्रियां भिक्षाकी ॥ ५९८ ॥

क्लेश अव्यक्तायां वाचि ॥ बाधनइति दुर्गः । अत्र स्वामी क्लेश व्यक्तायां वाचि चेति पठन्निमावपि पूर्वधातोरर्थावित्याह । चन्द्रदुर्गमैत्रेयसमताकारदेवादयस्तु धात्वन्तरमेवाहुः । क्लेशते । चिक्लेशे । क्लेशितेत्यादि । चिक्लेशिषते । क्लेश्यते ॥ ५९९ ॥

दक्ष वृद्धौ शीघ्रार्थे च ॥ दक्षते । ददक्षे । दक्षितेत्यादि । दक्षिणः । द्रुदक्षिभ्यामिनन्निनीनन्, पूर्वशब्दवत् सर्वनामत्वं तत्कार्यं च । स्त्रियां तु टापि दक्षिणा । दक्षिणामर्हतीत्यादि दक्षिणीयः । दक्षिण्यः । 'कडङ्कर दक्षिणाच्छ चे'ति द्वितीयान्तादर्हतीत्यर्थे छयतौ । ग्रामस्य दक्षिणतो वसति । दक्षिणत आगतः । दक्षिणतो रमणीयम् । 'दक्षिणोत्तराभ्यामतसुजि'-ति सप्तमीपञ्चमीप्रथमान्तात् स्वार्थे ऽतसुच्, 'षष्ठ्यतसर्थप्रत्ययेने'ति तद्युक्तात्षष्ठी । अतसर्थप्रत्ययइति सप्तम्याद्यन्तात्स्वार्थे यो विहितः स उच्यते। दक्षिणा ग्रामस्य । 'उत्तराधरदक्षिणादाति'रित्ययमातिरस्तुज्विषये पूर्ववत् ग्रामतः षष्ठी । दक्षिणेन ग्रामम् । ग्रामस्येति वा, 'एनबन्यतरस्यामदूरेऽपञ्चम्याः' इति उत्तरादिभ्य एनप् प्रत्ययः । अपञ्चम्या इति वचनादय सप्तमीप्रथमान्तेभ्य उत्तराद्यर्थो ऽवधिमापेक्ष इति अर्थावधिमतस्तस्य सामर्थ्यादवध्यपेक्षमदूरत्वम् । अन्यतरस्याग्रहणं यथाप्राप्तातसुजाद्यभ्यनुज्ञानार्थमितरथा ह्ययं दूरे बाधकः स्यात्, 'एनपा द्वितीये'ति तद्युक्तात् द्वितीया

षष्ठ्यर्थाख्ये इति षष्ठी पक्षे । दक्षिणा ग्रामात्, 'दक्षिणादाजि'त्याच् एनपो विषये, 'अन्यारादितरर्त्तेदिक्छब्दाञ्चूत्तरपदाजाहियुक्ते' इत्याजन्तयुक्तात्पञ्चमी । अन्य इत्यर्थग्रहणम्, आरादितरर्त्ते इति स्वरूपग्रहणम् । दिक्शब्दा दिशि दृष्टाः पूर्वादयः । अञ्चूत्तरपदाः प्रागादयः । आजाही प्रत्ययौ । दिक्शब्दत्वादेव सिद्धेऽञ्चूत्तरपदग्रहणमस्तात्यन्तार्थम् । तत्र हि 'षष्ठ्यतसर्थप्रत्ययेने'ति षष्ठी विधीयते, एवमाजाहोरपि । दक्षिणाहि ग्रामात् । 'आहि च दूर' इत्याहिः । पूर्ववदवध्यपेक्षदूरत्वे चकारादाजपि द्रष्टव्यः । सर्व एते तद्धितश्चासर्वविभक्तिरिति अव्ययसञ्ज्ञकाः । दक्षिणा भवः । दाक्षिणात्यः । 'दक्षिणापश्चात्पुरसस्त्यगि'ति शैषिकस्त्यक् । दक्षिणाशब्दः पश्चात्पुरोभ्यां साहचर्यादिहाजन्तोऽव्ययं गृह्यते । अत एव सर्वनामत्वाभावात् सर्वनाम्नो वृत्तिमात्रे पुंवद्भाव इति पुंवद्भावो न भवति ॥ ६०० ॥

दीक्ष मौण्ड्येज्योपनयननियमव्रतादेशेषु ॥ दीक्षत इत्यादि । 'अनुदात्तेतश्चे'ति युच् 'सूददीपदीक्षश्चे'ति निषेधाद्दीक्षितेति सामान्यस्तु न भवति ॥ ६०१ ॥

ईक्ष दर्शने । ईक्षते । ईक्षां चक्रे । ईक्षिता । ईक्षिष्यते । ईक्षताम् । ऐक्षत । ईक्षेत । ईक्षिषीष्ट । ऐक्षिष्ट । ईचिक्षिषते । ईक्षयति । ऐचिक्षत् । देवदत्तायेक्षते नैमित्तिकः । पृष्टः सन् शुभाशुभं पर्यालोचयतीत्यर्थः । 'राधीक्ष्योर्यस्य विप्रश्नः' । अनयोस्तत्कारकं सम्प्रदानं यस्य विप्रश्नः । यद्विषयः पृच्छ्यत इत्यर्थः । स्वसम्बन्धिनः शुभाशुभस्य विप्रश्नयोगित्वात्कारकमपि तथोच्यते । तदिह धात्वर्थात् शुभाशुभपर्यालोचनवृत्तिः । अन्यत्र देवदत्तमिति द्वितीयैव । सुखं प्रतीक्षते सुखप्रतीक्षः । सुखप्रतीक्षा । 'ईक्षिक्षमिभ्यां चेति वक्तव्य'मिति कर्मण्युपपदे णप्रत्ययः ॥ ६०२ ॥

ईष गतिहिंसादर्शनेषु ॥ ईषते । ईषां चक्रे ईषितेत्यादि । 'तीषसहलुभरुषरिष' इत्यत्र ह्रस्वादेर्ग्रहणात् ईषितेत्यादौ नेड्विकल्पः । ईषा । मनस ईषा मनीषा पृषोदरादिः । समीष्ट आचार्यः । ईष्व इति ववन्तस्य निपातनमस्येति मैत्रेयः । उणादिवृत्तौ त्विषु इच्छायामिति तौदादिकस्य

निपातनमुच्यते, इषु इति ह्रस्वादिः । तस्मात्तेयन्नुञ्छार्थे. । परस्मैपदिषु इषु गताविति दिवादौ,वयमिच्छार्थः तुदादौ । आभिक्ष्ण्यार्थः क्र्यादौ ॥ ६०३ ॥

भाष व्यक्तायां वाचि ॥ भाषते । बभाषे । भाषिता । भाषिष्यते । बाभाष्यते । बाभाष्टि । भाषयति । अबभाषत् । अबीभषत् । 'भ्राजभासे'त्युपधाह्रस्वविकल्प । भाषकः । 'निन्दहिंसे'त्यादिना वुञ् ताच्छीलिकः ॥ ६०४ ॥

वर्ष स्नेहने ॥ दन्त्योष्ठ्यादिः । वर्षते । ववर्षे । वर्षिता । विवर्षिषते । वावर्ष्यते । वावर्ष्टि । लङि तिप्सिपोः अवावर्ट् । 'रात्सस्ये'ति नियमाच्च संयोगान्तलोपः । वृषु सेचनइत्यत्र परस्मैपदी । शक्त्यर्थश्चुरादौ ॥ ६०५ ॥

गेषृ अन्विच्छायाम् ॥ ग्लेषृ इति मैत्रेयः । अन्विच्छान्वेषणम् । गेषते । जिगेषे । गेषिता । जिगेषिषते । जेगेष्टि । जेगेष्टः । गेषयति । अजिगेषत । ऋदित्वाच्चोपधाह्रस्वः ॥ ६०६ ॥

एषृ प्रयत्ने ॥ एषतइत्यादि ॥ ६०७ ॥

जेषृ णेषृ एषृ प्रेषृ गतौ ॥ जेषते । नेषते । प्रणेषते । एषते । एषां चक्रे । एषिता । एषिष्यते । एषयति । मा भवानेनिषत् । प्रेषते ॥ ६११ ॥

रेषृ ह्रेषृ अव्यक्ते शब्दे ॥ रेषते । अयं स्वभावाद्वृकविषय. । ह्रेषते । अयमश्वविषयः ह्रेषृ इति सरेफश्चात्र द्रष्टव्यः । यदाह केशवस्वामी । कौञ्चे कर्दति पर्दते गुदरवे रेषेति वाश्रे हसे बुक्कति श्वरवे भषेति हयजे ह्रेषेति हेषेति चेति । तथा हेषा ह्रेषा च निःस्वने इत्यमरः ॥ ६१३ ॥

कासृ शब्दकुत्सायाम् ॥ कासते । कासां चक्रे । 'कास्प्रत्यया'दित्याम् । कासिता । कासिष्यते । कासताम् । अकासत । कासेत । कासिषीष्ट । अकासिष्ट । चिकासिषते । चाकास्यते । चाकास्ति । लोटि हेर्धिभावे 'धि चे'ति सलोपे चाकाधि । न च 'धि चे'त्यत्र भाष्ये सिजपेक्ष्यते । लङि तिपि हल्ङ्यादिलोपे प्रत्ययलक्षणेन तिप्परत्वात् 'तिप्यनस्ते'रिति अस्तिवर्जितस्य सान्तस्य पदस्य तिपि परे दकार इति दकारे तस्य चर्त्वे ऽचकात् । सिपि तु 'सिपि धातोरुर्वे'ति सान्तस्य अस्तिवर्जितस्य धातोः पदस्य

पक्षे सत्वे अचकासत इत्यपि भवति । कासयति । अचकासत । ऋदित्त्वाच्चोपधाह्रस्व । कासः । 'हलश्चे'ति सञ्ज्ञाया घञ् । कासारः । औणादिको बहुलकादारः । कासूः शक्तिः । कासूतरी । 'कासूगोणीभ्या ष्टरजि'ति अल्पत्वे द्योत्ये ष्टरच् । षित्वात् ङीप् । अस्मादेव निर्देशादूकारप्रत्ययः । कसतीति ज्वरादौ गत्यर्थः । कस इति गतिशासनयोरादिकस्य तत्रधात्वे निदित्यादिना ऊः कसूरित्याहुः । अन्ये तु तालव्यान्तं पठन्त. कशूरिति ॥ ६१४ ॥

भासृ दीप्तौ ॥ भासते । इत्यादि कासिवत् । भासयति । अबीभसत् । अबभासत् । [illegible] । एव चास्य ऋदित्त्व तद्मात्रफलम् । अनुबन्धान्तराकरण तु प्रकरणानुरोधात् । भास्वरः । स्थेशभासे त्यादिना तच्छीलादौ वरच् । भाः । भासौ । भासः । 'भ्राजभासे'ति ताच्छीलिकः कर्त्तरि क्विप् ॥ ६१५ ॥

णासृ रासृ शब्दे ॥ नासते । प्रणासते । रासतइत्यादि कासिवत् । नासा । अङ्गारः । नासिका, सञ्ज्ञाया कनि 'केण'इति ह्रस्वः । 'प्रत्ययस्थादि'तीत्त्वम् । नासाया भव तस्यै हित नास्यम् । 'शरीरावयवाद्य-दि'ति यत् । नासिकाशब्दात्तु यति 'नस् नासिकाया यत्तस्क्षुद्रेष्वि'ति नसभावे नस्यमिति । एव नस्तो नःक्षुद्र इत्यादि । आद्यादिभ्य उपसंख्यानमिति सार्वविभक्तिकस्तसिः । 'अपादाने चाहीयरुहोरि'ति वा अपादाने या पञ्चमी तदन्तात्स्वार्थे तसिः । हीयरुहो प्रयोगे नेति, नःक्षुद्रः इत्यत्र नासिकया, क्षुद्र इति, 'पूर्वसदृशे'त्यादिना समासः तृतीयायाः । तत्र ह्यून इत्यर्थग्रहणम् । नासिक्यो वर्णः । नासिक्य नगरमित्यत्र यति 'वर्णनगरयोर्ने'ति नसभावप्रतिषेध , वाध्रीव नासा यस्य वाध्रीणस । अजविशेषः । 'अञ् नासिकायाः सञ्ज्ञाया नस चास्थूलादि'ति नासिकान्ताद्बहुव्रीहेः सञ्ज्ञायामच् समासान्तः। नासिकायाश्च नसादेश । अस्थूलादिति निषेधात् स्थूलनासिक इत्यत्राज्नसभावौ न भवतः । खुरणा', 'खुरखराभ्या नस् वक्तव्य' इति नसभावः । आदेशान्तरकरण प्रत्ययःनिवृत्त्यर्थमिति कैयटपदमञ्जर्यादौ । अत्र वृत्तावजपीष्यतइति तेन खरणस', खरणस इत्यपि भवति । प्रगता

नासिका अस्य प्रणसः । 'उपसर्गाच्च' । उपसर्गपूर्वनासिकान्ताद्बहुव्रीहेरजित्यञ् नासिकायाश्च नस्भावः 'उपसर्गाद्बहुलमि'ति उपर्गस्थान्निमित्तात्परस्य नसो नकारस्य णत्वम् । उभयत्रोपसर्गग्रहणं प्राद्युपलक्षणार्थम् । विगता नासिका अस्य विग्रः । 'वेर्ग्रो वक्तव्य'इति ग्रादेशो नासिकायाः । यदाह नाथ नायास्य विनसा हतबान्धवा इति भट्टिप्रयोगे विशेषविहितेन ग्रादेशेन भाव्यमिति महान्तो न सहन्ते । के चित्तु वार्त्तिक वेः ख्यो वक्तव्य इति पठन्तो विख्य इति उदाहरन्ति । तुङ्गनासिका । 'नासिकोदरौष्ठजङ्घादन्तकर्णशृङ्गाच्चे'ति नासिकाद्यन्ताद्बहुव्रीहेर्वा ङीप् । रासः । क्रीडाविशेषः । रासभः । 'रासिवल्लिभ्या चे'ति अभच् । रास्ना । 'राज्ञास्नाह्रास्नूणावीणा' इति नप्रत्यये निपातितः ॥ ६१७ ॥

णस कौटिल्ये ॥ नसते । प्रणसते । नेसे । नसितेत्यादि । नासयति । अनीनसत् ॥ ६१८ ॥

भ्यस भये ॥ भ्यसते । बभ्यसे । भ्यसिता । भ्यसिष्यते । बाभ्यस्यते । बाभ्यस्ति । भ्यासयति । अबिभ्यसत् । बाभ्यधि इत्यत्र हेर्धिभावे 'धि चे'ति सलोपस्तस्यासिद्धत्वा'दतो हे'रिति लुक् न भवति । एवं नसेरपि नानधि इति भवति ॥ ६१९ ॥

आङः शसि इच्छायाम् ॥ आङः शसिति प्रयोगादयमाङ्पूर्व एव प्रयोक्तव्यः । तथा च काश्यपः । अयमाङः पर एव प्रयोक्तव्य इति, समतायां न च केवलो नाप्युपसर्गान्तरपूर्व इति । आशंसते । आशशंसे । आशंसिता । आशिशंसिषते । आशाशस्यते । इदित्त्वान्नुम् नलोपाभावश्च । आशाशंस्ति । आशाशन्धीत्यत्र 'धि चे'ति सलोपेनुस्वारपरसवर्णौ । लङि तिप्सिपोर्हल्ङ्यादिलोपे संयोगान्तलोपे चाशाशन् । आशंसयति । आशशंसत् । आशंसुः । 'सनाशंसभिक्ष उरि'त्युप्रत्ययः । आशंसितः । आशंस्यम् । आशंस्य । क्त्वो ल्यप् । दौर्गस्तु नोपधमनिदितं पठति । स्वामी च । तेषां नलोपाभावे विशेषः । शस स्तुतावित्यत्र परस्मैपदिषु । आङः शासु इच्छायाम् । शासु अनुशिष्टाविति द्वयमदादौ ॥ ६२० ॥

ग्रसु ग्लसु अदने ॥ ग्रसते । जग्रसे । ग्रसितेत्यादि पूर्ववत् । ग्रासयति पिण्ड देवदत्तः । निगरणार्थत्वाच्चित्य परस्मैपदम् । प्रयोज्यस्य कर्मत्वं च । ग्रसित्वा ग्रस्त्वा । उदित्त्वादिड्विकल्पः । ग्रस्तः । 'यस्य विभाषे'ति अनिट्त्वम् । ग्रस्यतइति ग्रासः कवलः । पिण्ड ग्रसते पिण्डग्र. 'अत्वसन्ते'ति दीर्घो ऽधातोरिति प्रतिषेधान्न भवति । ग्रसिष्णुरिति हेलाराजीये लिङ्गनिर्देशे प्रयुज्यते । 'भुवश्चे'त्यत्र चकारस्यानुक्तसमुच्चयार्थत्वात् भ्राजिर्वाविर्बाह्यः । अत एव 'भुवश्चे'त्यत्र वृत्तौ चकाराद् भ्राजेश्च प्रयुज्य भाषायामिति चशब्द क्रियते । एव ग्लसतीत्यादि ॥ ६२२ ॥

ईह चेष्टायाम् ॥ ईहते । ईहा चक्रे । ईहिता । ईहिष्यते । ईहताम् । ऐहत । ईहेत । ईहिषीष्ट । ऐहिष्ट । ईजिहिषते । ईहयति । मा भवानीजिहत् । ईहा । ऐही । पर्यैही । आङ् पूर्वाच्चेनन्तात् शार्ङ्गरवादिपाठान्ङीन् ॥ ६२३ ॥

बहि महि वृद्धौ ॥ बहते । बबहे । बहिता । बंहिषीष्ट । बिबंहिषते । बाबह्यते । इदित्त्वान्नुम् । नलोपाभाव । बाबंढि । झलि पदान्ते च 'हो ढ' इति हकारस्य ढकारः । 'झषस्तथोर्धो ऽध' इति तकारस्य धकारे 'ष्टुना ष्टु'रिति ष्टुत्वे 'ढो ढे लोप' इति पूर्वस्य लोपः । अत्र ष्टुत्वे आश्रयात् सिद्धे नकारस्यानुस्वारपरसवर्णौ । बाबण्ढः । बाबहति । बाभङ्क्षि । ढत्वे 'एकाचो बशो भष् झषन्तस्य स्ध्वोरि'ति बकारस्य भष्भावेन भकारः । 'षढोः कस्सि'ति कत्वम् । बाबंह्मि । बाबंह्वः । लङि तिप्सिपोर्ढत्वात् पूर्वं हल्ङ्यादिलोप इति झरन्तत्वाभावान्न भष्भावः । बंहयति । अबबंहत् । एव महतइत्यादि । अय भावार्थश्चुरादाविति स्वामी । मह पूजायामिति इहैवाये परस्मैपदिषु । महीयतइत्यादि महीङितिकण्ड्वादिपाठात् ॥ ६२५ ॥

अहि गतौ ॥ अहते । आनहे । अहिता । अञ्जिहिषति । 'कुहोश्चुरि'ति हकारस्य झकारे 'अभ्यासे चर्चे'ति जश्त्वेन जकारे नकारस्यानुस्वारपरसवर्णौ । अहयति । आञ्जिहत् । अहः । असुन् । चुरादौ भाषार्थः ॥ ६२६ ॥

गर्ह गल्ह कुत्सायाम् ॥ गर्हते । जगर्हे । गर्हिता । जिगर्हिषते । जागर्ह्यते । जागर्हीतीत्यादि बर्हिवत् । लङि तिप्सिपोर्हल्ङ्यादिलोपे 'रात्सस्ये'ति नियमात् संयोगान्तलोपाभावाद्धकारस्य ढकारे झषन्तत्वात् पदान्तविषयत्वाच्च भष्भावे अजर्घट् । अयमाधृषीयोऽपि । गल्हतइत्यादि पूर्ववत् । यङ्लुकि तिप्सिपोर्लोपे संयोगान्तलोपे अजागल् ॥ ६२८ ॥

बर्ह बल्ह प्राधान्ये ॥ ओष्ठ्यादी । बर्हते । बल्हते इत्यादि । बर्हते सर्वेष्ववयवेषु प्रधानं भवति । बर्ह बर्हिणः । 'फलबर्हाभ्यामिनज्वक्तव्य' इतीनच् । बर्ही, मत्वर्थीय इनिः । इमौ भाषार्थौ चुरादौ । बर्हस्हिंसायामपि तत्रैव, बृह विवृद्धाविति अत्रैवाग्रे परस्मैपदिषु ॥ ६३० ॥

वर्ह वल्ह परिभाषणहिंसादानेषु ॥ दन्त्यौष्ठ्यादी । वर्हते । वल्हते । ववल्हे । वल्हितेत्यादि । अत्र धनपालमैत्रेयौ परिभाषणादावोष्ठ्यादित्वं वाहतुः । छादयत्यनेनेति बर्हः, घञिति वदन् शाकटायनोऽप्यत्रैवानुकूलः । यथा वय तथा स्वामी । यदाह वर्ह वल्ह प्राधान्ये, मुनिवर्हणमिति । एव मुनिप्रवर्हा इति प्राधान्ये प्रयोग उपपद्यते । प्रवल्हिकेति च भाषार्थे । तदुक्तं पुरुषकारे प्रवल्हिका प्रहेलिकेति चात्रैवानुकूलं भाषाविशेषत्वात् । प्रवल्हेति । तथा च बह्वृचब्राह्मणं प्रवल्हिकाश्शंसति प्रवल्हिकाभिर्वै देवा असुरान् प्रवल्ह्यायैनानत्यायम् । व्याकृत चैतत् गोविन्दस्वामिना प्र[1]वल्ह्या अनृतभाषया इति । यत्तूक्तं शाकटायनेन आच्छाद्यतेऽनेनेति बर्हः घञिति, नैतदोष्ठ्यादित्वे साधकं सर्व्वेष्ववयवेषु प्रधानं भवतीत्येव व्युत्पादितत्वात् । वृह उद्यमने चुरादौ ॥ ६३२ ॥

प्लिह गतौ ॥ प्लेहते । पिप्लिहे । पिप्लिहिषते । प्लिहित्वा । प्लेहित्वा । 'रलोव्युपधादि'ति कित्त्वविकल्पः । प्लीहा । 'श्वन्नुक्षन्पूषन्प्लीहन्क्लेदन्स्नेहन्मूर्द्धन्मज्जन्नर्यमन्विश्वप्सन्परिज्मन्मातरिश्वन्मघवन्नि'ति कनिनन्तो निपातितः । उणादिवृत्तौ तु प्लिहन्शब्दपूर्वाद्धन्तेष्टिलोपे व्युत्पादितम् ।

[1] प्रवल्ह्य अनृतं भाषयित्वेति युक्तः पाठः ।

यथा वयं तथा मैत्रेयः, प्लीहानावित्यादौ 'इन्हन्पूषे'ति नियमो हन्शब्दस्यानर्थकत्वान्नेति भाष्यादौ स्थितम् ॥ ६३३ ॥

वेहृ जेहृ बाहृ प्रयत्ने ॥ आद्यो दन्त्यौष्ठ्यादिः । अन्त्यः केवलौष्ठ्यादिः । उभावपि केवलौष्ठ्यादी इत्येके । दन्त्यौष्ठ्यादी इत्यन्ये । वेहते । जेहते । बाहतइत्यादि, ऋदित्त्वाण्णौचङि ह्रस्वाभावः । अविवेहत् इत्यादि । वेहत् गर्भोपघातिनी गौः । सश्चदृपद्वेहदिति अतिप्रत्यये निपात्यते । गोवेहत् । 'पोटायुवतिस्तोके'त्यादिना कर्मधारयः । बाहा । अजन्तत्वाट्टाप्, बाढ, 'क्षुब्धे'त्यादिना निष्ठायामिडभावो भृशार्थेऽन्यत्र बाहितम् । जेहतिर्गत्यर्थोऽपि, उक्तं च रेणुभिर्जेहमान भट्टभास्करीयम् ॥ ६३६ ॥

द्राहृ निद्राक्षये ॥ द्राहते । निक्षेपइति के चित् । यङ्लुकि 'दादेर्धातोर्घ'इति झलि पदान्ते चेति हस्य घकारे 'झषस्तथो'रिति धत्वे जश्त्वे च दाद्राग्धि । दाद्राग्ध इत्यादि । सिपि भष्भावेन दकारस्य धकारः । 'खरि चे'ति धकारस्य चर्त्वे सिपः सकारस्य षत्वे दाध्राक्षि । लङि हल्ङ्यादिना तिप्सिपोर्लोपः, भष्भावजश्त्वचर्त्वेषु अदाध्राक् ॥ ६३७ ॥

काशृ दीप्तौ ॥ काशते । चकाशे । काशिता । काशिष्यते । काशताम् । अकाशत । काशेत । काशिषीष्ट । अकाशिष्ट । अकाशिष्यत । चिकाशिषते । चाकाश्यते । चाकाष्टि । व्रश्चादिना षत्वे ष्टुत्वे चाकाक्षि । चाकाशिम । चाकाश्वः चाकाश्मः । चाकाड्ढीत्यत्र हेर्धिभावे व्रश्चादिना षत्वे ष्टुत्वे जश्त्वम् । लङि अचाकाट् । काशयति । अचकाशत् । काशः । अचि घञि वा । नीकाशः । 'इकः काश'इति इगन्तस्योपसर्गस्य काशउत्तरपदे दीर्घः । काशिः । काशी । अक्तिन्नन्तत्वात् वा ङीष् । काशिषु भवा काशिका । 'काश्यादिभ्यष्ठञ्ञिठावि'ति शैषिकौ ठञ्ञिठौ । ठञि 'टिड्ढे'ति ङीप् । काशिकी । काष्ठम् । 'हनिकुषिनीरमिकाशिभ्य' क्थन्'इति क्थन् । आकारोपधप्रकरणादयमिह पठितः । अयं दिवादौ च । काशृ गतिशासनयोरित्यदादौ । अन्ये दन्त्यान्त्यमिदितं पठन्ति । अनिदितमपरे ॥ ६३८ ॥

ऊह वितर्के ॥ वितर्कः सम्भावनम् । ऊहते । ऊहा चक्रे । ऊहिता । ऊहिष्यते । ऊहताम् । औहत । ऊहिषीष्ट । औहिष्ट । ऊजिहिषति । ऊहयति । औजिहत् । समूहति । समूहते । 'उपसर्गादस्यत्यूह्योर्वावचन'-मिति उपसृष्टादस्मात्परस्मैपदम् । समुह्यादित्यत्र 'क्ङिदाशिषी'ति कित्त्वे 'उपसर्गाद्ध्रस्व ऊहते'रिति यकारादौ क्ङिति ह्रस्वः । एव यक्यपि समुह्यतइति । यद्यप्युपसर्गादस्यत्यूह्योरिति वार्त्तिकमकर्मकाधिकारेपठितं तथापि वृत्तिकैयटादौ सकर्मकत्वमप्याधारतयुक्तम् । अनुक्तमप्यूहति पण्डितो जन इति प्रयोग आङ्पूर्वस्येति सुधाकरः । एव च सति ओहतीति गुणः पठितव्यः । ओह्यतइत्यत्रान्तादिवद्भावेनोपसर्गात्परत्वेनो'पसर्गा द्ध्रस्व ऊहते'रिति ह्रस्वो न भवति । उभयतश्चाश्रये नान्तादिवद्भाव इति वचनात् । यद्वाऽणा इति वर्त्तते, स च सामर्थ्यात्पूर्वेण णकारेणेति ह्रस्वाप्रसङ्गः । एव च समौह्यतइत्यादावप्यादिवृद्धौ ह्रस्वो न भवति ॥ ६३९ ॥

गाहू विलोडने ॥ गाहते । जगाहे । जघाक्षे । 'धासः से' झलि 'हो ढ' इति ढत्वे भष्भावे कत्वम् । ध्वमि ढत्वभष्भावयोः ष्टुत्वे ढलोपः । क्रादिनियमस्य प्रतिषिद्धविषयत्वादिट्पक्षे जगाहिषेत्यादि । गाढा । गाहिता । घाक्ष्यते । गाहिष्यते । गाहताम् । अगाहत । गाहेत । गाहिषीष्ट । अगाढ । अघाक्षाताम् । अघाक्षत । अगाढाः । अघाढ्वम् । अघाक्षि । झलादौ सिज्लोपे ढत्वधत्वष्टुत्वढलोपाः । प्रत्ययलक्षणेन सादिप्रत्ययपरत्वाद्भष्भावो नाशङ्क्यः, सिज्लोपस्य प्रत्ययलक्षणे पूर्वत्रासिद्धत्वात् । अत एव सिद्धत्वात्सिज्लोपात्पूर्वं न भष्भाव', ध्वमि तु परत्वाद्भष्भावः । इट्पक्षे अगाहिष्टेत्यादि । जिघाक्षते । जिगाहिषते । जागाह्यते । जागाढि । गाहयति । अजीगहत् । गाढ्वा । गाहित्वा । गाढाः । गाहः, गाहडिति पचादौ पाठात् । टित्वात् स्त्रियां गाही । गह्वरम् । छित्वरेत्यादिक्वरचि ह्रस्वो निपात्यते । उणादिवृत्तौ तु गाधतेर्निपातनमुक्तम् । गहनं करोति गहनायते । 'सत्रकक्षेत्य'नेन कृच्छ्रचिकीर्षायां क्यङ् । कष्टं पापं, सत्रादयश्च वृत्तौ पापवचना इति हरदत्तादि-

भिन्नक्रमश्चैव वार्त्तिके निर्देशात् ल्युटि ह्रस्वः, गर्हे भव गहीयम् । 'गहादिभ्यश्चे'ति शैषिकोऽत्र छः । गह इति निर्देशादचि ह्रस्वः ॥ ६४० ॥

गृहू ग्रहणे ॥ गर्हते । जगृहे । जगृहिषे । जघृक्षे । जगृहिध्वे । जघृढ्वे । गर्हिता । गर्ढा । गर्हिष्यते । घर्क्ष्यते । गर्हताम् । अगर्हत । गर्हिषीष्ट । घृक्षीष्ट । 'लिङ्सिचावात्मनेपदेष्वि'त्यनिट्पक्षे कित्त्वान्न गुणः । अगर्हिष्ट । अघृक्षत । अगर्हिषाताम् । अगर्हिषत । अघृक्षाताम् । अगर्हिष्ठाः । अघृक्षथाः । अगर्हिढ्वम् । अगर्हिध्वम् । अघृक्षध्वम् । अगर्हिषि । अघृक्षि । अगर्हिष्वहि । अघृक्षावहि । अनिट्पक्षे 'शल इगुपधादनिटः क्सः' 'क्सस्याची'त्यल्लोपः । घञादा'वतो दीर्घो यञी'ति दीर्घः, ढत्वादि तु पूर्ववत् । जिगर्हिषते । जिघृक्षते । इडभावे 'हलन्ताच्चे'ति सनः कित्त्वम् । जरीगृह्यते । 'रीगृत्वत' इति रीक् । जर्गृहीति । जर्गर्ढि । जर्गृढः । ण्यिकोरप्युदाहार्यम् । गर्हित्वा । गृढ्वा । गृहम् । इगुपधलक्षणः कः । अत्र मैत्रेयः । 'गेहे कः' इति गृह्णातेः कविधानं तस्यापि गृहमिति यथा स्यादिति । अथ क्वचित्कोपि ग्रिह इदुपधः पठ्यते तदनार्षं, यदाह देवः । ण्यन्तस्य ग्रहणे ग्रहेर्ग्रहयते तत्राऽनदन्ताद्गृहेर्भूवादेः शपि गर्हते श्नि प्रत्यये गृह्णाति अगृहीत् चेति । अत्र पुरुषकारे गृह इत्यनेनैव पूर्वस्माददन्तत्वमात्रविशेषः । गृहीत्वा विशिष्टमिति दर्शयिता गृहपाठाशङ्का निरवकाशता नीता । ग्लह इति स्वामिकाश्यपसम्मताकारादयः पठन्ति तदपि ग्राह्यम् । तथा च 'अक्षेषु ग्लहः' इत्यत्र वृत्तिः । ग्लहिः प्रकृत्यन्तरमिति । ग्लहत इत्यादि पूर्ववत् । ग्लहोऽक्षस्य । 'अक्षेषु ग्लहः' इत्यप् । अक्षादन्यत्र ग्लाह इति घञ् । एषां तु निपातनं ग्रहेरेतदिति तेषामनक्षे ग्राह इति प्रत्युदाहार्यम् । लत्वाभावो विशेषः ॥ ६४१ ॥

घुषि कान्तिकरणे ॥ घुंषते । जुघुंषे । घुंषिता । जुघुंषिषते । जोघुष्यते । जोघुष्टि । लुटि हेर्धिभावे ष्टुत्वजश्त्वानुस्वारपरसवर्णेषु जोघुण्ढि । लङि तिप्सिपोर्लोपे ऽजोघुन् । घिषीतीदुपधं पेठतुश्चन्द्रकाश्यपौ । स्वामी घषेति दन्त्यान्तमदुपधं पपाठ । यथा वयं तथा देवमैत्रेयदुर्गाः । षकारान्तोऽप्ययम् ॥ ६४२ ॥





घुषिरविशब्दने ॥ उदात्तधातुसाम्यादिह पठितः, घुषाद्यन्ता उदात्ता अनुदात्तेतः । घुषिरविशब्दनार्थः । इतो ऽर्हत्यन्ता उदात्ता उदात्तेतः । विशब्दनं प्रतिज्ञानं, तच्च शब्देन स्वाभिप्रायप्रकाशनमिति न्यासे । अस्मादन्यस्मिन्नर्थे यथाप्रयोगमयं धातुर्वर्त्तत इति पुरुषकारे । सर्वत्र क्षीरस्वामिधनपालभागवृत्तिकारा घुषि शब्दार्थे पेठु । चन्द्रदुर्गौ त्वर्यशब्दमपहाय शब्द इत्येव पेठतुः । घुष शब्द इति पठन् शाकटायनोऽप्यत्रैवानुकूलः । तेन हि य इति स्थाने अनेति न क्रियते । यदि शब्द इत्यर्थः स्यात् तर्हि 'घुषिरविशब्दन' इति इट् प्रतिषेधेतिलघु घुषिरविशब्द इत्येव वाच्य स्यात् इति घुषिरविशब्दार्थ इति मैत्रेयादिपाठो ज्यायान् । घोषति । जुघोष, घोषिता, लुडी रितो वे'ति परस्मैपदेषु ह्लरङादेशविकल्पनात् । अघुषत् । अघुषताम् । अघोषीत् अघोषिष्टाम् इत्याद्युभय भवति । 'लुग्वा दुहे'त्यत्र न्यासे अन्यघुक्षनेनि वृत्तौ प्रत्युदाहरणगुपाद्याविनित्यमागम शासनमित्यनिट्त्वमुक्त्वा 'शल इगुपधा'दिति क्स उक्तः । हरदत्तादयस्तु प्रत्युदाहरण घुष्यतेरिति मन्वाना इड्भावाय यत्न कृतवन्तः । घुष्यतिर्हि नित्यानिट् । जुघुक्षति । जुघोषिषति । घुषित्वा । घोषित्वा, 'रलो व्युपधा'दिति कित्त्वविकल्पः, जोघुष्यते । जोघोष्टि । लोटि हेर्धित्वे ष्टुत्वे च जश्त्वे च षकारस्य जोघुड्ढि । लङि तिप्सिपोः अजोघोट् । घोषयति । अजूघुषत् । घुष्टा रज्जुः । 'घुषिरविशब्दन' इति निष्ठायामनिट्त्व, सपूर्वत्वे तु'रुष्यमत्वरसघुषास्वना'मिति इटो विकल्पनात् सघुष्टा रज्जुः, सघुषिता रज्जु', इत्युभय भवति । घुषिरविशब्दन इति चुरादौ ॥६४३॥

अक्षू व्याप्तौ ॥ अक्षति । आनक्ष । आनष्ठ । आनक्षिथ । आनक्ष्व । आनक्षिव । उदित्त्वादिड्विकल्पः । यत्यनिट्पक्षे 'स्को'रिति कलोपे ष्टुत्वे । अक्षिता । अष्टा । अक्षिष्यति । अक्ष्यति । 'षढोः कः सी'ति कत्वे आद्यस्य 'स्को'रिति लोपः । अक्षतु । आक्षत् । अक्षेत् । अक्ष्यात् । मा भवानक्षीत् । मा भवानक्षिष्टाम् । 'नेटी'ति न वृद्धिः । अनिट्पक्षे 'वदव्रजहलन्तस्ये'ति वृद्धौ मा भवानाक्षीत् । मा भ[illegible] । ननु येन नाव्यवधानमिति न्यायेनैकेन वर्णेन व्यवधानमाश्रयितु युक्त न त्वने-

क्सेनेति कलोपस्यासिद्धत्वादनेकेन व्यवधानात् कथं वृद्धिः । नैतत् । तत्र हल्ग्रहणं हल्समुदायप्रतिपत्त्यर्थमित्युक्तत्वात् । तथाहि । 'वदव्रजे'रिति योगो विभज्यते । तत्रात इति अनुवर्त्तयिष्यते । ततोऽच इति द्वितीयो योगस्तत्राङ्गनाचो विशेषणात् अपाक्षीदित्यादावेकेन वर्णेन व्यवधाने वृद्धिसिद्धौ पुनः क्रियमाणं हल्ग्रहणं हल्समुदायप्रतिपत्त्यर्थं भवति । अस्य कर्तृवाचिसार्वधातुकपरत्वे अत्र त्वन्यतरस्यामिति पक्षे श्नुर्भवति । अक्ष्णोति । अक्ष्णुतः । अक्ष्णुवन्ति । अत्रादा'वचि श्नुधात्वि'त्यादिनोवङ् । अक्ष्णोतु । अक्ष्णुहीत्यत्र 'उतश्च प्रत्यया'दिति हिलुङ् न भवति, तत्रैवासंयोगपूर्वादित्युक्तत्वात् । अक्ष्णवानीत्यत्र आटि परत्वादुवङं बाधित्वा गुणः । आक्ष्णोत् । अक्ष्णुयात् । अचिक्षिषति । अनिट्पक्षे पूर्वत्रासिद्धीयमद्विर्वचन इत्युक्तत्वात् अस्मात्परत्वात् 'स्कोरि'ति कलोपे 'षढो'रिति कत्वे च सनः ककारसहितस्य द्वितीयस्यैकाचो द्विर्वचने हलादिशेषे 'सन्यत' इतीत्वे अचिक्षतीति भवति । अक्षयति । चङि णिलोपस्य स्थानिवत्त्वात् क्षिशब्दस्य द्विर्वचने आचिक्षत् । अक्षित्वा । अष्ट्वा । निष्ठायामष्टः । अक्षि । 'इन् इतीन्प्रत्ययः' । अक्ष्णा । 'अस्थिदधिसक्थ्यक्ष्णामनङुदात्त' इति तृतीयाद्यजादावन्त्यस्यानङादेशे अल्लोपोऽन इत्यल्लोपः । ङौ 'विभाषा ङिश्यो'रिति विकल्पनात् अक्षणि अक्ष्णीत्युभयं भवति । विशालमक्षि यस्य स विशालाक्षः । 'बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात् षच्'इति षच् । स्वाङ्गवाचिसक्थ्यक्ष्यन्ताद् बहुव्रीहेः षच् । षित्वात् स्त्रियां विशालाक्षी । स्वाङ्गादिति वचनात् स्थूलाक्षा वेणुयष्टिरित्यत्र 'अक्ष्णोऽदर्शनादि'त्यचि टाब् भवति । अदर्शनवाच्यक्ष्यन्तात् समासमात्रादजिति सूत्रार्थः । इह च दर्शनं चक्षुरिति गवाक्षं कवराक्षमित्यत्राचक्षुर्वचनस्याक्षिशब्दस्याज् भवति । यद्वात्र समुदायो दर्शनसाधनं न तु तदवयवोऽक्षिशब्द इति तस्य दर्शनयोगाभावाददर्शनादिति निषेधस्य नैव प्रसङ्गः । कवराक्षमिति सच्छिद्रं यदश्वानां मुखापिधानं तदुच्यते । कथं स्थूलाक्षिरिषुरिति, यदि दृश्यते, अनित्यः समासान्त इति निर्वाह्यः । अयं समासान्तः स्वतिपूर्वस्यापि भवति । 'न पूजना'दित्यत्र 'बहुव्रीहौ सक्थ्यक्ष्णो'रनिषेध इत्युक्तत्वात् ॥ ६४४ ॥

तक्षू त्वक्षू तनूकरणे ॥ तक्षति । ततक्षेत्यादि । अक्षिवत् । 'तनूकरणे तक्ष' इति पक्षे शब्विषये श्ना तक्ष्णोति, इत्यादि । अक्ष्णोतिवत् । तक्षा । 'कनिन्युवृषितक्षी'ति कनिन् । तक्ष्णोऽपत्यं, ताक्ष्णः । 'शिवादिभ्योऽणि'त्यण् । अत्रा'नि'ति अन्नन्तस्याणपरत्वात्प्रकृतिभावे प्राप्ते 'षपूर्वहन्धृतराज्ञामणी'ति षपूर्वो योऽन्शब्दो हनश्च तयोर्धृतराजन्शब्दस्य चाणि प्रत्ययेऽल्लोप इत्यल्लोपः । शिवाद्यणा 'सेनान्तलक्षणकारिभ्यश्चे'ति ण्यस्य बाधो नेष्यत इति वृत्त्यनुक्तत्वात्ताक्षण्य इत्यपि भवति । 'नस्तद्धित' इति लोपो 'ये चाभावकर्मणो'रिति प्रकृतिभावान्न भवति । सेनान्त इति सेनाशब्दान्ता गृह्यन्ते, लक्षण इति स्वरूपग्रहणं, कारिणः शिल्पिन इति । ग्रामस्य तक्षा ग्रामतक्षः । कुट्यां भवः कौटः, स चासौ तक्षा च कौटतक्षः स्वतन्त्रतक्षोच्यते, 'ग्रामकौटाभ्यां च तक्ष्ण' इति टच् समासान्तः । पञ्चानां तक्ष्णां समाहारः पञ्चतक्षः, पञ्चतक्षी । 'तक्षन्नलोपश्चे'ति नलोपः । पक्षे स्त्रीत्वं च । द्वितक्षी । 'द्विगो'रिति ङीप् । अन्यदा 'स नपुंसक'मिति नपुंसकत्वम् । त्वक्षू त्वचन इत्यग्रे तूदित् ॥ ६४६ ॥

उक्ष सेचने ॥ उक्षति । उक्षां चकार । उक्षितेत्यादि पूर्ववत् । उक्षां प्रचक्रुर्नगरस्य मार्गा इति भट्टिप्रयोगमुपादाय सुधाकारादयः। उक्ष्यत इत्युक्षाः, कर्मणि घञ् । उक्षान् प्रचक्रुरिति पाठान्तरं चास्यन् । उक्षा । श्वन्नुक्षन्निति कनिनन्तो निपातितः । उक्ष्णां समूहः औक्षकम् । 'गोत्रोक्षे'त्यादिना वुञ् । उक्ष्ण इदमौक्षम् । 'औक्षमनपत्य' इति निपातनाट्टिलोपः । अपत्ये तु औक्ष्णः । 'षपूर्वह'न्नित्यल्लोपः । जातोक्षः । महोक्षः । वृद्धोक्षः । 'अचतुरे'तिकर्मधारयादचि टिलोपो निपात्यते ॥ ६४७ ॥

रक्ष पालने ॥ रक्षति । ररक्ष । रक्षितेत्यादि । निरक्षतीति, निरक्षी । रक्षश्रुवपशां नाविति ग्रहादिपाठाण्णिनिः । रक्षणं, रक्षणः । 'यजयाचे'त्यादिना नङ् । रक्षः । असुन् । राक्षसः । 'प्रज्ञादिभ्यश्चे'ति स्वार्थेऽण् ॥ ६४८ ॥

णिक्ष चुम्बने ॥ निक्षति । निनिक्ष । निक्षितेत्यादि । प्रणिक्षणम् । प्रनिक्षणम् । 'वा निंसनिक्षनिन्दा'मिति णत्वविकल्पः । अयं विकल्पः

जूष च ॥ जूषति । जुषी प्रीतिसेवनयोरिति चुरादौ । जुष परिभाषणइति युजादौ ह्रस्वोपधौ ॥ ६६८ ॥

भूष अलङ्कारे ॥ भूषति । भूषते कन्या स्वयमेव । अभूषिष्ट कन्या स्वयमेव । 'भूषाकर्मे'ति यक्चिणोर्निषेधः । भूषाफलं शोभनाख्य कर्मणि दृश्यतइति कर्मस्थक्रियात्व कैयटइत्युक्तम् । अङ्गा सूनाः परिभूषन्त्वश्वमित्यत्र भट्टभास्कर. । सूना मासविक्रयणसाधनान्यश्वादीनि, अश्व परिभूषन्तु परितो भवन्त्विति । भवतेर्लोटि सिपि रूपमुक्त्वा भूषयतेर्वा शप् । 'छन्दस्युभयथे'त्यसार्वधातुकत्वाण्णिलोप इत्याह । तदस्य धातोरस्मरणात् । न चाय नास्तीति शक्यते वक्तु, सर्वेषु व्याख्यानेष्वविवादेनोपादानात् । अय चुरादौ च ॥ ६६९ ॥

ऊष रुजायाम् ॥ ऊषति । ऊषा चकार । ऊषिषति । मा भावानूषिषत् । णिलोपस्य स्थानिवत्त्वात् षिशब्दस्य द्विर्वचनम् । ऊषः । घञ् । ऊषरः । 'ऊषशुषिमुष्कमधो र.' मत्वर्थे रः । ऊषयति । उष दाहइति अर्थे ह्रस्वोपधः ॥ ६७० ॥

ईष उञ्छे ॥ ईषतीत्यादि ऊषिवत् । ईषतइति गतौ गतः ॥ ६७१ ॥

कष खष शिष जष झष शष वष मष रुष रिष हिंसार्थाः ॥ तृतीयषष्ठौ तालव्योष्मादी । सप्तमो दन्त्योष्ठ्यादि । कषति । चकाष । कषितेत्यादि । अकषीत् । अकाषीत् । 'अतो हलादे'रिति वा वृद्धि. । सर्वंकषम् । 'सर्वकूलाभ्रकरीषेषु कष'इति खच् । 'अरुर्द्विषदजन्तस्ये'ति खिदन्तउत्तरपदे पूर्वपदस्य मुम् । षत्व कूलादिषूदाहार्यम् । विकाषी । 'वौ कषलसकत्थस्रम्भ' इति तच्छीलादिषु घिनुण् । आकषः । निकषः । 'गोचरा'दिसूत्रे चकारस्यानुक्तसमुच्चयार्थत्वात् अधिकरणे घः । आकषेण चरति, आकषिकः । 'आकषात् ष्ठलि'ति तृतीयान्तात् अस्मात् चरतीत्यर्थे ष्ठल् । षित्वात् आकषिकी । आकषे कुशल, आकषकः । 'आकर्षादिभ्यः कनि'ति सप्तम्यन्तात् कुशल इत्यर्थे कन् । निमूलकाषं कषति । समूलकाष कषति । निमूल समूल च कषतीत्यर्थः । 'निमूलसमूलयोः कष'इति णमुल् । उपपदसमासः । 'कषादिषु यथाविध्यनुप्रयोग'इति यस्मात् णमुलो विधानं

तस्यैवानुप्रयोगः, कषादयश्च 'निमूलसमूलयोः कष इत्यत्र' 'शुष्कचूर्णरूक्षेषु पिषः', 'समूलाकृतजीवेषु हन्कृञ्ग्रहः', 'करणे हनः' इत्यत्र 'निमूलसमूलयोः कष इन्यनन्तरस्ये' एमाने कर्मणि चेत्ये'तदन्तरूपात्ता धातवः । अत्रानुशब्दो नानन्तर्येऽपि तु धात्वर्थानुवादेन पश्चाद्भावे, तेन व्यवहितपूर्वप्रयोगोऽपि द्रष्टव्यः । तथा च वृत्तिः। धातुसम्बन्धे प्रत्ययविधानादनुप्रयोगः सिद्ध एव, यथाविध्यनुप्रयोगार्थं वचनमिति । तथा 'यथाविध्यनुप्रयोगः पूर्वस्मिन्नि'त्यत्र हरदत्तः । अनुशब्दो धात्वर्थानुवादेन पश्चाद्भावे न त्वानन्तर्ये, पूर्वप्रयोगो व्यवहितप्रयोगोपि भवतीति । न्यासे च अथ पूर्वप्रयोगस्य व्यवहितप्रयोगस्य च निवृत्त्यर्थं कस्मान्न भवति यथा 'कृञ् चानुप्रयुज्यते लिटी'त्येतत् । तन्न । एतयोरिष्टत्वात् । पादौ कषितु शीलमस्य पत्कापी । 'सुप्यजातौ णिनिस्ताच्छील्य'इति णिनिः, 'हिमकाषिहतिषु चे'ति हिमादावुत्तरपदे पादस्य पद्भावः । कष्ट व्याकरणम् । कृच्छ्रसाध्यमित्यर्थः । कष्टानि वनानि । दुष्प्रवेशानीत्यर्थः । 'कृच्छ्रगहनयोः कष' इति निष्ठायामनिट्त्वम् । अन्यत्र कषितो देवदत्तः । कष्टाय कर्मणे क्रामति, कष्टायते । 'कष्टाय क्रमणे'-इति चतुर्थ्यन्तादनार्जवे क्यङ्, अमर्णमिहानार्जवम् । कष्टं चिकीर्षति, कष्टायते। अत्र 'सत्रकक्षे'त्यादिना द्वितीयान्तात्करणचिकीर्षायां क्यङ् । कक्षः । 'वृतिवदी'त्यादिना सप्रत्ययः ।'षढोः कः सी'ति कत्व,'तितुत्रेती'णिनषेधः। कक्षायते । 'सत्रकक्ष'त्यादिना क्यङ् । खषतीत्यादि पूर्ववत् । खष्पः । बलात्कारः । 'खष्पशष्पबाष्परूपकूर्पशिल्पा'इति पप्रत्ययान्ता निपात्यते । शिषति । शिशेष । शिशेषिथ । शेष्टा शेक्ष्यति । शेषतु । अशेषत् । शेषेत् । आशिषि । शिष्यात् । अशिक्षत् । शल इगुपधे'ति क्सः अनिट्त्व च, शिषि पिषि श्लिष्यतिपुष्यती त्विषिमिति व्याघ्रभूतिवचनात् । तदुक्तं पुरुषकारे। शिषेरमर्दायोगे शपि । शेषयति । शेषतीत्युभौ, लुङ्यङ्भावादस्यशेषत् इति देवमुपादायाशेषीदित्युक्त, शिषि पुषिमित्यनिट्कारिकाप्रामाण्याच्छिषिमात्रस्यानिट्त्वेन क्से सति अशिक्षदिति युक्तम् । तथा मैत्रेयोपि शेष्टेत्यनिटमुदाजहार । एवं च लिटि सेट्त्व क्रादिनियमात्सिद्धम् । एव चास्य सेटो मध्ये पाठो यथा शिषिमात्रस्यानिट्त्वेन 'शलइगुपधे'ति षान्तसाम्यात् षान्तपरस्मैपदिसाम्याच्च द्रष्टव्यः । शिशिक्षति । 'हल-

न्ताच्चे'ति सनः कित्त्वम् । शेशिष्यते । शेशेष्टि । शेषयति । अशीशिषत् । शिष्ट्वा । शिष्टः । शिष्टवान् । शिष्य कालयोगः । 'खष्यशिष्ये'ति यप्रत्यये निपातितम् । जषति । जजाष । जेषतुः । जषितेत्यादि कषिवत् । क्किति लिटि सेटि थलि चैत्वाभ्यासलोपौ । एव झषति, शषतीत्यादि । शष्य पूर्ववन्यः । शष आदानसंवरणयोरित्यये स्वरितेत् । वषति । ववाष । ववषतुः । वषितेत्यादि । वादित्वान्नैत्वाभ्यासलोपौ । मषतीत्यादि । रोषति । रुरोष । रुरोषिथ । रोषिता । रोष्टा । रोषिष्यति इत्यादि । तकारादौ 'तीषसहलुभरुषरिष'इतीड्विकल्पः । रुषित्वा । रुष्ट्वा । इट्पक्षे 'रलो व्युपधा'दिति कित्त्वविकल्पः । निष्ठायां 'रुष्यमत्वरसंघुषास्वना'मितीटो विकल्पना द्यस्य विभाषे'ति निषेधो भवति । रुष्टो, रुषितः । 'मतिबुद्धिपूजार्थेभ्यश्चे'त्यत्र चकारस्यानुक्तसमुच्चयार्थत्वाद्वर्तमाने क्तः । इट्पक्षे उदुपधाद्भावादिकर्मणोरन्यतरस्या मिति किद्वद्विकल्पनात्पक्षे गुणः । रोषितमनेनेत्यादि भवति । रुष रोषइति दिवादौ चुरादौ च । रेषतीत्यादि रोषतिवत् । निष्ठायां 'यस्य विभाषे'तीटो निषेधात् रिष्टः । रेषतइति शब्दे गतः । अत्र दण्डके मुषिरपि धातुः क्रोशे पठ्यते । स्तेयार्थाय पूर्ववच्चेव पठित इतीह पाठे नाभिनिवेष्टव्यम् । हिंसार्थत्वं यदि दृश्यते तदा धातूनामनेकार्थत्वाद्भविष्यति ॥ ६८१ ॥

भष भर्त्सने ॥ इह भर्त्सन श्वरवो यतस्तत्रैवायं प्रसिद्ध । भषति । भषकः । कुत् ॥ ६८२ ॥

उष दाहे ॥ ओषति । ओषा चकार । 'उषविदे'त्याम्विकल्पः । उवोष । ऊषतुः । उवोषिथ । पिद्वचनेषु गुणस्य स्थानिवत्त्वादुषशब्दस्य द्वित्वम् । पुनर्गुणे ऽभ्यासस्य त्युवङ् । न चाभ्यासस्यानादिष्टादचः पूर्वत्वे गुणस्य स्थानिवत्त्वम्, असवर्णग्रहणसामर्थ्यादिति प्रागेवोपपादितम् । ओषिता । ओषिष्यति । ओषतु । औषत् । ओषेत् । उष्यात् । औषीत् । ओषिषिषति । ओषयति । मा भवानुषिषत् । प्रत्युष्टमित्यत्र भट्टभास्करः । 'आदितश्चे'त्यत्र चकारस्यानुक्तसमुच्चयार्थत्वादाश्वस्तादिवदिट्प्रतिषेधः । ऊष्मा । मनिनि बाहुलकाद्दीर्घः । ऊष रुजायामित्यस्माद्वा । उष्णः ।

इणसिञ्ज्युषीति नक्। ऊष्णिका। यवागू। 'ब्राह्मणकोष्णिके संज्ञायामि'ति कनि निपात्यते। उष्णं करोति उष्णकोलवः। 'शीतोष्णाभ्यां कारिणी'ति कन्। उष्णं न सहते उष्णालुः। 'शीतोष्णतृप्रेभ्यस्तदसहने' इत्यालुच्। ओष्ठः। उषिकुषिकाशिभ्यस्थन्निति ठन्। बिम्बोष्ठी। बिम्बोष्ठा। 'नासिकोदरौष्ठे'ति वा ङीष् 'ओत्वोष्ठयोः समासे वे'ति पररूपं वृद्धेरपवादः। अन्यदा वृद्धौ। बिम्बौष्ठी बिम्बौष्ठा। पर्योष्ठम्। सप्तम्यर्थेऽव्ययीभावः। तस्माद्भवार्थे 'परिमुखादिभ्य उपसंख्यानमि'ति ष्यञ्। उष्ट्रः। 'ष्ट्रन्'-ति ष्ट्रन् बाहुलकादगुणत्वम्। उष्ट्राणां समूहः औष्ट्रकम्। 'गोत्रोक्षोष्ट्रे'ति वुञ्, उष्ट्रस्य विकारावयवयोरपि औष्ट्रकम्, 'उष्ट्राद्वुञि'ति वुञ्॥ ६८३॥

जिषु विषु मिषु सेचने॥ जेषति। जिजेष। जेषिता। जिजिषिषति। जिजेषिषति। जिषित्वा। जेषित्वा 'रलो व्युपधादि'ति कित्त्वविकल्पः। 'उदितो वे'ति क्त्वायामिडभावे जिष्ट्वा। जेजिष्यते। जेजेष्टि। जेषयति। अजीजिषत्। जिष्टम्। वेषति। विवेष। विविषतुः। विवेषिथ। विविषिव। शिषि पिषि शुष्यतिपुष्यती त्विषि श्लिषि विषि तुष्यतिदुष्यती द्विषिमित्यनिट्कारिकापाठादस्यानिट्त्वेऽपि क्रादिनियमादत्रेट्। वेष्टा। वेक्ष्यति। अविक्षत्। 'शल इगुपधे'ति क्सः। विविक्षति। 'हलन्ताच्चे'ति सनः कित्त्वम्। उदित्त्वात् क्त्वायामिड्विकल्पः। विषित्वा। वेषित्वा। विष्ट्वा। विष्टम्। वेषेण संवादी वेष्यो नटः। 'कर्मवेषाद्यदि'ति तृतीयान्तात्सम्पादिन्यर्थे यत्। सम्पत्तिः शोभातिशयः। वेषेणात्यन्तं शोभतइत्यर्थः। विष्लृ व्याप्तौ जुहोत्यादौ। विष विप्रयोगइति च क्र्यादौ। मेषतीत्यादि जेषतिवत्। मेष इति पचादिषु दर्शनादच्। टित्वात्स्त्रियां मेषी। अयं स्पर्द्धायां तुदादौ॥ ६८६॥

पुष पुष्टौ॥ पोषति। पुपोष। पुपोषिथ। पोषिता। पोषिष्यति। अपोषीत्। शिषि पिषि शुष्यतिपुष्यती इति श्यना निर्देशादयं सेट्। तथा पुषादीत्यङ्विधावपि दैवादिकस्य ग्रहणं, सेट्त्वात् क्तोऽपि न भवति। स्वपोषं पोषति स्वे पुष' इति णमुल्। अत्र स्वशब्दः पितृर्द्विश्यते तेन पित्यर्यायवचनस्य तद्विशेषार्थस्य च ग्रहणमित्युक्तत्वात् स्वशब्दे तत्पर्यायवाचिनि विशेषवाचिनि चोपपदे प्रत्यय इति गोपोषं धनपोषमिति दैवादिकस्य

भवति। पोषितः। पुषितः। पुष्टमिति। पोषितमिति ण्यन्तस्य। पोषयतीति पोषयिषुः। स्तनिहृषिपुषिगदिमदिपुषिभ्यो णेरित्नुजिति ण्यन्तादित्नुच्। 'अयामन्ते'ति णेरयादेशः। अथ दिवादि क्र्यादिश्च। धारणार्थश्चुरादिः। नन्वेक एव पुषिः विकरणभेदाय पुनः पठ्यते क्व चित्त्वाय सेट् अन्यत्र पाठादनिट् इत्यर्थादार्धधातुके विकल्पितेट्त्वात्'यस्य विभाषे'तीटा न भवितव्य निष्ठायाम्। नैतत्। यस्य वाचनिक इड्विकल्पस्तस्यैव तत्राश्रयणात् ॥ ६८७ ॥

श्रिषु श्लिषु प्रुषु प्लुषु दाहे ॥ श्रेषति। शिश्रेष। श्रेषिता। श्लेषति। शिश्लेष। शिश्लेषिथ। श्लेषिता। शिषिपिषि शुष्यतिशिष्यती त्विषि श्लिषिमित्यनिट्कारिकाया दैवादिकस्य श्लिषेर्ग्रहण तेनास्येतीड् उदाहृतः। उक्तं च कैयटे। श्लिष आलिङ्गनइति क्सविधावनिटइत्यनुवर्त्तनाद् दाहार्थस्य सेटोग्रहणाभाव इति। एव तत्र न्यासपदमञ्जर्योरपि। यस्त्वनिट्कारिकाव्याख्यानन्यासे द्वयोर्ग्रहणमिति पाठः स स्वोक्तिविरोधाद् ग्रन्थान्तरविरोधाच्च प्रमादलिखितः। तथा च वर्द्धमानस्वामिसमताकारादयश्चामु सेटमाहुः। श्लेषयतीति श्लेषः श्याद्व्यधास्रुसंस्रवतीणवसावहृलिहश्लिषश्वसश्चे'ति कर्त्तरि णः। श्लेष्मा। श्लेष्मलः। मत्वर्थे। श्लेष्मणः। पामादित्वान्नः। अयमपि मत्वर्थे श्लेष्मणः शमन कोपन वा श्लैष्मिकम्। 'तस्य निमित्तप्रकरणे वातपित्तश्लेष्मभ्यः शमनकोपनयोरुपसंख्यानमि'ति ठक्। श्लक्ष्णः। श्लिषेरच्चोपधाया इति क्नप्रत्ययः। उपधायाश्चाकारः। श्लिष्यतेर्वा श्लक्ष्णः। आचारश्लक्ष्णः। 'पूर्वसदृशे'त्यादिना समासः। आलिङ्गने दिवादिः। श्लेषणे चुरादिः। प्रोषति। प्रोषतीत्यादि। प्रुष्यतीति दिवादिपाठात् सेट्। प्रुषिप्लुषी द्वौ स्नेहने क्र्यादौ ॥ ६९१ ॥

पृषु वृषु मृषु सेचने ॥ मृषु सहने च। इतरौ हिंसासंक्लेशनयोश्च। अत्र काश्यपः। पृषु हृषु वृषु हिंसासंक्लेशनदानेष्वित्यादि पपाठ। पर्षति। पर्षिता। पर्षिष्यति। पर्षतु अपर्षत्। आशिषि पृष्यात्। अपर्षीत्। पिपर्षिषते। परीपृष्यते। पर्पृषीति। पर्पर्ष्टि। पर्पर्क्षि। लोटि पर्पृड्ढीत्यत्र हेर्ङित्वान्न गुणः। पर्पृषाणि। 'नाभ्यस्तस्याचि पिती'ति गुणनिषेधः। लङि तिप्सिपोर्हल्ङ्याब्भ्यो दीर्घादिति लोपः। अपर्पट्। 'रात्सस्ये'ति नियमात् न संयोगा-

न्तलोपः। अपर्पृषीत्। पूर्ववद्गुणत्वं रिक्रीकोरुदात्तार्थम्। पर्षयति। अपपर्षत्। अपीपृषत्। पर्षित्वा। पृष्ट्वा। उदित्त्वाद्विकल्पः। पृष्ट, पृषितम् बाहुलकात् पृषेः क्विचेति तच्च अस्मादपीति। पृषतम्। पृषिरञ्जिभ्यां किदित्यतच्। पृषन् बिन्दुमृगश्च। 'वर्त्तमाने पृषन्महद्बृहज्जगच्छतृवच्चे' त्यनिप्रत्यये गुणाभावः। शतृवद्भावाद् 'उगितश्चे'ति स्त्रियां ङीपि पृषती। पार्ष्णिः। घृणिपृश्निपार्ष्णिभूर्णिचूर्णिरिति'दिगिन्प्रत्यये निपात्यते। पार्ष्णीलः। 'सिध्मादिभ्यश्चे'त्यत्र पार्ष्णिधमन्योर्दीर्घश्चेतिपाठात् लचि दीर्घः। तच्चान्यतरस्याग्रहणस्यानुवर्त्तनात् मतुपि पार्ष्णिमान्। वर्षति। ववर्ष। वर्षतीति वर्षः। 'अज्विधौ भयादिभ्य उपसख्यानं नपुंसके क्तादिनिवृत्त्यर्थ'मित्यच्। वृषेर्वा वर्षणादिति भाष्यकारप्रयोगात् ल्युट्। वृष्टिः। 'तितुत्रे'ति नेट्। वृषभः। ऋषिवृषिभ्यां किदित्यभच्। वृषः। इगुपलक्षणः कः। वृषाय हितं वृष्यम्। 'खलयवमाषतिलवृषब्रह्मणश्चे'ति यत्। अत्राकारान्तस्य वृषशब्दस्य ग्रहणात् कनिन्युवृषीनिकनिनन्तात् वृषन्शब्दाद्यच्च भवति। प्राक्क्रीतीयस्त्वनभिधानान्न भवति। वृषमात्मन इच्छति वृषस्यति। मैथुन इच्छति इत्यर्थः। 'अश्वक्षीरवृषलवणानामात्मप्रीतौ क्यचि' इत्यसुक्। अश्ववृषयोर्मैथुनेच्छायाम् इति। अन्यत्र 'क्यचि चे'तीकारे वृषीयति। वृष्णिः। पृवृषिभ्यां किदिति निः। वृषणः। बाहुलकात् क्युन्। वर्षतइति सेहने गतः। मर्षति। ममर्ष। मृषित्वा। मर्षित्वा। 'तृषिमृषिकृषेः काश्यपस्ये'ति सेट्त्क्तः कित्त्वविकल्पः। अनिट्पक्षे मृष्ट्वा, निष्ठायां मृष्टम्। 'मृषस्तितिक्षायामि'ति कित्त्वमनिटो निष्ठायामेवेति दैवादिकस्य तत्र ग्रहणं, स हि सेट्, मृषस्तितिक्षायामिति दिवादिर्युजादिश्च स्वरितेतौ॥ ६९४॥

घृषु संघर्षे॥ घर्षति। संघर्षणम्। घृष्टम्॥ ६९५॥

हृषु अलीके॥ हर्षति। हृष्टानि लोमानि हर्षितानि लोमानि। हृष्टं लोमभिर्हर्षितं लोमभिः। अत्रोदित्त्वान्नित्यमनिट्त्वे प्राप्ते 'हृषेर्लोमस्वि'ति लोमविषयालीकवाचित्वात्पक्ष इडागमः। यस्तु दिवादौ हृष तुष्टाविति पठ्यते तस्य तु सेट्कत्वान्निष्ठायामनेन पक्षे इणिनषिध्यते इतीयमुभयत्र विभाषा, अत्र लोमान्यङ्गानि केशाश्चेति वृत्तावुक्तम्। लोम-

अन्यत्र हृष्टमित्येव भवति, दैवादिकस्य तु हृषितमिति । हृष्टो देवदत्तः, हृषितो देवदत्तः, विस्मित इत्यर्थः । हृष्टा दन्ता हृषिता दन्ताः । प्रतिहता इत्यर्थः । विस्मितप्रतिघातयोश्चेति वक्तव्यमिति इड्विकल्पः । हर्षुलः । 'हृषेरुलजि'त्युलच् । हर्षयित्नुः । स्तनिहृषीत्यादिना ण्यन्तादित्नुच् ॥ ६९९ ॥

तुस ह्रस ह्लस रस शब्दे ॥ तोसति । तुतोस । तोसिता । तोसिष्यति । तोसतु । अतोसत् । तोसेत् । आशिषि । तुस्यात् । अतोसीत् । तुतुसिषति । तुतोसिषति । तुसित्वा । तोसित्वा । 'रलो व्युपधा'दिति कित्त्वविकल्पः । तोतुस्यते । तोतोस्ति । तोतुधात्यत्र सेर्हेर्धिभावे चकाधीतिवद्धि चे'ति सलोपः । लङि तिप्सिपोर्हल्ङ्यादिलोपे 'तिप्यनस्ते'रिति सकारस्य दत्वे अतोतोदिति भवति । सिपि तु 'सिपि धातोरुर्वे'ति पक्षे रुत्वे अतोतोरिति भवति । तोसयति । अतूतुसत् । ह्रसति । जह्रास । ह्रसितेत्यादि । जिह्रसिषति । जाह्रस्यते । जाह्रस्तीत्यादि तुसिवत् । ह्रासयति । अजिह्रसत् । ह्रस्वः । बाहुलकाद् 'ह्रस्व लघ्वि'ति निर्देशाद्वा वप्रत्ययः । ह्रसिष्ठः । ह्रसीयान् । 'पृथ्वादिभ्य इमनिज्वे'ति इमनिच् । स्थूलदूरे'ति इष्ठेमेय सु यणादिपरं लुप्यते पूर्वस्य च गुणः । एतत्स्थूलादिविषय यथासम्भवम् । अत्र यणादिलोपस्यासिद्धवदत्रे त्यसिद्धत्वाट्टेरिति लोपो न भवति । ह्रस्वं करोति ह्रसयति । णाविष्ठवदिति यणादिलोपः । अङ्गवृत्ते पुनर्वृत्तावविति वृद्ध्यभावः । भाष्ये अग्लोपित्व चङि इत्वाभावादजह्रसत् । ह्लसतीत्यादि ह्रसिवत् । रसतीत्यादि । रस इति रस आस्वादनस्नेहनयोरिति चौरादिकस्य ण्यन्तस्य, रसयतीति हि तस्य व्युत्पत्तिः ॥ ७०० ॥

लस श्लेषणक्रीडनयोः ॥ लसतीत्यादि । विलासी । 'वौ कषलसे'ति तच्छीलादौ घिनुण् । न लसः, अलसः । अलसस्य भावः, आलस्यम् । 'न नञ्पूर्वात्तत्पुरुषादचतुरसङ्गतलवणवटयुधकतरसलसेभ्य' इति नञ्पूर्वात्तत्पुरुषादचतुरसङ्गतलवणादुत्तरे भावप्रत्यया न भवन्तीति निषेधश्चतुरादिपर्युदासादिह नेति ष्यञ् भवति । एवं नरसे', आरस्यमिति । अलसो ह्यालस्यः । चातुर्वर्ण्यादित्वात्स्वार्थे ष्यञ् भवति । लस शिल्पयोग इति चुरादौ ॥ ७०१ ॥

घस्लृ अदने॥ अय न सार्वत्रिकः,'लिट्यन्यतरस्यामि'ति अदेर्घस्लादेशविकल्पविधानवैयर्थ्यप्रसङ्गात्। द्वैरूप्य हि साध्यम्। ततश्च यत्र लिङ्गवचनं वास्ति तत्रैवास्य प्रयोग.। अत्रैव पाठः शपि परस्मैपदे लिङ्गम्। ऌदित्करणमङि। घसिश्च सान्तेष्विति इणिनषेधो वलाद्यार्धधातुके। यत्र प्रत्यये प्रतिपदोपादान 'सृघस्यदः क्मरजि'त्यादौ तद्वचनम्। घसति। घस्ता। घत्स्यति। 'सः स्यार्द्धधातुके'इति तत्वम्। घसतु। अघसत्। घसेत्। शबभावादाशिष्यप्रयोग। अघसत्, ऌदित्त्वादङ्। घत्स्यते देवदत्तेनावमित्यादौ शप्परस्मैपदाभावेपि वलादिनिमित्तः प्रयोगः। घस्मरः। 'सृघस्यदः क्मरच्,इति क्मरच् तच्छीलादौ। घासः भक्ष्यतृणादिः। जनिघसिभ्यामिण्। घासिः,जघासेति घासः प्रघास इति भट्टभास्करो 'बहुल छन्दसी'ति अदो घस्लादेश औणादिक इत्याह। तदस्य घसेरस्मरणात्॥ ७०२॥

जर्ज चर्च झर्झ परिभाषणहिंसातर्जनेषु॥ जर्जति। चर्चति। झर्झति। झर्झरः। बाहुलकादरः। चर्चझर्झयोस्तुदादौ पठिष्यमाणयोरिह पाठः स्वरार्थ इति देवमैत्रेयपुरुषकारेषु। उष्मान्तेषु पाठोर्थानुरोधादिति च मैत्रेयः। चर्च अध्ययनइति चुरादौ॥ ७०५॥

पिसृ पेसृ गतौ॥ पेसति। पेसयति। अपिपेसत्। एकारोपधपाठः किदर्थ इति पिपेसतुः। पेपेस्यतइत्यादि। पेस्वरः। 'स्थेशभासपिसकसो वरजि'ति वरच्। इह क्व चित् विसृ वेसृ पिशृ पेशृ इत्यपि पठन्ते। आद्यौ दन्त्योष्ठ्यादिदन्त्यान्तौ। इतरावोष्ठ्यादी तालव्योष्मान्तौ चत्वार एते मैत्रेयादिषु न दृश्य-न्ते। पिस अवयवइति तु चुरादौ॥ ७०७॥

हसे हसने॥ हसति। जहास। अहसीत्। 'ह्म्यन्तक्षणे'त्यादिना वृद्धिनिषेधः। व्यतिहसन्ति। 'प्रतिषेधे हसादीनामुपसङ्ख्यानमि'ति तङ्निषेधः। हसः। 'स्वनहसोर्वे'त्यनुपसृष्टात् पक्षे अप्। तदभावे घञ्, हासः। उपसृष्टात् तु नित्य घञेव प्रहास इति। हस्तः। हसिमृग्रिण्वित्यादिना तन्। 'तित्रुत्रेती'ण्निषेधः। हस्तोस्यास्तीति हस्ती 'हस्ताज्जाताबि'ति इन् प्रत्ययः। हस्तिना समूहो हास्तिकम्। 'अचित्तहस्तिधेनोष्ठक्' इति ठक्

ण,मभ्यासस्येति शेषः । द्योतिता । द्योतिष्यते । द्योतताम् । द्योतेत । आशिषि द्योतिषीष्ट । अद्योतिष्ट । अद्युतत् । 'द्युद्भ्यो लुङी'ति वा परस्मैपदम् । द्युद्भ्य इति बहुवचनादाद्यर्थावगतिः । यदा परस्मैपदं तदा पुषादित्वादङ् । दिद्युतिषते । दिद्योतिषते । द्युतित्वा । द्योतित्वा । 'रलो व्युपधादि'ति वा कित्त्वम् । देद्युत्यते । 'द्युतिस्वाप्यो'रित्यभ्यासस्य संप्रसारणे 'गुणो यङ्लुको'रिति गुणः । देद्युतीति । देद्योत्ति । द्योतयति । अदिद्युतत् । 'द्युतिस्वाप्यो'रित्यभ्यासनिमित्तत्वेन प्रत्यये नानन्तर्यमाश्रीयते इति णिचा व्यवधानेऽप्यत्र संप्रसारणं भवति । अत एव तत्र वृत्तौ अदिद्युतदित्युदाहारि । तथा दाधर्त्यादिसूत्रे दविद्युतदित्यत्र द्युतेर्यङ्लुगन्तस्य शतरि अभ्यासस्य संप्रसारणाभावो विगागमश्चात्व चास्य निपात्यतइत्युक्तम् । आनन्तर्ये ह्याश्रीयमाणे यङो लुका लुप्तत्वादानन्तर्याभावान्न संप्रसारणस्य प्रसङ्ग इति किं तदभाववचनेन । अत्र शिवदेव । 'हेरचङी'ति अभ्यासादुत्तरस्य हिनोतेः कुत्वमुक्त्वा तस्याचङीति निषेधाल्लिङ्गात्प्रकृतिग्रहणे ण्यधिकस्यापि ग्रहणमिति सामान्येन परिभाषामाश्रित्य पर्यहार्षीत् । अभ्यासस्य निमित्ते प्रत्ययानन्तर्ये आश्रीयमाणे ऽजीहयदित्यत्र णिचा ऽडो व्यवधानात्कुत्वाप्रसङ्गेऽपि क्रियमाणोऽयं निषेधो ण्यधिकस्य ज्ञापयति । अस्याः परिभाषायाः सामान्यापेक्षत्वं वार्त्तिककारस्यानभिमतम् । यदाह देवः । चङोऽन्यत्र ण्यधिकस्यापि कुत्वं भवति, तेन प्रजिघाययिषतीति सिद्धं भवतीति । तथा च वार्त्तिकमपि । 'हेरचङि प्रतिषेधानर्थक्यमङ्गान्यत्वात्, ज्ञापकं त्वन्यत्र ण्यधिकस्य कुत्वज्ञापनार्थमिति । एवं 'स्तम्बकर्णयोरमिजपोः' 'अर्हे' इत्यादौ ण्यधिकस्य ग्रहणाभावाद् ण्यन्तादचो ऽभावादर्णि सुखार्हीत्यादि सिद्ध्यति । यदुक्तं सीरदेवेन ण्यधिकपरिभाषाया अव्यापिनीत्वात् अर्हादावप्रवृत्तिरिति । सामान्यत्वमङ्गीकृत्य तदपि वृत्तिवार्त्तिकविरोधादेव प्रत्युक्तम् । अस्योदुपधत्वाद् 'उदुपधाद्भावादिकर्मणो'रिति निष्ठायाः कित्त्वविकल्प उदाहार्यः । द्युतितमनेन द्योतितमनेनेत्यादि । विद्युत् । 'भ्राजभासे'त्यादिना क्विप् । दिद्युत् । 'द्युतिगमिजुहोतीनां द्वे चे'ति क्वौ द्वित्वे ऽभ्या-

सस्य सम्प्रसारणम् । ज्योतिः । द्युतेरिसन्, आदेश्च ज इतीमन् आदेश्च जः ॥ ७२८ ॥

श्विता वर्णे ॥ श्वेतते । शिश्विते । श्वेतिता । अश्वितत् । अश्वेतिष्टेत्यादि पूर्ववत् । श्वित्तम् 'आदितश्चे'ति निष्ठायामनिट्त्वम् । भावादिकर्मणोस्तु 'विभाषा भावादिकर्मणो'रितीडप्युदाहार्यः । श्वितितमनेनेत्यादि । श्वित्रम् । स्फायितञ्चीत्यादिना रक् ॥ ७२९ ॥

ञिमिदा स्नेहने ॥ मेदते । मिमिदे । मेदिता । अमिदत् । अमेदिष्टेत्यादि । 'मिदेर्गुण' इत्यत्र शिद्ग्रहणमनुवर्त्तते तच्च कर्मधारय इति यस्मिन्विधिरितीत्सञ्ज्ञकशकारादौ गुण इति शव्यगुणाभावः । मिन्नः । 'ञीतः क्तः' । 'रदाभ्यामि'ति नत्वम् । आदित्त्वादनिट्त्वम् । भावादिकर्मणोस्तु 'विभाषा भावादिकर्मणो'रिति वेट्, 'निष्ठाशीङि'ति सेटो निष्ठायामक्किन्त्वाद्गुणे मेदितमनेनेत्यादि । मेदुरः । 'भञ्जभासमिदो घुरच्' । मित्रम् । 'अमिमिदिशसिभ्यः त्रि'ति त्रन् । अयं दिवादिश्चुरादिश्च । मिद मेधाहिंसनयोरिति भ्वादौ । ञिमिदा स्नेहने मोचने च । स्नेहनमोचनयोरिति क्व चित्पठ्यते ॥ ७३० ॥

ञिष्विदा गात्रप्रस्रवणे ॥ स्वेदते । सिष्विदे । स्वेदिता । अस्विदत् । अस्वेदिष्ट । सिस्विदिषते । 'स्तौतिण्योरेवे'त्यषत्वम् । सेष्विद्यते । सेष्वेत्ति । स्वेदयति । असिस्विदत् । ण्यन्तात्सनि 'सः स्विदिस्वदिसहीनां चे'ति अभ्यासात्परस्य सत्त्वम् । सिस्वेदयिषतीति । निष्ठायां मिदिवत् स्विन्न इत्यादि । अत्र स्वामी ञिक्ष्विदेति क्ष्वकारं पठित्वा ञिष्विदेति नन्दीत्याह । तत्र क्ष्वेदते । चिक्ष्विदे । अक्ष्विदत् । अक्ष्वेदिष्टेत्यादि । क्ष्वेदनीन्यव्यक्ते शब्दे भविष्यति । स्विद्यतीति स्नेहनसेकयोर्दिवादौ । स्विद्यतीति गात्र प्रक्षरणे ॥ ७३१ ॥

रुच दीप्तावभिप्रीतौ च ॥ रोचते देवदत्ताय मोदकः । 'रुच्यर्थानां प्रीयमाण'इति प्रीयमाणस्य संप्रदानत्वाच्चतुर्थी । रुरुचे । रोचिता । अरुचत् । अरोचिष्ट । रुरुचिषते । रुरोचिषते । रुचित्वा । रोचित्वा । भृश रोचत इत्यर्थे यङ्लुगिष्यतइतिवृत्तिन्यासादौ । रोचयति । रोचयते । 'अणावकर्मका-

द्वि'ति कर्त्रभिप्राये प्राप्ते परस्मैपदे 'न पादम्याङ्यमाङ्यसपरिमुहरुचिनृतिद॰ वदवस'इति निषिध्यते । रोचयति । रोचनः । रोचनम् । नन्दिवाशिदर्॰ हनन्दमाधिवर्द्धिरोचिभ्यो ण्यन्तेभ्यः सञ्ज्ञायामिति नन्द्यादिपाठ ल्युः । रोचिष्णुः । 'अलंकृञि'त्यादिनेष्णुच् । रुच्यः । 'राजसूये'त्यादीना कर्त्तरि क्यप् निपात्यते । रोकः । घञ् । 'चजोः कुघिण्ण्यतोरि'ति निष्ठायामनिटः कुत्व वदतो वार्त्तिककारस्य 'विभाषा श्यावारोकाभ्यामि'ति निपातनात् कुत्वम् । रोचिः । 'शुचिरुच्योः सञ्ज्ञायामि'ति सिः । रुक्मम् । 'युजिरुचितिजा कश्चे'ति मन्प्रत्ययः । चकारस्य ककारः । रोचकः । 'क्कुन शिल्पिसञ्ज्ञयो'रिति क्कुन् ॥ ७३२ ॥

घुट परिवर्त्तने ॥ घोटते । जुघुटे । घोटिता । अघुटत् । अघोटिष्ठ । घुटित्वा । घोटित्वा । 'रलो व्युपधादि'ति वा कित्वात्, जोघुट्यते । जोघोट्टि । घोटयति । अजूघुटत् । घुटितः । भावादिकर्मणोः कित्वविकल्पे घुटितमनेन घोटितमनेनेत्यादि । अच् । घोटः । घोटकः । संज्ञायां कन् । घुटिका । सञ्ज्ञायां क्कुन् । अय तुदादौ च ॥ ७३३ ॥

रुट लुट लुठ प्रतीघाते ॥ आद्यौ प्रथमान्तौ । अन्त्यो द्वितीयान्तः । अयं पाठो देवमैत्रेयादीनाम् । हरियोगिनस्तु द्वावेव । 'धातोः कर्मण' इत्यत्र कैयटे द्वितीयान्तौ पठितौ । क्षीरस्वामी त्वेवं पठित्वा आह रुट लुटेत्येके । वाथृ लोडने इति लिङ्गाद् इति । तया लुठ दीप्तावित्यप्यसावाह, लुट इति तु शाकटायनः । सुधाकरस्तु भूवादिसूत्रे लुठतिर्द्वितीयान्तोऽपि लुठितो लोठमान इति प्रयोगदर्शनादित्याह । रोठते । लोठते । इत्यादि पूर्ववत् । लोठतीति लोडने गतम् । रुण्ठति लुण्ठतीति स्तेये । रोठति लोठतीत्युपघाते । लुण्ठतीत्यालस्यप्रतिघातयोः । रुण्ठति लुण्ठतीति द्वयं गत्यर्थे ॥ ७३६ ॥

शुभ दीप्तौ ॥ शोभते । शुशुभे । अशुभत् । अशोभिष्ट । शुशुभिषते । शुशोभिषते । शुभित्वा । शोभित्वा । शोशुभ्यते । शोशोब्धि । शोभयति । अशूशुभत् । हिंसाभवनयोः शोभति । शुभति ॥ ७३८ ॥

क्षुभ सञ्चलने ॥ संचलनं प्रकृतिविपर्यासो गमनं च । क्षोभते । अक्षुभत् । अक्षोभिष्टेत्यादि पूर्ववत् । क्षुब्धो मन्थः । 'क्षुब्धस्वान्ते'ति मन्थे निष्ठायामनिट्त्वं निपात्यते । अन्यत्र क्षुभितः । अयं दिवादि क्र्यादिश्च ॥ ७३८ ॥

णभ तुभ हिंसायाम् ॥ प्रणभते । नेभे । नभिता । अनभिष्ट । तोभते । तुतुभे । तोभिता । अतुभत् । अतोभिष्ट । णभिरयमभावेपि वर्त्तते । नभन्तामन्यके समइत्यत्र मा भूवन्नन्यके सर्वे इति निरुक्तम् । तथा नभन्तामन्यके मा ज्याका अधिधन्वसु इत्यत्र भाष्येपु अन्यकेषां शत्रूणां धन्वसु स्थिता ज्याकाः छिन्ना मा भवन्त्विति । नभः समुद्रमाकाशश्च । असुनित्यादिना असुन्प्रत्ययः । इमौ दिवादौ क्र्यादौ च ॥ ७४० ॥

स्रंसु ध्वंसु भ्रंसु अवस्रंसने ॥

ध्वंसु गतौ च ॥ स्रंसते । सस्रंसे । स्रंसिता । अस्रसत् । अस्रंसिष्ट । अङि नलोपः । सिस्रंसिषते । सनीस्रसीति । सनीस्रस्तः । 'नीग्वञ्चुस्रंस्वि'त्यादिना नीक् । स्रंसित्वा । स्रस्त्वा । उदित्त्वादिड्विकल्पः । इट्पक्षे क्त्वाभावाच्चलोपाभावः । स्रस्तम् । उखायाः स्रंसते इति उखास्रत् । 'क्विप् चे'ति क्विप् । 'वसुस्रंसुध्वंस्वि'ति पदान्तसकारस्य दकारः । सनीस्रस्तः । यङ्लुगन्तात् क्वौ नलोपः । दत्वं सानुबन्धकनिर्देशान्न भवति । रुत्वविसर्जनीयौ । 'अत्वसन्त स्ये'ति दीर्घो ऽधातोरिति निषेधान्न भवति । सनीस्रसः । अचपरे । यङ्लुकि यङो लुप्तत्वात् प्रत्ययलक्षणाभावाच्चलोपाभावः । एवं ध्वंसते । भ्रंसते इत्यादि । अत्र तृतीय मैत्रस्वामिक्षीरधन्यासरमताकारादयः तालव्योष्मान्तं पठन्तो नीग्विधावपि तथा वदन्ति । भ्रंशतइत्यादि । अत्र क्वचित् भ्रंशिरपि पठ्यते । भ्रंशु भ्रशु अधःपतनइति दिवादौ देवमैत्रेयादिमते । स्रंसते इति प्रमादे गतः ॥ ७४४ ॥

स्रंभु विश्वासे ॥ विस्रम्भते । सस्रम्भे । स्रम्भिता । अस्रभत् । अस्रम्भिष्ट । सिस्रम्भिषते । सास्रभ्यते । सास्रम्भि । स्रम्भयति । असस्रम्भत । स्रम्भित्वा । स्रब्ध्वा । विस्रम्भी । 'वौ कषलसे'ति घिनुण् । स्रम्भतइत्यादि । तालव्यादिः काश्यपादिमते प्रमादे गतः ॥ ७४५ ॥

वृतु वर्त्तने ॥ वर्त्तते । ववृते । वर्त्तिता । वर्त्तिष्यते । वर्त्स्यति । वर्त्तताम् । अवर्त्तत । वर्त्तेत । वर्त्तिषीष्ट । अवृतत् । अवर्त्तिष्ट । अवर्त्तिष्यत । अवर्त्स्यत् । विवर्त्तिषते । विवृत्सति । 'वृद्भ्यः स्यसनोर्वा परस्मैपदम् । वृद्भ्य इति बहुवचननिर्देश आद्यर्थावगमार्थ इति वृतुवृधुशृधुस्यन्दिक्रपीनामपि स्यसनोर्वा परस्मैपदं द्रष्टव्यम् । 'न वृद्भ्यश्चतुर्भ्य' इति सकारादेरार्धधातुकस्य परस्मैपदपरस्य इडभाव', झलादेः सनः 'हलन्ताच्चे'ति कित्त्वादगुणत्वम् । 'न वृद्भ्यश्चतुर्भ्य' इति अत्र भाष्यवार्त्तिकयोः सिद्धं तु वृतादीनामात्मनेपदेन समानपदस्यस्येड्वचनादित्युक्तत्वात् क्तपरेऽपि सादौ परस्मैपदे लुङि चेटः प्रतिषेधो भवति । विवृत्सिता । विवृत्सितुम् । विवृत्सितव्यम् । विवृत्सति । सामान्येन वलादाविति सिद्धे आरभ्यमाणमिदमात्मनेपदेन समानपदस्येड्विधाने ऽर्थादन्यनिवृत्त्यर्थं, विवृत्सिषीयतइति आत्मनेपदेन समानपदस्यत्वेऽप्यन्तरङ्गः प्रकृत्याश्रयः प्रतिषेधो भवति । न तु बहिरङ्ग आत्मनेपदाश्रयो विधिः । वरीवृत्यते । 'रीगृत्वत' इति रीक् । ववर्व इत्यादि नेयम् । वर्त्तयति । अववर्त्तत् । अवीवृतत् । वर्त्स्यन् वर्त्तिष्यमाणो वा वर्त्तिष्णु । 'अलङ्कृञि'त्यादिना इष्णुच् । हस्तवर्त्तं वर्त्तयति । 'हस्ते वर्त्तिग्रहो'रिति हस्तवाचिनि करणे उपपदे ण्यन्तादस्मात् ग्रहेश्च णमुल् । हस्तइत्यर्थग्रहणमिति पाणिवर्त्तमित्याद्यपि भवति । कषादित्वाद्यथाविध्यनुप्रयोगः । वृत्तः । अथ यदान्तर्भावितण्यर्थस्तदा सकर्मकः, यथा 'तेन निर्वृत्ताम'ति । निर्वर्त्तितमिति ह्यत्रार्थः । यद्येव 'णेरध्ययने वृत्त'मिति निष्ठायामिडभावनिपातनं किमर्थं यस्मादन्तर्भावितण्यर्थादस्माद्वृत्तमध्ययनमिति भविष्यति । एवं तर्हि ण्यन्तादप्यध्ययने वृत्तमित्येव यथा स्यान्न तु वर्त्तितमित्येवमर्थं निपातनम् । अत्र वृत्तिकारो ऽमु पक्षमुक्त्वा वर्त्तितो गुणो देवदत्तेनेति चेष्टमित्याह । अत्र हरदत्तः । तेषा नार्थः सूत्रेणेति । वृत्त तदिति वर्त्म । 'उणादयो बहुलम्' । 'भूतेऽपि दृश्यन्त' इति मनिन् । वर्त्मनिः । रथमार्गः । 'अदेर्मुट्' 'वृत्तेश्चे'ति मुडागमो निप्रत्ययश्च । अदिवृतिभ्यां मुट् चेति वक्तव्ये पृथग्योगकरणात्पक्षे मुगन भवति । वर्त्त-

निरित्यपि भवति । वर्त्तनी । ऋदिकारत्वान्ङीप् । अयं भाषार्थश्चुरादौ ॥ ७४६ ॥

वृधु वृद्धौ ॥ वर्धतइत्यादि पूर्ववत् । वर्धिष्णुः । 'अलंकृजि'त्यादिनेष्णुच् । वर्द्धनः । नन्द्यादिपाठात् ल्युः । वृद्धः । अतिशयेन वृद्धो वर्षिष्ठः । वर्षीयान् । 'प्रियस्थिरे'ति इष्ठन्नीयसुनोर्यथासंख्याद् वृद्धस्य वर्षादेशः । ज्येष्ठः । ज्यायान् । 'ज्य चे'ति ज्यादेशः । अकारोच्चारणसामर्थ्याट्टिलोपो न भवतीति प्रागेवोक्तम् । वृद्धमाचष्टे वर्षयति । ज्यापयति । णाविष्ठवद्भावादिति वर्षज्यादेशौ । वृद्धिः । 'तितुत्रे'ति नेट् । वृद्ध्यर्थं द्रव्यमपि, तत् प्रयच्छतीति वार्द्धुषिकः । प्रयच्छति गर्ह्यमिति द्वितीयान्ताद् गर्ह्योपाधिकात्प्रयच्छतीत्यर्थे ठगिति ठक् । वृद्धेर्वृधुषभावः । वृधुषिः प्रकृत्यन्तरं वेति वृत्तिः । वृद्धेर्गर्ह्यत्वमशास्त्रीयत्वेन । अय भाषार्थश्चुरादौ ॥ ७४७ ॥

शृधु शब्दकुत्सायाम् ॥ शर्द्धतइत्यादि पूर्ववत् । अयं प्रहसने चुरादिः । वृतादयस्त्रय उदितः ॥ ७४८ ॥

स्यन्दू प्रस्रवणे ॥ स्यन्दते । सस्यन्दे । सस्यन्दिवहे । सस्यन्द्वहे । ऊदित्त्वा त्स्वरतिसूती त्यादिना वलादावार्द्धधातुकइड्विकल्पः । स्यन्दिता । स्यन्ता । स्यन्दिष्यते । स्यन्त्स्यते । 'वृद्भ्य स्यसनो'रिति यदा परस्मैपदं तदा स्यन्देरूदित्त्वलक्षणमन्तरङ्गमपीड्विकल्पं 'न वृद्भ्य'इति निषेधश्चतुर्ग्रहणसामर्थ्याद्बाधते इति स्यन्त्स्यति । अस्यन्त्स्यत् । सिस्यन्त्सतीत्येव भवति । स्यन्दताम् । अस्यन्दत । स्यन्दिषीष्ट । स्यन्त्सीष्ट । अस्यन्दिष्ट । अस्यन्दिष्यत । इडभावे झलि सिलोपे चर्त्वे अस्यन्त । अस्यन्त्साताम् इत्यादि । 'द्युद्भ्यो लुङी'ति यदा परस्मैपदं तदा 'पुषादिद्युताद्यॢदि'ति अङ् । अनुनासिकलोपः । अस्यदत् । अस्यदतामित्यादि । अस्यन्दिष्यत । अस्यन्त्स्यत । सिष्यन्दिषते । सिस्यन्त्सते । सिस्यन्त्सति । अनुस्यन्दते जलम् । अनुष्यन्दतइति वा । 'अनुविपर्यभिनिभ्य' इति वा षत्वम् । एवं पर्यादिभ्य उदाहार्यम् । अप्राणिष्वित्यस्य पर्युदासत्वात्प्राण्यप्राणिसमुदायोऽपि प्राणिव्यतिरिक्त इति मत्स्योदके अनुष्यन्दते इत्यत्रापि

वा मूर्द्धन्यो भवति । स्यन्दित्वा । स्यन्त्वा । 'क्त्वि स्कन्दस्यन्दो'रित्यनिट्यपि नलोपो निषिध्यते । स्यन्नः । निष्ठायां 'यस्य विभाषे'त्यनिट्त्वम् । स्यदः । घञि 'स्यदो जवे'इति निपातनान्नलोपः, वृद्ध्यभावश्च । जवादन्यत्र स्यन्दः स्यन्दनः । 'अनुदात्तेतश्चे'ति युच् । सिन्धुः । 'स्यन्देः सम्प्रसारणं धश्चे'त्युप्रत्ययः सम्प्रसारणं धश्चान्तादेशः । सिन्धौ जातः सिन्धुकः । सैन्धवः । 'सिन्ध्वपकराभ्यां कन्' । 'अणञौ चे'ति कनणौ । सिन्धुरभिजनो यस्य सैन्धवः । 'सिन्धुतक्षशिलादिभ्योऽणञा'वित्यण् । सिन्धौ भवादिरपि सैन्धवः । 'कच्छादिभ्यश्चे'ति शैषिकोऽण् । यदा त्वयं भवादिर्मनुष्यः तत्स्थो वा तदा 'मनुष्यतत्स्थयोर्वुञि'ति वुञ् । सैन्धवको मनुष्यः । सैन्धवकं हसितमिति । लवणसिन्धौ भवं लावणसैन्धवम् । 'प्राग् दीव्यतोऽण्' । 'हृद्भगसिन्ध्वन्ते पूर्वपदस्य चे'त्युभयपदवृद्धिः ॥ ७४९ ॥

कृपू सामर्थ्ये ॥ कल्पते । चक्लृपे । चक्लृपिषे । चक्लृप्से । इत्यादि स्यन्दिवत् । विशेषस्तु 'लुटि च क्लृप' इति लुटि स्यसनोरित्यत्र परस्मैपदं तदा 'तासि च क्लृप' इति तासौ सकारादावनिट्त्वं च । कल्प्ता । कल्प्तासीति पूर्ववदिदमूदिल्लक्षणं विकल्पं बाधते । अत्र चात्मनेपदेन समानपदस्थस्येति स्थितमिति सनन्तात्क्लृपि परस्मैपदे लुङि च निषेधो भवति । चिक्लृप्सिता । चिक्लृप्सतेत्यादि । 'हलन्ताच्चे'ति सनः कित्त्वान्न गुणः । तथा यदा लिङ्सिचोरात्मनेपदे इडभावस्तदा 'लिङ्सिचावात्मनेपदेष्वि'ति कित्त्वान्न गुणः । क्लृप्सीष्ट । अक्लृप्त । अक्लृप्साताभित्यादि । इट्पक्षे कल्पिषीष्ट । अकल्पिष्टेत्यादि । 'कृपो रो लः' इति रेफस्य लत्वम् । तत्र वर्णात्मकस्य रेफस्य वर्णात्मको लकारः, यस्त्ववर्णात्मक ऋकारस्तस्यावर्णात्मको लकारस्तत्र स्यात्यादिशयोः वर्णैकदेशयोः निर्देष्टुमशक्यत्वात् ऋकारस्य लृकारः सम्पद्यते । चलीक्लृप्यते । चल्कल्प्ति । चलिकल्प्ति, चलीकल्प्तीत्यादौ रिग्रीयुक्तामपि क्रुपो भक्तत्वेन तद्रेफत्वाल्लत्वं भवति । तथा क्लृप्तम् । 'अदसोद्रेः पृथङ् मुत्वं केचिदिच्छन्ति लत्ववदि'ति । द्युतादिनां यङ्लुगन्तानां लुङ्यङ् नास्ति । 'पुषादिद्युतादौ'ति गणनिर्देशात् । तेन अचोक्लृपीदित्येव भवति । सिज्लोपेऽत्र गुणो नाजादिपिदपेक्षः । तथा

वृतादीनां यङ्लुगन्तानां 'न वृद्भ्य' इति इण्निषेधोपि गणनिर्देशान्न भवति। वरीवर्त्तिष्यतीत्याद्येव। क्षपेस्तु गणनिर्देशाभावात् 'तासि च कॢपः' इति इण्निषेधो भवत्येव। चल्कॢप्तासीत्यादि। द्युतादय उदात्ता अनुदात्तेतः॥ ९५०॥

वृत्॥ वृत् सपूर्णो द्युतादिर्वृतादिश्चेत्यर्थः॥ वृतु वर्तनइत्यस्माद्धातोर्भूतेपि क्विप्॥

गणप्रयुक्तकार्यभाजो द्युतादीन् वृतादींश्च परिसमाप्यान्यानपि गणप्रयुक्तकार्यभाज आह॥

घट चेष्टायाम्॥ एतदादयस्त्वकारान्ता उदात्ता अनुदात्तेतः षितश्च, तत्फलं घटेत्यादौ 'षिद्भिदादिभ्योङि'त्यङ्। घटादयः फणान्ता मितः, तत्फलं तत्रतत्र दर्शयिष्यते। घटते। जघटे। घटितेत्यादि। जिघटिषते। जाघट्यते। जाघट्टि। घटयति। अजीघटत्। मित्त्वा-'न्मितां ह्रस्व' इति णावुपधाह्रस्वः, यदा तु ण्यन्ताच्चिण्णमुलौ तदा 'चिण्णमुलोर्दीर्घोन्यतरस्यामि'ति चिण्णमुल्परे णौ मितामुपधाया वा दीर्घशासनात् अघाटि अघटि घाटम् २ घटम् २ इति भवति। अमितस्तु वृद्धिरेव। ण्यन्तात्स्यादिषु चिण्वदिट्यपि वा दीर्घः। घटिष्यते। घाटिष्यते। अघाटिष्यत। अघटिष्यत। अघाटिषाताम्। अघटिषाताम्। घाटिषीष्ट। घटिषीष्ट। घाटिता। घटिता। चिण्वदिटोसिद्धत्वात् 'णेरनिटी'ति णिलोपः। चिण्वदिडभावे गुणायादेशयोः कृतयोर्घटयिष्यतइत्यादि। कर्मकर्त्तर्य्येवम्। लुङेकवचने तु 'णिश्री'ति यक्चिणोर्निषेधाद्ङि अजीघटत स्वयमेवेति भवति। 'अचः कर्मकर्त्तरी'ति चिण्विकल्पस्य ण्यन्ते न विषय इति प्रागेवोक्तम्। 'घटादयो मित' इति गणनिर्देशेन विधीयमानत्वान्मित्त्वस्य यङ्लुक्यभावात् न ह्रस्वो नापि दीर्घविकल्प इति जाघाटयति। अजाघाटीत्यादि भवति। घटी। अजन्तत्त्वा'ज्जातेरस्त्रीविषया'दिति ङीष्। घटना। 'घट्टिवन्दिविदिभ्यश्चे'ति युच्। घटिका। 'क्वुन् शिल्पिसञ्ज्ञयो'रीति क्वुन्। अपरे गणान्तराधीता इह पठ्यन्ते तेषामिहोपात्त एवार्थे मित्त्वं, ये त्वपूर्वाः पठ्यन्ते तेषामुपात्ते वानुपात्तेवार्थे मित्त्वं, तदुक्त

बोधन्यासे, केचिदिहैव पठन्ति तेषामुपसर्गादिना अर्थान्तरेऽपि सानुबन्धत्व यथा विघटयतीति, अपरे गणान्तराधीता इह पठन्ते तेषामर्थेन नियमः। यथा स्मृ चिन्तायामन्यत्र पठितो ऽत्र स्मृ आध्याने, आध्यानमुत्कण्ठापूर्वकस्मरणम् । स्मरयति । अन्यत्र स्मारयति । अत्र तरङ्गिण्यामपीदमेवार्थतत्त्व स्थितम् । घाटयतीति घट सघातइति चैरादिकस्य, तस्य हि मित्त्व निषिध्यते । 'नान्ये मितो हेता'विति ज्ञपादिपञ्चकव्यतिरिक्ता अहेतौ स्वार्थे णिचि मितो न भवन्तीत्यर्थ. । अत एव स्वार्थे णिचि मित्त्वनिषेधाच्चेष्टाया मित्त्वार्थ तस्यायमनुवादो न भवति ॥ ७५१ ॥

व्यथ भयसंचलनयोः ॥ व्याघ्रात् व्यथते । 'भीत्रार्थानां भयहेतुरि'ति बिभेत्यर्थाना त्रायत्यर्थाना च प्रयोगे भयहेतुः कारकमपादानमिति व्याघ्रस्यापादानत्वात्पञ्चमी । व्यथते । विव्यथे । 'व्यथो लिटी'त्यभ्यासस्य सप्रसारण, 'न सप्रसारणे सप्रसारणमि'ति पूर्वस्य यणो यकारस्य सप्रसारणपरत्वात्संप्रसारण न भवति, संप्रसारणइति च सप्रसारणभाविनीत्यर्थः। यद्वास्मादेव वचनसामर्थ्यात्पूर्वं परस्य सप्रसारण क्रियते पश्चादन्यस्य, अत्र च वेलायामस्ति संप्रसारणपरत्वम् । अथ वा 'व्यथो लिटी'ति सप्रसारणं हलादिशेषापवाद इति परस्यैव प्रसज्यते न पूर्वस्येति न चोद्यावकाशः। व्यथितेत्यादि । विव्यथिष्यते । वाव्यथ्यते । वाव्यथीति । वाव्यत्ति । व्यथयति । अविव्यथत् । घटिवच्चिण्णमुलोरुदाहार्यम् । न व्यथतइत्यव्यथ्यः। 'राजसूये'त्यादिना निपातितः । अव्यथी । 'जिदृक्षी'त्यादिना नञ्पूर्वात्ताच्छीलिक इनिः । व्यथा । षित्त्वादङ् । विथुर. । 'विदिभिदी'त्यत्र व्यथेः संप्रसारण चेति वचनात्कुरचि सप्रसारणम् । विधुरः । 'व्यथः सप्रसारण धः किच्चे'ति वचनादुरचि संप्रसारण यकारस्य धकारः। व्यथ दुःखचलनयोरिति दुर्गः । भयचलनयोरिति प्रकाशः । नवर्गचतुर्थान्तोयं दिवादौ ॥ ७५२ ॥

प्रथ प्रख्याने ॥ प्रथते । पप्रथे । प्रथितेत्यादि । प्रथयति । अपप्रथत् । 'अत् स्मृदॄत्वरप्रथम्रदस्तॄस्पशा'मिति चङ्परे णावभ्यासस्यात्व मित्त्वापवादः । अप्रथि । अप्राथीत्यादि घटिवत् । पृथिवी । 'प्रथेः षिवन्संप्रसारणं चे'ति षिवन् षित्त्वान् ङीष् । पृथिव्या निमित्त सयोग उत्पातो

वा पार्थिव । 'सर्वभूमिपृथिवीभ्यामणञा'विति अण् । पृथिव्या ईश्वरः पृथिव्या विदित इति वा पार्थिवः । 'तस्येश्वरः', 'तत्र विदितइति चे'-त्यण्, 'पृथिव्या ञाञा'विति प्राग्दीव्यतीयेष्वर्थेषु ञाञोः पार्थिवम् । अनयोः स्त्रिया विशेषः । पार्थिवा । पार्थिवी । पृथुः । 'प्रथिम्रदिभ्रस्जां संप्रसारणं सलोपश्चे'ति कुप्रत्ययः सम्प्रसारणं च । सलोपवचनं भृज्जत्यर्थम् । पृथोर्भावः प्रथिमा । 'पृथ्वादिभ्य इमनिज्वे'ति इमनिच् । 'र ऋतो हलादे'रिति ऋकारस्य रशब्दः । इमनिजभावे 'इगन्ताच्च लघुपूर्वा'दित्यणि पार्थवम् । अत्र लघोः पूर्वत्वमिगपेक्षम् । तच्चेह द्वयोरचोरानन्तर्येणावस्थानासम्भवादेकहला व्यवधानमाश्रीयते । 'वोतो गुणवचनादि'ति ङीषि पृथ्वी । गुणमुक्त्वा गुणिनि वर्त्तमानो गुणवचनः । अथ क्रथादावपि । अत्र केचित्पृथेति ऋकारोपधमपि पठन्ति । यदाह वर्द्धमानः । पृथिक्न्दिचन्दिदृत्तादीनां घटादौ पाठः चिण्णमुलोर्वृद्ध्यर्थ इति । अत्र स्वामी प्रथेः संप्रसारणविधानमार्षं मन्यते । पुरुषकारोऽपि यदप्रथयत् तत्पृथिव्याः पृथिवीत्वमिति श्रौतस्य निर्वचनस्यार्षपक्षएवाञ्जस्यमिति । अन्यथा यदपर्थयदित्येव ब्रूयात् । पुनश्चोक्तम् । अथापि पृथेर्घटादिपाठे तत्फलं घटादयः षित इति षित्त्वादङि सति पृथेति रूपं द्रष्टव्यमिति । व्यथादिस्यान्तः, पृथ प्रक्षेपइति चुरादौ ॥ ७५३ ॥

प्रस विस्तारे ॥ प्रसते । पप्रसे । पिप्रसिषति । पाप्रस्यते । पाप्रस्ति । लङि तिपि'तिप्यनस्ते'रिति दत्वे अपाप्रदिति भवति । सिपि 'सिपि धातो रुर्वे'ति दत्वरुत्वयोरपाप्रत् । अपाप्रः । प्रसयति । अपिप्रसत् । अप्रसि । अप्रासीत्यादि । प्रसा ॥ ७५४ ॥

म्रद मर्दने ॥ म्रदते । मम्रदे । म्रदिता । मिम्रदिषते । माम्रद्यते । माम्रदीति । माम्रत्ति । म्रदयति । अमम्रदत् । 'अत् स्मृदृत्वरप्रथम्रदे'त्यादिनाभ्यासस्यात्वं मित्त्वापवादः । मृदुः । 'प्रथिम्रदी'त्यादिना कुप्रत्ययः सम्प्रसारणं च । नैतेन मृद्नातेरभावोऽनुमातव्यः । तत्र प्रसारणस्यान्यार्थं वक्तव्यत्वात्, सत्त्वएव हि मृद्नातिर्मृदेत्यादिनिर्देशोपपत्तिः । मृदोरपत्यं, मार्दवम् । 'शुभ्रादिभ्यश्चे'ति ढक् । 'ढे लोपोऽकद्र्वा' इति

उकारलोपः । मृद्वी । गुणवचनत्वात् ङीष् । मृद्विका । कनि 'केण' इति ह्रस्वः । म्रदिमा । पृथ्वादिभ्य इमनिचि 'र ऋतः' इति रः । तदभावे मार्दवम्, स्वादुमृदुन इव सौवादुमृदवम् । 'द्वारादीनां चे'ति वृद्धिप्रतिषेध ऐजागमश्च । मृद क्षोद इति ऋकारोपधः क्र्यादौ ॥ ७५५ ॥

स्खद स्खदने ॥ स्खदन विद्रावणमिति स्वामी । स्खदते । स्खदिता । स्खदयति । अचिस्खदत् । अस्खदि । अस्खादि । 'स्खदिरवपरिभ्यां चे'ति मित्संज्ञानिषेधस्य वक्ष्यमाणत्वात् अवस्खादयति । परिस्खादयतीत्यत्र मित्त्व न भवति । अपावपरिभ्य इति बोधिन्यासे पठ्यते । तन्मते अपस्खादयतीत्यत्रापि मित्त्व न भवति ॥ ७५६ ॥

क्षजि गतिदानयोः ॥ क्षज इति कौशिकः । क्षञ्जते । चक्षञ्जे । क्षञ्जिता । चिक्षञ्जिषते । चाक्षज्यते । चाक्षङ्क्ति । झलि 'चोः कु'रिति कुत्वे 'खरि चे'ति चर्त्वम् । अनुस्वारपरसवर्णौ । क्षञ्जयति । अचक्षञ्जत् । अक्षञ्जि । अक्षाञ्जि । क्षञ्जक्षञ्जम् । क्षाञ्जक्षाञ्जम् । मित्त्वसामर्थ्यादनुपधात्वेऽपि 'चिण्णमुलो'रिति दीर्घविकल्पो भवतीति मैत्रेयसुधाकरादयः । क्षञ्जेति गुरुमत्त्वादङि सिद्ध्यति । एवमन्येषामपि सयोगान्तानां दक्षादीनां मित्त्वसामर्थ्यात् दीर्घविकल्पः ॥ ७५७ ॥

दक्ष गतिशासनयोः ॥ वृद्धिशैघ्र्ययोरनुदात्तेदय पठितस्तस्येहार्थविशेषे मित्त्वार्थानुवादः । दक्षयति । अददक्षत् । अदाक्षि । अदक्षीत्यादि ॥ ७५८ ॥

क्रप कृपायां गतौ ॥ क्रपते । चक्रपे । क्रपिता । चिक्रपिषते । चाक्रप्यते । चाक्रप्ति । क्रपयति । अचिक्रपत् । अक्रपि । अक्रापीत्यादि । अस्येह पाठो मित्त्वार्थः । न तु षित्त्वार्थः । यतः क्रपेः सप्रसारणं चेति भिदादिपाठात् तत्फलमङ् सिद्ध्यति कृपेति । कृपाणः । 'त्यजियुधिक्रपेः किच्चे'त्यानच् बहुलकादस्मादपि । कृपणः । बाहुलकादेव क्युन् अस्मादपि । क्रपीटः । 'कृक्रपिभ्यां कीटनि'ति कीटन् । अत्र 'क्रपो रो ल'इति लत्वाभावार्थं क्लपिस्थाने क्रपिः पठितव्य इति 'क्रपो रो ल' इत्यत्र भाष्यादौ स्थितम् । कर्पूरः । खर्जपिञ्जादिभ्य ऊरोलचावित्यत्रापि क्रपिग्रहणादूरः ।

क्रपाणादौ बाहुलकात् सम्प्रसारणम् । यद्वा सर्वत्रैवैते क्रपेरेव लत्वाभावो बहुलवचनादिति लत्वसूत्रे उक्तम् ॥ ८५८ ॥

कदि क्रदि क्लदि वैक्लव्ये ॥ अत्र क्षीरस्वाम्येवं पठित्वाह । वैक्लव्यइति चन्द्रः । कद क्रद क्लदेति नन्दी अनिदितमाह । मैत्रेयस्तु कदिक्रदी द्वाविदितौ पठित्वा क्रदक्लदेति द्वावनिदितावाह । तत्रेदितोरन्त्यःसरेफ आद्यो नीरेफः, अनिदितोस्त्वाद्यः सरेफः, अपरो लकारवान् । वर्द्धमानोपि मैत्रेयवल्लकारवन्तमिदित चापठत् । यदाह । प्रथिक्रन्दिक्लन्दिस्यन्दीना घटादौ पाठः चिण्णमुलोर्वृद्ध्यर्थ इति । अत्र कदिक्रदिक्लदीनामाह्वानरोदनयो परस्मैपदिषु गताना पुनरिहापि पाठो न केवलमित्वार्थः किं त्वात्मनेपदिषु पाठसामर्थ्यात्तदर्थमपि । कन्दते । चकन्दे । कन्दिता । चिकन्दिषते । चाकन्द्यते । चाकन्ति । कन्दयति । अचकन्दत् । अकान्दि, अकन्दि । कन्दकन्दम् । कान्दकान्दमित्यादि । दजिवत् । मित्त्वसामर्थ्यादनुपधायामपि दीर्घविकल्पः । एव क्रन्दते । क्लन्दतइत्यादि । अनिदित्पाठे कदयति । अकादीत्यादि । एवं क्रदते । क्लदतइत्यादि । कन्दनं कन्दलः । बाहुलकादलः । कदली । गौरादित्वान्ङीष् ॥ ८६२ ॥

ञित्वरा सम्भ्रमे ॥ त्वरते । तत्वरे । त्वरिता । तित्वरिषते । तात्वर्यते । तातूर्ति । तातूर्त्तः । तातरीषि । तातूर्षि । तातूर्यः । तात्वरीमि । तातूर्मि । ज्वरत्वरे'त्युपधावकारयोः क्वौ झलादावनुनासिकादौ च झलि क्ङिति ऊठ् । लोटि हेरपित्त्वान्ङित्त्वादूठि तातूर्हि । त्वरयति । अतत्वरत् 'अत् स्मृदृत्वरे'त्यभ्यासस्यात्वम् । इत्वापवादः । अत्वरि । अत्वारि । त्वरत्वरम् । त्वारत्वारम् । तूर्णः । त्वरितः । 'रुष्यमत्वरे'ति निष्ठायामिड्विकल्पः । अस्यादित्त्वमात्मनेपदमात्रफलमिति मैत्रेयहरदत्तादयः । अन्ये त्वादित्त्व यङ्लुकीडभावार्थमाहुः । नहि तत्र 'रुष्यमत्वरे'तीड्विकल्पः । एकाच इति तत्रानुवर्त्तनादिति । तेषामयमभिप्रायः । 'आदितश्चे'त्यत्राव्यभिचारादेकाज्ग्रहण न सबध्यते । न चावयवे चरितार्थमादित्त्व यङ्लुगन्तार्थमपि स्यात्, तस्य धात्वन्तरत्वात् । त्वरतेरादित्त्व नावयवे चरितार्थमिति सामर्थ्याद्यङ्लुगन्तार्थमिति । मैवम् । प्रयोजनकल्पनायामय-

लगे सङ्गे ॥ रगति । लगतीत्यादि कखिवत् । लग्नः । 'क्षुब्धस्वान्ते'ति अनिट्त्वं निष्ठायां निपात्यते । अन्यत्र लगितम् । रङ्गतिलङ्गती गत्यर्थेषु गतौ ॥ ७७४ ॥

ह्रगे ह्लगे षगे ष्ठगे संवरणे ॥ क्वचित्कोशे स्थगे इति दन्त्यादिरपि पठ्यते । तत् षोपदेशलक्षणविरुद्धम् । ह्रगति । जह्राग । अह्रगीत् । जिह्रगिषति । जाह्रग्यते । जाह्रक्ति । ह्रगयति । अजिह्रगत् । अह्रागि । अह्रगि । एवं ह्लगतीत्यादि । सगति । ससाग । सेगतुः । सेगुः । आदेशादित्वमनैमित्तिकं न तु लिणिनिमित्तमिति एत्वाभ्यासलोपौ । असगीत् । सिसगिषति । सासग्यते । सासक्ति । सगयति । असीसगत् । असागि । असागि, इति । स्थगति । तस्थाग । स्थगिता । अस्थगीत् । तिस्थगिषति । तास्थग्यते । ता यक्ति । स्थगयति । अतिस्थगत् । अस्थागि । अस्थागीत्यादि ॥ ७७८ ॥

कगे नोच्यते ॥ अत्र मैत्रेयः । अस्यायमर्थ इति नोच्यते । क्रियासामान्यमर्थ इत्यर्थः । इह शास्त्रे कगे नोच्यते इत्येके । स्वामी तु अस्यायमर्थ इति नोच्यते । अनेकार्थत्वात् इति, नोच्यतइति, योर्थस्तत्रार्थे कगे इत्येके । कगेत्युक्तत्वात्क्रियासामान्यमस्यार्थ इत्याहान्ते । कगतीत्यादि । कखादयो ऽष्टावेदितः ॥ ७७९ ॥

अक अग कुटिलायां गतौ ॥ अकति । आक । अकिता । मा भवानकीत् । अचिकिषति । अकयति । मा भवानचकत् । माभवानकि । माभवानाकीत्यादि । अङ्कतइति लक्षणार्थे गतः । अगतीत्यादि । अकिवत् । अङ्गतीति गतौ गतम् ॥ ७८१ ॥

कण रण गतौ ॥ कणतीत्यादि । अकणि । अकाणीत्यादि । एवं रणतीत्यादि । 'काण्यादीनां वे'त्युपधाह्रस्वविकल्पो न शङ्क्यः, ह्रस्वभाविन्या उपधाया एवाभात् । कणतिरणती शब्दार्थौ । गतौ एतयोः काणयति । राणयति ॥ ७८३ ॥

चण शण श्रण दाने च ॥ चणिश्रणोश्चौरादिकयोर्हेतुमण्णिचोभावात् स्वार्थे तु णौ 'नान्ये मितो हेता'विति मित्त्वनिषेधान्न तयोरि-

मावनुवादाविति धात्वन्तरावेतौ । चणति । चचाण । चेणतुः । चणिता । अचणीत् । अचाणीत् । चिचणिषति । चञ्चण्यते । चञ्चणिठ । चञ्चणः । चणयति । अचीचणत् । अचणि । अचाणि । इत्यादि । एवं शणति । अशणीत्यादि । शण गताविन्यत्ये । अन्त्यौ तालव्यादी ॥ ८८६ ॥

श्रथ क्रथ क्लथ हिंसार्थाः ॥ श्रथति । शश्राथ । श्रथिता । शिश्रथिषति । शाश्रथ्यते । शाश्रत्ति । श्रथयति । अशिश्रथत् । अश्रथि । अश्राथि । एव क्रथति । क्लथति । क्रथेस्तु 'जासिनिप्रहणनाटक्राथे'तिनिर्देशान्मित्त्वेपि वृद्धिरिति वृत्तिन्यासकारादयः । तेन क्राथयति चोरस्येति भवति । मित्त्वफल तु अक्रथि अक्राथीत्यादौ 'चिण्णमुलोरि'ति दीर्घविकल्प. । तथा 'जासिनी'त्यत्र हरदत्तः । घटादिपाठस्तु घटादयः षित इत्यातिदेशिको ऽन्यथा स्यात् 'चिण्णमुलो'रिति दीर्घविकल्पश्च यथा स्यादिति । ननु घटादयः षित इति मध्ये सूत्रणात्पूर्वेषामेव षित्त्व न परेषामिति कथं षित्त्वमुक्तम् । सत्यम् । अत एव क्लिष्टापरितुष्यन् स्वयमेव दीर्घविकल्प प्रयोजनमाह । एव च दीर्घविकल्पश्चेति चशब्दो वार्थो व्याख्येयः । अत्र न्यासे क्राथीति विकृतनिर्देशस्य प्रयोजन मित्त्वेपि वृद्धिः । तत्रैव षष्ठीत्युक्त्वा चङन्ते वृद्ध्यभावाच्चोरमचिक्रथदित्युक्तम् । तत्र शेषाधिकारात्पुनः समासनिवृत्तये पुनः शेषे षष्ठीविधानमिति शेषविवक्षाया षष्ठी दुर्वारा, कर्मविवक्षाया द्वितीया स्वतः सिद्धेति नेद प्रयोजनम् । क्रथ हिंसायामिति युजादौ स्वरितेदिति देवः । अयमात्मनेपदीति शाकटायनः । 'जासिनी'त्यत्र क्राथीति निपातनाद्वृद्धिरिति वदता वृत्तिकारादीनां नायं धातुरेवास्ति ॥ ८८९ ॥

चन च ॥ हिंसायामितिशेषः । चनति । चनयति । अचनि । अचानि ॥ ८९० ॥

वनु च नोपलभ्यते ॥ न केवलं कगे यावता वनु चनोच्यतइति स्वामिनोच्यतइति गतौ व्याख्यातम् । उदित्करणसामर्थ्यादयमन्यो धातुः, न तानादिकस्यायमनुवादः, क्रियासामान्ये मित्त्वमात्रार्थे ह्यनुवादादिति तानादिकएवानुवाद्यः, न पुनः शब्दार्थः संभक्त्यार्थो वावगतो वनतिरिति,

कोऽयं नियमः । तेन क्रियासामान्येपि वनतीत्यादि भवति । अस्योदित्त्वा-द्वात्वविकल्पः । वान्तमिति । इदं च मित्त्वं 'ग्लास्नावनुवमां चे'त्यनुपसृष्टानां विकल्पस्य वक्ष्यमाणत्वात्सोपसर्गार्थं, प्रवनयति । प्रावीवनत् । प्रावनि । प्रावानीत्यादि ॥ ७९१ ॥

ज्वल दीप्तौ ॥ ज्वल दीप्ताविति पठिष्यते, तस्य मित्त्वार्थोयमनुवादः । इदमपि मित्त्वं सोपसर्गविषयं, 'ज्वलह्वलह्मलनमामनुपसर्गाद्वे'ति अनुपसृष्टानां विकल्पस्य वक्ष्यमाणत्वात् । प्रज्वलयति । प्राज्वालि । प्राज्वालीत्यादि ॥ ७९२ ॥

ह्वल ह्मल चलने ॥ इमौ च सोपसर्गावेव नित्यं मित्त्वं प्रयोजयतः । ज्वलतिवदनुपसृष्टयोर्विकल्पस्य वक्ष्यमाणत्वात् । ह्वलति । जह्वाल । ह्वलिता । अह्वालीत् । 'अतो लान्तस्ये'ति नित्यं वृद्धिः । जिह्वलिषति । जाह्वल्यते । जाह्वलिति । विह्वलयति । व्यह्वालि । व्यह्वालीत्यादि । एवं ह्मलतीत्यादि । ज्विँह्मलयतीत्यत्र 'यवलपरे यवला वा' इति यवलपरे हकारे परे मकारस्य पक्षे यवलविधानात्सानुनासिको वकार उदाहार्यः । किम् ह्मलयति । किं ह्मलयतीत्यत्र 'हे मपरे वे'ति मकारपरे हकारे परे मकारस्य पक्षे मकारविधानान्मकारोप्युदाहार्यः ॥ ७९४ ॥

स्मृ अध्याने ॥ स्मृ चिन्तायामित्यस्याध्याने मित्त्वार्थोऽनुवादः । आध्यानमुत्कण्ठापूर्वकं स्मरणम् । मातुः स्मरति । मातुः स्मरयति । अस्मरि । अस्मारि । अनाध्याने स्मारयति । 'अधीगर्थे'ति कर्मणि षष्ठी । अधीगर्थाः स्मरणार्था इत्युक्तम् ॥ ७९५ ॥

दॄ भये ॥ अत्र देवधनपालपूर्णचन्द्रा अमुं धात्वन्तरमाहुः । मैत्रेयस्तु 'दॄ विदारणइति क्र्यादि', तस्य मित्वार्थं पाठः । दृणन्तं प्रयुङ्क्ते दरयति । भयादन्यत्र दारयति । धात्वन्तराभ्युपगमे दरतीत्येके इति क्षीरस्वामी । पुनर्दरतीन्युदाहृत्य क्र्यादिकस्यैव मित्त्वार्थमिहानुवाद इत्येकइत्याह । तत्राभरणकारो ऽमुं ह्रस्वान्तधात्वन्तरं पठित्वा 'ऋतस्मृदृत्वरे'त्यत्रापि ह्रस्वान्तं पठन् णौ चङि अददरदित्युदाजहार । तदसत् । तत्र दीर्घान्तपाठस्याविगीतत्वात्, दॄ विदारणइति व्याख्यातृभिरुपादानाच्च । किं च

ह्रस्वान्ताभ्युपगमे 'शॄदॄप्रां ह्रस्वो वे'ति दृणातेर्विकल्पेन ह्रस्वविधानमनर्थकं स्यात्, यतः ह्रस्वान्तादस्मात् लिटि विदद्रतुरिति यणादेशे सिध्यति विददरतुरिति च दृणाते'र्ऋच्छत्यॄताम्'इति गुणे। न च विदारणे रूपद्वयार्थं ह्रस्वविकल्पन स्यादिति वाच्यम्। धातूनामनेकार्थत्वेन अस्यापि विदारणे वृत्तिसंभवात्। तथा च शृणातेः तत्र विशशरतुरिति भविष्यति विशश्रतुरिति श्रा पाकइत्यस्य, न चार्थभेदो, धातूनामनेकार्थत्वादिति ग्रयहण प्रत्याख्याय ह्रस्व.र्थमुक्तम्॥ ७९६॥

नॄ नये॥ नरयति। अनरि। अनारीत्यादि। अन्यत्र नारयति। मैत्रेयस्तु नामिमिच्छति यदाह नॄ नयइत्यप्येके इति॥ ७.७॥

श्रा पाके॥ श्रै पाकइत्यये कृतात्वस्य तस्य श्रा इत्यादादिकस्य च सामान्येनेदमनुकरणं, लुग्विकरणालुग्विकरणयोरिति श्रायतेः, लक्षणप्रतिपदोक्तयोरिति श्रातेः। अत्र सर्वत्र पाको विक्लित्तिरिति कैयटकारादयः। श्रपयति। अश्रपि। अश्रापीत्यादि। विक्लेदयतीत्यर्थः। पाकादन्यत्र श्रापयति, स्वेदयतीत्यर्थः। धातूनामनेकार्थत्वात् स्वेदे वृत्तिः॥ ७९८॥

मारणतोषणनिशामनेषु ज्ञा॥ एषु जानातिर्मित्संज्ञो भवति। परं संज्ञपयति। मारयतीत्यर्थः। विष्णु विज्ञपयति, सतोषयतीत्यर्थः। प्रज्ञपयति रूपं दर्शयतीत्यर्थः। कौमाराणां मतेनात्र सोपसर्गाः प्रदर्शिताः। अन्यत्र ज्ञापयति बोधयतीत्यर्थः। नेह निशामनं ज्ञापनमात्रं किं तु चक्षुःसाधनं ज्ञान, शम लक्ष आलोचनइत्यस्य हीदं रूपम्, आलोचनं चक्षुर्विज्ञाने प्रसिद्धम्। उक्तं चैवं वृत्तिकारादिभिः। 'त्यदादिषु दृशोनालोचने कञ्च परस्यार्थैश्चानालोचने'इत्यादौ मैत्रेयपुरुषकारादिष्वपि निशामनं चक्षुर्विज्ञानमिति स्थितम्। अत एव न्यासे 'श्लाघन्हुङ्स्थे'त्यत्र ज्ञीप्स्यमानइति मारणादिषु पठितस्य घटादेः हेतुमण्णिच् इत्युक्त्वा अथ वेत्यपरितोषात् 'ज्ञप मिच्चेति' चौरादिकस्य स्वार्थे णाविति प्रक्रियान्तरमुक्तं, चौरादिकश्च ज्ञानज्ञापनयोर्वर्ततइति तत्रैव वक्ष्यते, तेन ज्ञापने ज्ञपयति, यद्वज्ज्ञापयेदित्यपि स्यादिति। मैत्रेयोऽपि इहान्यत्र ज्ञपयति ज्ञापयतीति रूपद्वयं भवति। तथा च देवः। जानातीति श्नि सिद्धे ज्ञपयति तु पुनर्मारणादौ घटादौ णौ मित्त्वेपीदमेव

ज्ञपनमिति पदं ज्ञापने मारणादौ । तेनार्थात् ज्ञापनेर्थे ज्ञपयतिपदवत् ज्ञापयेदित्यपि स्यादिति, तथा मैत्रेयोपि इहान्यत्र ज्ञापयति स्वामिनमित्युदाहृत्य चुरादौ 'ज्ञपमिच्चे'त्यत्र ज्ञपयतीति मितमुदाहृत्य ज्ञापने मारणादिषु चाभिधानमप्येत्याह । अत्र चन्द्रः । 'मारणतोषणनिशानेष्वि'ति वर्द्धमानश्चैव पठित्वा निशानं तीक्ष्णीकरणमिति चाभिधाय निशामनइति केचित् निशामनं दर्शनमिति । स्वामिशाकटायनौ वर्द्धमानवदेव, तत्र प्रज्ञपयति शरमित्युदाहरण, तीक्ष्णीकरोतीत्यर्थः । अत्र मित्त्वं बोधिन्यासकारो न सहते । यदाह प्राचीनास्तु निशानं नेच्छन्तीति । एवं काश्यपसम्मताकारादयोपि, इति मैत्रेयाद्यङ्गीकृतो निशामनपाठ एव ज्यायान् । यत्तूक्तं 'श्लाघन्हुङ्'इत्यत्र ज्ञीप्स्यमानो ज्ञपयितुमिष्यमाणो बोधयितुमभिप्रेत इति वृत्तिग्रन्थमुपादाय हरदत्तेन निशामनं ज्ञानमात्रं न चक्षुर्विज्ञानमेव, यदाह बोधयितुमभिप्रेत इति, कथं तर्हि प्रयुज्यते तज्ज्ञापयत्याचार्यः । विज्ञापना भर्तृषु सिद्धिमेतीति । तस्मान्निशानेष्विति पाठः, शो तनूकरणे, ल्युट् ज्ञीप्स्यमानो ज्ञपयितुमिष्यमाण इति प्रयोगः 'ज्ञप मिच्चे'ति चुरादिणिजन्तस्येति नात्र ज्ञापयति प्रयोग उपोद्बलं निशानमिति पाठाङ्गीकारस्येति, यदस्माभिस्तत्सिद्धिरन्ययैवादौ साधिता । अपरे तु प्रतिपन्ना निशामनं ज्ञापनमात्रं ज्ञापयति प्रयोगो ज्ञा नियोगइति चौरादिकस्य धातूनामनेकार्थत्वात् इति, अनेकार्थताङ्गीकारे ज्ञानइव मारणतोषणयोरपि ज्ञापयतीति स्यात् ॥ ७९९ ॥

कम्पने चलिः ॥ चल कम्पनइति ज्वलादौ तस्य मित्त्वार्थ एवानुवादः । चलयति शाखाम् । कम्पयतीत्यर्थः । अन्यत्र शीलं चालयति, अन्यथा करोतीत्यर्थः । हरतीत्यर्थ इति स्वामी । सूत्रं चालयति, क्षिपतीत्यर्थ इति सुधाकरः ॥ ८०० ॥

छदिरूर्जने ॥ ऊर्जनं प्राणनं बलनं वा, ऊर्ज बलप्राणनयोरिति हि धातुः । छदि अपवारणे इति यौजादिकस्य स्वार्थे णिजभावे मित्त्वार्थोयमनुवादः । धातूनामनेकार्थत्वात् ऊर्जने वृत्तिः । छदन्तं प्रयुङ्क्ते छदयति । बलवन्तं प्राणवन्तं करोतीत्यर्थः । अन्यत्र छादयति, अपवा-

रयन्तं प्रयुङ्क्तइत्यर्थः । यदा च छादयतीति स्वार्थे णयन्तस्तदा बलीभवति प्राणीभवति, अपवारयतीत्यर्थः । अत्र बलप्राणनयोरपि 'नान्ये मितोऽहेतौ'-विन्यमित्त्वम् । अत्र स्वाम्यादयः छदि संवरणइति चौरादिक छदेत्यनिदित पठन्तः, तस्यायमूर्जने मित्त्वार्थो ऽनुवाद इत्याहुः । तदयुक्तम् । तस्यानिदित्पाठेऽपि नित्यणयन्तत्वात् कर्तरि णिचोभावात् स्वार्थेऽपि णौ 'नान्ये मित' इति मित्त्वं निषिद्धमेव । अत्र दैवः । छदि धात्वन्तर मन्यते । यदाह यो वा णावपवारणे छदतइत्येक द्वितीय वदन् अन्य द्वा ऽयति छदयति पुनः स्यादूर्जनेर्थे मित इत्यादि, चौरादिकस्यैव स्मरत्यादिवत् अनेकार्थत्वाऽङ्गीकरणात् ऊर्जनेऽपि छदतीति सिद्धे धात्वन्तराऽङ्गीकरणं परस्मैपदमेव यथा स्यादिति तन्मतम् । अनुवादे हि तस्य स्वरितेत्त्वात् छदतइत्यपि स्यात् । यद्यप्येतत्फलं भवति अथाप्यन्यत्र पठितानामिह पाठो मित्त्वमात्रफल इति घटतौ व्यवस्थापितत्वात् पृथक् धातुत्वं न सुलभम् । किं चेह धातुनिर्देशार्थमिकारनिर्देशादवश्यमनुवादत्वमेष्टव्यम्, यत्फलमुक्तं नित्यं परस्मैपदमेव यथा स्यादिति तच्छाकटायनमतेनैव प्रयोजनं, यतः चौरादिकः परस्मैपद्येव ॥ ८०१ ॥

जिह्वोन्मथने लडिः ॥ लड विलासइति पठितस्य मित्त्वार्थोयमनुवादः । उन्मथनं ज्ञापनम् । अत्र मैत्रेयस्य जिह्वाया उन्मथने इति मतम् । यदाह लडयति जिह्वामिति । अयमेव पक्षो गुप्तस्यापि । पुरुषकारे तु जिह्वया उन्मथने लडयति जिह्वयेत्युक्तं भवति । अपरे तु जिह्वा चोन्मथनमिति समाहारद्वन्द्वं व्याचक्षते, जिह्वाशब्देन तद्विषयो व्यापार उच्यते । अत्र चोन्मथने चेति लडयति शत्रुं, लडयति दधि चेति भवति । धनपालस्त्वेवं पठित्वा आर्याणां जिह्वोन्मथनयोरिति पाठ इति । स्वामी तु जिह्वोन्मथनयोर्लडीति, मन्थनमेव मथनम्, अन्यत्र लाडयति पुत्रम् । चल्यादीनां त्रयाणामिकारो धातुनिर्देशार्थः ॥ ८०२ ॥

मदी हर्षग्लेपनयोः ॥ दैवादिकस्य मित्त्वार्थोयमनुवादः । मदयति । हर्षयति ग्लेपयति चेत्यर्थः । ग्लेपनं दैन्यमन्यत्र मादयति चित्तविकारमुत्पादयतीत्यर्थः । निमादयत्यक्षरव्यञ्जनानि स्पष्टमुच्चारयतीत्यर्थः ।

तथा च प्रातिशाख्यम् । उपलब्धिर्विमाद इति, अक्षरव्यञ्जनानामिति शेषः ॥ ८०४ ॥

ध्वन शब्दे ॥ भाव्ययं मित्त्वार्थमनूद्यते । ध्वनयति घण्टाम् । अन्यत्र ध्वानयति । अस्पष्टाक्षरमुच्चारयतीत्यर्थः । तथा च प्रातिशाख्यमक्षरव्यञ्जनानामुपलब्धिर्ध्वनिरिति । अत्र भोजः । दलिवलिस्खलिरणिध्वनिस्वनित्रपिक्षपयश्चेति पपाठ । तत्र ध्वनिर्वर्तमानानुसारेण पठितः, उदाहृतश्च । तथा रणिरपि । दल विदारणे । वल संवरणे, स्खल सञ्चलने, त्रपूष् लज्जाया,मिति गताः । तेषां णौ दलयति, वलयति, स्खलयति, त्रपयतीति । क्षपयति । क्षै क्षयइति वक्ष्यमाणस्य कृतात्वस्य पुकि निर्देशः । तथा च सुधाकरः । क्षै क्षये णिचि पुकि मित्त्वे क्षपयतीति । स्वन अवतंसने । स्वनयति, अन्यत्र स्वानयति । अथ शब्दार्थः पठिष्यते । अत्र मैत्रेयः । ध्वन शब्दे । स्वन अवतंसनइत्येकइति ॥ ८०५ ॥

घटादयो मितः" ॥ मित्सञ्ज्ञका इत्यर्थः ॥

"जनीजृष्क्नसुरञ्जोऽमन्ताश्च" ॥ चशब्दान्मित इत्यपकृष्यते । जनी प्रादुर्भावे, जॄष् वयोहानौ । क्नसु ह्वरणदीप्त्योः । दिवादयः, रञ्ज रागे । भ्वादिश्च । अम् शब्दो ऽन्ते येषां ते अमन्ताः, यथासंभवं सर्वेषु विकरणेषु ते च मितः । जनयति । जरयति । जॄ इति षिद्विर्देशात् जॄणातेरमित्त्वात् जारयतीति । बोधिन्यासादौ मैत्रेयो जॄणातेः स्थाने झॄ इत्येकइति चतुर्थ्यादिं च वक्ष्यति । क्नसयति । रजयति मृगान्, रमयतीत्यर्थः । 'रञ्जेर्णौ मृगरमणउपसङ्ख्यान'मिति नलोपः । मृगादन्यत्र नलोपो न भवति रञ्जयति पक्षिणः । तथा रमणादन्यत्र न लोपः । रञ्जयति मृगान् तृणादिदानेन । नलोपाभावे मित्त्वफलमरञ्जि, अराञ्जीत्यादौ 'चिण्णमुलो'रिति दीर्घः । अमन्ताः खल्वपि क्रमयति, गमयतीत्यादि । अत्र केचित् । 'जनीजृष्णस्वि'ति अक्कारं सूत्रं पठन्तः षकारमुत्तरधातोरादिं व्याचक्षाणाः दैवादिकस्य निरसनार्थस्य स्नस्यतेः स्नमयतीति मित्त्वमाहुः । तथा च दिवादावात्रेयमैत्रेयौ ष्णसु निरसनइत्येके मिदिति ॥

"ज्वलह्वलह्मलनमामनुपसर्गाद्वा" ॥ ज्वलादीनां वा मित्त्वं भवति उपसर्गात् परेषां नायं विकल्प इत्यर्थः । क्व चित्तु पठ्यते । ज्वलह्वलनमो ऽनुपसर्गाद् वेति । तत्र न क्लेशो मित इति सबन्धः । ज्वलादीनां पूर्वपाठात् प्राप्तिः, नमेस्त्वमन्तत्वात् । ज्वलयति ज्वालयति । ह्वलयति, ह्वालयति । ह्मलयति, ह्मालयति । नमयति, नामयतीति । उपसृष्टे तु नित्ये मित्त्वे प्रज्वलयतीत्यादि । उन्नामयतीति प्रयोगो घञन्तात् 'तत्करोती'ति णौ । एवमन्येषामपीदृशां निर्वाहः । 'मितां ह्रस्व'इति वृत्तौ 'वा चित्तविराग'इत्यतो वेत्यनुवृत्तेर्व्यवस्थितविभाषाविज्ञानाच्च संक्रामयतीत्यादिसिद्धिरिति । यत्तु सुधाकरोक्तं घञन्तादुत्क्रामशब्दात् 'तत्करोती'ति णिचि उत्क्रामयतीति, तदयुक्तं, 'नोदात्तोपदेशस्ये'ति वृद्धिनिषेधात् उत्क्रामशब्दस्यैवाभावात् ॥

"ग्लास्नावनुवमां च" ॥ अनुपसर्गाद्वेति वर्त्तते । पूर्ववत् व्याख्यानमत्रापि । अत्रापि पूर्ववत् क्व चित् ग्लास्नावनुवमश्चेति प्रथमान्तं पठ्यते । ग्लै हर्षक्षये । अत्र स्नेति ष्णै शौचवेष्ठनयोरिति वक्ष्यमाणस्य ष्णा शौचइत्यादादिकस्य च, आ पाकइत्यत्रोक्तन्यायेन। वनु च नोच्यतइति इह पठितो वनतिः अनन्तरस्य विधिरिति न्यायादनूद्यते न तु तानादिको वनोतिः । टुवम उद्गिरणे । अमन्तः । तदयं वन्वमोः प्राप्ते ग्लास्नोरप्राप्ते इत्युभयत्र विभाषेयम् । ग्लपयति । ग्लापयति । स्नपयति । स्नापयति । वनयति । वानयति । वमयति । वामयति । ग्लास्नोरुपसृष्टयोर्मित्त्वाभावात् प्रग्लापयति, प्रस्नापयतीत्येव । वनुवमोस्तु नियमितत्वात् प्रवनयति । प्रवमयतीत्येव ॥

"न कम्यमिचमाम्" ॥ कमु कान्तौ, अम गत्यादौ, चमु अदने, एषाममन्तत्वात् मित्त्वे प्राप्ते निषिध्यते । कामयते । आमयति । आचामयति ॥

"शमो दर्शने" ॥ शम उपशमने दिवादिः । अयं च दर्शने न मिद-मन्तोपि, निशामयति रूपम् । अत्युत्कृष्टमिदं तीर्थं भारद्वाज निशामयेति, शम लक्षआलोचनइति चौरादिकः । अस्मात् कारिते णावर्थ,

यमानो लोपः 'प्रकृत्याके राजन्यमनुष्ययुवान' इति प्रकृतिभावान्न भवति । यद्वायं यकारो राज्ञोपत्ये जातिग्रहणमित्युक्तत्वान्नापत्ये, राज्ञ इदं राजकीयम् । 'राज्ञः क चे'ति छप्रत्ययः शैषिकः । कश्चान्तादेशः । राज्ञः कर्म भावो वा राज्यम् । पत्यन्तपुरोहितादिषु 'राजास'इति पाठादसमासेयम् । यकारस्य भावकर्मविषयत्वात् प्रकृतिभावाभावात् 'नस्तद्धित'इति टिलोपः । समासे तु ष्यञ् । आधिराज्यम् । ब्राह्मणादिषु राजन्शब्दः पठ्यते, स हि तदन्तात् ष्यञर्थः । केवलस्य यको विधानात्, 'राजास'इत्येतद्वचनं ज्ञापकमत्र तदन्तत्वम् । अत्रैके ब्राह्मणादेराकृतिगणत्वात् राजन्शब्दान्तात् ष्यञि सिद्धे तत्र राजन्शब्दस्य पाठसामर्थ्यात् केवलात् ष्यञपि भवतीत्याहुः । तथा च शाबरभाष्यमते व्यधिकरणे राज्य, तस्य कर्मणि ष्यञिति । अधिको राजा अधिराजः, 'कुगतिप्रादय इति समासः । 'राजाहःसखिभ्यष्टजि'ति राजाद्यन्तात् तत्पुरुषाट्टचि टिलोपः । अत्र लघ्वक्षरं पूर्वं निपततीति 'द्वन्द्वे घी'ति च लघ्वक्षरत्वात् घ्यन्तत्वात् सखिशब्दस्य पूर्वनिपाते कर्तव्ये राजन्शब्दं पूर्वं निपात्य सवर्णदीर्घेण निर्देशात् यस्य राजन्शब्दस्य सवर्णदीर्घप्रसङ्गस्तस्यैव टजिति ज्ञापनाल्लिङ्गविशिष्टपरिभाषया अधिराज्ञीत्यादौ टज्न भवति । अयं समासान्त उत्तरपदादकृतएव समासे भवतीत्युक्तं, तेन पञ्चराजीत्यादौ अकारान्तोत्तरपदसमाहारद्विगुत्वेन स्त्रिया ङीप् भवति । शोभनो राजा, सुराजा । अतिराजेत्यत्र 'न पूजना'दिति समासान्तनिषेधः । तत्र 'स्वती पूजाया'मिति परिगणित, प्रतिराजेत्यत्र तु 'प्रतेरश्वादयस्तत्पुरुषे' इति प्रतेः परेषामश्वादीनामाद्युदात्तविधौ प्रतिराजेति पाठात् समासान्ताभावः । किंराजा अराजेत्यत्र 'किमः क्षेपे' 'नञस्तत्पुरुषा'दिति समासान्ताभावः । महाराजो देवता अस्य, माहाराजिकः । 'महाराजप्रोष्ठपदाट्ठञि'ति प्रथमान्ताद्देवतोपाधिकात् अस्येत्यर्थे ठञ् । महाराजो भक्तिर्भजनीयो यस्य माहाराजिकः । 'महाराजाट्ठञिति' प्रथमान्तात् भक्त्युपाधिकात् अस्येत्यर्थे ठञ् । शोभनो राजा यस्यास्ति स राजन्वान् । 'राजन्वान् सौराज्य'इति मतुपि नलोपाभावो निपात्यते ॥ ८०७ ॥

टुभ्राजृ टुभ्राश्ट टुभ्लाश्ट दीप्तौ ॥ उदात्ता अनुदात्तेतः। अत्र स्वामी आद्यावधिकृत्य टुरुभयसङ्गीत्येके इत्याह। त्रयोपि ट्वित इति मैत्रेय। वृत्तिकारोप्यत्रैवानुकूलः। यदाह 'वा भ्राशे'त्यत्र टुभ्राश्ट टुभ्लाश्ट इति। तथा 'फणां च सप्ताना'मित्यत्र न्यासपदमञ्जर्योः त्रयोपि ट्वितः पठ्यन्ते। तस्मादयमेव पाठो बहूनां संमतः। भ्राजतेः पठितस्यापीह पाठः फणादित्वेन किति लिट्येत्वाभ्यासलोपविकल्पार्थः। ट्वित्त्वं तु न फलं भवति तत्रापि टुशब्दस्यासङ्कुशक्यत्वात्। अनेनैव सिद्धे तस्य पाठो व्रश्चादिषत्वनिवृत्त्यर्थ इति तत्रैवोक्त, भ्राजते। बभ्राजे। भ्रेजे। भ्राजितेत्यादि। बाभ्राष्टि। अबाभ्राट् इत्यादौ व्रश्चादिषत्वम्। भ्राजथुः। 'ट्वितोऽथुच्'। न भ्राजतइति नभ्राट्। 'नभ्राण्नपादि'ति नञः प्रकृतिभावः। चङ्परे णौ'भ्राजे'त्यादिना उपधाह्रस्वविकल्पनात् अबिभ्रजत्। अबभ्राजत्। अस्यापि ऋदित्त्वं पूर्ववत् अनुदात्तेत्त्वमात्रफलम्। भ्राष्ट्रम्। ष्ट्रन्। भ्राष्ट्रमिन्धइति भ्राष्ट्रमिन्धः। कर्मण्यण्। 'भ्राष्ट्राग्न्योरिन्धे' इति मुम्। भ्राशते। बभ्राशे। भ्रेशे। भ्राशिता। भ्राशिष्यते। भ्राशताम्। अभ्राशत। भ्राशेत। आशिषि भ्राशिषीष्ट। अभ्राशिष्ट। सार्वधातुके 'वा भ्राशे'त्यादिना पक्षे शपोपवादे श्यनि भ्राश्यते। भ्राश्यताम्। अभ्राश्यत। भ्राश्येतेति भवति। बिभ्राशिषते। बाभ्राष्टि। भ्राशयति। अबभ्राशत्। ऋदित्त्वाच्चोपधाह्रस्वः। भ्लाशते। सर्वं भ्राशतिवत्। भ्राशथुः। भ्लाशथुः। ट्वित्त्वात् थुच् ॥ ८१० ॥

स्यमु स्वन ध्वन शब्दे ॥ स्यमादयः ज्वलन्ता उदात्ता उदात्तेतः। स्यमति। सस्याम। सस्यमतुः। स्येमतुः। सस्यमिथ। स्येमिथ। स्येमुः। इत्यादि। अस्यमीदित्यत्र 'अतो हलादे'रिति वृद्धिः 'ह्म्यन्ते'ति निषिध्यते। सिस्यमिषति। सेसिम्यते। 'स्वपिस्यमिव्येञां यङी'ति सम्प्रसारणे विद्वचने अभ्यासस्य गुणः। संस्यमीति। सस्यन्ति। यङो लुका लुप्तत्वात् तत्परत्वाभावाच्च सम्प्रसारणम्, 'नुगतोनुनासिकान्तस्ये'ति अभ्यासस्य नुक्। सस्यान्त इत्यादौ अनुनासिकस्य क्विझलोरि'ति दीर्घः। संस्यन्मि। 'मो नो धातोः' 'म्वोश्चे'ति नत्वम्। सस्याहीत्यत्र पूर्वमनुनासिकस्य दीर्घे

परत्वा'न्नश्चापदान्तस्य झली'त्यनुस्वारः । असंस्यन्नित्यत्र पदान्तत्वात् 'मो नो धातो'रिति नः । स्यमयति । असिस्यमत् । अमन्तत्वान्मित्त्वम् । स्यमित्वा । स्यान्त्वा । उदित्त्वादिड्विकल्पः । अनिट्पक्षे 'अनुनासिकस्ये'ति दीर्घः । स्यान्तम् । 'यस्य विभाषे'त्यनिट्त्वम् । स्यमन्तको मणिः । बाहुलकादन्तचि सञ्ज्ञाया कन् । अथ चुरादौ वितर्कार्थः । स्वनति । सस्वान । सस्वनतुः । स्वेनतुः । स्वनिनेत्यादि । अस्वनीत् । अस्वानीत् । 'अतो हलादे'रिति वा वृद्धिः । सिस्वनिषति । सस्वन्यते । सस्वन्ति । सस्वान्तः । स्वनयन्ति । असिस्वनत् । शब्दे घटादित्वान्मित्त्वम् । विष्वणति । अवष्वणति । 'वेश्च स्वने'ति षत्वम् । चकारेणावादित्यनुकृष्यते । विष्वणन सशब्दभोजनम् । तथा च वृत्तौ अभ्यवहारक्रियाविशेषोऽभिधीयते । यत्र स्वननमस्तीति सशब्द भुङ्क्ते इत्यर्थः । पिनाकी तु भुञ्जानः किञ्चिच्छब्द करोतीति । काश्यपस्तु भोजनमेवार्थमाह । बोधिन्यासेऽपि पक्षत्रयमपि दर्शितम् । विषष्वाण । विषिष्वणिषतीत्यादौ 'स्थादिष्वभ्यासेने'त्युभयत्र षत्वम् । तत्वाषोपदेशार्थमवर्णाभ्यासार्थं षणि प्रतिषेधार्थं चेत्युक्तम् । व्यष्वणत् । 'प्राक्सितादि'ति षत्वम् । अवषंष्वण्यतइत्यादौ 'नुम्विसर्जनीये'ति 'वेश्च स्वन इति षत्वम् । उक्तं च अयोगवाहानामट्सु णत्वं शर्षु भष्भावषत्वे इति । अयोगवाहाश्चानुस्वारविसर्जनीयोपध्मानीयजिह्वामूलीययमा उक्ताः । षत्वे कृते 'रषाभ्या'मिति णत्वे विष्वणनीत्यत्र णत्व, पूर्वत्रासिद्धत्वात् 'नश्चापदान्तस्य झली'त्यनुस्वारे परसवर्णो नकारः । तस्य पुनर्णत्व न भवति । असिद्धत्वादेव । स्वनः स्वानः । 'स्वनहसोर्वे'ति वा अप् । तदभावे घञ् । उपसृष्टात्तु प्रस्वान इत्येव । निस्वानः, निस्वनः । 'नौ गदनदे'त्यादिना घञपौ । स्वान्तम् । 'क्षुब्धस्वान्ते'त्यादिना निष्ठायामनिट्त्वं निपात्यते मनोऽभिधानं चेत्, अन्यत्र स्वनितो मृदङ्गः । आङ्पूर्वादस्मा'द्रुष्यमत्वरसंघुषे'ति निष्ठायामिड्विकल्पः । इय चोभयत्र विभाषेति मनसोऽन्यत्र च आस्वानितम्, आस्वनितमिति । फलादयो गताः । ध्वनति । दध्वान । ध्वनितेत्यादि स्वनिवत् । ध्वान्तम् । 'क्षुब्धस्वान्ते'ति तस्यानिट्त्वम् । अन्यत्र

ध्वनितम् । ध्वनि. । अय कथादिश्च । अत्र स्वनिध्वन्योर्मध्ये ष्टनेति क्वचित् पठ्यते । ष्टन वन शब्दइति पूर्वमेव गतत्वादयमनार्षः. केचित्पौनरुक्त्यपरिहारादन्त्यादि पठन्ति सोप्यनार्षः । षोपदेशलक्षणविरोधात् । अत एव 'फणां चे'त्यत्र सप्तानामिति किमित्युक्त्वा ध्वनिः प्रत्युदाह्रियते, तथा च न्यासे फणादीन् ध्वन्यन्तानष्टौ पठित्वा ध्वनिर्वर्जिताः शेषाः फणादयः सप्तेत्युक्तम् । पदमञ्जर्यां चैवमष्ट पठित्वा ऽन्त्यवर्जं फणादय इत्युक्तम् ॥ ८१३ ॥

षम ष्टम वैक्लव्ये ॥ समति । ससाम । सेमतुः । सेमिथ । समिता । सिसमिषति । ससम्यते । ससमीति । ससन्ति । ससान्तः । समयति । असीषमत् । स्तमति । तस्ताम । तस्तमतुः । स्तमिता । तिस्तमिषति । तंस्तम्यते । तस्तन्ति । स्तमयति । अतिष्टमत् । अत्र स्वाम्यादयः केचिदेतदन्ता घटादय इति । बोधिन्यासे तु ध्वन्यन्ता इति । तत्र फणतौ मित्त्वे न विवादः । राजादीनां त्वनन्तराणां चतुर्णां णौ चङ्युपधाह्रस्वनिषेधार्थादुदित्करणाल्लिङ्गाच्च मित्त्वं भविष्यति । स्यमेरमन्तत्वात्स्वनिध्वन्योश्च पूर्वत्र पाठान्मित्त्वं, सिद्धं सर्वैरपि शब्दार्थत्वएव मित्त्वं यथा स्यादिति पूर्वत्र पाठोङ्गीकृतः । षमिष्टम्योरप्यमन्तत्वादेव मित्त्वं सिद्धमिति आहोपुरुषिकामात्रमेवैतत्, ध्वन्यन्ता घटादय इति मतद्वयम् । यत्तु तैरुक्तं षमिष्टम्योरमन्तयोः पुनः पाठेनामन्तलक्षणस्य मित्त्वस्यानित्यत्वज्ञापकादुत्क्रामयतीत्यादिसिद्धिरिति, तदस्माभिरमन्ताच्चेति मित्त्वविधौ प्रकारान्तरेणोपपादितम् ॥ ८१५ ॥

ज्वल दीप्तौ ॥ ज्वलति । जज्वाल । जज्वलतुः । ज्वलिता । अज्वालीत् । 'अतो ल्रान्तस्ये'ति वृद्धिः । जिज्वलिषति । जाज्वल्यते । जाज्वलीति । ज्वालयति । ज्वलयति । प्रज्वलयति । घटादिपाठाच्चित्य मित्त्व सोपसर्गत्वे, अन्यदा तु ज्वलह्वलेति विकल्पेन, घटादिपाठादेव ज्वलयतीति सिद्धाविहास्य पाठो 'ज्वलीति कसन्तेभ्यो णः' इति पाक्षिके णप्रत्यये ज्वाल इति यथा स्यादिति । ज्वलीतीतिशब्द आद्यर्थे । णाभावे पचाद्यचि ज्वलः ज्वलनः, 'जुचङ्क्रम्ये'ति तच्छीलादौ युच् कर्तरि ॥ ८१६ ॥

चल कम्पने ॥ चलति । चचाल । चेलतुः । चेलुः । चलितेत्यादि पूर्ववत् । कम्पने घटादिपाठात् चलयति । अन्यत्र चालयति । चलः । चालः । जवलतीति णविकल्पः । चलाचलः । चलइत्यर्थः । 'चरिचलिपतिवदीना द्विर्वचनमच्याक्चाभ्यासस्येति द्विर्वचनम् अभ्यासस्यागागमश्च । चाचलिः । सहिवहिचलिपतिभ्यो यङन्तेभ्यः किकिनाविति तयोरन्यतरः । 'अतो लोपः' 'यस्य हल'इति अल्लोपयलोपौ । चलनः । 'चलनशब्दार्थादकर्मक'द्युच् इति युच् । चल विसलनइति तुदादौ, चल गताविति चुरादौ ॥ ८१७ ॥

जल घातने ॥ घातन तैक्ष्ण्यमिति स्वामी । जलतीत्यादि पूर्ववत् । जलः । जालः । लडयोरेकत्वस्मरणात् जडः ।
गोधाशब्दाद्रकापि गौधार इति सिद्धे 'आरगुदीचामि'त्यारग्वचनं जाडारः पाण्डार इति सिद्ध्यर्थमिति तत्र स्थितम् । जाड्यम् । जडिमा । 'वर्णदृढादिभ्यः ष्यञ्चे'ति ष्यञ् । दृढादित्वात् भावकर्मणोः ष्यञिमनिचौ । जल अपवारणइति चुरादौ ॥ ८१८ ॥

टल ट्वल वैक्लव्ये ॥ टलतीत्यादि चलतिवत् । ट्वलति । टट्वाल । टट्वलतुः । ट्वलितेत्यादि । अट्वालीत् । ट्वालः, ट्वलः ॥ ८२० ॥

स्थल स्थाने ॥ स्थान प्रतिष्ठा । स्थलति । तस्थाल । स्थलिता । अस्थालीदित्यादि । तिस्थलिषति । 'स्तौतिण्योरेवे'ति न षत्वम् । तास्थल्यते । तास्थल्ति । स्थालयति । अतिष्ठलत् । स्थलः । स्थालः । स्थलम् । स्थली । 'जानपदे'त्यत्राकृत्रिमाया भूमौ ङीष् । अन्यथा स्थला । स्थाली । गौरादित्वात् ङीष् । विष्ठलम् । 'विकुशमिपरिभ्यः स्थल'मिति मूर्द्धन्यः । एवं कादिभ्यः । कपिष्ठलम् । 'कपिष्ठलो गोत्र'इति मूर्द्धन्यो निपात्यते । अन्यत्र कपीनां स्थल, कपिस्थलम् ॥ ८२१ ॥

हल विलेखने ॥ विलेखनं कर्षणम् । हलति । जहाल । हलिता । अहालीदित्यादि । हलः । हालः । हलि । इन् । हलिं गृह्णाति हलयति । अजहलत् । 'मुण्डमिश्रे'त्यादिना गृह्णातीत्यर्थे णिचि हलिकल्यो-

रदन्तत्वनिपातनं सन्वद्भावप्रतिषेधार्थमितीकारस्यात्वे वृद्धौ कृतायामकृतायां वा लोपे ऽग्लोपित्वद्गमित्यभ्यासस्य सन्वदित्त्वं न भवति । हलानां समूहो हल्या । 'पाशादिभ्यो य'इति पाशादिपाठात् समूहे यः । हलस्येदं हालिकम्, 'हलसीराट्ठगि'ति षष्ठ्यन्तात् इदमर्थे ठक् । हलं वहति हालिकः । बलीवर्दः । 'हलसीराट्ठगि'ति द्वितीयान्ताद्वहतीत्यर्थे ठक् । हलस्य कर्षः हल्यः, कर्षः कर्षणं कृष्यमाणं वा, 'मतजनहलात्करणजल्पकर्षेष्वि'ति षष्ठ्यन्तात् कर्षार्थे यत् । द्विहल्या भूः । रथसीताहलेभ्यो यद्विधाविति तदन्तविधिः । न विद्यते हलिर्यस्य असौ अहलः । 'नञ्दुःसुभ्यो हलिसक्थ्योरन्यतरस्या'मिति पक्षे समासान्तः । एवं दुःसुपूर्वादपि । अत्र हलिहलशब्दाभ्यां बहुव्रीहिणा रूपद्वये सिद्धे पक्षे समासान्तविधानं 'शेषाद्विभाषे'ति हल्यन्तात् कप्मा भूदिति । यस्माद्बहुव्रीहेः समासान्तो नोक्तः स शेषः । न चात्र हलिग्रहणमर्थभेदनिबन्धनं मन्तव्यं, महत् हलं हलिः, हलमात्रं त्वन्यदिति नायमर्थभेदः किंचित्करः, यस्मादकारान्तेनापि समासो न दण्डवारित इति प्रकरणादिवशेनैवार्थविशेषावगतिः ॥ ८२२ ॥

णल गन्धे ॥ बन्धनइति काश्यपः । प्रणलतीत्यादि । नालः, नलः । नाली । प्रणाली । गौरादिः । डलयोरेकत्वस्मरणात् नडः । अव्युत्पन्नं प्रातिपदिकमिति हरदत्तः । नडानां समूहो नड्या । 'पाशादिभ्यो य'इति यः । नडा अस्मिन्देशे सन्तीति नड्वलः । नड्वान् । 'कुमुदनडवेतसेभ्यो ड्मतुप्' । 'नडशादाड्ड्वलजि'ति चातुरर्थिको ड्मतुप् ड्वलच्च । नली । नन्ददत्तिभ्यामिनन्निति इनन् बाहुलकादस्मादपि । नलिनी । गौरादिषु दर्शनात् 'जातेरस्त्रीविषयादि'ति वा ङीष् । यद्वा नलशब्दात् 'पुष्करादिभ्यो देशे'इति मत्वर्थीयइनौ ङीपि द्रष्टव्यः । नलं गन्धं ददातीति नलदं त्वामज्जकम् ॥ ८२३ ॥

पल गतौ ॥ पलतीत्यादि । पलमुन्मानविशेषः । पललं मांसम् । कलत्रपश्चेत्यत्र प्राक् प्रत्ययनिर्देशादन्येभ्यो भवतीति कुण्डलादिवदस्मादपि कलप्रत्ययः । पलालं, स्यालयनीन्यालच् बाहुलकादस्मादपि । महत् पलालं पलाली । पिप्पल्यादित्वान् ङीष् । पलाली यस्यास्तीति पला-

लिनः । शार्ङ्गीपन्नान्नीदद्रूणां ह्रस्वत्वं चेति पामादिपाठान्नप्रत्ययो ह्रस्वत्वं च । पाल रक्षणइति चुरादौ ॥ ८२४ ॥

बल प्राणने धान्यावरोधे च ॥ प्राणनं जीवनं, धान्यमवरुध्यते यत्र कुसूलादौ तद्धातूनामनेकार्थत्वाद्धान्यावरोधनव्यापार इत्यर्थः । बलती-त्यादि । बाल । बलम् । करणस्य कर्तृत्वोपचाराद्वा । बाला । अजादिपा-ठात् 'वयसि प्रथम' इति ङीपं बाधित्वा टाप् । बलवान् । बलूलः । वातदन्त बलललाटानामूङ् चेति सिध्मादिपाठाल्लच्प्रत्यय ऊङ् चागमः । बलः । पुरु-षः । 'अर्श आदिभ्योऽजि'ति मत्वर्थे ऽच् । बाहुबली । उरुबली । 'बलाद्बाहूरुपू-र्वपदादि'ति पुष्करादिपाठादिनिर्मत्वर्थे । सर्वबली । तत्रैव सर्वादेश्चेति पठ्यते । बलिः । इन् । बल्यर्थास्तण्डुला बालेयाः । 'छदिरुपधिबलेर्ढञि'ति छदिबलिभ्यां विकृतवाचिभ्यां विकृत्यर्थायां प्रकृतौ ढञिति ढञ् । उप-धेस्तु स्वार्थेऽयं प्रत्ययः । कुबेराय बलिः । कुबेरबलिः । 'चतुर्थी तदर्थे'ति चतुर्थ्यन्तस्य तदर्थादिभिस्तत्पुरुषः । तदर्थेत्यर्थग्रहणं, तस्मादिदं तदर्थम् । अन्यानि तु प्रातिपदिकानि । अथ चुरादिर्मित् ॥ ८२५ ॥

पुल महत्त्वे ॥ पोलति । पुपोल । पोलिता । पुपुलिषति । पुपो-लिषति । पुलित्वा, पोलित्वा । 'रलो व्युपधादि'ति कित्त्वविकल्पः । पोपुल्यते । पोपुलीति । पोपोल्ति । पोलयति । अपूपुलत् । 'उदुपधा-दि'ति भावादिकर्मणोर्निष्ठायाः सेटः कित्त्वविकल्पनात्, पुलितमनेन, पोलितमनेनेत्यादि । पुलः । घञभावे इगुपधलक्षणः कः । पुलकः । सञ्ज्ञायां कन् । पुलिन, बाहुलकादिने गुणाभाव. । पुलाकः । बलाकादयश्चे-त्याकनन्तो निपातितः । अथ चुरादावपि । तुदादावपीति क्षीर-स्वामी ॥ ८२६ ॥

कुल संस्त्याने बन्धुषु च ॥ संस्त्यानं संघात इति स्वामी । क्व चित्तु संतान इति पठ्यते । संतानो विजातीयैरविच्छिन्नः प्रवाहः । बन्धुशब्देन तद्व्यापार. संबन्धोऽभिधीयते । कोलतीत्यादि, पोलतिवत् । कुलस्यापत्यं, कुलीनः । कुल्यः । कौलेयः । कुलशब्दो वृत्तौ तद्वति वर्तते । 'कुलात्खः' । 'अपूर्वपदादन्यतरस्यां यड्ढकञावि'ति खयड्ढकञः । अत एवापूर्वपदग्रह-

णम् । खस्तदन्तादपि भवति । ब्राह्मणकुलीनः । महाकुलीनः । 'महाकुलादञ्खञा'विति अञ्खञौ । अन्यतरस्याग्रहणानुवृत्तेः खश्चेति माहाकुलः । माहाकुलीनः । महाकुलीन इति भवति । दुष्कुलशब्दात् 'दुष्कुलाड्ढगि'ति ढक् । दौष्कुलेयः । अत्रान्यतरस्याग्रहणानुवृत्ते' खे दुष्कुलीनः । कौलेयकः श्वा । 'कुलकुक्षिग्रीवाभ्यः श्वास्यलङ्कारेष्वि'ति यथासङ्ख्याच्छुन्यभिधेये कुलाड्ढकञ् । अमुष्य कुलस्य भावः आमुष्यकुलिका । मनोज्ञादिपाठाद्वुञ् । 'आमुष्यायणामुष्यपुत्रिकामुष्यकुलिके त्युपसङ्ख्यानमिति षष्ठ्या अलुक् । स्वभावात्स्त्रीलिङ्गः । कौलकम्, अथ मनोज्ञादिः । निष्कुलाकरोति पशुम् । 'निष्कुलान्निष्कोषणे'इति कृञो योगे निष्कोषणार्थान्निष्कुलशब्दाद् डाच् । निष्कोषणमन्तरवयवानां बहिर्निस्सारणम् । नास्ति कुलमस्य, नकुलः । 'नभ्राण्नपादि'ति नञ्प्रकृतिभावः । कुलकम् । श्लोकसंघातः । सञ्ज्ञायां वुन् । कुलशब्दात्कन्वा ॥ ८२१ ॥

शल हुल पत्लृ गतौ ॥ हुल हिंसासंवरणयोश्च । अत्र मैत्रेयः । चकारोत्रान्वाचये गतावस्य तावत्प्रयोगः । क्व चित्तु हिंसासंवरणयोश्चेति । क्व चित्तु पठ्यते । शल हुल स्नल पत्लृ गतौ । हुल हिंसासंवरणयोश्चेति । अत्र पाठे चकाराद्गतौ चेति व्याख्येयम् । हुलतेस्स्नलतेश्च घटादिपठितस्यापीह पाठो न विकल्पार्थः, घटादिपाठस्त्वर्थविशेषे मित्त्वार्थ इति बोद्धव्यम् । शलति । शशाल । शलितेत्यादि । शालः । शाला । शल इति चलनसंवरणयोर्गतः । होलतीत्यादि । पोलतिवत् । पतति । पपात । पेततुः । पतिता । अपप्तत् । ल्टदित्त्वादङ् । 'पतः पुम्'इत्यङि परे पुमागमः । पिपतिषति । 'तनिपतिदरिद्रातीनामुपसङ्ख्यानमि'ति वा इडागमः । अनिट्पक्षे 'सनि मीमे'त्यादिना अच इस् सकारादौ सनि विधीयमाने इसभावे 'सस्यार्धधातुक'इतितत्त्वे पित्स्शब्दस्य द्विर्वचनम् । 'अत्र लोपोभ्यासस्ये'त्यभ्यासलोपः । अत्र ग्रहणं 'सनिमीमे'त्यादिचतुःसूत्रीविषये अभ्यासलोपार्थमिति स्थितम्, अभ्यासलोपोनर्थकत्वादन्त्यस्य न भवति । नानर्थकेऽलोन्त्यविधिरिति । अन्ये त्वत्रग्रहणं सर्वाभ्यासलोपार्थमाहुः । तत्र मते ऽभ्यासलोपस्य सनि मीमादिचतु सूत्रीविषयत्वमधिका-

राद्धोद्धव्यम् । पित्सति । पनीपत्यते । पनीपाद्दिपाठाच्चप्रत्ययो ह्रस्वत्व
सस्य नीक् । प्रणिपतति । 'नेर्गदे' ति णत्वम् ।

ण्यपप्तत् । पतापतः । 'चरिचलिपतिवदीना द्विर्वचनं, धात्यमवर्त्मते
द्विर्वचनमक् चाभ्यासस्य । उत्पतिष्णुः । 'अलङ्कृञि' त्यार इत्यर्थः । बलनी-
'जुचङ्क्रम्ये'त्यादिना युच् । पातुकः । लपपते'त्यादिनञाला । अजादिपा-
पत्रम् । 'दाम्नी'त्यादिना करणे ष्ट्रन् । सर्वपत्र व्याप्नोतीत्र नूलः । वातदन्त
रथिः, 'तत्सर्वादे'रित्यादिना सर्वपत्र व्याप्नोतीत्यर्थे णमः । बलः । पुरु-
सपत्र शर मृगकाये प्रवेशयतीत्यर्थ. । निष्पत्राकरोति । सपत्र शरमपरभा।
निष्क्रामयतीत्यर्थः । 'सपत्रनिष्पत्रादतिव्यथन'इति कृञो योगे डाच् ।
अतिव्यथनमतिपीडा । गेहानुप्रपातमास्ते । 'विशिपतिपदिस्कन्दा व्याप्य-
मानासेव्यमानयो'रिति कर्मण्युपपदे व्याप्यमानत्वे आसेव्यमानत्वे गम्य-
माने णमुल् । तत्र व्याप्तिर्गुणेन च क्रियया वा द्रव्याणा सबन्धः । सा चेह
विश्यादिक्रियादिभिर्गेहादिकर्मणः, आसेवा पौनःपुन्य, तच्च स्वभावा-
त्क्रियायाः । तदयमर्थः । गेहङ्गेहमनुप्रपत्य आस्ते गेहमनुप्रपत्यानुप्रपत्यास्ते
इति वा । आमिप्रयोगो धातुसबन्धे प्रत्ययविधानात् । तत्र व्याप्त्या-
सेवनयो: ममःमेनैवोक्तत्वा'न्नित्यवीप्सयोरि'ति द्विर्वचन न भवतीति भा-
ष्यादौ स्थितम् । यदा 'तृतीयाप्रभृतीनी'ति समासः तदा गेहगेहमनुप्र-
पातमास्ते गेहमनुप्रपातमनुप्रपातमिति द्विर्वचन भवत्येव । तत्र नित्यता
पौनःपुन्य, तच्च क्रियाविषयमिति तत्र क्रियावाचिनोर्द्विर्वचनम् । वीप्सा
तु व्याप्तुमिच्छा. सा च द्रव्यविषयेति द्रव्यवचनस्य । अत्रासेवाया'माभी-
क्ष्ण्ये णमुल् चे'ति क्त्वाणमुलोर्विधानादेव णमुलि सिद्धे पुनर्विधान तृती-
यान्तस्योपपदत्वार्थं, तेन पाक्षिकः समासो भवति । क्त्वो निवृत्त्यर्थं तु न
भवति इष्टत्वात्तस्येति हि स्थितम् । आपततीत्यापात्यः । 'भव्ये'ति
निपातनात्पते कर्त्तरि ण्यत् । वावचनेन यथाप्राप्ताभ्यनुज्ञानादापात्यम-
नेनेति भावेपि ण्यद्भवति । पतितः । गत्यर्थत्वात्कर्त्तरि क्तः । नरक
पतितः, नरकपतितः । 'द्वितीयाश्रिते'ति समासः । स्वर्गात्पतितः । स्वर्ग-
पतितः । 'अपेनापोढे'ति पञ्चमीतत्पुरुषः । अल्पश इति वचनात्क्व चित्स-

णम् । खल्वदन्तादपि भवत्यपतिन इत्यादौ अत एव निपातनादिट् । कुलादञ्खञा'विति अञ्खञौ क्रल्पेट्क्त्वा ह्रस्य विभाषे'ति इट्प्रतिषेधः कुलः । महाकुलीन. । मानां 'मेसिची'त्यादिना मकारादाविड्विकल्पना- लाड्ठगि'ति ठक् । दौ मिद्गावनिड्र्येमिदित्करणा'ह्रस्य विभाषे'त्यस्या- लीन' । कौलेयकः श्वहुः । पापतिः । सहिवहिचलिपतिभ्यो यङन्तेभ्यः ख्याच्कुन्यभिधेये-कुल कनोरन्यतरः । 'अतो लोपः' । 'यस्य हल' इति मनोज्ञादिपाठात् । अभ्यासस्य 'नीक् वञ्चि'त्यादिना नीक् न भवति

मां निपातनमिति वार्त्तिककारवचनात् । सन्निपातः । घञ् । तस्य शमन कोपन वा, सान्निपातिकम् । 'सन्निपाताच्चेति वक्तव्यमि'ति ठक् । पतङ्गः । 'पतेरङ्गच् पक्षिणी'त्यङ्गच् । पतत्रम् । 'पतेरत्रन्नि'त्यत्रन् । पतत्रिः । 'पतेरत्त्रे'ति त्रिन्प्रत्ययः, अगागमश्च । पतत्रिशब्दः पतत्रश- ब्दादिनौ मत्वर्थे । पातालम् । 'पतिचण्डाभ्यामालञि'त्यालन्, बाहुलकाद् वृद्धिः । के चिद्वृद्ध्यर्थमालञिति पठन्ति । तद्युक्तादित्यत्राणप्रकरणे 'कुला- लवरुडकर्मारनिषादचण्डालमित्रामित्रेभ्यः छन्दसी'ति चण्डालात्स्वा- र्थेण्विधानादयुक्तम् । पताका पिनाकादिर्बलाकादिर्वा आकप्रत्ययान्तः । पताकी । मत्वर्थीय इनिः व्रीह्यादित्वात्, पन्थाः । 'पतेस्थ चे'तीनत्ययः, तकारस्य थकारः । 'पथिमथ्यृभुक्षामात्'इति आकारादेशोऽन्त्यस्य सौ परे, 'इतोत्सर्वनामस्थाने'इति पथ्यादीनामिकारस्याकारे सवर्णदीर्घः । 'थो न्थ' इति पथिमथोस्थस्य न्थादेशः सर्वनामस्थाने । पन्थानौ । सर्वनामस्थाने दीर्घः । शसाद्यजादौ पथ इत्यादि । 'भस्य टेर्लोपः' भसंज्ञकाना पथ्या- दीना टेर्लोप इति लोपः, हलादौ नलोपः, पथिभ्याम् । विपथम् । काप- थम् । 'कुगतिप्रादय' इति तत्पुरुषः । 'का पथ्यक्षयो'रिति पथ्यक्षयोरुत्त- रपदयोः कुशब्दस्य कादेशः । त्रयाणां पन्थाः त्रिपथम् । 'ऋक्पूरब्धू- रि'ति समासान्तो ऽकारः । 'नस्तद्धित' इति टिलोपः । 'पथः सख्याव्य- यादेरि'ति नपुंसकत्वम् । इदञ्च परवल्लिङ्गतापवाद इति विपथो देशः । विपथा नगरी । बहुव्रीहौ न भवति । यथा पन्थानमतिक्रान्तो ऽतिपथ इत्यादौ 'अत्यादयः क्रान्ताद्यर्थे द्वितीयये'त्यादिना तत्पुरुषोपि न भवति ।

अत्र हि 'द्विगुप्राप्तापन्नालंपूर्वगतिसमासेषु प्रतिषेध' इति परवल्लिङ्गता प्रतिषिध्यते। 'पथः सङ्ख्याव्ययात् पर' इति यदमरसिंहेन नपुंसकत्वमुक्तं तदप्युत्तरपदार्थप्राधान्य एव, तथा च तत्र व्याख्यातारः, प्रधानलिङ्गापवादत्वात् क्लीबविधानप्रस्तावादिह न भवति । अपथा नगरी । उत्पथो देश इति। कथं तर्हि व्यध्वो दुरध्वो विपथः कदध्वा कापथः समा इति। विपथकापथयोः पुंस्त्वमुक्तम्, तत्रैव व्याख्येयम् । अस्त्यन्यो ऽकारान्तः । पथिपर्यायो पथशब्दो ऽर्द्धर्चादिपाठादुभयलिङ्गः। तेन समासात् पुंस्त्वमिति विपथकापथौ पुन्नपुंसकाविति चाहुः सुभूतिचन्द्रादयः । पठितश्च काण्डशेषे अकारान्तः पथशब्दः। पथः पन्थाश्च मार्गः स्यादिति, शाक्यमुनिस्तु संख्याव्ययाभ्यां परस्य पथशब्दस्य पुंस्त्वमेवाह । तत्पथः सङ्ख्याव्ययात् पर इति वार्त्तिकविरोधात् तत्रत्यभाष्यकैयटवृत्त्यादिमहाग्रन्थविरोधादमरविरोधाच्च चिन्त्यम् । अत्र कृतसमासान्तस्य निर्देशा'न्न पूजनात्' 'किमः क्षेपे' 'नञस्तत्पुरुषादि'ति यदा समासान्तो निषिध्यते तदा 'परवल्लिङ्गमि'ति पुंस्त्वमेव। सुपन्थाः। किंपन्था इति 'न पूजनादि'त्यत्र स्वत्योः परिगणनात् सत्पथ इत्यादौ समासान्तो भवति । 'अव्ययीभावश्चे'त्यत्र सुपथमिति यदुदाहरणं तत्र सुशब्दस्य वैपुल्यमर्थो न पूजेति समासान्तलाभः, अपथमित्यत्र 'नञस्तत्पुरुषादिति' निषेधस्य 'पथो विभाषे'ति विकल्पनात् समासान्तः । 'अपथं नपुंसक'मिति नपुंसकत्वम् । 'पथः सङ्ख्याव्यया'देरित्येव सिद्धे किं सूत्रेणेत्याशङ्कायां कैयटः पूर्वकालत्वात् सूत्रस्य नायं दोष इति, यदुक्तम् अस्त्यकारान्तः पथशब्द इति तत् 'पथो विभाषे'ति सूत्रविरुद्धम्, सति हि तेनापथमिति सिद्ध्यति नकारान्तेन वा ऽपन्था इति तत्किं सूत्रेण । पथि जातः पन्थकः। 'पथ पन्थ चे'ति सप्तम्यन्ताज्जातेऽर्थे वुन् पथश्च पन्थादेशः । पथो ऽनपेतं पथ्यम् । 'धर्मपथ्यर्थन्यायादनपेत इति पञ्चम्यन्तादनपेते ऽर्थे यत् । पथि साधु पाथेयम् । 'पथ्यतिथी'ति ढञ् । पन्थानं गच्छतीति पथिकः । पथिकी । 'पथः ष्कन्'ति द्वितीयान्ताद्गच्छतीत्यर्थे ष्कन्, षित्त्वात् स्त्रियां ङीष् । पन्थानं नित्यं गच्छतीति विवक्षायां 'पन्थो ण नित्य'मिति णप्रत्यये पान्थः । अत एव निर्द्देशात् णसन्नियोगेन पन्था-

देशः । शतपथमधीते वेद वा शातपथिकः । एवं षाष्टिपथिकः । 'शत षष्टेः पथः षिकन्वि'ति द्वितीयान्तात् षिकन् अध्येतृवेदित्रोः षित्त्वात् स्त्रियां शतपथिकी । पन्थानपन्थान प्रति प्रतिपथम् । 'अव्यय विभक्ती'त्यादिना वीप्सायामव्ययीभावः । पथोऽभिमुखमिति वा प्रतिपथम् । 'लक्षणेनाभिप्रती आभिमुख्य'इति लक्षण चिन्ह तद्वाचिनाऽभिप्रती आभिमुख्ये गम्यमाने समस्येते स चाव्ययीभावसमास इति । प्रतिपथमेति प्रतिपथिकः प्रातिपथिको वा । 'प्रतिपथमेति ठश्चे'ति द्वितीयान्तादेतीत्यर्थे ठन्ठकौ । पन्थान प्रति गच्छतीति समासेनाभिधानान्नेमौ प्रत्ययाविति व्याख्यातारः । सर्वपथ व्याप्नोति सर्वपथीनः पथिकः । 'तत् सर्वादे'रिति खः । उत्तरपथेनाहृत गच्छती वा औत्तरपथिकः । 'उत्तरपथेनाहृत चे'ति तृतीयान्ताद्गच्छत्यर्थे ठञ्, आहृतप्रकरणे वारिजङ्गलस्थलकान्तारपूर्वादुपसख्यानाद्वार्यादिपूर्वपदादपि ठञ् भवति । वारिपथिकमित्यादि । आजिपथिकः शाङ्कुपथिकः । 'अजपथशङ्कुपथाभ्या चे'ति 'तेनाहृ'तमित्यत्र विषये ठञ् । स्थलपथेनाहृत मधुक मारिच वा स्थालपथम् । मधुकमरिचयोरण् स्थलादिभ्य इत्यण् । देवपथ इव प्रतिकृतिर्देवपथः । 'इवे प्रतिकृतावि'ति इवार्थे सादृश्ये वर्त्तमानात् प्रथमान्तात्कन्, तस्य सदृशस्य प्रतिकृतित्वे सतीति सूत्रार्थः । तदेतदुक्त भवति । प्रतिकृतिरूपे सदृशे वर्त्तमानात् कन्निति कन् । देवपथइव कश्चिद् देवपथः । सत्सगइवेत्यर्थे वर्त्तमानात् कन् । उभयत्र 'देवपथादिभ्यश्चे'ति कनो लुक् । परिपन्थशब्दस्तु परिपथपर्यायो ऽव्युत्पन्नः, उक्त च 'परिपन्थं च तिष्ठती'त्यत्र वृत्तौ, समर्थविभक्तिप्रकरणे पुनर्द्वितीयोच्चारण लौकिकवाक्यप्रदर्शनार्थं परिपथब्दपर्याय: परिपन्थशब्दे'ऽस्तीति ज्ञापयति स विषयान्तरे ऽपि प्रयोक्तव्य इति । एव पथः पन्थाश्च मार्गः स्यादिति काण्डशेषे पथिपर्यायो ऽय पथशब्द उक्तः । स नास्तीति प्रतीयते । सति हि परिपथशब्दवत् परिपन्थशब्दस्यापि सिद्धेः किं ज्ञापकवर्णनेन । 'पन्थो ण नित्य'मित्यत्र प्रत्ययसन्नियोगेन पथः पन्थादेशकल्पन प्रकृत्यन्तराभाव एव घटते । अथ कथादावपि ॥ ८३० ॥

क्रथे निष्पाके ॥ क्रथति । चक्राथ । क्रथिता । अक्रथीत् । क्राथः । क्रथयतीति घटादिपाठात् ॥ ८३१ ॥

पथे गतौ ॥ पथति । पपाथ । पेथतुः । अपथीत् । पथः । पाथः पथि गताविति चुरादौ ॥ ८३२ ॥

मथे विलोडने ॥ मथति । ममाथ । मेथतुः । अमथीत् । माथो । मथः । क्रथ्यादीनां त्रयाणामेदित्वात् 'ह्म्यन्ते'ति न वृद्धिः । दण्डमाथं धावति दाण्डमाथिकः । माथः । मन्थाः । दण्डइव रज्जुरित्यर्थः । 'माथोत्तरपदपदव्यनुपदं धावति' एभ्यो द्वितीयान्तेभ्यो धावतीत्यर्थे ठगिति ठक् ॥ ८३३ ॥

टुवम उद्गिरणे ॥ उद्गिरणमन्तर्गतस्य मुखान्निःसारणम् । अत्र सुधाकर उद्गिरणइति पठन्निपातनात् तत्र इट्तातोरित्याह । वमति । ववाम । ववमतुः । वादित्वाचेत्वाभ्यासलोपौ । भागवृत्तौ त्वनयोर्विकल्पेन वेमतुरित्युदाहृत, तन्न्याद्यादिषु चिरन्तनेषु ग्रन्थेषु कुत्रापि न दृष्टम् । वमिता । अवमीत् । 'ह्म्यन्ते'ति न वृद्धिः । विवमिषति । ववम्यते । ववन्ति । ववान्तः । हेरपित्त्वात् ङित्त्वा'दनुनासिकस्ये'ति दीर्घेऽनुस्वारे वंवाहि । अवंवन् । वमयति । वामयति 'ग्लास्नावनुवमानन्तपनर्गाङ्गे'ति मित्त्वनिषेध. । वामः । 'नोदात्तोपदेशस्ये'ति वृद्धिनिषेधस्य 'आचमिकमिवमीनामिति निषेधः । वान्तः । वान्तवान् । 'आदितश्चे'ति चकारस्यानुक्तसमुच्चयार्थतया निष्ठायामनिट्त्वमिति वृत्तौ । भाष्यवार्त्तिकयोरनुक्तमपीदं प्रयोगबाहुल्यादुक्तमिति हरदत्तः, तदेव काश्यपादीनामुदित्पाठः प्रत्युक्तः । वमथुः । टित्त्वादथुच् ॥ ८३४ ॥

भ्रमु चलने ॥ भ्रमति । बभ्राम । बभ्रमतुः । भ्रेमतुः । भ्रेमुः । बभ्रमुः । बभ्रमिथ । भ्रेमिथ । 'वा जृभ्रमुत्रसा'मिति किति लिटि थलि च सेटि वा एत्वाभ्यासलोपौ । भ्रमिता । भ्रमिष्यति । भ्रमतु । अभ्रमत् । भ्रमेत् । भ्रम्यात् । अभ्रमीत् । शब्विषये 'वा भ्राशे'ति पक्षे श्यनि भ्राम्यति । भ्राम्यतु । अभ्राम्यत् । भ्राम्येत् । भ्राम्यतीति दिवादौ शमादिपाठ-

तस्यानवम्यानार्थस्य 'शमामष्टाना'मिति दीर्घे । बिभ्रमिषति । बम्भ्रम्यते । अनुनासिकान्तत्वान्नुक्, बम्भ्रन्ति । बम्भ्रान्तः । लोटि हौ बम्भ्राहि । अबम्भ्रन् । 'मो नो धातो'रिति मकारस्य नकारः । भ्रमयति । अमन्तत्वान्मित्त्वम् । घञि भ्रमः । 'नोदात्ते'ति वृद्धिनिषेधः । प्रयोजनं तु भ्रमितुं न शक्ताः अभ्रम इत्यत्र 'अव्ययेऽशक्तौ'ति अजन्तस्य कान्तस्य च नञः परस्योत्तरपदस्य तत्पुरुषे अशक्तौ गम्यमानायां विधीयमानस्यान्तोदात्तत्वस्याभावः । तेन 'तत्पुरुषे तुल्यार्थतृतीयासप्तम्युपमानाव्ययद्वितीया कृत्याः' । तत्पुरुषे तुल्यादिपूर्वपदस्य विधीयमानः प्रकृतिस्वरो भवति स च निपातत्वादाद्युदात्त एव । अचि तु 'अन्ता'वित्यन्तोदात्तमेव । भ्रमित्वा । भ्रान्त्वा । भ्रान्तः । भ्रान्तो देशमनेकदुर्गविषममित्यत्र देशस्याकर्मणामिति देशस्य कर्मत्वेनानभिधानं तु भवतावेवोपपादितम् । भ्रमणः । चलनार्थत्वाद्युच् । भ्रमीति शमादिपठितस्य घिनुण् । भ्रमर । 'अर्त्तिचमिकमिभ्रमिदेविवासिभ्यश्चे'त्य'रप्रत्ययः । भ्रुमलः । अक्षिरोगः । 'भ्रमेरुच्चोपधायाः' इति कलप्रत्यय उपधाया उच्चोकारः । भ्रूः । 'भ्रमेर्डू'रिति डूः । डित्त्वाट्टिलोपः । भ्रुवौ । भ्रुवः । अजादौ 'अचि श्नुधातुभ्रुवामि'त्युवङ् । हे भ्रूरित्यत्र 'नेयङुवङ्स्थानावस्त्री'ति नदीसंज्ञानिषेधः । 'अम्बार्थनद्योर्ह्रस्व' इति ह्रस्वाभावः । ङिद्वचनेषु 'ङिति ह्रस्वश्चे'ति नदीविकल्पः । ङिद्वचनेषु इयङुवङ्स्थानेष्वीदन्तमिकारोकारान्तं च स्त्र्याख्यं वा नदी स्त्रीशब्दं वर्जयित्वेति सूत्रार्थः । तेन नदीसंज्ञायामाण् नद्या इत्यादि वृद्धावुवङि भ्रुवै इत्यादि । अन्यदा केवलमुवङि भ्रुवे इत्यादि । आमि स्त्रीशब्दव्यतिरिक्तयोरियङुवङ्स्थानयो'र्वामी'ति नदीनिषेधविकल्पनात् भ्रूणां भ्रुवामिति । भ्रूर्नाम का चित्तस्या अपत्यं भ्रौवेयः । 'भ्रुवो वुक् चे'ति ढक् तत्सन्नियोगेन वुगागमः । लेखाभ्रेयः । 'शुभ्रादिभ्यश्चे'त्यपत्ये ढक्, 'ढे लोपोऽकद्र्वा'इति ढे परे कद्रूवर्जितस्योवर्णान्तस्याङ्गस्योकारस्य लोप इत्यूकारलोपः । अक्षिणी च भ्रुवौ च अक्षिभ्रुवम् । 'अचतुरे'त्यादिनाऽचि समासान्ते निपातितः । भ्रूकुंस भ्रूभङ्ग इत्यादौ 'इको ह्रस्वोऽङ्यो गालवस्ये'ति इगन्तस्याङ्यन्तस्य उत्तरपदे

विधीदृम् । षोढा । संख्याया विधार्थे धा' 'अधिकरणविचाले चे'ति धाप्र त्ययः । 'तत्र षष उत्व'मिति उत्वषत्वे धासु वेति वचनाद् धाप्रत्यं न्ते न भवत इति षड्धेत्यपि भवति । अत्र षकारस्य धाप्रत्यये 'स्वादि ष्वि'तिपदत्वाज्जश्त्व डकारः । धकारस्य ष्टुत्वं 'न पदान्तादि'ति निषेधान्न भवति । पदान्ताट्टवर्गात् परस्य नाम्वर्जितस्य स्तोः ष्टुत्व नेति सूत्रार्थः ॥ ८३० ॥

रम क्रीडायाम् ॥ अनुदात्तोऽनुदात्तेत् । रमते । रेमे । रेमिषे रेमिध्वे । क्रादिनियमादिट् । रन्ता । रंस्यते । रमताम् । अरमत रमेत । रंसीष्ट । अरंस्त । रिरंसते । रम्यते । रंरन्ति । ररतः । प्रकृति ग्रहणन्यायेन 'अनुदात्तोपदेशे'त्यनुनासिकलोपः । ररंसि । ररण्मि ररण्मः । 'म्वोश्चे'ति नत्वे णत्वम् । ररहीत्यत्र अनुनासिकलोपस्यासि द्धत्वात् 'अतो हे'रिति लुङ् न भवति । अररन् । 'मो नो धातो'रिति नत्वम् । रमयति । अरीरमत् । विरमति । आरमति । परिरमति 'व्याङ्परिभ्यो रम'इति परस्मैपदम् । उपरमति । 'उपाच्चे'ति परस्मैपदम् इदं सकर्मकविषयमकर्मकत्वे उपरमति । उपरमते । 'विभाषा कर्म कादिति' विकल्पस्योक्तत्वात् । अन्तर्भावितण्यर्थोऽप्य सकर्मकः । विरराम विरेमतु । विरेमिथ । विररन्थ । थलि 'उपदेशेत्वत'इति उपदेशेत्वत स्तासौ नित्यानिटस्थलीण्निषेधेपि इह भारद्वाजनियमादिट् पक्षे न भवति लुङि 'यमरमनमाता सक् चे'ति परस्मैपदपरे सक् । सिचश्चेट्, 'इट ईटी'ति सिज्लोपः । व्यरंसीत् । व्यरंसिष्टाम् । रमः । रामः । 'ज्वलितिकसन्तेभ्यो ण'इति णः । मान्तत्वेप्यनुदात्तोपदेशत्वात् वृद्धिनिषेधाभावः । रमणः नन्द्यादित्वात् ण्यन्ताल्लुः । स्तम्बेरमः । 'स्तम्बकर्णयोरमिजपो'रिति स्तम्ब उपपदेच् प्रत्ययः । 'हस्तिसूचकयो'रिति वचनात् हस्तिविषयश्चायम् 'तत्पुरुषे कृती'ति सप्तम्या अलुक् । रन्तिः । 'न क्तिचि दीर्घश्चे'ति दीर्घा नुनासिकलोपनिषेध । अयमुदिदिति के चित् । क्त्वायामिड्विकल्पमुदाह रन्ति । तन्महान्तो न सहन्ते । रत्नम् । 'रमेस्तश्चे'ति नप्रत्ययस्तकार श्चान्तादेशः । रमतिः स्वर्गः । 'रमेर्निदि'त्यतिप्रत्ययः । सुरतः कामः

'सौ रमे क्त' इति क्तः। सूरतः। कृपावान्। 'रमेः पूर्वपदस्य च दीर्घ' इति क्ते पूर्वपदस्य दीर्घः। रथः। 'हनिकुषी'त्यादिना यत्। रथ्या। रथकट्या। 'खलगोरथात्'। 'इनित्रकट्यचश्चे'ति यत्कट्यचौ 'तस्य समूह' इति विषये। स्वभावात् स्त्रीलिङ्गता। रथस्येदं रथ्यम्। 'रथाद्यत्' 'तस्येदम्' विषये यत्। अत्र वृत्तौ रथाङ्गएवेष्यते इति रथसीताहलेभ्यो यद्विधौ तदन्तविधिरित्युक्तत्वात् परमरथ्यमित्याद्यपि भवति। आश्वरथम्। 'पत्रपूर्वादञि'ति वाहनवाचिपूर्वपदात् रथान्तात् अञ् यतोपवादः। अयमपि रथाङ्गएवेष्यते। रथं वहति रथ्यः। 'तद्वहति रथयुगप्रासङ्ग'मिति द्वितीयान्तात् वहतीत्यर्थे यत्। रथाय हिता रथ्या। 'खलयवमाषतिलवृषब्रह्मणश्चे'ति चकारस्यानुक्तसमुच्चयार्थत्वात् चतुर्थ्यन्ताद्धितार्थे यत्। वामरथस्यापत्यं वामरथ्यम्। 'कुर्वादिभ्यो ण्य' इति ण्यः, तत्र 'वामरथस्य कण्वादिवत् स्वरवर्ज'मिति पठ्यते। तस्यायमर्थः। वामरथ्यशब्दस्य गर्गाद्यन्तर्गतस्य यञन्तस्य काण्वादेर्यञ्कार्यं तद्भवति स्वरं वर्जयित्वेति, तेन 'यञञोश्चे'ति गोत्रबहुत्वे विधीयमानो लुगस्यापि भवति। वामरथा इति। तथात्राय 'प्राचां ष्फ तद्धित'इति स्त्रियां विधीयमानो ङीष्फश्चास्यापि भवतः। वामरथ्य'। वामरथ्यायनी। ष्फस्य षित्त्वात् ङीष्। 'हलस्तद्धितस्ये'ति यलोपः। 'यस्येति चे'त्यल्लोपः। तथा यूनि 'यञिञोश्चे'ति विधीयमानष्फगत्रापि भवति। वामरथ्यायन इति। 'आपत्यस्ये'ति यलोपस्तत्रैव अनातीति निषेधान्न भवतीति। तथा 'सङ्घाङ्कलक्षणेष्वञ्यञिञामण्'इति यञन्तात् सङ्घाङ्कलक्षणेषु विधीयमानोऽण् अस्मादपि भवति। वामरथानि सङ्घाङ्कलक्षणानीति। तत्र घोषग्रहणं चोदितं, तेन वामरथो घोष इत्यपि भवति। 'आपत्यस्ये'ति यलोपः। तथा 'कण्वादिभ्यो गोत्र'इति गोत्रापत्यवाचिभ्यः कण्वादिभ्यो विधीयमानोऽण् अस्मादपि भवति। वामरथाः छात्राः। स्वरवर्जमित्युक्तत्वात् 'ञ्नित्यादिर्नित्य'मिति प्रकृतेराद्युदात्तत्वं न भवति, प्रत्ययस्वर एव भवति॥ ८३८॥

षद्लृ विशरणगत्यवसादनेषु॥ अयं शदिकृशी चानुदात्ता उदा-

त्तेत्तः । सीदति । 'पाघ्राध्मास्थाम्नादाण्दृश्यर्तिसर्त्तिशदसदां पिबजिघ्रधमतिष्ठमनयच्छपश्यर्च्छधौशीयसीदाः' इति शिति प्रत्यये परे यथासंख्यात् सदेः सीदादेशः । ससाद । सेदतुः । सत्तथ । सेदिथ । थलि भारद्वाजनियमादिट्पक्षे 'थलि च सेटी'त्येत्वाभ्यासलोपौ । सेदिव । सेदिम । क्रादिनियमान्नित्यमिट् । सत्ता । सत्स्यति । असीदत् । सीदेत् । सद्यात् । असदत् । ऌदित्त्वादङ् । सिषत्सति । सासद्यते । भावगर्हायां 'लुपसदे'ति यङ् । सासत्ति । लङि सिपि 'दश्चे'ति वा रुत्वम्, असासः । सादयति । असीषदत् । निषीदति । 'सदिरप्रते'रिति अप्रतेरिणन्तादुपसर्गात् परस्य षत्वे न्यषीदत् । 'प्राक् सितादड्व्यवायेऽपी'ति षत्वम् । निषिषत्सति । न्यषीषददित्यत्र 'स्थादिष्वभ्यासेन चे'त्युभयत्र षत्वम् । यद्वाभ्यासस्य 'सदिरप्रतेः' । प्राक् सितादड्व्यवायेऽपी'ति षत्वम् । उत्तरस्य 'त्विण्को'रिति । निषसादेत्यत्र तु 'सन्दिष्वञ्जयोः परस्य लिटी'ति उत्तरखण्डस्य षत्वनिषेधः । निषेदतुरित्यादौ अभ्यासस्य लोपे सति अभ्यासात् परत्वाभावान्नायं निषेधः । सेदिवान् । 'भाषायां सदवसश्रुव' इति भूतसामान्ये वा लिट्, तस्य च क्वसुः । अस्मादेव वचनात् भूतसामान्ये सदादिभ्यो लिडनुमीयते । इह चानुमाने विकल्पेन, अस्य च लिटो नित्यं क्वसुरिति न लिटां श्रवणं नापि लुङो धातुसामान्यविहितस्य सदादिविशेषविहितेनानेन बाधः । न च सदादौ भूतसामान्ये सावकाशस्यास्य लिटः 'अनद्यतने लङ्' 'परोक्षे लिडि'ति भूतविशेषविहिताभ्यां बाधः, तद्विधानेऽप्यस्यानुवर्त्तनादिति भाष्यादौ स्थितम् । क्रादिनियमादिट्, उगित्त्वान्नुम् । 'सान्तमहत' इति असवृद्धौ सर्वनामस्थाने दीर्घे सोर्'हल्ङ्याब्भ्य' इति लोपः । सकारस्य संयोगान्तत्वात् लोपः । भसंज्ञायां वसोः सम्प्रसारणे 'संप्रसारणाच्चे'ति पूर्वत्वे परस्य आसेदुष इत्यादि, सम्प्रसारणविषये नेडागमः प्रवर्त्तते । पश्चात् निमित्तविघातो भविष्यतीति, हलादौ 'वसुस्रंसुध्वंस्वनडुहां द' इत्यादिना दत्वे आसेदिवद्भ्यामिति । परिषत् । 'सत्सूद्विषे'ति क्विप् । पर्षच्छब्दस्तु पृषोदरादित्वात् परेरिकारलोपे, परिषदा कृत, पारिषद-

कम् । 'कुलालादिभ्यो वुञि'ति तेन कृतमिति विषये वुञ् । परिषद इदं पारिषदम् । 'पत्त्राध्वर्युपरिषदश्चे'ति तस्येदमर्थे ञः । परिषद्वलः । 'रजःकृष्यासुतिपरिषदो वलच्' इति मत्वर्थे वलच् । परिषदं समवैति, तत्र साधुर्वा पारिषद्यः । 'परिषदो ण्य' इति योगाभ्यां समवैति तत्र साधुरिति विषये ण्यः । एकदेशविकृतस्यानन्यत्वात् कृतेकारलोपस्याप्येते प्रत्यया भवन्ति । तथा च भाष्ये 'एओङि'त्यत्र पार्षदकृतिरेषा तत्र भवतामिति, तथा सप्रति पर्षद्वलोकमिति भारते वलच् । भट्टिकाव्ये पर्षद्वल इति वलच् दृश्यते । द्विषत् । पूर्ववत् क्विप्, 'तत्पुरुषे कृति बहुल'मिति अलुक् । सुषामादिपाठात् षत्वम् । बहुग्रहणात् लुकि द्युमत् । 'दिव उदि'ति पदत्वे उत्वम् । सदः । स द. । निषीदन्त्यस्मिन् पापमिति निषादः । 'हलश्चे'ति अधिकरणे घञ् । 'उपसर्गस्य घञी'ति दीर्घस्तत्रैव अमनुष्य इति प्रतिषेधान्न भवति । निषादस्यापत्य, नैषादकिः, 'अत इञ्' । 'सुधातृव्यासवरुड निषादे'ति अकङादेशः । सद्रुः । 'दाधेट्सिशदसदो रुः' इति तच्छीलादौ रुः । निषद्या । 'सञ्ज्ञाया समजे'त्यादिना स्त्रियामकर्त्तरि क्यप् । सदः । असुन् । सत्र, 'गृधुविपचिवचियमिमदिभ्यस्त्वे'ति त्रप्रत्ययः । पाप चिकीर्षति, सत्रायते । 'सत्रकक्षे'त्यादिना कण्वचिकीर्षाया क्यङ् । कण्व पाप, सत्रादयो वृत्तिविषये पापार्या इत्युक्तम् । निषद्वरः कामकर्दमौ, 'नौ सदे'ति वरच् । सद्म । मनिन् । सूकरसद्मन इमे सौकरसद्माः । 'नान्तस्य टिलोप'इत्यादिना अचिति प्रकृतिभावापवादः टिलोपः । सादिः । 'वपिवदिराजिधृषिसहिनिवाशिपदिवृञ्भ्य' इतीञ् प्रत्ययः । अयं तुदादावपि । उभयत्र पाठे प्रयोजन उञ्छतिवन्नेयम् । चुरादौ चायम् ॥ ८३९ ॥

शद्‌ॢ शातने ॥ अत्र मैत्रेयः । शद्‌ॢ विशातने । विशीर्णतायां वर्त्तते, शातन विषयभावेन निर्दिश्यते प्रसिद्धत्वादिति । शीयते । 'पाघ्रे'त्यादिना शीयादेशः । 'शदेः शित' इति शिद्भाविनोस्मात्तङ् । शशाद । शेदतुः । शशत्थ । शेदिथ । शेदिव । क्रादिनियमादिट् । थलि भारद्वाजनियमादिड्विकल्पः । शत्ता, शत्स्यति । शीयताम् । अशीयत ।

शीयेत । आशिषि शद्यात् । अशदत् । लृदित्त्वादङ् । शिशत्सति । शिद्भावे च शदिरात्मनेपदनिमित्तं केवल इति गम्यते । ... 'पूर्ववत्सन' इति न भवति । शाशद्यते । शाशत्ति । शातयति, शदेर-गतौ त' इति णौ तत्त्वम्, गतौ तु शादयते गोपालक इति तत्वं न भवति । अयमेव गतौ तत्त्वप्रतिषेधो गत्यर्थत्वे प्रमाणम् । शादः । शादः । शाद्वलम् । 'नडशादाड्डुलच्' इति वलच् चातुरर्थिकः, ड्त्वाट्टिलोपः । शद्रुः । 'दाधेट्सिशदसदो रुः' शातयतीति शत्रुः, 'नृशदिभ्यां त्रुचि'ति त्रुन् । बाहुलकात् णेर्लोपो वृद्ध्यभावश्चेति प्रत्ययलक्षणेन णिज्निमित्तं तत्त्वम् ॥ ८४० ॥

क्रुश आह्वाने रोदने च ॥ सदादयस्त्रयोऽनुदात्ता उदात्तेतः । तथा च व्याघ्रभूतिः ।

अदि हदि स्कन्दि भिदि च्छिदि क्षुदीन्
सदि शदि स्वद्यतिपद्यती स्विदिम् ।
तुदि नुदि विद्यति विन्त इत्यपि
प्रतीहि दान्तान् दशपञ्च चानिटः ॥
दिशि दृशि दंशिमथो स्पृशि मृशिम्
रुशि रिशि क्रोशतिमष्टमं विशिम् ।
लिशि च शान्ताननिटः पुराणगाः
पठन्ति पाठेषु दशैव नेतरान् ॥

क्रोशति । चुक्रोश । चुक्रुशतुः । चुक्रोशिथ । चुक्रुशिव । चुक्रुशिम । क्रादिनियमादिट् । क्रोष्टा । क्रोक्ष्यति । क्रोशेत् । आशिषि क्रुश्यात् । अक्रुक्षत् । 'शल इगुपधे'ति क्सः । चुक्रुक्षति । 'हलन्ताच्चे'ति कित्त्वं, चोक्रुश्यते । चोक्रोष्टि । हौ चोक्रुड्ढि । धित्वषत्वढत्वजश्-त्वानि । लङि तिप्सिपोः अचोक्रोट् । क्रोशयति । अचुक्रुशत् । आक्रो-शकः । 'देविक्रुशोश्चोपसर्ग' इति तच्छीलादौ वुञ् । हे क्रोष्टो । 'सित-निगमी'त्यादिना तुन् । अस्य 'तृज्वत् क्रोष्टु'रिति असम्बुद्धौ सर्वनाम-स्थाने तृजन्तरूपातिदेशात् क्रोष्टा क्रोष्टारावित्यादि । शसि क्रोष्टून् ।

अन्यत्र 'विभाषा तृतीयादिष्वची'ति तृज्वद्भावविकल्पनात् क्रोष्ट्रा । क्रोष्टुनेत्यादि । आमि 'नुमचिरतृज्वद्भावेभ्यो नुट् पूर्वविप्रतिषेधेने'ति नुटि अनजादित्वात् तृज्वद्भावाभावे क्रोष्टूनामिति भवति । क्रोष्ट्री । 'स्त्रियां चे'ति तृज्वद्भावः । 'मतिबुद्धी'त्यत्र चकारस्यानुक्तसमुच्चयार्थत्वादाक्रुष्टः । वर्त्तमाने क्तः । क्रोशः । क्रुशः । णाभावे इगुपधत्वात्कः ॥ ८४१ ॥

कुच सपर्चनकौटिल्यप्रतिष्टम्भविलेखनेषु ॥ एतदादयः कसन्ता उदात्ता अनुदात्तेतः । कोचति । कुच शब्दे तारइति पठितस्यापीह पाठः सपर्चनादावेव कोच इति ज्वलादिसबन्धेन णो यथा स्यादिति ॥ ८४२ ॥

बुध अवगमने ॥ बोधति । बुबोध । बोधिता इत्यादि । बुबुधिषति । बोधित्वा । बुधित्वा । 'रलो व्युपधेति' कित्त्वविकल्पः । रुधिः सराधिर्युधिबन्धिसाधयः क्रुधिक्षुधी युद्धतिबुध्यती व्यधिरित्यत्र श्यना निर्देशात् दैवादिकस्य ग्रहणं नान्यस्य नापि बुधिर् बोधनइति वक्ष्यमाणस्य । बोबुध्यते । बोबोद्धि । 'झषस्तथो'रिति धत्वे जश्त्वे बोभोत्सि । 'एकाचो बशो भष् झषन्तस्य स्ध्वो'रिति भष्त्वे खरि चे'ति चर्त्वे, लोटि हेर्द्धिभावे जश्त्वे च बोबुद्धि । बोबुधानि । 'नाभ्यस्तस्ये'ति गुणनिषेधः । लङि तिपि अबोभोत् । पदत्वात् भष्भावो जश्त्व च । सिपि तु 'दश्चे'ति वा रुत्वे अबोभोरित्यपि भवति । बोधयति देवदत्तः । अबूबुधत् । 'अणावकर्म्मकादि'ति परस्मैपदं, यदायमणावचित्तवत्कर्तृकस्तदापि 'बुधयुधे'ति परस्मैपदमेव, न च तत्र युधादिसाहचर्यात् बुध्यतेरेव ग्रहणमिति वाच्यम् । एवं बुधिग्रहणं व्यर्थं स्यात् । यतो बोधने बोधयते इति दुर्वारम्, न च बोधतिबुध्यत्योरर्थभेदः, एवं 'दीपजने'ति लुङि तशब्दे वा चिण्विधावपि श्यन्विकरणैरात्मनेपदिभिश्च साहचर्यात् बुध्यतिबोधत्योर्द्वयोर्ग्रहणमिति व्यत्यबोधि, व्यत्यबोधिष्टेति भवति, असत्यपि वाग्रहणे न विशेषः, यतो दैवादिकेन व्यत्यबोधि व्यत्यबोधिष्टेति रूपद्वय दुर्वारं, भावादिकर्मणो बुधितमनेन बोधितमनेनेत्यादि ॥ ८४३ ॥

निषेधः । निष्ठायामनिट्त्वे कुत्ववचनमिति वार्त्तिकमते कुत्वस्य नैव प्रसङ्गः ॥ ८४८ ॥

रेटृ परिभाषणे ॥ रेटति । रिरेट । रेटिता । रिरेटिषते । रेरेट्यते । रेरेट्टि । रेटयति । अरिरेटत् । ऋदित्त्वान्नोपधाह्रस्वः । रेटते । रिरेटे । इत्यादि । रेटित्वा । रेटितः ॥ ८४९ ॥

चते चदे याचने च ॥ चचात । चेततुः । चतिता । अचतीत् । एदित्त्वान्न वृद्धिः । चिचतिषति । चाचत्यते । चाचत्ति । चातयति । अचीचतत् । चतते । चेते । चिचतिषते । इत्यादि । चतित्वा । चतितः । चत्यम् । 'शकिसहोश्च' 'चतिनक्षिशमो'ति यत् । चतुरः । 'मन्दिवाशी'त्यादिनोरच् । न चतुरः, अविद्यमाना वा चतुरा यस्य अचतुरः, तस्य भावः आचातुर्यम् । ब्राह्मणादिपाठात् ष्यञ् । 'न नञ्पूर्वात् तत्पुरुषात्' इति निषेधो नैव अचतुरेति पर्युदासात् न भवति । चत्वारः । 'चतेरुरन्' इत्युरन् । 'चतुरनडुहोरामुदात्त' इति सर्वनामस्थाने आमागमः । तदन्तविधेरिष्टत्वात् प्रियचत्वाः । प्रियचत्वारावित्यादावाम् भवति । हे प्रियचत्वः । 'अम् सम्बुद्धा'वित्यमागमः । अयं समास एव । केवलस्य नित्यबहुवचनान्तत्वात् सम्बुद्ध्यभावात् । आमि 'षट्चतुर्भ्यश्चे'ति नुटि चतुर्णाम् । अत्रापि तदन्तविधिना परमचतुर्णामित्यत्रापि नुट् भवति । 'षट्चतुर्भ्यश्चे'ति बहुवचननिर्देशात् यत्र सङ्ख्यायाः प्राधान्यं तत्रैवायमिति प्रियचतुरामित्यादौ अप्रधाने नुट् न भवति । चतुर्षु इत्यत्र 'रोः सुपी'ति नियमान्न विसर्जनीयः । स्त्रियां 'त्रिचतुरोः स्त्रियां तिसृचतसृ' इति विभक्तौ चतस्रादेशे 'अचि र ऋत' इति अजादावृकारस्य पूर्वसवर्णदीर्घापवादे च रेफे चतस्र इत्यादि । 'ऋन्नेभ्यो ङीप्' स्वस्रादिपाठात् 'न षट्स्वस्रादिभ्य' इति निषिध्यते । चतसृणामित्यत्र 'नुमचिरतृज्वद्भावेभ्यो नुट् पूर्वविप्रतिषेधेने'ति नुट् । अजादिविभक्त्यभावे न रेफादेशः । नामि दीर्घो 'न तिसृचतसृ' इति प्रतिषेधान्न भवति । चतसृ'देशस्तदन्तेऽपि भवति परमचतस्र इत्यादि । यत्र बहुव्रीह्यादिना समासस्यान्यलिङ्गत्वं तत्रापि चतुरर्थस्त्रीत्वाश्रयोऽयमादेशो भवति । प्रियाश्चतस्रो यस्य प्रियचतसा ब्राह्मणः । प्रियचतस्रावित्यादि । सावानङादेशः ।

अजादा 'वचिर ऋतः,' अय परत्वात् पूर्वमवर्णन्त्र बाधते। 'ऋतो ङिसर्वनामस्थानयो र्गुण' बाधित्वा पूर्वविप्रतिषेधेन, तेनाजादौ सर्वत्र रेफ एव भवति। अत्र 'नद्यृतश्चे ति कप् सन्निपातपरिभाषया न भवति। कपि हि प्रकृतिविभक्त्योरानन्तर्यं विहन्यते। प्रियाश्चत्वारोस्याः प्रियचत्वा स्त्री। प्रियचत्वाराविन्यत्र अङ्गस्य स्त्रीत्वेपि चतुरर्थस्यास्त्रीत्वात् चतस्रादेशो न भवति। चतुर्णा पूरणश्चतुर्थः। 'तस्य पूरणे डडि'ति डटि 'षट्कतिकतिपयचतुरां थुक्' इति थुक्, तुर्यः,तुरीयः 'चतुरश्छयतावाद्यक्षरलोपश्चे'ति पूरणार्थे छयतौ आद्यक्षरलोपश्चेति चशब्दस्य लोपः। तुरीय भिक्षायाः तुरीयभिक्षा, चतुर्थं भिक्षायाश्चतुर्थभिक्षा। 'द्वितीयतृतीयचतुर्थतुर्याण्यन्यतरस्या'मिति द्वितीयादीन्येकदेशवाचिना षष्ठ्यन्तेन सह वा समस्यन्ते इति तत्पुरुषः। एकदेशिसमासः। अन्यदा षष्ठीसमासे भिक्षातुरीय, भिक्षाचतुर्थमिति भवति। पूर्वनिपातभेदः। चतुष्टयम्। 'सख्याया अवयवे तयबि'ति अवयवे वर्त्तमानायाः सख्याया अवयविनि तयप्। 'खरवसानयोरि'ति रेफस्य विसर्जनीये 'ह्रस्वात्तादौ तद्धित इति सस्य षत्व ष्टुत्व तकारस्य। जसि 'प्रथमचरमतये'ति वा सर्वनामत्वात् चतुष्टये, चतुष्टयाः। स्त्रिया 'टिड्ढाणञि'त्यादिना ङीप्। चतुष्टयी। चतुर्भुङ्क्ते, चतुरो वारान् भुङ्क्तइत्यर्थः। 'द्वित्रिचतुर्भ्यः सुजि'ति क्रियाभ्यावृत्तिगणने कृत्वसुच्। 'रात्सस्ये'ति सकारलोपः। एककर्तृकाणां तुल्यजातीयाना क्रियाणा जन्मसंख्यान क्रियाभ्यावृत्तिगणनम्। स्वाद्युत्पत्तिः। स्वरादिषु सुजितिपाठात् अव्ययत्वात् सुब्लुक्। चतुः करोति। चतुष्करोति। 'द्विस्त्रिश्चतुरिति कृत्वोर्थे'इति कृत्वोर्थे वर्तमानानामेषा विसर्जनीयस्य कुप्वोर्वा षत्वम्। अन्यदा तु 'कुप्वोः ≍क≍पौ चेति' विसर्जनीयजिह्वामूलीयौ। चतुष्कपालम्। चतुष्पात्। 'इदुदुपधस्य चाप्रत्ययस्य' इकारोकारोपधस्य यो विसर्जनीयोऽप्रत्ययसंबन्धी तस्य कुप्वो षत्वमिति षत्वम्। अविद्यमानानि विशिष्टानि शोभमानानि चत्वारि यस्य सः अचतुरः। विचतुरः। सुचतुरः। 'अचतुरे'त्यादीना बहुव्रीहौ अचि निपात्यन्ते। त्रयश्चत्वारो वार्था ऽन्यपदार्थः। त्रिचतुराः। वृत्तिस्वाभाव्यात् सदिग्धेस्य वृत्तिः। चतुर्णा समीपे

उपचतुराः । 'सङ्ख्ययाव्ययासन्नादूराधिकसङ्ख्याः सङ्ख्येये' । अव्ययादीनि पूर्वपदानि संख्येयवाचीनि सङ्ख्यया समस्यन्तइति बहुव्रीहिः । चतुरो-च्प्रकरणे 'त्र्युपाभ्यां सुपनरख्यानमि'त्यच् समासान्तः । चात्वाल, यत उत्तरवेद्यर्थाः पांसवो ह्रियन्ते तदुच्यते । 'स्याचतिमृजेरालज्वालजालीयज'इति यथासङ्ख्यात् वालज् । चत्वरम् । 'छित्वरछत्वरे'ति ष्वरचि निपात्यते । उणादिवृत्तौ छद अपवारणइत्यस्य निपातनमुक्तम् । द्वितीयादिश्च पठ्यते । चदति । चदते इत्यादि ॥ ८५१ ॥

प्रोथृ पर्याप्तौ ॥ प्रोथति । पुप्रोथ । प्रोथिता । प्रोथते । इत्यादि । पुप्रोथिषति । पुप्रोथिषते । पोप्रोथ्यते । पोप्रोत्ति । प्रोथयति । अपुप्रोथत् । ऋदित्त्वान्नोपधाह्रस्वः । प्रोथदश्वोभयवसइत्यत्र प्रोथति सूदति शब्दइश्वइवायमग्निरिति भट्टभास्करः । अयमेवापप्रोथदुन्दुभे दुच्छुनाइत्यत्रापप्रोथत् । यमारभ्य दुच्छुनात् दुरवलिप्तात् उपसर्गस्य तकारः, प्रोथु पर्याप्तिगताविन्याह । तरे अपुप्रोथन कारणमिति । प्रोथः । 'हलश्चे'ति करणे घञ् ॥ ८५२ ॥

मिदृ मेदृ मेधाहिंसनयोः ॥ अयं पाठो दिवादीनाम् । मेदति । मिमेद । मेदिता । मेदिष्यति । मिमिदिषति । मिमेदिषति । मिदित्वा । मेदित्वा । मेमिद्यते । मेमेत्ति । मेदयति । अमिमेदत् । मेदतइत्यादि द्वितीयस्य तु मिमेदतुरित्यादौ क्ङितोरेकारश्रवणं विशेषः । क्षीरस्वामी धान्ताविमौ । भिदादिसूत्रे मेधाशब्दं व्युत्पादयन् न्यासकारो धान्तावाह । भोजराजस्तु मेधिं नानुमन्यते । यदाह । अङ्विधौ रखिलिखिसिधिमिथिगुहिभ्यो गुणश्चेति । कौमारश्चात्रैवानुकूलः । मेदनइति द्युतादौ ञिष्विदा स्नेहने गतः ॥ ८५४ ॥

मेधृ सङ्गमे च ॥ मेधति । मिमेध । मेधिता । मेधिष्यते इत्यादि । मेधृ सेचने । भिदादित्वादङ् । गृहमेधो देवतास्य गृहमेध्यम् । गृहमेधीयम् । 'द्यावापृथिवी'त्यादिना छयतौ ॥ ८५५ ॥

णिदृ णेदृ कुत्सासन्निकर्षयोः ॥ नेदतीत्यादि, मिदृमेदृवत् प्रणेदति । 'उपसर्गादि'ति णत्वम् । निन्दतीति कुत्सायां गतम् ॥ ८५७ ॥

शृधु मृधु उन्दने ॥ उन्दनं क्लेदनम् । शर्धति । शशर्ध । शशृधतुः । शर्धिता । शर्धते । शशृधे । इत्यादि । शिशर्धिषति । शरीशृध्यते । शरीशर्धि । हौ हेर्धिः । 'झषस्तथोर्धोऽधः' इति धत्वे जश्त्वे, लोटि हौ शरीशृद्धि । लङि तिपि अशरीशर्त् । 'रात्सस्ये'ति नियमात् न संयोगान्तलोपः । सिपि तु जश्त्वे 'दश्चे'ति वा रुत्वे 'रो रि लोपे 'ढ्रलोप'इति दीर्घे अशरीशा इत्यपि भवति । एवं रुग्रिकोरपि । शर्धयति । अशशर्धत् । अशीशृधत् । उदित्त्वादिट् । शर्धित्वा । शृद्धा । शृद्धः । एवं मर्धतीत्यादि । शृधेर्वृतादौ पाठः शब्दकुत्सायां क्रियाफलस्य अकर्तृगामित्वेपि आत्मनेपदार्थः । तथा 'वृद्भ्यः स्यसनो'रिति स्यसनोर्लुटि च क्रियाफलस्य कर्तृगामित्वेपि परस्मैपदार्थः । तथा 'पुषादिद्युताद्ली'त्यङर्थश्च । वृतादिश्च द्युताद्यन्तर्गणः । तथा 'न वृद्भ्यश्चतुर्भ्य'श्चेति स्यसनोः परस्मैपदइण्निषेधार्थश्च ॥ ८५९ ॥

बुधिर् बोधने ॥ बोधति । बुबोध । बोधिता । अबुधत् । अबोधीत् । 'इरितो वे'त्यङ् विकल्पेन । बोधते । बुबुधे । इत्यादि । क्षीरस्वामी तु बुधेत्यनिरितं पपाठ । बोधतीति ज्वलादिः परस्मैपदी अवगमने गतः । अस्य तशब्दे 'दीपजने'ति चिण् नेति अबोधिष्टेत्येव भवति । अत्र दैवादिकैर्नियात्मनेपदिभिरकर्मकैः साहचर्यात् तादृश एव बुधिर्गृह्यते । तथा 'बुधयुधे'त्यत्र द्रुधनशजनैरकर्मकैः साहचर्यान्नास्य संग्रहः । स्पष्टं चैतदेव तत्र वृत्तौ । तेन बोधयति बोधयते इति भवति ॥ ८६० ॥

उबुन्दिर् निशामने ॥ निशामनं वस्तुविज्ञानम् । बुन्दति । बुबुन्द । बुन्दिता । अबुन्दत् । अबुन्दीत् । बुबुन्दिषति । बोबुन्द्यते । बोबुन्ति । हौ ङित्त्वादनुनासिकलोपे बोबुद्धि । बुन्दते । बुबुन्दे इत्यादि । उदित्त्वात् क्त्वायामिड्विकल्पनात् । बुन्दित्वा । बुन्त्वा । निष्ठायां त्वचम् । नलोपे 'रदाभ्या'मिति निष्ठानत्वम् । बुद्गुदः । 'घञर्थे कप्रादीनां के द्वे भवत' इति द्विर्वचनम् । पृषोदरादित्वात् न हलादिशेषः ॥ ८६१ ॥

वेणृ गतिज्ञानचिन्तानिशामनवादित्रग्रहणेषु ॥ वादित्रग्रहणं नाम वादित्रस्य वाद्यभाण्डस्य वादनार्थं ग्रहणमिति क्षीरस्वामी । वेणति ।

विवेण । वेणिता । विवेणिषति । वेवेण्यते । वेवेण्टि । वेणयति । अविवेणत् । वेणते । विवेणे इत्यादि । वेणि. । वेणी । इन् । 'कृदिकारादक्तिन' इति ङीष्वा । उत माता महिषमन्ववेनम् इत्यत्र भाष्यकारास्तवर्गपञ्चमान्तममु पेठुः ॥ ८६२ ॥

खनु अवदारणे ॥ खनति । चखान । चख्नतुः । 'गमहने'त्यजादावुपधालोपः । तस्य 'द्विर्वचनेऽची'ति स्थानिवत्त्वात् द्विर्वचनम् । खनिता । खनिष्यति । अखनत् । खनेत् । खन्यात् । खायात् । 'जनसनखनां सञ्झलोः' 'ये विभाषे'त्यात्वम् । धातुपारायणे तु 'लोपो यी'तिवत् 'ये विभाषे'ति वर्णमात्रे निर्दिष्टव्ये य इत्यत्वतो निर्देशादिदमात्व यग्यङोरेव न तु यासुटीत्युक्तम् । अखनीत् । अखानीत् । चिखनिषति । चङ्खन्यते । चाखायते । चङ्खन्ति । चङ्खातः । 'अनुनासिकस्ये'ति दीर्घं परत्वात् बाधित्वा 'जनसनखनां'मित्यात्वं भवति । तत्र झल्ग्रहणमनोत्यर्थं तस्यैव झलादेः सनः सम्भवात्, तेन चिखनिषतीत्यत्रात्वाभावः । खानयति । अचीखनत् । खनते । चख्ने इत्यादि । खेयम् । 'ई च खनः' इति क्यपि तत्संनियोगेन ईकारेऽन्तादेशे आद्गुणः । इइ इति प्रश्लेषेणेकारद्वय विधीयते । एकस्मिन्विधीयमाने 'ये विभाषे'त्यात्वाभावपक्षे सावकाशोऽसौ परेणान्तरङ्गेण चात्वेन बाध्येत, यतो हि यकारादौ बुद्धिस्थ एव विधानादन्तरङ्गमात्वम्, ईकारः, क्यप्संनियोगेन विधानात् बहिरङ्गः । यदा तु 'ये विभाषे'ति परसप्तमी तदात्वमेव बहिरङ्ग, मीत्व तु क्यप्संनियोगेनेत्यन्तरङ्गमिति नार्थः प्रश्लेषेणात्वबाधनार्थेन, एवं च सूत्रेपि ह्रस्व एव पठितव्यः । नन्वेवमेकादेशस्य 'षत्वतुकोरसिद्ध'इत्यसिद्धत्वात् ह्रस्वाश्रयस्तुक् स्यात्, नैतत् । 'पदान्तपदाद्योरेकादेशोऽसिद्ध' इत्येव तत्र व्यवस्थापनात् । खनकः । खनकी । 'शिल्पिनि ष्वुन्' । तत्र च 'नृतिखनिरञ्जिभ्य' इति परिगण्यते । परितः खाता, परिखा । 'अन्येष्वपि दृश्यत'इति डः । खायते अनेनेति खनित्रम् । 'अर्ति'त्यादिना करणे इत्रः । खात्वा । खनित्वा । उदित्त्वादनिट्पक्षे झलादिक्त्परत्वात् पूर्ववदात्वम् । निखाय । 'ये विभाषे'ति आत्व वा । खातः । 'यस्य विभाषे'त्यनिट्त्वम् । खन्यतेऽनेन अत्रेति वा

खनः । 'खनो घ चे'ति करणाधिकरणयोर्घः । चकारात् घञि आखानः । आखः । डो वक्तव्य इति डः । आखरः । डरो वक्तव्य इति डरः । आखनिकः । इको वक्तव्य इतीकः । आखनिकवकः । इकवको वक्तव्य इति इकवकः । आखादयः खनित्रवचनाः । परिखा भवेदस्मिन्नस्य वा पारिखेयं स्थलम् । 'परिखाया ढञि'ति प्रथमान्तात् सम्भावनोपाधिकात् अस्यास्मिन्नित्यर्थे ढञ् । आखनतीत्याखुः । आङ्परयोःखनिशृभ्या डिदिति उप्रत्यये डित्वाट्टिलोपः । मुख, डित् खनो मुट् चोदात्त इत्य चप्रत्यये डित्वाट्टिलोपः, धातोर्मुडागमश्च । मुखे भव. मुख्यम् । 'दिगा दभ्यो यदि'ति यत्प्रत्यय. । इह पाठोऽशरीरावयवार्थः । शरीरावयवस्य तु 'शरीरावयवाच्च'दित्येव सिद्धः । मुखमिव मुख्या । 'शाखादिभ्यो य' इति भवार्थे यः । मुखतो भव मुखतीयम् । 'मुखपार्श्वतसोर्लोप' इति गहादि-पाठाच्छप्रत्यये सलोपो 'यस्ये'ति लोपः । परिमुखं भवं पारिमुख्यम् । 'अव्ययीभावाच्चे'ति यः । तत्र हि 'परिमुखादिभ्य उपसंख्यानमि'ति वार्त्तिक, तेन परिमुखादेरेवाव्ययीभावादयं प्रत्ययः । परिमुखं वर्त्तते पारिमुखिकः सेवकः । 'परिमुखं चे'ति द्वितीयान्तात् अस्माद्वर्तते इत्यस्मिन्नित्यर्थे ठक् । मुखस्य सादृश्य यथामुख, प्रतिबिम्बम् । सम मुख समुखम् । समशब्दः सर्वपर्यायः । यथामुख दर्शनः यथामुखीनः । आदर्शादिः । एव समुखस्य दर्शनः समुखीनः । दर्शन इत्यधिकरणे ल्युट् । 'यथामुखसमुखस्य दर्श-न'इति षष्ठ्यन्ताभ्यामाभ्यां दर्शनइत्यर्थे खः । अत एव सादृश्येपि निर्दे-शात् यथामुखमित्यव्ययीभावः । तथा समोन्त्यलोपश्च । अयं च लोपः प्रत्ययनियोगेनेति केवलो न प्रयोगार्ह इति व्याख्यातारः । यथामुखीना सीताया इति भट्टिप्रयोगश्चिन्त्यः । गौरमुखा नाम का चित्, 'नखमुखात् संज्ञाया'मिति स्वाङ्गलक्षणस्य ङीषो निषेधात् टाबेव । असंज्ञाया तु सुमुखी सुमुखा इत्युभय भवति ॥ ८६३ ॥

चीवृ आदानसंवरणयोः ॥ चीवति । चिचीव । चीविता । चिचीविषति । चेचीव्यते । चीवयति । अचिचीवत् । चीवते । चिचीवे । इत्यादि । ऊद्गावित्वान्नास्य यङ्लुगस्ति । अनुदिदित्येके । चीवरम् ।

'छित्वर'त्यादिना वरचि वलोपः । चिनोतेर्वा निपातनम् । संचीवरयते भिक्षुः । चीवरमर्जयति परिधत्तइति वार्थः । 'पुच्छभाण्डचीवराण्णि-ङि'ति णिङ् । तत्र चीवरादर्जने परिधाने चेति वृत्तिः । अयं चुरादौ च ॥ ८६४ ॥

चायृ पूजानिशामनयोः ॥ चायति । चचाय । चायिता । चिचायिषति । चेकीयते । 'चायः की'ति यङ्यङ्लुकोः कीभावः । दीर्घोच्चारणं यङ्लुगर्थमिति स्थितम् । चेकयीति । चेकेति । चेकीतः । चाययति । अचचायत् । चायते । चचाये । इत्यादि । अचायिष्ट । चायित्वा । अपचितः । 'अपचितश्चे'ति निष्ठायामनिट्त्वं चिभावश्च पक्षे निपात्यते, अन्यदा अपचायितम् । 'क्तिनि नित्यं चिभावो वक्तव्यः' । अपचितिः । चनः । अन्नम् । चायतेर्ह्रस्वश्चेत्यसुनि नुडागमे ह्रस्वश्च, यलोपः ॥ ८६५ ॥

व्यय गतौ ॥ व्ययति । वव्याय । व्ययिता । व्याययति । अविव्ययत् । व्ययते । वव्यये इत्यादि । व्ययतइति वित्तत्यागे नित्यमात्मनेपदी । अयं चुरादावदन्तः ॥ ८६६ ॥

दाशृ दाने ॥ दाशति । ददाश । दाशिता । दिदाशिषति । दादाश्यते । दादाष्टि । दाशयति । अददाशत् । दाशते । ददाशे इत्यादि । दाश्वान्साह्वान्' इति क्वसावद्वित्वमनिट्त्वं च निपात्यते । दाशतेऽस्मै इति दाशः । 'दाशगोघ्नौ सम्प्रदान'इति अचि निपात्यते । पुरो दाश्यतइति पुरोडाशः । तत्सहचरितग्रन्थोऽपि पुरोडाशः । पुरोडाशस्य संस्कारको मखस्य शिरोऽसि इत्यादि मन्त्रः । पौरोडाशः । पुरोडाशस्य पौरोडाशस्य च व्याख्यानं तत्र भवं वा पुरोडाशिकं, पौरोडाशिकम् । 'पौरोडाशपुरोडाशात्ष्ठन्' इति प्रत्येकं षष्ठ्यन्ताभ्यामाभ्यां भवव्याख्यानयोरर्थयोष्ठन् । अत्रैव निर्देशात् दाशेर्दकारस्य डकारः । अस्मादनन्तरं स्वामिकाश्यपावयतिं पठतः । तदनार्षं प्रतीयते । यदाह । 'उपसर्गस्यायता'वित्यत्र हरदत्तः । अयतिरनुदात्तेदिति ॥ ८६७ ॥

भेषृ भये ॥ क्वचित् गताविति पठ्यते । भेषति । बिभेष । भेषिता । बिभेषिषति । बेभेष्टि । भेषयति । अबिभेषत् । भेषते । बिभेषे इत्यादि ॥ ८६८ ॥

भ्रेषृ भ्लेषृ गतौ ॥ भ्रेषतीत्यादि पूर्ववत् । भ्रेषः ॥ ८७० ॥

अस गतिदीप्त्यादानेषु ॥ असति । आस । असिता । असिसिषति । आसयति । आसिसत् । आसते । आसे इत्यादि । अष इत्येकइति क्षीरस्वामिमैत्रेयौ । शाकटायनस्तूभावपि ॥ ८७१ ॥

स्पश बाधनस्पर्शनयोः ॥ स्पर्शनं ग्रथनमिति स्वामी । ग्रहणश्लेषयोरयं चुरादौ । स्पशति । पस्पाश । स्पशिता । अस्पाशीत् । अस्पशीत् । पिस्पशिषति । पास्पश्यते । पास्पष्टि । पस्पशा । यङ्लुगन्तादपि टाप्, संज्ञापूर्वको विधिरनित्य इति नाभ्यासस्य दीर्घः । स्पाशयति । अपस्पशत् । 'अत्स्मृदृत्वरे'त्यादिनाभ्यासस्यात्वम् । स्पशते । पस्पशे इत्यादि । अत्र स्वामी पष इत्येकइति, तेन पाषण्डः, पाषाण, इत्याह । दुर्गशाकटानयोरप्ययमेव पक्ष, अनयोः पाठे प्रतिस्पशो विसृजन्तूर्णितम्, यतो व्रतानि पस्पशे । अपमगश्च पस्पशः । शब्दविद्येव नो भाति राजनीतिरपस्पशेत्यादिप्रयोगाननुगुणः । पाषण्डपाषाणप्रयोगास्तु 'अनुपसर्गादि'ति कथादेर्भविष्यति । यद्वा पष बन्धनइति युजादेः । अस्ति चाय युजादौ, यद्वक्ष्यति चुरादौ मैत्रेयः पष बन्धनइति युजादावेके पठन्तीति । अत्र स्वामिकाश्यपादयः । पाशादिदर्शनात् पशेति पठन्ति । पाशादयोऽपि चौरादिकेन खण्डनार्थेनापि सिद्धाः । पशुशब्दस्तु पशेर्व्युत्पादयिष्यते । पसेति दन्त्यान्तस्सौत्रो धातुः । तस्य पसतीत्यादि । पशेर्यङ्लुकि 'जपजभे'त्यादिना अभ्यासस्य नुकि पपश्यते । पंपशीतीत्यादि । पंपश्यतीति कण्ड्वादे । दुःखायतइत्यर्थः ॥ ८७२ ॥

लष कान्तौ ॥ कान्तिरिच्छा । लषति । ललाष । अलषीत् । अलाषीत् । लिलषिषति । लालष्यते । लालष्टि । लाषयति । अलीलषत् । लषते । लेषे इत्यादि । 'वा भ्राशे'त्यादिना शब्विषये वा श्यनि । लष्यति, लष्यते । लषणः । 'जुचङ्क्रम्येत्या'दिना युच् । लाषुकः । 'लषपते'त्यादि.

व्यमि'ति क्यप् । तदभावे ण्यति गोह्यं, काकेभ्यो गुह्यन्तइति काकगुहास्तिलाः । 'मूलविभुजादिभ्य उपसंख्यानमि'ति कः । गूहतेऽनयेति वा गुहा । गिर्योषध्योरित्यङ् । गूढिरन्यत्र । गूहित्वा । गूढ्वा । गूढः ॥

हिक्कादय उदात्ताः स्वरितेतः ॥ ८८० ॥

अथाजन्तानुभयपदिन आह ॥

श्रिञ् सेवायाम् ॥ उदात्तः । श्रयति । शिश्राय । शिश्रियतुः । शिश्रियुः । शिश्रयिथ । शिश्राय । शिश्रय । शिश्रियिव । अचि इयादेशः । अन्यत्र वृद्धिगुणौ अत्र असंयोगाल्लिट् कि'दिति लिटः कित्त्वात् 'श्युकः किती'ति प्राप्तस्येटो निषेधस्य क्रादिनियमेन बाधः । श्रयिता । श्रयिष्यति । श्रयतु । अश्रयत् । आशिषि श्रीयात् । अकृत्सार्वधातुकयो'रिति दीर्घः । आशिश्रियत् । 'णिश्री'ति चङ् । लघूपधगुणादन्तरङ्गत्वादियङ् । श्रयते । शिश्रिये इत्यादि । शिश्रयिषति । शिश्रीषति । 'सनीवन्तर्द्धे'त्यादिना इड्विकल्पः । अनिट्पक्षे 'अज्झने'ति दीर्घः । 'इको झलि'ति कित्त्वादगुणत्व, शेश्रीयते । शेश्रयीति । शेश्रेति । श्राययति । अशिश्रयत् । वृद्ध्यायौ, णौ कृतस्य स्थानिवत्त्वात् श्रीशब्दस्य द्विर्वचनम् । श्रायः । 'श्रिणीभुवोऽनुपसर्गे'इति घञ् । उच्छ्रायः । 'उदि श्रयतियौतिपूद्रुव'इति घञ् । कथं पतनान्ताः समुच्छ्रया इति, 'कृत्यल्युटो बहुल'मिति वचनात्, एवं च उदिश्रयतीति तिपा निर्देशात् यङ्लुगन्तात् उच्छ्रेय इति अजेव । विश्रयी । 'जिदृक्षिविश्री'ति नाच्छीलिक इनिः । श्रित्वा । श्रितः । 'श्युकः किती'ति इण्निषेधः । कष्टश्रितः । 'द्वितीया श्रिते'ति समासः । श्रेणिः । 'वहिश्रिश्रुयुद्रुग्लाहात्वरिभ्यो निदि'ति निः । श्रेणीकृताः । 'श्रेण्यादयः कृतादि'भिरिति तत्पुरुषः । 'श्रेण्यादिषु च्व्यर्थवचनमि'ति तत्र वार्त्तिकम् । 'क्विब्वचिप्रच्छ्यायतस्तुकटप्रुजुश्रीणां दीर्घो ऽसंप्रसारणं च' इति क्विब्दीर्घौ । इयङ्स्थानित्वात्, नदीत्वाभावात् हे श्रीरित्यत्र 'अम्बार्थनद्योर्ह्रस्व' इति न ह्रस्वः । ङिद्वचनेषु 'ङिति ह्रस्वश्चे'ति पक्षे नदीत्वादाटि ङेश्चामि श्रियै । श्रियाः । श्रियामित्यादि । अन्यदेयङि श्रिये, श्रियः । श्रियि । षष्ठीबहुवचने च 'वामी'ति नदीत्वे नुटि श्रीणां, श्रियाम् । श्रिमन्यं ब्राह्मणकुलम् ।

भाष्यकारवचनात् श्रीशब्दस्य ह्रस्वः मुमभावश्च । श्मश्रु । 'श्मनि श्रयतेर्डुन्' इति श्मन्शब्दउपपदे डुन्, टिलोपः, श्मश्रुणः, पामादित्वान्नः ॥ ८८१ ॥

भृञ् भरणे ॥ एतदादयो नयत्यन्ता अनुदात्ता उभयपदिनः । भरति । बभार । बभ्रतुः । बभर्थ । बभृव । क्रादिनियमादिडभावः । पिति गुणः, वृद्धिः, अन्यत्राजादौ यण् । भर्त्ता । भरिष्यति । 'ऋद्धनोः स्ये' इतीट् । भरतु । अभरत् । भरेत् । आशिषि भ्रियात् । 'रिङ् शयग्लिङ्क्षु' इति रिङादेशः । रीङि प्रकृते रिङ्ग्रहणात् अकृत्सार्वधातुकयोर्न दीर्घः । अभार्षीत् । भरते । बभ्रे । भर्त्तासे । भरिष्यते । भरताम् । अभरत् । भरेत । आशिषि भृषीष्ट । 'उश्चे'ति आत्मनेपदविषययोर्झलाद्योर्लिङ्सिचोः कित्त्वान्न गुणः । अभृत । 'ह्रस्वादङ्गा'दिति सिचो लोपः । सिज्ञाश्रयो गुण 'उश्चे'ति कित्त्वान्न भवति । बिभरिषति । 'सनीवन्ते'त्यादिना वेट् । इडभावे सनो झलादित्वा'दिको झलि'ति कित्त्वे 'अज्झनगमामि'ति दीर्घे 'उदोष्ठ्यपूर्वस्ये'ति उत्वरपरत्वयो'र्हलि चे'ति दीर्घे बुभूर्षति । बेभ्रीयते । 'रीङृत' इति परत्वाद्रीङि कृते द्विर्वचन, बर्भर्त्ति । लोटि हेर्ङित्त्वादगुणत्वे बर्भृहि । लङि 'हल्ङ्याबि'ति लोपे अबर्भः । एव रिग्रीकोरपि । 'सनीवन्ते'त्यत्र भरेति शपा निर्देशात् यङ्लुकि नेड्विकल्प इति बर्भरिषति इत्येवं भवति । अत एव शपा निर्देशात् आचार्याः शब्विकरण नेच्छन्तीति मतं प्रत्युक्तम् । तथा च वर्द्धमानसुधाकरशिवस्वाम्यादयो भरेति शपा निर्देशाद्भृञ् भरणइति भौवादिकस्य ग्रहणमिच्छन्ति । भारयति । अबीभरत् । भर्त्ता । भर्त्तुर्भावकर्मणी, भार्त्रम् । उद्गात्रादित्वादञ् । ग्रामभर्त्ता । याजकादित्वात् समासः । जारं भरति इति जारभरः । जारभरेति पचादिपाठादच् । भृत्यो भरणीयः । 'भृञोसञ्ज्ञाया'मिति क्यपि तुक् । सपूर्वाद् विभाषेत्युक्तत्वात् ण्यदपि भवतीति सभृत्यः सभार्य इति क्यब्ण्यतौ भवतः । संज्ञाया ण्यदेव भार्येति, पाणिगृहीतीत्यर्थः ः सभार्यं, गवामयनो हविर्विशेषः । भृत्या भरणविशेषः । 'सञ्ज्ञाया समजे'त्यादिना स्त्रिया भावे क्यप्, 'कर्मणि भृता'विति निर्देशात् भृतिरिति क्तिन् भवति । आत्मम्भरिः । 'फलेग्रहिरात्मम्भरिश्चे'ति इन्नन्ययान्तो निपातितः । चकारात् कुक्षिम्भरिश्चेति

उद्यमने तु भारहार इत्येव । कवचहरः । 'वयसि चे'ति कर्मोपपदात् हरतेरच् वयसि गम्यमाने । कालकृतशरीरावस्था यौवनादिर्वयः । उद्यमनार्थोयमारम्भः । उद्यमन क्रियमाणं संभाव्यमानं वा वयो गमयतीति वृत्तिः । पुष्पाहरः । 'आङि ताच्छील्य'इति कर्मोपपदात् आङुपसृष्टात् ताच्छील्येऽच् प्रत्ययः । दृतिहरिः पशुः । नाथहरिः पशुः । 'हरतेर्दृतिनाथयोः पशा'विति दृतिनाथयोः कर्मणोरुपपदयोः हृञः पशौ कर्त्तरि इन् प्रत्ययः । सह्रियन्तेऽनेनात्रेति वा सहारः । अध्यायन्यायोद्यावसंहाराधारावायाश्चे'ति करणाधिकरणयोर्घञ् निपात्यते । हरणं हारा, काराबन्धनइति भिदादिपाठादङ् गुणो दीर्घत्वं च । आह्रियन्तेस्माद्रस इत्याहारः । 'अकर्तरि च कारक'इति घञ् । हरिः । इन्प्रत्ययः । प्रहिः कूपः । प्रहरतेः कूप इति प्रोपसृष्टादस्मादिकारप्रत्ययः । तत्र डिदित्यनुवृत्तेः टिलोपः । हृदयम् । 'वृहृञोर्युक्दुकौ चे'ति कयप् प्रत्ययो दुगागमः । हृदयस्य प्रिय, हृद्यम्, 'हृदयस्य प्रिय' इति षष्ठ्यन्ताद्यत्, हृदयस्य बन्धनो हृद्यो मन्त्रः, 'बन्धने चर्षा'विति षष्ठ्यन्तात् यत् । बध्यतेऽनेनेति बन्धनम् । ऋषिर्वेदः । हृदये भव हार्दम् । 'प्राग्दीव्यतोण्', हृदयं लिखतीति. हृल्लेखः । हृदय्यम् । ब्राह्मणादिपाठात् ष्यञ् । एवं दौहृदय्यम् । हृदयस्य लासो हृल्लासः । 'हृदयस्य हृल्लेखयदण्लासेष्वि'ति हृदादेशः । तत्र वृत्तौ लेखेण्यणन्तस्य ग्रहणं घञि हृदयलेख इति । हृदयस्य शोको हृच्छोकः, हृदयशोकः । रोगे, हृद्रोगः । हृदयरोगः । 'वा शोकष्यञ्रोगेष्विति'हृदादेशविकल्पः । ष्यञि हृद्भावपक्षे 'हृद्भगसिन्ध्वन्ते पूर्वपदस्य चे'त्युभयपदवृद्धिः । सुहृत् । दुर्हृत् । 'सुहृद्दुर्हृदौ मित्रामित्रयो'रिति बहुव्रीहौ हृदयस्य हृदादेशः समासान्तः । मित्रामित्राभ्यामन्यत्र सुहृदयो दुर्हृदय इति भवति । सुहृदो भावकर्म्मणी सुहृदयस्य, सौहार्दम् । 'हायनान्तयुवादिभ्योऽणि'ति अण्, 'हृद्भगे'त्युभयपदवृद्धिः । 'हृदयस्य हृल्लेखे'त्यादिना हृदयस्य हृद्भावः । हृदयस्य भावकर्मणी हार्दम् । युवादिषु हृदयस्य हृद् इति पाठात् अणि हृद्भावः । हृदयमस्यास्तीति हृदयालुः । 'हृदयाच्चालुरन्यतरस्या'मिति मत्वर्थीय आलुच् । तदभावद्-

निठनौ । हृदयी हृदयिक इति । हरिणः, श्यास्त्याहृञ्विभ्य इनच् इतीनच् । हरिणी । 'जातेरस्त्रीविषयादि'ति ङीष् । हरेणुः । गन्धद्रव्यविशेषः । 'कृहृभ्यामेणु'रिति एणुः प्रत्ययः । हरितः । हृश्याभ्या तन्निति तन् । हरिणी ब्राह्मणी । 'वर्णादनुदात्तात्तोपधादि'ति स्त्रिया वा ङीप् तकारस्य नकारः । अयमितनो नित्त्वादुदात्तादिस्तकारोपधश्च भवति । ङीबभावे टापि हरिता ब्राह्मणी । हरित् । 'हृसृरुहियुषिभ्य इति रिति इतिप्रत्ययः ॥ ८८३ ॥

धृञ् धारणे ॥ धरतीत्यादि भरतिवत् । 'धारेरुत्तमर्ण इत्यत्र धृञ् अनवस्थाने इति तौदादिकस्य ग्रहणमिति न्यासपदमञ्जर्यादिषु । 'इङ्धार्योरि'त्यत्राप्यस्येति न्यासे, अध्यायन्याये ति निपातनमप्यस्येति वृत्तिकारेण दर्शितम् । धारयतीति धारयः । 'अनुपसर्गाल्लिम्पविन्दे'त्यादिना शे शपि गुणायौ । वसु धारयतीति वसुन्धरा । 'सञ्ज्ञाया भृतृवृजी'ति खचि 'खचि ह्रस्वश्चे'ति ह्रस्वत्वे मुमागमः । धारा । धारा प्रपातनइति भिदादिपाठादङि गुणो दीर्घत्वं च । द्रवद्रव्यनिपातन धारेति न्यासे खड्गधारादावुपमानात् प्रयोगः । धर्मः । 'अर्तिस्तुसुहुसृधृक्षिक्षुभायावापदियक्षिनीभ्यो मनि'ति मन् । धर्मं चरति धार्मिकः । 'धर्मं चरती'ति द्वितीयान्तात् चरतीत्यर्थे ठक् । तत्र 'अधर्माच्चेति वक्तव्य'मित्युक्तत्वात् आधर्मिकोऽपि । धर्मेण प्राप्यं, धर्म्यम् । 'नौवयोधर्मे'ति तृतीयान्तात् प्राप्यर्थे यत्, धर्मादनपेतमपि धर्म्यम् । 'धर्मपथ्यर्थे'ति यत् । कल्याणो धर्मो ऽस्येति कल्याणधर्मा । 'धर्मादनिच् केवलादि'ति धर्मान्तात् बहुव्रीहेरनिच् । अत्र केवलादिति बहुव्रीह्याक्षिप्तस्य पूर्वपदस्य विशेषणत्वेन पूर्वपदीभवतः केवलादन्यनिरपेक्षात्परो यो धर्मशब्दस्तदन्तात् बहुव्रीहेरिति सूत्रार्थः । तेन परमस्वोधर्मोऽस्य परमस्वधर्म इति त्रिपदे बहुव्रीहावनिच् न भवति । अत्रान्यपदापेक्षयैव स्वशब्दः पूर्वपदं भवति । 'सर्वनामसङ्ख्ययोरुपसङ्ख्यानमि'ति स्वशब्दस्य पूर्वनिपातो न भवति आहिताग्न्यादेराकृतिगणत्वात् । यदा स्वो धर्मः स्वधर्मः । परमः स्वधर्मोऽस्येति बहुव्रीहिस्तदा यद्यपि पूर्वपदं केवलं भवति तथापि ततः परो न धर्मशब्द इति समासान्ताभावः । निवृत्तधर्मा हीत्यत्र निवृत्तिशब्दो बहुव्रीहेः पूर्वपदं भवत्यन्यमपेक्षतइति केवलादस्मात् परो धर्म-

द्रै स्वप्ने ॥

ध्रै तृप्तौ ॥

ध्यै चिन्तायाम् ॥ द्रायति । ध्रायति । ध्यायति । इत्यादि ग्लायतिवत् । निद्रालुः । 'स्पृहिगृही'त्यालुचि द्रा कुत्सायां गता-वित्यदादिकस्य ग्रहणमिति वृत्तौ । निद्रा । 'आतश्चोपसर्ग'इत्यङ् । अनिद्रो निद्रावान् भवति, निद्रायते । 'लोहितादिडाज्भ्यः क्य-षि'ति लोहितादेराकृतिगणत्वादस्मात् रच्यर्थे भवत्यर्थे वा क्यष् । 'वा क्यष' इति पक्षे लङ्, निद्राशब्दो वृत्तिविषये तद्वति वर्तते इति न्यासकैयटपदमञ्जर्यादिषु । निद्रातीति निद्रः । 'आतश्चोपसर्गे' इति कर्तरि कः, अस्माद्वा, उक्त चैतत् द्रा कुत्सायां गतावित्यत्र गणे । निद्राणः । अकर्मकत्वात् कर्तरि निष्ठा, 'संयोगादे'रिति निष्ठानत्वम् । निद्रित इति तारकादेराकृतिगणत्वादिनच् । सुष्ठु ध्यायतीति ध्यायतेः क्विप्प्रसारणयोः 'सम्प्रसारणाच्चे'ति परपूर्वत्वे 'हल'इति दीर्घः । सुधीः । सुधियावित्यादौ 'एरनेकाच' इति यणो 'न भूसुधियो'रिति निषेधात् 'अचि श्नुधात्वि'ति इयङ् । ध्यातः । 'संयोगादे'रिति निष्ठानत्वं 'न ध्याख्ये'ति निषिध्यते । धीवा, 'ध्याप्योः संप्रसारणं चे'ति क्वनिपि सम्प्रसा-रणं पूर्वत्व दीर्घत्व, स्त्रियां 'वनो र चे'ति ङीप् । धीवरी ॥ ८९२ ॥

रै शब्दे ॥ रायति । ररौ । रातेत्यादि पूर्ववत् । कीति रायति इति कीरः । 'सुपि स्थ'इति अत्र सुपीति योगविभागात्कः । एवमीदृशा अन्येपि निर्वाह्याः । रा दानइत्यदादौ ॥ ८९३ ॥

स्त्यै ष्ट्यै शब्दसंघातयोः ॥ एको दन्त्यादिः । परो मूर्द्धन्यादिः । षोपदेशलक्षणपर्युदासमक्क एव गृह्यते उभयोः पाठवैयर्थ्यप्रसङ्गात् । तत्रा-र्थयोर्यथासंख्य न भवति पृथग् निर्देशात् । स्त्यायति । तस्त्यावित्यादि, ग्लैवत् । षोपदेशस्यापि 'धात्वादेः षः स' इदमेव रूपम् । प्रयोजनं तु तिष्ट्यासनि । अतिष्ट्यपदित्यादावादेशसकारत्वात् षत्वम् । यत्तु मैत्रेयस-म्मताकारकाश्यपादिभिरुक्तं पुनः पाठफलं 'धात्वादेः षः स' इति सत्वा-भाव इति तत् अजदन्त्यपराः सादयः षोपदेशा इति लक्षणस्याव्याप्ति-

सङ्गादुपेक्ष्यम् । पाठे षोपदेशानां प्रयोगे सादित्वादव्याप्त्यपरत्वं हि लक्षणं, व्यापकेन च नाम लक्षणेन भवितव्यम् । प्रस्तीतः । प्रस्तीतवान् । प्रस्तीमवान् । 'स्त्यः प्रपूर्वस्ये'ति निष्ठायां संप्रसारणे परःर्वत्वदीर्घत्वयोः 'प्रस्त्योऽन्यतरस्यामि'ति प्रोपसृष्टादस्मात्परायां निष्ठायास्तकारस्य पक्षे मकारः । मकाराभावे 'संयोगादेरि'ति निष्ठानत्वस्य 'स्त्य'इति संप्रसारणे पूर्वत्रासिद्धत्वात् कृते च तस्मिन् यण्वत्त्वाकारान्तत्वयोरभावादप्रसङ्गः । प्रस्त्य इति लघु वक्तव्ये 'स्त्यः प्रपूर्वस्ये'ति वचनं प्रशब्दो यस्माद्धातूपसर्गसमुदायात्पूर्वं इत्याश्रयणार्थम् । तेन प्रसंस्तीत इत्यादावन्योपसर्गव्यवधानेऽपि संप्रसारणं भवति । मत्वं तु 'प्रस्त्य' इति निर्देशाद्व्यवहिते न भवति । स्त्यानः, संस्त्यान इत्यादौ प्रस्त्याभावान्न संप्रसारणं, नापि मत्वं, संप्रसारणविधौ षोपदेशोऽप्ययं स्त्यायो गृह्यत इति वृत्त्यादौ, तेन तस्यापि निष्ठायामुक्तान्येवोदाहरणानि द्रष्टव्यानि । ये ऽस्य सत्वं नेच्छन्ति तेषां स्त्यारूपमात्रयोर्द्वयोर्ग्रह इति वृत्त्यादिमहाग्रन्थविरोधश्च । न च स्त्यस्य प्रकृतिवदनुकरणमिति स्त्यारूपत्वं यतस्तैः प्रकृतावेव सत्वं नाभ्युपगम्यते । स्त्यायति संहन्यते ऽस्यां गर्भ इति स्त्री । संस्त्याने स्त्यायतेर्ड्रडिति ड्रटि डित्त्वाट्टिलोपे वलि लोपे च टित्त्वान्ङीप् । अजादौ 'स्त्रियाः' इतीयङि स्त्रियावित्यादि । अमशसोस्तु 'वाम्शसो'रिति इयङ्विकल्पनात् स्त्रीम् । स्त्रियम् । स्त्रियः स्त्रीरिति प्रथमयोः पूर्वसवर्णदीर्घो भवति । 'नेयङुवङि'त्यत्र अस्त्रीति निषेधादियङ्स्थानत्वेऽपि नदीत्वात् स्त्रियै स्त्रियामित्यत्र 'आण् नद्या'इति ङिद्वचनस्याडागमो 'ङेराम्नी'ति ङेराम् भवति । तथा स्त्रीणामित्यत्र 'ह्रस्वनद्या'ति नुड् भवति । हे स्त्रि इत्यत्र 'अम्बार्थनद्यो'रिति ह्रस्वो भवति । स्त्रियाः सम्बन्धि स्त्रैणम् । 'स्त्रीपुंसाभ्यां नञ्स्नञौ भवनात्' । आभ्यां यथासंख्यं प्राग्भवार्थेष्वर्थेषु तत्तदर्थानुकूलसमर्थविभक्तिभ्यां नञ्स्नञाविति नञ् । स्त्रीत्वम्, स्त्रीता । 'आ च त्वादि'ति चकारेण त्वतलोरभ्यनुज्ञानात् त्वतलौ । स्त्रीवन्मा भूमेति भाष्यकारप्रयोगाद्वृत्तिस्साधुः । 'स्त्री पुंवच्चे'त्यादिनिर्देशस्य प्रयोगापेक्षत्वाद्वा । अत्र विषये बाधकान्येव निपातनानीति नञ्स्नञौ बाध्येते । यथा सर्वनामेत्यत्र णत्वम् ।

परस्त्रिया अपत्य, पारशवम् । परस्त्री परशु चेति शिवादिपाठादपत्ये परशुभावश्च । पारस्त्रैणेयम् । 'कल्याण्यादीनामिनङ्'ति ढकि एयादेशोन्त्यस्येनङ् । अनुशतिकादित्वादुभयपदवृद्धिः, कुस्त्रिया भावः कर्म वा कौस्त्रम् । दुवादित्वादण् । एव दौस्त्रम् । स्त्रीतरा, स्त्रितरा । 'नद्याः शेषस्ये'ति ह्रस्वो वा । सूत्रार्थश्च ज्वलत्यादौ द्रष्टव्यः[1] । स्तूपः । उच्छ्रायः । 'स्त्यः संप्रसारणमुच्चे' ति पप्रत्ययः, प्रसारणपूर्वत्वे तस्य चेकारस्य उकारो दीर्घ. । ऊच्चेन्येव वक्तव्ये दीर्घविधान ह्रस्वस्यापि श्रवणार्थं, तेन स्तुप इत्यपि भवति ॥ ८९५ ॥

खै खदने ॥ खदन स्थैर्यं हिसा च । खायति । चखौ । खातेत्यादि ॥ ८९६ ॥

क्षै जै षै क्षये ॥ क्षायति । चक्षौ । क्षातेत्यादि । क्षामः । क्षामवान् । 'क्षायो म' इति निष्ठातो म । णौ क्षपयति । अय मिदिति घटादौ ध्वननतावुक्तम् । एवं जायति, जजौ, जाता । सायति । ससौ । साता । 'घुमास्येत्य'त्र साग्रहणेन स्यतेर्ग्रहणं नास्येति आशीर्लिङि एत्वाभावात्सायादिति भवति । अत एव सासायते सायतइत्यादौ 'घुमास्येति' ईत्व न भवति । तथा च तत्र न्यासे । गामादाग्रहणेष्वविशेषमुक्त्वा षो अन्तकर्मणीत्ययमेवोपात्तः । तथा च तन्त्रान्तरे । पास्यति जास्यति सास्यतीति स्पष्ट षो अन्तकर्मणीत्ययमेव निर्दिश्यते । 'विभाषा घ्राधेट्शाच्छासः' इति सिचो लुग्विधावपि श्यन्विकरणाभ्यां साहचर्यात्स्यतिरेव गृह्यते इत्यस्मान्सिचि सति च असासीदित्येव भवति । सिषासति । आदेशसकारत्वात्षत्वम् । साययति । असीषयत् । 'शाच्छासे'ति युग्विधावपि श्यन्विकरणाभ्या साहचर्यात् स्यतिरेव गृह्यते इति अस्य युगेव भवति । केचिदमुं दन्त्यादि पठन्ति । तत् षोपदेशलक्षणविरोधादुपेक्ष्यम् ॥ ८९९ ॥

कै गै शब्दे ॥ इह शब्दः शब्दविशेषः । उक्तं ह्येवं स्वामिना ।

१ व्याख्यात इति ञ पु० ।

कायति । चकौ । काता । काकः । इणर्नाकेति कन् । गायति । जगौ । गातेत्यादि । 'घुमास्थे'त्यत्र गामादाग्रहणेष्वविशेष इति लाक्षणिकगारूपस्य गायतेरपि ग्रहणात् आशीर्लिङि एत्व गेयादिति भवति । गातिस्थे'त्यत्र गापोर्ग्रहणे इण्पिबत्योर्ग्रहणमिति वृत्तावुक्तत्वात् अस्मात्सिचो लुगभावात् अगासीदिति भवति । गायकः । गायनः । 'गस्थकन्नि'ति 'ण्युट् च' ति कर्त्तरि थकन्, ण्युटो णित्त्वा'दातो युगि'ति युक्, टित्त्वात् स्त्रियां गायनी । वा सरूपेण ण्वुल्तृचौ, गायकः, गातेति भवति । उद्गाता । तस्य भावकर्म्मणी औद्गात्रम् । उद्गात्रादिभ्योऽञि'ति अञ् । साम गायतीति, समागः । 'गापोष्टगि' ति कर्मण्युपपदे टक् । टित्त्वात् स्त्रिया सामगी । गीत्वा । गीतम् । 'घुमास्थे'ति ईत्वम् । प्रगीतिः । 'स्थागापापचो भाव' इति स्त्रिया भावे क्तिन् । 'स्त्रियां क्तिनि' त्येव सिद्धे पुनर्वचन'मातश्चोपसर्ग'इति अङो बाधनार्थम् । गाथा गद्यविशेषः । 'उषिकुषिगार्त्तिभ्यस्थन्' ति स्थन् । अवगथः प्रातस्सवनं सोमो वा । 'निशीथगोपीथावगथा' इत्यवपूर्वादस्मात्थनि धातोर्ह्रस्वत्वं च निपात्यते । उद्गीथः 'गश्चोदी'ति उदुपसृष्टात्क्थन् । 'घुमास्थे' तीत्वम् ॥ ९०१ ॥

शै श्रै पाके ॥ इह पाको विक्लित्तिः । तथा शृतं पाक'इत्यत्र वृत्त्यादावुक्तम् । शायति । शशौ । शाता । श्रायति । शश्रौ, श्रातेत्यादि । गायतिवत् । श्रपयतीति घटादित्वात्पाके मित्त्वम् । अन्यत्र श्रापयति । स्वेदयतीत्यर्थः । शृतं क्षीरम् । 'शृतं पाक'इति क्ते शृभावो निपात्यते । तत्र पाको विक्लित्तिः, तत्फलको व्यापारश्च । तत्र तत्फलके व्यापारे णिचमन्तरेण वृत्तेरभावात् श्रपेरप्ययं शृभाव इति शृतं क्षीरं देवदत्तेनेति भवति । तथा च तत्र वार्त्तिकं,श्राश्रप्योः शृभावो निपात्यते इति । यत्तु श्रपेर्णिचि श्रपिशब्दः, न तस्यायमादेशः, पाक इति वचनात्, अत्र पाचनार्थः पाकस्तु गुणीभूतः, अथ शृभावो व्यवस्थितविभाषाविज्ञानात् क्षीरहविषोर्नित्य भवति । अन्यत्र तु न भवति । श्राणा यवागूः । श्रपिता यवागूरिति । 'संयोगादे'रिति निष्ठानत्वम् । श्राणास्मै नियमेन दीयते श्राणिकः । 'श्राणामांसौदनाट्टिठन्' ति नियमेन दीयमानोपाधिकार्थात्त-

दस्मै दीयते चतुर्थ्यर्थे टिठन् । टित्वात् स्त्रियां आणिकी । आतीत्यादादिकस्य, आपयतीति चौरादिकस्य ॥ ९०३ ॥

पै ओवै शोषणे ॥ पायति । पपौ । 'पाघ्रे' त्यत्र नास्य ग्रहणम् । पारूपस्य लाक्षणिकत्वात् । गत्र लोपदेशमात्रमर्थ्यादर्शिनि पारूपस्य भेदाभावात् । पपौ । पाता । पास्यति । पायतु । अपायत् । पायेत्, आशिषि पायात् । 'घुमास्थे'तीत्व तद्विशेष 'एर्लिङी'त्येत्व चास्य न भवति, पारूपस्य लाक्षणिकत्वात् । अत एव 'गातिस्थे'ति सिज्लुग्विधावपि अस्याग्रहणात् अपासीदिति भवति । पिपासति । पापयते । 'ई हल्यघो'रित्यभ्यस्ताश्रयमीत्व ङित्सार्वधातुकविषयमिनीह भवति । पापाति । पापेति । ईटि गुणः, पापीतः । 'ई हल्यघो'रिति ङित्सार्वधातुकपरत्वादीत्वम् । पापति । 'श्नाभ्यस्तयो'रित्यालोपः । लङि अपापेत् । अपापात्, अपापीतामित्यादि । 'सिजभ्यस्ते'ति नित्य जुसभावे अपापुः । 'लङः शाकटयनस्यैवे'ति विकल्पो नेति धयतावुक्तम् । आशिषि लिङि आर्द्धधातुकत्वात् 'ई हल्यघो'रितीत्वाभावात् पापायादिति भवति । 'घुमास्थे'ति ईत्वमस्य नेति प्रागेवोक्तं, पाययति । 'शाच्छासाह्वाव्यावेपा युक्' इति णौ युगागमः । तत्र लाक्षणिकपारूपस्य ग्रहणमिति वृत्तिन्यासपदमञ्जर्यादिषु । पीत्वा । पानं सरः । पा इति पानार्थे इहार्थे । रक्षणार्थादादौ । वायति । ववौ । इत्यादि, पायतिवत् । णौ वाययति शिरः, आत्वे युक् । 'वो विधूने जुगि'ति अत्र वा गतिगन्धनयोरित्यादादिकस्यैव ग्रहणं तस्यैव विधूनने वृत्तिसम्भवादिति व्याख्यातारः । 'शाच्छा'सेति युक्तु तत्रैव वा इति निर्देशात् वेञ् तन्तुसन्तानइत्यत्र पठिष्यमाणस्यैव न त्वस्य प्रसजति, वानं तु फलम्, ओदित्त्वात्तम् ॥ ९०५ ॥

ष्टै वेष्टने ॥ स्तायति । तस्तौ । स्ताता । स्तापयति । अतिष्टपत् इत्यादि । अयं च पाठो मैत्रेयस्य । भट्टभास्करोऽप्यत्रैवानुकूल, यदाह स्तायूनां पतये नम इत्यत्र स्तेना वस्त्रादीनपहरन्ति. स्तायवः । ष्टै वेष्टनइत्यस्माद्बाहुलकादुणिति । स्वाम्यादयस्तु ष्णै वेष्टनइति पठन्ति, तथा च निरुक्तम् । उष्णीषं स्नायतेर्व्याचरकः । एवमुष्णीषं शिरोवेष्टनम् । स्नायतेः

शोभार्थस्य उभयत्रापि सम्भवादिति । अत एव व्याख्यानात् ष्णै शोभनइत्यपि भ्वादौ द्रष्टव्यः । प्रयुज्यते च भारते ।

पाञ्चाल्याः पद्मपत्राक्ष्याः स्नायन्ति जघनं घनम् ।
याः स्त्रियो दृष्टवन्त्यस्ताः पुम्भावं मनसा ययुः ॥

इति । क्रियानिघण्टौ च स्नायति स्नायत्याप्लवतइति, दैवे च स्नातीति । शौचे स्नायेदिति चेच्छन्ति के च नेति ॥ ९०६ ॥

दैप् शोधने ॥ पकारो ऽदाबिति विशेषणार्थः । अयमेव लाक्षणिकानामपि घुसञ्ज्ञकानां ग्रहणे लिङ्गम् । दायतीत्यादि पायतिवत् । णिचि दापयति अदीदपत्, दाण् दाने । देङ् रक्षणइतीहैवाग्रे । दाप् लवनइत्यदादौ । डुदाञ् दानइति जुहोत्यादौ । दो अवखण्डने दीङ् क्षयइति दिवादौ ॥ ९०७ ॥

पा पाने ॥ पिबति । 'पाघ्रे'त्यादिना पिबादेशः । पिबेर्गुणप्रतिषेध इति कात्यायनः । वर्द्धमानस्तु 'लोपः पिबते'रिति लिङ्गाद्गुणो नेति । वृत्तौ तु अकारान्तोयमादेश आद्युदात्त इति, अतो लघूपधत्वाभावान्न गुणप्रसङ्गः । पपौ । पाता । पास्यति । पिबतु । अपिबत् । पिबेत् । आशिषि पेयात् । 'एर्लिङी'त्येत्वम् । अपात् । 'गातिस्थे'ति सिचो लुक् । पिपासति । पेपीयते । 'घुमास्थे'त्यादिनेत्वे द्वित्वम् । पापेति । पापाति । पापीतः । 'ई हल्यघो'रितीत्वम् । पापति । 'श्नाभ्यस्तयो'रित्याल्लोपः । पापितेत्यादाविटि 'आतो लोप इटि चे'त्याल्लोपः । लङि 'सिजभ्यस्ते'ति नित्यं जुसि अपापुः । 'लङः शाकटायनस्यैवे'ति विकल्पो नेति धयताबुक्तम् । लिङि पापायात् । अनार्धधातुकत्वात् 'घुमास्थेती'त्वं न भवति । आशिषि आर्द्धधातुकत्वादीत्वापवादः, 'एर्लिङी'त्येत्वम्, पापेयात्, लुङि 'गातिस्थे'ति सिचो लुकि अपापात् । अपापुः । 'आत' इति जुस् । पाययति । पाययते । 'न पादमी'ति निगरणे परस्मैपदनिषेधः । 'शाच्छासे'त्यादिना युक् । णेश्चङि 'लोपः पिबतेरीच्चाभ्यासस्ये'त्युपधाया आकारस्य लोपः । युक्ययमुपधा भवति । अल्लोपस्य णौ कृतं स्थानिवदिति स्थानिवत्त्वात् पायशब्दस्य द्विर्वचनमीच्चाभ्यासस्येतीकारे अपीप्यत् । तत्र पिबतेरिति

निर्देशाद् यङ्लुकि अपापदिति भवति । उत्पिबः । 'पाघ्राध्माधेट्दृश:
श' इति कर्तरि शप्रत्यये पिबादेशः । सुरापः । शीधुपः । 'गापोष्टगि'ति
कर्मण्युपपदे टक्, टित्त्वात् स्त्रियां सुरापी । अत्र 'पिबतेः सुराशीध्वो'रि-
त्युपपदनियमादुपपदान्तरे 'आतोऽनुपसर्गे कः' इति को भवतीति विशेषः
स्त्रियां ङीबभावः, क्षीरपा ब्राह्मणीति । द्वाभ्यां पिबतीति द्विपः । 'सुपि
स्थ' इत्यत्र सुपीति योगविभागात्तत्र चात इत्यनुवर्त्तनादाकारान्तादस्मा-
त्सुप्युपपदे कप्रत्ययः । एवं कच्छपादयः । प्रपिबन्त्यस्यामिति प्रपा । घञर्थे
कविधानमिति कः । प्रपीतिः । 'स्थागापापचो भाव'इति भावे क्तिन् ।
'स्त्रियां क्तिनि'त्येव सिद्धे वचनं'मातश्चोपसर्ग'इत्यङ्बाधनार्थम् । पीत्वा ।
'घुमास्थे'तीत्वम् । प्रपाय । 'न ल्यपी'तीत्वनिषेधः । निपीयेति पीङो
रूपम् । पीत्वास्थिरकः । 'मयूरव्यंसकादयश्चे'ति तत्पुरुषः । 'समासे
नञ्पूर्वे'इति क्त्वो ल्यबादेशोऽत एव मयूरव्यंसकादिपाठान्न भवति ।
यद्वा अनञिति नञ्सदृशमव्ययं परिगृह्यते, तेन नञोऽन्येनाव्ययेन क्त्वान्तस्य
समासेऽयं ल्यब्विधिरिति इह नैव प्रसजति । पीतिः । पीयतेऽनेनेति पानं
क्षीरस्य पानं क्षीरपानं, क्षीरपाणमिति वा । 'वा भावकरणयो'रिति पूर्वप-
दस्थान्निमित्तादुत्तरस्य भावकरणविषयपाननकारस्य णत्वविकल्पः, क्षीरं
पानं येषां ते क्षीरपाणा उशीनरा इत्यत्र 'पानं देश'इति पूर्वपद-
स्थान्निमित्तादुत्तरस्य भावकरणविषयपाननकारस्य देशेऽभिधेये नित्य
णत्वम् । पयः पानं भुजङ्गानामित्यत्र 'कर्मणि च येन संस्पर्शात् कर्त्तुः शरी-
रसुखं' येन कर्मणा संस्पृश्यमानस्य कर्त्तुः शरीरस्य सुखं भवति तस्मिन्कर्म-
ण्युपपदे धातोर्भावे ल्युडिति ल्युट् । एवं चोपपदसमासः सिद्धः । 'ल्युट्
चे'ति ल्युटि तु षष्ठीसमासस्य 'कर्मणि चे'ति निषेधः स्यात् । समाना
पीतिः । सपीतिः । विशेषणसमासः, 'समानस्य छन्दसी'ति समानस्येति
योगविभागात्समानस्य सभावः । कथं पीता गाव इति, यतः प्रत्यवसाना-
र्थत्वात्कर्त्तरि निष्ठया न भाव्यम् । उच्यते । पानं पीतमेषामस्तीत्यर्शआ-
द्यजन्तोऽयं द्रष्टव्यः । पायुः । 'कृवापाजी'त्युण् । सोमपीथः सोमपानम् ।
'पावानुदिवदिसिविभ्यः क्थन्नि'ति क्थन् । पेरुः । आदित्यः । 'वापोरुच्चे'ति

रुप्रत्यय इकारश्चान्तादेशः । तस्य च गुणः । पापम् । 'पानीयाभ्यः प' इति पः । पाथः । 'पातेरसुन्नि'त्यसुन्प्रत्ययः थुगागमश्च । पयः । 'पिबतेरी'च्चे त्यसुनि इकारान्तादेशे गुणायादेशौ । पय इवाचरति । पयायते पयस्यते । 'कर्त्तुः क्यङि'ति क्यङ् । 'ओजसोऽप्सरसो नित्यं पयसस्तु विभाषया' इति पक्षे सलोपः । 'नः क्य'इति नान्तस्यैव पदसंज्ञेति नियमा'त्ससजुषोरुरि'ति न भवति । पयसो विकारः पयस्यः । 'गोपयसोर्यदि'ति यत् । पाकः । अर्भकः । 'इणभीपाके'ति कन् । पात्रम् । ष्ट्रन् । षित्त्वात् स्त्रियां ङीष् पात्री । पञ्चानां पात्राणां समाहारः पञ्चपात्रम्, 'तद्धितार्थे'ति समाहारे द्विगुः, 'अकारान्तोत्तरपदो द्विगुः स्त्रियां भाष्यत'इति ङीपि प्राप्ते 'पात्रादिभ्यः प्रतिषेध' इति निषिध्यते । 'स नपुंसक'मिति समाहारद्विगुद्वन्द्वनिबन्धनं नपुंसकत्वमेव भवति । पात्रस्य वापः क्षेत्रं पात्रिकम्, उप्यतेऽस्मिन्निति वापः । 'पात्रात् ष्ठन्नि'ति षष्ठ्यन्ताद्वापेऽर्थे ष्ठन् । षित्त्वात् ङीषि पात्रिकी क्षेत्रभक्तिरिति । पात्रं परिमाणविशेषः । पात्रं संभवति अवहरति पचति वा पात्रीणा स्थाली । 'आढकाचितपात्रात् खोऽन्यतरस्या'मिति द्वितीयान्तात्संभवत्यादिष्वर्थेषु खः । खाभावे प्राग्वतीये ठनि पात्रिकी । आधारप्रमाणादाधेयप्रमाणानतिरेकः संभवः । उपसंहरणमभ्यवहारः । विक्लेदनं पाकः । द्वे पात्रे संभवति अवहरति पचति वा द्विपात्रिकी, द्विपात्रीणा । 'द्विगोष्ठंश्चे'ति आढकाचितपात्रान्तात् द्विगोर्द्वितीयान्तात् संभवत्यादिष्वर्थेषु ठञ् । चकारात् खश्च । अत्रान्यतरस्याग्रहणानुवृत्तेः प्राग्वतीयष्ठञपि भवति । तस्य चार्हीयप्रत्ययत्वा'दध्यर्द्धपूर्वे'ति लुकि 'द्विगो'रिति ङीपि द्विपात्री स्थालीत्यपि भवति । ठन्खञोस्तु विधानसामर्थ्यान्न लुक् । पात्रमर्हति पात्रियः । पात्र्यः । 'पात्राद् घंश्चे'ति द्वितीयान्तादर्हतीत्यर्थे घयतौ । इह पात्रं भाजनं परिमाणं च । सर्वपात्रं व्याप्नोति सर्वपात्रीणः सूपः । 'तत्सर्वादे'रिति खः । पात्रेसमितः पात्रेबहुलः । 'पात्रेसमितादयश्चे'ति क्षेपे सप्तमीतत्पुरुषः । अत्रैव पाठादलुक् । अत्रावधारणेन क्षेपः । पात्रएव समिता न पुनः क्वचित्कार्ये । अयस्पात्रम् । 'अतः कृकमिकंसे'त्यादिना अकारा

त्परस्य विसर्जनीयस्य पात्रे परतः सत्वम् । अत्र करोतिर्धातुः कमिश्च । अन्यानि प्रातिपदिकानि । लिङ्गविशिष्टपरिभाषया अयस्पात्रीत्यत्रापि भवति । पायतीति शेषणे गतम् ॥ ९०८ ॥

घ्रा गन्धोपादाने ॥ जिघ्रति । 'पाघ्रे'त्यादिना जिघ्रादेशः शिति । जघ्रौ । जघ्रिथ । घ्रातेत्यादि । आशीर्लिङि घ्रायात्, । घ्रेयात्, 'वान्यस्ये'ति एत्वविकल्पः । लुङि अघ्रात् अघ्रासीत्, 'विभाषा घ्राधेडि'ति सिचो वा लुक् परस्मैपदे । आत्मनेपदे अघ्रायि, अघ्रासाताम् सुमनसो इति नित्यं सिचः श्रवणमेव । जिघ्रासति । जेघ्रीयते । 'ई घ्राध्मो'रिति यङीत्वम् । जाघ्रेति । जाघ्राति । जाघ्रीतः । 'ई हल्यघो'रितीत्वम् । घ्रापयति । अजिघ्रपत् । अजिघ्रिपत् । 'जिघ्रतेर्वे'ति चङ्परे णावुपधाया वेत्वम् । श्तिपा निर्देशात् यङ्लुकि अजाघ्रपदित्येव । आ जिघ्रतीत्याजिघ्रः । 'पाघ्रे'त्यादिना उपसृष्टादस्माच्छे शपि जिघ्रादेश , व्याजिघ्रतीति व्याघ्रः । 'जिघ्रतेः सञ्ज्ञाया'मिति कः । 'गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक् सुबुत्पत्ते'रिति सुबुत्पत्तेः प्रागेव समासस्तेन स्त्रियां 'जातेरस्त्रीविषयादि'ति अदन्तलक्षणो ङीष् भवति व्याघ्रीति । सुबन्तेन समासे पूर्वं स्त्रियां टापि अदन्तत्वाभावात् ङीष् न स्यात् । व्याघ्रस्य विकारश्चर्म वैयाघ्रम् । 'प्राणिरजतादिभ्योञ्'ति प्राणिवाचिभ्यो रजतादिभ्यश्च षष्ठ्यन्तेभ्यो यथायोगं विकारावयवयोरर्थयोरञ् 'न य्वाभ्या'मि'ति वृद्धिनिषेधे ऐजागमश्च । वैयाघ्रेण परिवृतो रथो वैयाघ्र । 'द्वैपवैयाघ्रादञ्'ति द्वैपवैयाघ्रशब्दाभ्यां परिवृतो रथ इति विषये ऽञ् । प्राग्दीव्यतीयस्याणोऽपवादः । घ्राणम् । घ्रातम्, 'नुदविदे'ति निष्ठानत्वविकल्पः ॥ ९०९ ॥

ध्मा शब्दाग्निसंयोगयोः ॥ इहाग्निसंयोगो मुखवायुना ऽग्निसंयोगः । धमति । 'पाघ्रे'त्यादिना धमादेशः शिति । दध्मौ, ध्मातेत्यादि । लिङि धमेत् । आशिषि ध्मायात् । ध्मेयात् । 'वान्यस्ये'त्यत्वविकल्पः । दिध्मासति । देध्मीयते । 'ई घ्राध्मोरि'ति यङीत्वे, दाध्मेति । 'ई हल्यघो'रितीत्वम् । दाध्मति । 'श्राभ्यस्तयो'रित्यालोपः । ध्मापयति । अदिध्मपत् । उद्धुम. । 'पाघ्राध्मे'त्युपसृष्टाच्छे शपि धमादेशः । नासिकंधमः ।

'नासिकास्तनयो'रिति नासिकाया कर्मण्युपपदे ऽस्मात् खश् । नाडिंधमः । 'नाडीमुष्ट्योश्चे'ति नाडीमुष्ट्योः कर्मणोरुपपदयोः खश्प्रत्ययः । तस्य मुष्टिशब्दस्यापूर्वनिपातात्लक्षणव्यभिचारात् लिङ्गात् ध्माधेटोरुपपदयोरत्र यथासङ्ख्यं न भवति । पाणयो ध्मायन्ते येषु पाणिधमाः पन्थानः । 'उपपश्येरमदपाणिधमाश्चे'ति खशि निपात्यते । ध्मात्वा ध्मातम् ॥ ९१० ॥

ष्ठा गतिनिवृत्तौ ॥ तिष्ठति । 'पाघ्रे'ति तिष्ठादेशः । तस्थौ । अधितष्ठौ । 'स्थादिष्वभ्यासेन चाभ्यासस्ये'ति षत्वम् । स्थाता । स्थास्यति । अधिष्ठाता । अधिष्ठास्यति । 'उपसर्गा'दित्यादिना षत्वम् । तिष्ठतु । तिष्ठेत् । आशिषि स्थेयात् । 'एर्लिङी'त्येत्वं 'वाऽन्यस्ये'ति विकल्पस्तु न भवति । अन्यस्येति घुमास्थादिपर्युदासात् । अस्थात् । 'गातिस्थे'ति सिचो लुक् । अध्यष्ठात् । 'प्राक् सितादड्व्यवायेपी'ति षत्वम् । तिष्ठासति । तेष्ठीयते । 'घुमास्थे'तीत्वे द्वित्वम्, तास्थाति । तास्थीतः । 'ईहल्यघोः'रितीत्वम् । तास्थति । 'श्नाभ्यस्तयो'रित्यालोपः । स्थापयति । अतिष्ठिपत् । 'तिष्ठतेरिदि'ति चङ् परे णाउपधाया इत्वं श्तिपा निर्देशात् अनास्थपदित्यत्र न भवति । सतिष्ठते । सतस्थे । सस्थाता । सस्थास्यते । संतिष्ठताम् । समतिष्ठत । संतिष्ठेत । सस्थासीष्ट । 'समवप्रविभ्यःस्थ'इति तङ् । समस्थित, समस्थिषातामित्यादि । 'स्थाघ्वोरिच्चे'ति सिचः कित्त्वं तिष्ठतेश्चेकारः । 'ह्रस्वादङ्गा'दिति सिज्लुक् सन्निपातपरिभाषया नेति धयतावुक्त, सिचः कित्त्वात्प्रत्ययलक्षणेन गुणो न भवति । एवमवतिष्ठते प्रतिष्ठतइत्यादि । नित्यं शब्दमातिष्ठते । प्रतिजानातीत्यर्थः । 'आङः स्थः प्रतिज्ञाने'इति तङ् । अर्थस्वभावादयमाङ्पूर्वः । तिष्ठते कन्या छात्रेभ्यः । स्थानेन स्वाभिप्राय प्रकाशयतीत्यर्थः, प्रकाशनमर्थो ऽनेकार्थत्वाद्धातूनामिति कश्चित् । 'श्लाघह्नुङि'त्यत्र पदमञ्जर्यां तु स्थानेन स्वाभिप्रायप्रकाशनमर्थं इत्युक्तम् । 'श्लाघह्नुङि'ति ज्ञीप्स्यमानस्य सम्प्रदानत्वम् । धर्माध्यक्षे तिष्ठते । तत्र निर्णयमपेक्षमाणास्तिष्ठतीत्यर्थः । 'प्रकाशनस्थेयाख्ययोश्चे'ति तङ् । प्रकाशनं स्वाभिप्रायाविष्करणं, स्थेयस्याख्या, स्थेयाख्या । तिष्ठत्यस्मिन्निति स्थेयः । रूढश्चायं विवादपदस्य निर्णेतरि, तिष्ठ-

त्यस्मिन्निति स्थेय इत्यत्र प्रकरणादिना विवादपदनिर्णेतुः प्रतीतिः । ननु शब्दे नेत्यात्मनेपदाभावो हरदत्तेनोक्तः । कुटुम्बमुत्तिष्ठते तदर्थं घटत इत्यर्थः । 'उदोऽनूर्ध्वकर्म्मणी'ति तङ् । ऊर्ध्वकर्मणि आसनादुत्तिष्ठति । अत्र उद ईहायामित्युक्तत्वात् अनूर्ध्वकर्मण ईहया विशेषणादस्माद्ग्रामाच्छतमुत्तिष्ठति इत्यत्र ईहाभावात्तङ् न भवति । उत्पद्यत इति सूत्रार्थः । ऐन्द्र्या गार्हपत्यमुपतिष्ठते । ऐन्द्र्या ऋचा गार्हपत्यमभिधत्त इत्यर्थः । 'उपान्मन्त्रकरणे' इति तङ् । मन्त्रः करणं यस्यार्थस्य मन्त्रकरणः । तदर्थादुपोपसृष्टात् स्थस्तङिति सूत्रार्थः । आदित्यमुपतिष्ठते पूजयतीत्यर्थः । गङ्गा यमुनामुपतिष्ठते । संश्लिष्यतीत्यर्थः । राजकीयानुपतिष्ठते मित्रीकरोतीत्यर्थः । अयं पन्थाः स्रुघ्नमुपतिष्ठते । प्राप्नोतीत्यर्थः 'उपाद्देवपूजासङ्गतिकरणमित्रकरणपथिष्विति वक्तव्यमि'ति तङ् । आज्ञाप्रलिप्सुर्विनयादुपास्थुरित्यत्र भट्टिश्लोके देवपूजादिभ्योऽन्यार्थ इति तङ् न कृतः । अर्थी राजानमुपतिष्ठते । उपतिष्ठतीति वा । लिप्सुरुपसर्पतीत्यर्थः, उपोपसृष्टोऽयमर्थान्तरवृत्त्या सकर्मकः । 'वा लिप्सायामि'ति तङ्विकल्पः । यावद्भुक्तमुपतिष्ठते । वीप्सायामव्ययीभावः । भोजने भोजने सन्निधत्त इत्यर्थः । 'अकर्मकाच्चे'ति उपोपसृष्टादस्मादकर्मकात्तङ् । तिष्ठतीति स्थायी । ग्रहादित्वाण्णिनिः । समे तिष्ठतीति समस्थः । 'सुपि स्थ' इत्यत्र सुपीति योगं विभज्य आकारान्तानां कर्त्तरि कविधानात्कप्रत्ययः । अत्र स्थ इति वचनं तिष्ठतेरप्याकारान्तत्वात्पूर्वेणैव कस्य सिद्धत्वात् अनिर्दिष्टार्थाः प्रत्ययाः स्वार्थे भवन्तीति भावे कविधानार्थं तेनाखूनामुत्थानमाखूत्थम् । शलभोत्थम् इति भवति । 'उदः स्थास्तम्भोः पूर्वस्ये'ति सकारस्य पूर्वसवर्णस्तकारः । शं सुखं तत्र तिष्ठतीति शंस्थः । 'स्थः क च' इति कप्रत्ययः । चकारात् क्विपि संस्थाः । 'घुमास्थे'ती'त्वं भाष्यकारप्रयोगान्न भवति । ईत्वमवकारादाविति तु न स्थितम् । ननु 'सुपि स्थ' इत्यत्र योगविभागात्कः सिद्धः, क्विबिति क्विबपि वा रूपेण, तत्र किं 'स्थः क च' इति सूत्रेण, उच्यते । 'शमि धातोः संज्ञायामि'त्यत्र धात्वधिकारादेव धातुग्रहणे सिद्धे पुनर्धातुग्रहणं बाधकबाध-

र्थमित्युक्तम् । तेन यदा शङ्करा नाम परिव्राजिका तच्छीला चेत्यत्र 'कृञो हेतुताच्छील्ये'ति टं बाधित्वाच् भवति, तथा कक्विपावपि बाधित्वाचा-प्यच् स्यात्, क तु परत्वादपि बाधेतेति तस्मा भूदित्यारब्धमेव 'स्थः क चे'ति सूत्रम्, एवमपि किं क्विपो विधानेन, यतो वामह्रेणायमपि भविष्यति । न । अस्य विधाने यथा कः अच बाधते तथा क्विपमपि बाधेत। स्थास्नुः। 'ग्लाजिस्थश्चे'ति तच्छीलादौ क्स्नुः. 'घुमास्थे'तीत्वं स्था आ इत्याकारप्रश्लेषेणाकारान्तस्य विधानान्नेति भाष्ये स्थितम् । अन्ये तु गिदयं तेनेत्वस्य न प्रसङ्गः । जिष्णुरित्यत्र गुणाभावस्तु 'न धातुलोप-आर्द्धधातुके' 'क्ङिति चे'ति संहितया सूत्रपाठात् क्सनचर्त्वस्य गकारस्यापि तत्र निर्देशात् । तथा 'श्र्युकः किती'त्यत्रापि चर्त्वेन गकारस्यापि निर्दे-शात् भूष्णुरित्यत्रेड्भाव इत्याहुः । उक्तं च ।

स्नोर्गित्वान्न स्थ ईकारः क्ङिन्डोरीत्वशासनात् ।
गुणाभावस्त्रिषु स्मार्यः श्र्युकोऽनिट्त्वं गकोरितोः ॥

इति। स्थायुकः। 'लषपते'त्यादिनोकञ्। स्थावरः। 'स्थेशे'ति वरच्। प्रस्थास्यत इति प्रस्थायी। 'प्रे स्थ' इति णिनिः। णित्वाद्युगागमः। गम्यादिषु पाठाद्भविष्यति गम्यादय इति भविष्यत्कालता। स्थित्वा। स्थितम्। उपस्थितो गुरुं शिष्यः। उपस्थितो गुरुः शिष्येण, 'गत्यर्थे'त्यादिना कर्तृकर्मणोः क्तः। उपपूर्वाय सकर्मकः। 'द्युतिस्यतिमास्थामि'ति 'घुमास्थे'तीत्वाप-वाद इकारः। प्रस्थायेत्यत्रान्तरङ्गानपि विधीन्बहिरङ्गो ल्यब् बाधत इति पूर्वमीत्वं न प्रवर्त्तते। पश्चात्तु निमित्ताभावान्नास्य प्रसङ्गः। प्रतिष्ठतेऽस्मिन्नि-ति प्रस्थः। घञर्थे कविधानमिति कः। माहकिप्रस्थो नाम उदीच्यग्रामः, तत्र भवो माहकिप्रस्थः। 'प्रस्थोत्तरपदपलद्यादिकोपधादण्'ति प्रस्थोत्तरपद-लक्षणोऽण् शैषिकः। 'उदीच्यग्रामाच्च बह्वचोऽन्तोदात्ता'दिति अञोऽपवादः। अणञोः स्वरे विशेषः। इन्द्रप्रस्थे भवः ऐन्द्रप्रस्थः। अनुदीच्यग्रामत्वात्प्राग्दी-व्यतीयोऽण्। मालाप्रस्थे भवः मालाप्रस्थकः। 'प्रस्थपुरवहान्ताच्चे'ति प्रस्था-द्यन्ताद्गवाचिनः शेषेऽर्थे वुञ्। छस्यापवादः। प्रतिष्ठत्यग्रे गच्छतीति प्रष्ठः। 'आतश्चोपसर्ग' इति कः। 'प्रष्ठोऽग्रगामिनी'ति षत्वम्। अग्रगामिनोऽन्यत्र

प्रत्ययः । अत्र केवलस्य स्थाम्नोपत्येन सबन्धाभावात्तदन्तविज्ञानम् । स्थलम् । 'स्थापती'त्यादिना लः । स्थाली । गौरादिपाठात् ॥ ९११ ॥

म्ना अभ्यासे ॥ मनति । 'पाघ्रे'त्यादिना मनादेशः शिति । अन्यत्र म्लैवत् । मम्नावित्यादि । आम्नायः । घञि युक् । आम्नातः । आम्नातमनेनाम्नाती व्याकरणे । 'इष्टादिभ्यश्चे'ति प्रथमान्तादनेनेत्यर्थे इनिः, सप्तमीविधाने 'क्तस्येन्विषयस्य कर्मण्युपसंख्यानमि'ति कर्मणि सप्तमी । नीचभावमभ्यस्यतीति निम्नम् । सुपीति योगविभागा'दातो ऽनुपसर्ग'इति वा कः । नेर्नीचभाववचनत्वेन मनत्यर्थस्याविशेषणाच्च तं प्रतीहोपसर्गत्वं, दिने आम्नायतइति द्युम्नम् । द्युशब्दो दिनवचनम्, दृश्यते च धारयेरत्र द्यून् । सुतरामाम्नायतइति सुम्नं सुखम् । घञर्थे कः ॥ ९१२ ॥

दाण् दाने ॥ यच्छति । 'पाघ्रे'ति यच्छादेशः शिति । अत्रैव दाणिति विशेषणार्थो णकारः । प्रणियच्छति । घुत्वा'न्नेर्ग'देति णत्वम् । ददौ । दाता । दास्यति । यच्छतु । अयच्छत् । यच्छेत् । आशिषि देयात् । घुत्वा- 'देर्लिङी'ति एकारः । अदात् । 'गातिस्थे'ति सिचो लुक् । प्रण्ययच्छत् । प्रण्यदात् । अड्व्यवायेपि नेर्गदादिषु णत्वमिति उक्तम् । दित्सति । 'सनि मीमे'ति इस्भावः । 'अत्र लोप' इत्यभ्यासस्य लोपः । 'सस्यार्द्ध- धातुक'इति तत्वम् । देदीयते । 'घुमास्थे'तीत्वे द्विर्वचनम् । दादेति । दादाति । दात्तः 'श्नाभ्यस्तयो'रित्यालोपे चर्त्वम् । 'पूर्वत्रासिद्धमि'ति वा चर्त्वम् । चर्त्वविधि प्रतीति चालोपस्य न स्थानिवत्त्वम् । लोटि हौ 'घ्वसोरेद्धा'वित्यन्त्यस्येकारे अभ्यासलोपे च देहि, दापयति । अदीदपत् । दास्या मालां संप्रयच्छते, कामुकः सन् ता तस्यै ददातीत्यर्थः । 'दाणश्च सा चेच्चतुर्थ्यर्थे'इति समुपसृष्टात्तृतीयायुक्तादस्मात्तङ्, सा चेत्तृतीया चतुर्थ्यर्थे, तृतीया 'अशिष्टव्यवहार' इति । पूर्वसूत्रे सम इति षष्ठ्यन्त- मित्युक्तं तदेवात्रानुवर्तइति प्रेण व्यवधानेपि तद्भवति दास्या मालां संप्रयच्छते । संप्रादित । 'स्थाघ्वोरिच्चे'ति सिचः कित्त्वे इत्व च, 'ह्रस्वादङ्गादि'ति सिचो लोपो झलि । दाण इति सानुबन्धकनिर्देशा- द्यङ्लुकि नायं तङ्विधिरिति दास्या मालां संप्रददातीति भवति ।

गां प्रयच्छतीति, गोप्रदः । 'प्रे दाज्ञ' इति कर्मण्युपपदे प्रोपसृष्टाद-स्मादणोपवादः कः । न 'त्वातश्चोपसर्ग' इति कप्रत्ययेन प्रदशब्दं कृत्वा गोशब्देन षष्ठीसमासे गोप्रद इति सिद्धं किं सूत्रेण । उच्यते । गा प्रयच्छतीति विवक्षायामणि गोप्रदाय इति स्यात् । यथा प्रादन्येनोपसृ-ष्टाद्गोसप्रदाय इति स मा भूदिति । गोदः । 'आतोऽनुपसर्गे' इति अनु-पसृष्टत्वे कः । तं रवदाय जितमृत्युनोक्तं रात्रिचरः कान्तिसुतो ऽभ्यतिष्ठदिति भट्टिप्रयोगोऽय इव दाणित्यस्यापि द्रष्टव्यः । यद्वा 'श्याद्व्यधे'त्याकारान्तलक्षणे णे दायशब्दं व्युत्पाद्य तेन रवस्य दायो रवदाय इति षष्ठीसमासे विधेयः । दारुः । 'दाधेट्सिशदसदो रु'रिति रुः । दानीयो ब्राह्मणः । 'कृत्यल्युटो बहुल'मिति सम्प्रदानेऽनीयर् । उपदीयतइत्युपदा । आतश्चोपसर्ग'इत्यङ् । देयम् । 'अचो यदि'ति यति 'ईद्यती'तीत्वे गुणः । दत्वा । दत्तः । दत्तवान् इति । 'दो दद् घो'रिति तकारादौ किति दद्भावः । प्रत्तम् । 'अच उपसर्गात्त'इति अजन्तादुपसर्गात्परस्य दाइत्यस्य योऽच् तस्य तकारादेशः । 'खरि चे'ति दकारस्य तकारः । अत्राच इति द्विरावर्त्तने, तत्रैकेनोपसर्गो विशेष्यते परेण स्थानी निर्दिश्यते इत्याकारस्य स्थानित्वलाभः । अन्यथा ऽऽदे. परस्ये'ति दकारस्यैव तकार स्यात् । अन्ये तूपसर्गात्त इति द्वितकारकोऽयमादेशो निर्दिश्यतइति अनेकाल्त्वात्सर्वादेशं कुर्वन्ति, तेषां मपो भि'इ-त्यत्रैकस्तकारोऽनुवर्त्यः । अन्यथाद्भिरित्यादावपि सर्वादेशत्वं स्यात् । नीत्तम् । सूत्तम् । 'दस्ति'दा इत्यस्य यस्तकारस्तदादावुत्तरपदे इगन्त-स्योपसर्गस्य दीर्घ इति दीर्घः । चर्त्वस्याश्रयासिद्धत्वात्तकारादित्वमुत्त-रपदस्य । येषां'मच उपसर्गात्त' इति द्वितकारक आदेशस्तेषामाश्र-यात् सिद्धिरनपेक्षा ।

'अवदत्तं विदत्तं च प्रदत्तं चादिकर्मणि ।
सुदत्तमनुदत्तं च निदत्तमिति चेष्यते' ॥

इति वचनादवदत्तादौ तो न भवति । अत्रैव वार्त्तिके चकारा-दवत्तादीनामबाधः, तत्रादिकर्मणीत्यर्थात्प्रदत्तविशेषणम् । अन्ये तु

अवदत्तादाविवादय उपसर्गप्रतिरूपका निपाता न तूपसर्गा इति तत्वस्य नास्ति प्रसङ्ग इति चाहुः । मरुद्भिर्दत्तो मरुत्तः । 'मरुच्छब्दस्योपसंख्यान'मिति उपसर्गसञ्ज्ञाविधानसामर्थ्यादनजन्तत्वेपि तत्त्वं भवतीति व्याख्यातारः । प्रदाय । 'न ल्यपी'ति 'घुमास्थे'तीत्त्वं निषिध्यते । ल्यपः पूर्वं 'अच उपसर्गात्त'इति तो न भवति । 'अन्तरङ्गानपि विधीन् बहिरङ्गो ल्यप् बाधत'इति । दानुः । 'दाभाभ्यां नु'रिति नुप्रत्ययः । देष्णुः । दानशीलः । 'गादाभ्यां चेष्णुः । दायतीति शोधने गतम् ॥ ९१३ ॥

हृ कौटिल्ये ॥ ह्वरति । जह्वार । जह्वरतुः । जह्वर्थ । जह्वरिव । क्रादिनियमादिट् । थलि तु 'अचस्तास्वदि'ति निषिध्यते । 'ऋतश्च संयोगादेर्गुण'इति गुणः । अय वृद्ध्या पूर्वविप्रतिषेधेन स्वविषये बाध्यते । ह्वर्त्ता । ह्वरिष्यति । 'ऋद्धनोः स्य' इति इट् । ह्वरतु । अह्वरत् । आशिषि ह्वर्यात् । 'गुणोर्त्तिसंयोगाद्यो'रिति अर्त्तेर्ऋकारान्तस्य संयोगादेर्यक्ि यकारादावार्द्धधातुके लिङि च गुण इति गुणः । अह्वार्षीम् । यक्ि ह्वर्यते । लिङीव गुणः । यदाशीर्लिङि यगात्मनेपदे च तदा 'लिङ्सिचोरात्मनेपद'इत्यधिकृत्य 'ऋतश्च संयोगादे'रिति पक्षे इटि व्यतिह्वरिषीष्ट । व्यात्यह्वर्तेत्यादि । 'लिङ्सिचावात्मनेपदेष्वि'ति अधिकृत्य 'उश्चे'ति कित्त्वविधानात् न गुणः । झलि सिज्लोपः जुहूर्षति । 'अज्झनगमां सनी'ति दीर्घे 'उदोष्ठ्यपूर्वस्ये'त्युत्वे रत्वे च 'हलि चे'ति दीर्घः । जाह्वर्यते । 'गुणोर्त्तिसंयोगाद्यो'रित्यधिकृत्य 'यङि चे'ति गुणः । जह्वर्त्ति । जह्वर्ते इत्यादि । लोटि हेर्ङित्त्वात् । जह्वृहि । उत्तमे । जह्वराणि । लङि अजह्वः । ह्वृतम् ॥ ९१४ ॥

स्वृ शब्दोपतापयोः ॥ स्वरति । सस्वार । सस्वरतुः । सस्वर्थ । सस्वरिथ । सस्वरिम । 'स्वरतिसूती'ति वलादाविड्विकल्पः । अत एव तासौ नित्यानिट्त्वाभावा'दचस्तास्वदि'ति निषेधो न भवति । नापि 'ऋतो भारद्वाजस्ये'ति निषेधः । यतोयम् 'अचस्तास्व''दुपदेशेत्वत' इति निषेधावृकारान्तैकविषयाविति नियमादयोदकारान्तेषु पाक्षिकत्वमात्रफलौ । 'श्युकः किती'ति निषेधेन पुरस्तात् प्रतिषेधकाण्डारम्भसामर्थ्यात्

परस्यापि स्वरत्यादिविकल्पस्यापि बाधः । तेन वमयोः क्रादिनियमेन नित्यमिडेव, न च मन्तव्य 'श्युकः किती'ति निषेधस्य बाधक क्रादिनियमं स्वरत्यादिविकल्पः परत्वात् बाधेतेति, तस्मिंस्तु प्रसक्ते पुनर्बाधकस्य निषेधस्यापि प्रसङ्गात् । अस्ति च लिङ्ग पुरस्तादारभ्यमाणेनापि प्रतिषेधेन स्वरत्यादिविकल्पस्य बाध्यतेति । यदयं स्वरतेः 'सनीवन्ते'त्यादिना विकल्पं शास्ति, इह च 'सनि ग्रहगुहोश्चे'ति उगन्ताना सन्यारभ्यमाणेन निषेधेन परस्यापि स्वरत्यादिविकल्पस्य बाधनेयेवन् । येषा तु दर्शनं यावान् कश्चनेडभावः प्रतिषेधनिबन्धनो विकल्पनिबन्धनो वा स सर्वः क्रादिसूत्रेण नियम्यतइति तेषामत्र थल्यपि नित्यमिटा भाव्यम् । स्वर्ता । स्वरिष्यति । 'ऋद्धनोःस्य'इति नित्यमिट् विप्रतिषेधेन । स्वरतु । अस्वरत् । आशिषि स्वर्यात् । 'गुणोर्त्तिसंयोगाद्योः'रिति गुण. । अस्वारीत् अस्वारिष्टाम् । अस्वार्षीत् अस्वार्ष्टाम् । सिस्वरिषति । सुस्वूर्षति । 'सनीवन्ते'त्यादिना इड्विकल्पः । इडभावे 'अज्झनगमामि'ति दीर्घ 'उदोष्ठ्यपूर्वस्ये'ति उत्वे रपरे 'हलि चे'ति दीर्घः । सास्वर्यते । 'गुणोर्त्तिसंयोगाद्योः', 'यङि चे'ति गुणः । सर्स्वर्त्ति । सस्वृत इत्यादि । सर्स्वरिता इत्यादौ स्वरत्यादिविकल्पस्य न प्रसङ्गः । स्वरतीति तिपा निर्देशात् । स्वारयति । असिस्वरत् । सस्वरते । 'समो गमृच्छिप्रच्छिस्वरत्यर्त्तिस्वृविदिभ्य' इति समुपसृष्टादकर्मकात् अस्मात्तङ् । संस्वरे । संस्वरिषे । क्रिति लिटि स्वरत्यादिविकल्पो नेत्युक्तम् । तेन क्रादिनियमान्नित्यमिट् । संस्वरिता । संस्वर्त्ता । संस्वरिष्यते । 'ऋद्धनो स्य'इति नित्यमिट् । संस्वरताम् । संस्वरेत । आशिषि संस्वरिषीष्ट । संस्वृषीष्ट । लुङि समस्वरिष्ट । समस्वृत । इडभावे हरतिवत् । 'उश्चे'ति कित्त्वादगुणत्व तङ्विधौ स्वरतीति तिपा निर्देशात् सास्वरीतीत्यादौ न तङ् । स्वृत्वा स्वृतः । 'श्युकः किती'ति नित्यमिड् न । स्वरुः । यूपे छिद्यमाने प्रथमपतितशकलो वज्रश्च । 'स्तृस्वृशिही'त्यादिनोप्रत्ययः ॥ ९१५ ॥

स्मृ चिन्तायाम् ॥ मातुः स्मरति । इत्यादि हरतिवत् । 'अधीगर्थे'ति कर्मणि शेषे षष्ठी । सुस्मूर्षते । 'ज्ञाश्रुस्मृ'ति तङ् । स्मरयतीत्या-

ध्याने घटादिपाठात्, अन्यत्र स्मारयति । असस्मरत् 'अत्स्मृदृत्वरे'त्यभ्यासस्याकार इत्वापवादः । अयमनेकार्थत्वात् विस्मरणे चित्तादपक्रमणे वर्त्तते । अनन्तरं दृइति क्व चित्पठ्यते । दृरतीत्यादि स्मरतिवत् । दूर्यते संह्रियते इति द्वारम्, द्वारे नियुक्तो दौवारिकः । 'तत्र नियुक्त' इति ठकि 'द्वारादीना चे'ति वृद्धिप्रतिबन्ध एजागमश्च । द्वारादिषु तदादिविज्ञानात् द्वारपालस्येदं, दौवारपालमित्यत्रापि वृद्धिप्रतिबन्ध एजागमश्च भवति । द्वारिति ण्यन्तात् क्विपि ॥ ९१६ ॥

सृ गतौ ॥ सरति । ससार । सस्रतुः । सस्रुः । ससर्थ । सस्रव । अजादावपृक्तिविषये यण् । क्रादिपाठादनिट्त्वम् । सर्त्ता । सरिष्यति । 'ऋद्धनोः स्य इति इट् । असरत् । सरेत् । स्रियात् । 'रिङ् शयग्लिङ्क्षु' इति रिङादेशः । असार्षीत् । असार्ष्टाम् । 'सर्त्तिशास्ती'त्यङ्विधौ अविद्यमानशपा शासिना साहचर्यात् सर्त्यर्त्योरप्यविद्यमानशपोर्जुहोत्यादिक्रयोर्ग्रहणमिति नास्याङस्ति । सीसीर्षति । 'अज्झने'ति दीर्घे 'ऋत इद्धातो'रिति इत्वे रपरे 'हलि चे'ति दीर्घे द्विर्वचने सेस्रियते । 'रिङ् शये'ति रिङ् । सर्सर्त्ति । सर्सृत इत्यादि । सारयति । असीसरत् । यदायं सरतिर्वेगितगमने वर्त्तते तदा पाघ्रादीनां शित्प्रत्यये धावादेशे धावतीत्यादि । उपसर्या गर्भग्रहणे प्राप्तकाला । 'उपसर्या काल्या प्रजन'इति यति निपात्यते । प्रजनं गर्भग्रहण तत्र प्राप्तकालेत्यर्थः । अन्यत्र ण्यति उपसार्या । सूर्य. । 'राजसूयसूर्ये'ति क्यपि उत्त्व निपात्यते । सूवतेर्वा रुगागमे सूर्यशब्दात् प्रत्ययाः सुवतौ प्रदर्शयिष्यन्ते । साधु सरतीति सरकः 'पृसृल्वः समभिहारे वुन्'इति समभिहारेणात्र साधुकारित्वमुच्यते। तथा च वार्त्तिकम् । साधुकारिणि वुन्विधानमिति । पुरः सरतीति पुरःसरः । 'पुरोग्रतोग्रेषु सर्त्ते'रिति टः । अग्रेसरइति 'तत्पुरुषे कृती'ति सप्तम्या अलुक् । अत्र न्यासे अग्रे इत्येकारान्तत्व निपातनादित्युक्तम् । अग्रं सरति अग्रेण सरतीत्यादावपि एकारान्तत्वम् । एवं हि सवरणाव रुणाग्रसरो रुषा, आयोधनाग्रसरतां त्वयि वीर याते इत्यादयः प्रयोगाश्चिन्त्याः स्युः । पूर्वः सरतीति पूर्वसरः । 'पूर्वे कर्त्तरी'ति कर्तृवा-

चिनि पूर्व्वशब्द उपपदे सर्त्तेष्टः । कर्त्तुरन्यत्राणेव । पूर्व्वदेशं सरतीति पूर्वसारः । उद्वासारी, प्रत्यासारी । 'उत्प्रतिभ्यामाङि सर्त्तेरुपसंख्यान'-मिति णिनिः । परिसारी । 'सप्रत्रे'त्यादिना घिनुण् । सरणः । 'जुचङ्क्रम्ये'त्यादिना युच् । सृमरः । 'सृघस्यदः क्मरच्' इति क्मरच् । सृत्वरः । 'इण्नशजिसर्त्तिभ्यः क्वरप्' इति क्वरप् । सृत्वरी । 'टिड्ढाण'ञिति ङीप् । सस्रिः । 'आदृगमहनजनः किकिनौ लिट् च' 'भाषया धाञ्कृसृगमिजनिभ्य' इति किकिनोरन्यतर' । लिड्वद्भावाद् द्विर्वचनम् । सारः । कालान्तरस्थायी । 'सृ स्थिरे'इति कर्त्तरि घञ् । स्थिरादन्यत्र भावादौ घञि सारः । अयमुत्कर्षे पुल्लिङ्गः । न्यायादनपेते नपुंसकलिङ्गः । अतिसारो व्याधिः । विसारो मत्स्यः । सारो बलं, 'व्याधिमत्स्यबलेष्वि'ति घञ् । अस्थिरार्थमिद वचनम् । अनीसारः । 'उपसर्गस्य घञ्यमनुष्ये'इति दीर्घः । अनीसारोऽस्यास्तीति अनीसारकी । 'वातातीसाराभ्यां कुक्चे'ति मत्वर्थे इनिः कुगागमश्च । प्रसार । आसारः । भावे 'अकर्त्तरि च कारके संज्ञायामि'ति घञ् । रुद्धोरुदन्तमुवलप्रसरं निषेवे इति माघे बाहुलकादप् । एवं निसर इत्यपीन्याञ्चेय. । उपसरो गवां स्त्रीगवीषु पुंगवानां गर्भाधानाय प्रथममुपसरणमुच्यते । 'प्रजने सर्त्ते'रित्यप् । परिसरः । अपसरः । 'पुंसि संज्ञायामि'ति करणाधिकरणयोर्घः । परितः सरणं परिसर्या । 'इच्छे'त्यत्र 'परिचर्यापरिसर्यामृगया' इति भावे शे यकि गुणः । वैसारिणो मत्स्यः । 'विसारिणो मत्स्य'इति विसारिन्शब्दान्मत्स्यवृत्तेः स्वार्थे ऽण् प्रत्ययः । 'इनण्यनपत्य'इति प्रकृतिभावः । अस्मादेव विसारिण इति निर्द्देशादण्, तत्सन्नियोगेन णिनिः । ग्रहादिन्वाणिणिनिरिन्याञ्चेयः । एवं हि पृथक्प्रयोगार्हः स्यात् । ग्रहादिषु न दृश्यते, प्रतिषिद्धश्च पदमञ्जर्यां पृथक्प्रयोगः । पृथक्प्रयोगमसहमानेनैव न्यासकारेणापि ग्रहादित्वाण्णिनिरित्युक्त्वा अत एव निपातनादित्युक्तम् । निपातनं च प्रत्ययसन्नियोगेनैव । सृणिका । 'सर्त्तेर्नुट् चे'ति इकन् प्रत्ययः. नुडागमः । सार्थः । 'सर्त्तेर्णिच्चे'ति थन्प्रत्ययः णित्त्वाद्वृद्धिः । सर्वः । 'सर्वनिघृष्वे'त्यादिना वन्, अत्र वक्तव्यं तत् स्वतोऽनुक्तम् । सरयूः । 'सर्त्तेरयू'रित्ययू । सरय्वां भवं, सारवम् । 'दाण्डिने'त्यादिना अण्प्रत्यये युशब्द-

लोपो निपात्यते । सरणिः । 'अर्तिसृधृनृती'त्यादिना अनिप्रत्ययः । सरित् 'हृसृरुही'त्यादिनेतिप्रत्ययः । सृणिः । 'सृवृषिभ्यां क्किप् चे'ति निप्रत्ययः । सरः । असुन् । सरसी । 'वर्त्तमाने पृषद्बृहन्महज्जगच्छत्रवच्चे'ति शतृवद्भावात् ङीप् । सारङ्गः । 'सृवृङोर्वृद्धिश्चे'ति अङ्गप्रत्यये वृद्धिः । अद्भ्यः सृतेत्यप्सरा । 'अङ्गिराअप्सरा'इत्यसुनि निपात्यन्ते । उणादिवृत्तौ प्सप इति सौत्रो धातुः, अस्मात् सरसुन् प्रत्यय इत्युक्तम् । बहुष्वप्सरस इति बहुवचनं प्रायिकम् । तदुक्तम् । अप्सरःसुमनःसिकतावर्षाणामिति बहुत्व प्रायिकम् । अप्सराइव आचरति अप्सरायते । 'कर्त्तुः क्यङ् सलोपश्चे'ति क्यङि सलोपश्चेति । तत्र विभाषाग्रहणे व्यवस्थितविभाषाश्रयत्वात् इह नित्यं सलोपः । उक्त च । 'ओजसोप्सरसो नित्यं पयसस्तु विभाषये'ति । सारथिः । 'सर्त्तेर्णिदि'ति आथिन्प्रत्यये णित्त्वात् वृद्धिः ॥ ९१७ ॥

ऋ गतिप्रापणयोः ॥ ऋच्छति । 'पाघ्रेत्या'दिना शिति ऋच्छादेशः । आर । आरतुः । आरिथ । आरिव । लिटीत्यधिकृत्य 'ऋच्छत्यॄता'मिति गुणः । तत्र हि ऋ इत्यपि सवर्णदीर्घेणार्त्तिर्ऋकारान्ताश्च निर्दिश्यन्ते । वृद्धिविषये पूर्वविप्रतिषेधेन वृद्धिः । तत्र गुणवृध्यो'र्द्विर्वचनेची'ति स्थानिवत्त्वात् ऋशब्दस्य द्विर्वचने अभ्यासस्यारदत्वे हलादिशेषे च 'अत आदे'रिति दीर्घे पुनरुत्तरखण्डस्य गुणवृध्योः सवर्णदीर्घः । वलादौ च क्रादिनियमादिट्, थलि तु 'ऋतो भारद्वाजस्ये'ति नियमं बाधित्वा 'इडत्यर्तिव्ययतीना'मि'ति इट् । अर्ता । अरिष्यति । 'ऋद्धनोः स्य'इति इट् । ऋच्छतु । आर्च्छत् । ऋच्छेत् । आशिषि अर्यात् । 'गुणोर्त्तिसंयोगाद्यो'रिति गुणः । सर्वत्रार्त्तिग्रहणेषु भौवादिकजुहोत्यादिकयोर्द्वयोरपि ग्रहणमिति स्थितं व्याख्यानेषु, अत एवार्तीत्यविकरणनिर्देशः कृतः । भौवादिकग्रहणे ऋच्छतीति वक्तव्यं, जौहोत्यादिकस्य तु शपः श्लौ इयर्त्तीति । 'अर्त्तिपिपर्त्योश्चे'ति अत्र श्लावित्यधिकारात् भौवादिकस्य न संभवः । 'सर्त्तिशास्त्यर्तिभ्यश्चे'त्यङ्विधावपि शासिना अविद्यमानशपा साहचर्यात् सर्त्यर्ती अप्यविद्यमानशपौ गृह्येते इति ह्युक्तं, तेनास्य लुङि आर्षीत् । आष्टाम् इत्यादि

भवति । अरिरिषति । 'स्मिपूङ्रञ्ज्वशां सनी'तीट् । अत्र ऋ इति भौवादिकजौहोत्यादिकयोर्द्वयोरपि ग्रहणम् 'ऋच्छत्यॄता'मितिवत् । अत्र द्विर्वचनात् पूर्वं गुणे रपरत्वे 'अजादेर्द्वितीयस्ये'ति रिशब्दस्य द्विर्वचनं, 'द्विर्वचनेऽचि'इति नात्र स्थानिवत्त्वम् । 'सन्यङो'रि'त्यस्य षष्ठ्यन्तत्वात् । न च कार्यी निमित्तत्वेनाश्रीयते । अत्र हरदत्तः । यत्र सप्तम्या निमित्त श्रुतं तन्निमित्तं न तु तद्भावितामात्रमिति । अरार्यते । 'सूचिसूत्री'त्यादिना यङि 'यङि चे'ति 'गुणो न न्द्रा इति निषेधस्य यकारपररेफस्य प्रतिषेध इति बाधात् रेफादेर्द्विर्वचने 'दीर्घोऽकित'इति दीर्घः । अरर्त्ति । अरियर्त्ति । ऋशब्दस्य द्विर्वचने अभ्यासस्योरदत्वे हलादिशेषे 'ऋतश्चे'ति रुग्रीग्रिकः । उत्तरखण्डस्य गुणः । अत्र रीग्रिकोर्न रूपभेदः । उभयत्रापि 'अभ्यासस्यासवर्णे'इतीयङा भाव्यत्वात् । ईट्पक्षे अरर्तीति । तसादौ ङित्त्वादुत्तरखण्डस्य न गुण इति अर्ऋतः । अरियृत इत्यादि । झौ ऋशब्दस्य द्विर्वचने अभ्यासस्य कार्ये रुकि च 'अदभ्यस्ता'दि'ति झेरद्भावे परखण्डस्य यणि 'रो री'ति रेफस्य लोपे 'ढ्रलोपे'इति दीर्घे आरतीति भवति । 'पूर्वत्रासिद्धे न स्थानिवदि'ति निषेधात् 'रो री'ति लोपे 'अचः परस्मि'न्नि'ति न यणः स्थानिवद्भावः । रियीकोर्ऋकारमाश्रित्य इयङि पश्चाद्भावमाश्रित्य तस्य यणि अरिय्रति इति भवति । न च 'लोपो व्योर्वली'ति यलोपप्रसङ्गः । 'अचः परस्मि'न्नि'ति यणः स्थानिवत्त्वात् । न चास्ति यलोपं प्रति न स्थानिवदिति, स्वरदीर्घयलोपेषु लोपाजादेशो न स्थानिवदिति वचनात् । अरर्षि । अरियर्षि । अरर्मि । अरियर्मि । अर्ऋवः । अर्ऋमः । अर्यृवः । अर्यृमः । अररांचकार । अरियरांचकार । अररिता । अरियरिता, अररिष्यति । अरियरिष्यति । अरर्त्तु । अरियर्त्तु । अर्ऋहि । अरियृहि । ङित्त्वाच्च गुणः । अरराव । अरियराव । आटि पित्त्वात् गुणः । लङि अभ्यासस्य रुकि परस्य गुणे तिप्सिपोर्हल्ङ्यादिलोपे रेफस्य विसर्जनीये अङ्गस्याटि आटः रियीकोरियङि आरियः । आर्ऋताम् । आरियृताम् । बहुवचने 'जुसि चे'ति गुणे आररुः । आरियरुः । लिङि । अर्ऋयात् । अरियृयात् । आशिषि आरियात् । 'रिङ् शयग्लिङ्क्षु' इति रिङादेशे 'रो री'ति लोपे

द्रलोपदीर्घः । रियीकोरियङि परस्य रिङादेशे तस्य स्थानिवत्त्वात् यलोपा-भावे अरिरियात् । यलोपविधिं प्रति न स्थानिवदिति तु न भवति तस्य लोपाजादेशविषयत्वात् । 'गुणोर्ती'ति गुणः श्तिपा निर्देशात् न भवति । लुङि आरारीत् । आरियारीत् इत्यादि । अर्पयति, 'अर्त्तिह्रीति पुक् । 'पुगन्तलघूपधस्ये'ति गुणः । मा भवानर्पिपत् । 'उर्ऋदि'ति पक्षे ऋकारो गुणापवादः । णिलोपस्य 'द्विर्वचनेची'ति स्थानिवत्त्वात् पिशब्दस्य द्विर्वचनम् । ऋकाराभावपक्षे गुणे 'न न्द्राः' इति रेफस्य द्विर्वचननिषेधात् पिशब्दद्विर्वचने मा भवानर्पिपदिति भवति । श्तिपा निर्देशाद्यङ्लुकि पुगभावात् अरारयतीति भवति । रिकीक्पक्षे अरियारयतीति । उपार्च्छति । 'उपसर्गादृति धाता'विति ऋवर्णान्तादुपसर्गात् ऋकारादौ धातौ परे पूर्वपरयोर्वृद्धिः । सा च ऋवर्णस्थानिका इति रपरत्वम् । अर्यः । 'अर्यः स्वामिवैश्ययो'रिति यति निपात्यते । स्वामिवैश्याभ्यामन्यत्र 'ऋहलोर्ण्य'दिति ण्यत् । आर्यः । स्त्रियाम् आर्या । आर्याणी । 'आर्यक्षत्रियाभ्यां वे'ति ङीषानुकौ । पक्षे विना पुंयोगं स्वार्थएवायं विधिरिति वृत्तिः, तेन पुंयोगेन नित्य ङीष् भवति । आरी । अरित्रम् । 'अर्त्तिलू' इति करणइत्रः । आरा प्रतोदः । आरा शस्त्रिकायामिति भिदादिपाठात् अङ् वृद्धिश्च । अन्यत्रार्त्तिः । 'उपसर्गादि'ति वृद्धिः । ऋणम् । 'ऋणमाधमर्ण्य'इति निष्ठानत्वं निपात्यते । अधमऋणे अधमर्णः । अत एव निर्देशात् सप्तम्यन्तेन समासः । अधममृणमस्येति बहुव्रीहिर्वा, निष्ठान्तस्यपरनिपातः । अत एव निर्देशात् ण्यभावश्चाधमर्ण्यम् । इदं च कालान्तरदेयविनिमयोपलक्षणार्थं, तेनोत्तमर्णं इत्यपि भवतीति वृत्तिः । 'धारेरुत्तमर्ण' इति निपातनात् वा पूर्ववत् समासः । प्रगतं प्रवृद्धं वा ऋणं प्रार्णं 'प्रादयो गताद्यर्थे प्रथमया' इति समासः । 'प्रवत्सतरकम्बलवसनार्णदशानामृणे'इति वृद्धिः । ऋणार्णम् । ऋणापाकरणार्थं यदुपादीयते तदुच्यते । षष्ठीसमासः । दशार्णो देशो नदी च । विशेषणसमासः । यथा कथञ्चित् व्युत्पाद्य ऋणदशभ्यां वृद्धिः । दशार्णमपहाय सर्वं बहुव्रीहयो वा, लिङ्गन्तु विशेषणायत्तं द्रष्टव्यम् । वत्सतरार्णं

ऋणवसनार्णम्, आधमर्ण्यादन्यत्र ऋतः । सुखेन ऋतः सुखार्तः । 'ऋते च तृतीयासमासे' इति वृद्धिः । अन्यत्र परमर्तः, आर्त इत्यत्राङ्युपपदे 'उपसर्गादृती'ति वृद्धिः । आत्रेयस्तु सौत्राद्दृनोरतेर्व प्रज्ञादयाणि व्युत्पादयति । अन्यथापि सिद्धे को ऽयं यत्न इति न जानीमः । अरुः । अर्तीरुवपिय-जितनिधनिनृपिभ्यो निर्दिन्युसिप्रत्ययः । अरुष्करोति । 'अरुर्मन' इति च्विप्रत्यये सलोपः । 'च्वौ चे'ति दीर्घः । अर्शः । अर्तेर्गुणः शुट् चेत्यसुन्प्रत्ययः शुडागमश्च, अर्शोऽस्यास्तीति अर्शसः । 'अर्शआदिभ्योऽजि'ति अच् मत्वर्थे । अररः असुरविशेषः । अर्तेररिरित्यरु । अर्भो बालः । 'अर्ति-दृभ्यां भन्नि'ति भन् । अर्भकः । स्वार्थे कन् । अर्थः । 'उषिकुषिगर्त्ति-भ्यस्थन्नि'ति थन् । ऊर्मिः । 'अर्तेरु चे'ति मिन्प्रत्ययः उकारश्चान्तादेशः । अर्वा । 'स्नामदिपद्यर्त्तिपृशकिभ्यो वनिबि'ति वनिप् । अर्वन्तौ । 'अर्व-णस्त्रसावनञ' इति असौ तृ इत्यादेशः, ऋदित्त्वा'दुगिदचामि'ति नुम् । अर्वन्तीत्यत्र ङीप् भवति, अनञिति वचनात् अनर्वाणाविन्यत्र नायमादेशः । निर्ऋयः साम । अर्तेर्निरीति निरुपपदे थन् प्रत्ययः । अरणिः । 'अर्त्तिसृधृसमी'त्यादिना अनिप्रत्ययः । अरुणः । 'अर्तेश्चे'ति उनन्प्र-त्ययः । ऋतुः । 'अर्तेश्चे'ति तुन्प्रत्ययः । किदिति तत्रानुवृत्तेर्न गुणः । ऋतुः प्राप्तोऽस्य आर्तव पुष्पम् । 'ऋतोरण्'इति तदस्य प्राप्तमित्यस्मिन् विषये अण् प्रत्ययः । ऋतुर्देवतास्य ऋतव्यम् । 'वाय्वृतुपित्रुषसो यदि'ति 'सास्य देवते'ति विषये यत्, 'ओर्गुणः' 'वान्तो यि प्रत्यय' इत्यवादेशः । अररं कवाटम् । अर्त्तिकमीत्यादिना अरप्रत्ययः । इरिणम् ऊषरम्, अर्त्तेः किदिनश्चेतीन् प्रत्ययः । किद्वचनान्न गुणः, धातोरिकारादेशश्च । अर्णः अर्तेर्नुडित्यसुन्प्रत्ययः नुडागमश्च । अर्णवः । अर्णसो लोपश्चेति मत्व-र्थीये वप्रत्यये सलोपः ॥ ९१८ ॥

घृ घृ सेचने ॥ घरति । जघार । जघ्रतुः । जघर्थ । जघ्रिव । घर्त्ता । घरिष्यति । घरतु । अघरत् । घरेत् । आशिषि घ्रियात् । रिङ् । अघार्षीत् । जिघीर्षति । 'अज्झने'ति दीर्घे ऋत इत्वे रपरे 'हलि चे'ति दीर्घः । जेघ्रीयते । 'रीङ् ऋत'इति रीङ् । जर्घर्ति । घारयति । अजी-

र्थत्वादर्थप्राप्तस्यैवावधारणस्यानुवादकः । अत्र 'तपोनुतापे चे'ति चकारेण कर्मकर्त्तरि च्विणो निषेधात्सिच् । अत्रानुतापग्रहणस्य कर्मकर्त्रर्थत्वादन्वतप्त पापेन कर्मणेत्यत्रापि च्विण्न भवति, अनुतापादन्यत्रोदतापि सुवर्णं सुवर्णकारेणेति भवितव्यमेव च्विणा । तप्यम् । 'पोरदुपधाद्दि'ति यत् । ललाटतप आदित्यः । 'असूर्यललाटयोर्दृशितपो'रिति यथासङ्ख्यात् ललाटे कर्मण्युपपदे तपेः खशि मुम् । शत्रुन्तपः । 'सञ्ज्ञायां भृतॄवृजी'त्यादिना खचि पूर्वपदस्य मुमागमः । द्विषन्तपः । परंतपः । 'द्विषत्परयोस्तापे'रिति खचि णिलोपे 'खचि ह्रस्व' इति ह्रस्वः । द्विषतस्तकारस्य मुमि संयोगान्तलोपः । अत्र द्विषत्परयोरिति द्वितकारनिर्देशात्तकारान्तएव द्विषच्छब्द उपपदेऽयं प्रत्ययः, न तु लिङ्गविशिष्टपरिभाषया द्विषतीशब्द उपपदइति कर्मण्यणि द्विषतीतापइति भवति । तथा तापेरिति ण्यन्तस्य ग्रहणात्केवलादण्णेव भवति । असञ्ज्ञायां द्विषत्ताप इति, सञ्ज्ञायां तु 'सञ्ज्ञाया भृतॄवृजी'त्यादिना खजुक्तः । तपः । असुन् । तपश्चरति तपस्यति । 'कर्मणो रोमन्थतपोभ्यां वर्तिचरो'रिति रोमन्थतपोभ्यां कर्मभ्यां यथासंख्यं वर्त्तिचरोरर्थयोः क्यङिति क्यङ् । कर्मण इति प्रत्येकसम्बन्धापेक्षमेकत्वम् । 'तपसः परस्मैपदं चे'ति परस्मैपदम् । तपस्या । क्यङन्तत्वात् 'अ प्रत्ययादि'ति स्त्रियामकारः । तपः शीलमस्य तापसः । 'छत्रादिभ्यो ण'इति णः । अत्र णेऽणकृतं कार्यं भवतीति प्रागेवोक्तं, तेन तापसीत्यत्र ङीप् भवति । तपस्वी । 'तपः सहस्राभ्यां विनीनौ'इति मत्वर्थे विनिः । अत्रैवार्थे 'अण्चे'त्यणि तापसः, तपस्वीत्यत्र 'तसौ मत्वर्थे' तकारान्त सकारान्तं च मत्वर्थे प्रत्यये भमिति भसञ्ज्ञयाऽऽकडारीययाऽनवकाशया 'स्वादिष्वसर्वनामस्थान'इति पदसञ्ज्ञाया बाधा'त्ससजुषोरुरि'ति रुत्वं न भवति । तापः । घञ् । सन्तापाय प्रभवति सान्तापिको रोगः । 'तस्मै प्रभवति सन्तापादिभ्य' इति चतुर्थ्यन्तात्सन्तापशब्दात्प्रभवत्यर्थे ठञ् । निष्टपति । निष्टप्तम् । 'निसस्तपतावनासेवन'इति षत्वम्, आसेवनं पौनःपुन्यं ततोऽन्यदनासेवनम् । अयमैश्वर्ये दिवादौ, दाहे चुरादौ ॥ ९६५ ॥

त्यज हानौ ॥ त्यजति । तत्याज । तत्यजतुः । तत्यजिथ । तत्यक्थ । तत्यजिव । त्यक्ता । त्यक्ष्यति । त्यजतु । अत्यजत् । त्यजेत् ।

त्यज्यात् । अत्याक्षीत् । अत्याक्ताम् । तित्यक्षति । तात्यज्यते । तात्यक्ति । त्याजयति । अतित्यजत् । त्यागशीलस्त्यागी । सम्पृचादित्वाद् घिनुण् । 'चजोः कु घिण्ण्यतो'रिति कुत्वम् । त्याज्य'मित्यत्र ण्यति प्रतिषेधे त्यजेरुपसंख्यानमिति कुत्वाभावः । त्यद् । 'त्यजियजितनिभ्यो डिदि'ति त्यदिप्रत्यये डित्वाट्टिलोपः । स्यः । 'त्यदादीनाम'इति त्यदाद्यर्थविभक्तिनिमित्तनिबन्धनेन्त्यस्यात्वे पररूपे च त्यदादीनामित्यधिकारे 'तदोः सः सावनन्त्ययो'रिति तकारस्य सकारः । त्यौ त्ये इत्यादौ सर्वनामकार्यं पूर्ववत् । अन्वा'दिस्त्यदादिप्राधान्येपीष्यतइति परमस्य इत्यादि भवति, अप्राधान्ये तु अतित्यदित्यादि । त्यस्येदं त्यदीयम् । 'त्यदादीनि चे'ति वृद्धत्वा द्वृद्धाच्छ इति छः । त्यस्यापत्यं त्यादायनिः । 'उदीचां वृद्धादगोत्रादि'ति फिञ्, अगोत्रप्रत्ययान्ताद्वृद्धादपत्ये फिञुदीचां मतेनेति सूत्रार्थः । स्यश्च देवदत्तश्च त्यौ । 'त्यदादीनि सर्वैर्नित्य'मिति त्यदः शेषः । स च स्यश्च तावित्यत्र त्यदादीनां यत्पर तच्छिष्यतइति वा परस्य तदः शेषः । स्त्रियां 'त्यदादीनाम'इति विभक्तावत्वे टापि 'हल्ङ्याभ्य' इति सुपो लोपे स्या इति भवति । सन्निपातपरिभाषा 'न यासयो'रिति निर्देशाल्लिङ्गादनित्यत्वज्ञापनाच्च भवति । अथ ण्यन्तो द्विकर्मक इति सुधाकरादिमतेन नायतावुक्तं, दृश्यते च प्रयोगः, 'त्याजितैः फलमुत्खातैः, 'पूर्वोष्मणा त्याजितमात्रभाव'इत्यादि । 'अकथितं चे'त्यत्र गौः पयस्त्यजति गवा पयस्त्याजयतीति प्रयुञ्जानयोः कैयटहरदत्तयोः प्रयोज्यस्य कर्मत्वमनभिमतम् ॥ ९६६ ॥

षञ्ज सङ्गे ॥ सजति । 'दंशसञ्जस्वञ्जे'त्यनुनासिकलोपः । ससञ्ज । ससञ्जतुः । ससङ्क्थ । ससञ्जिथ । ससञ्जिव । 'असंयोगाल्लिट्किदि'ति कित्त्वनिषेधा'दनिदिताम्'इत्युपधालोपो न भवति । सङ्क्ता । सङ्क्ष्यति । सजतु । असजत् । सजेत् । आशिषि कित्त्वादुपधालोपे सज्यात् । असाङ्क्षीत् । असाङ्क्ताम् । वदव्र'जेति वृद्धिः । तत्र हलग्रहणं हल्समुदायप्रतिपत्त्यर्थं, सिसङ्क्षति । 'स्तौतिण्योरेवे'त्यषत्वम् । अभिषजन्ति । 'उपसर्गादि'ति षत्वम् । अभ्यषजदित्यादौ तु 'प्राक् सितादड्व्यवायेपी'ति

षत्वम्, अभिषिषङ्क्तीत्यत्र 'स्तौतिण्योरेवे'ति नियमं बाधित्वा 'स्थादिष्वभ्यासेन चे'त्यादिना परस्य षत्वं, पूर्वस्य तूपसर्गादित्यनेनैव सिद्धम्। अङ्गुलौ सगोऽस्याः अङ्गुलिषङ्गा यवागूः। 'समासेङ्गुले'रिति षत्वम्। अभिषजति। 'उपसर्गा'दिति षत्वम्। प्रासङ्गं वहति, प्रासङ्ग्यः। 'तद्वहति रथयुगप्रासङ्गमि'ति द्वितीयान्तात् वहतीत्यर्थे यत्। प्रासङ्गो युगाद्यासङ्गः। निषङ्गः। 'नौ सञ्जेर्घञि'ति घञ् प्रत्ययः। घित्त्वात् कुत्वम्। सक्थि। 'असिसञ्जिभ्यः क्थिनि'ति क्थिन्। अजादौ विभक्तौ 'इकोऽची'ति नुमि सक्थीनीत्यादि। तृतीयाद्यजादौ तु 'अस्थिदधिसक्थ्यी'त्यादिना ङित्त्वादन्त्यस्य अनङादेशे 'अल्लोपोन'इत्यल्लोपे सक्थ्नेत्यादि। सप्तम्येकवचने अल्लोपस्य 'विभाषा ङिश्यो'रिति विकल्पितत्वात् सक्थ्नि सक्थनीत्युभयं भवति। अङ्गाधिकारे तदन्तविधेरभ्युपगमात् प्रियसक्थ्नेत्यादावप्यनङ् भवति। यदानङ्विधौ नपुंसकेत्यनुवृत्त तदस्थ्यादीनां विशेषणं नाङ्गस्येति प्रियसक्थ्ना शुनेत्यादौ लिङ्गान्तरेऽपि भवति। नपुंसकानुवृत्तिस्तु यदृच्छाशब्दाना पुल्लिङ्गानामस्थ्यादीनामनङ् मा भूदिति अस्थिर्नाम कश्चिदित्यादि। नन्वत्र

'अभिव्यक्तपदार्था ये प्रसिद्धा लोकविश्रुताः।
शास्त्रार्थस्तेषु कर्त्तव्यः शब्देषु न तदुक्तिषु'।

इति नास्ति प्रसङ्ग इति चेत्तर्हि मन्दधियामनुग्रहायैवानुवृत्तिराश्रिता, अत्रोदाहरणे सक्थिशब्दो ऽस्वाङ्गवाची द्रष्टव्यः। स्वाङ्गवाचिनस्तु 'बहुव्रीहौ सक्थ्यक्ष्णो स्वाङ्गात् षच्' इति षच् समासान्तः प्रियसक्थ इति, स्वमङ्गं चेह स्वाङ्ग न तु पारिभाषिकम्, उत्तरसक्थ, मृगसक्थ, पूर्वसक्थम्, 'उत्तरमृगपूर्वाच्च सक्थ्न'इति तत्पुरुषे टच् समासान्तः। अत्र चकारेणोपमानादित्यनुवृत्तौ फलकमिव सक्थि फलकसक्थमित्यत्रापि भवति। अस्मादेव ज्ञापकात् असामान्यवचनेनापि सक्थिशब्देन उपमानस्य समासः। न विद्यते सक्थि यस्य असक्थि, असक्थः। 'नञ्दुस्सुभ्यो हलि सक्थ्योरन्यतरस्यामि'ति पक्षेच् समासान्तः। एवं सुदुरोरुदाहार्यम्। एवं सुसक्थः। गौर्याः सक्थीव सक्थि यस्य गौरिसक्थः, 'बहु-

ब्रीहौ सक्थ्यक्ष्णोः' रिति षच् । यदा गौर्याः सक्थीति षष्ठीसमासस्तदा 'अच् प्रत्ये'त्यत्र अजिति योगविभागादनुभयत्र, सुषामादिषु गौरिसक्थः सञ्ज्ञायामिति पाठात् षत्वं पूर्वपदस्य ह्रस्वत्वं च ॥ ९९७ ॥

दृशिर् प्रेक्षणे ॥ पश्यति । 'पाघ्रे'त्यादिना पश्यादेश इत्संज्ञकाशकारदौ शपि । ददर्श । ददृशतुः । ददर्शिथ । दद्रष्ठ । ददृशिव 'विभाषा सृजिदृशो'रिति थलि इडभावपक्षे 'सृजिदृशोर्झल्यमकिती'ति अकिति झलादौ अमागमविधानात् अमि यणि 'व्रश्चा'दिना षत्वं च । द्रष्टा । द्रक्ष्यति । षत्वं, 'षढोः कः सी'ति कत्वं, पश्यतु । पश्येत् । आशिषि दृश्यात् । अदर्शत्, अदर्शताम् । 'इरितो वे'त्यङि 'ऋदृशोऽङि गुण इति गुणः । अङभावे 'न दृशः' इति क्सनिषेधात् सिच्यमि यणादेशे हलन्तलक्षणाया वृद्धौ अद्राक्षीत् । दिदृक्षते । 'ज्ञाश्रुस्मृदृशां सन इति सनन्तात्तङ् । 'हलन्ताच्चे'ति सनः कित्त्वात् न गुणः, नाप्यमागमः । दरीदृश्यते । रीक् । दर्द्रष्टि । दर्द्रष्टः । लोटि हेर्धित्वे ऽमागमे षत्वष्टुत्वजश्त्वेषु दर्दृड्ढि । दर्दृशानि । आटि 'नाभ्यस्त'स्येति गुणनिषेधः । लङि तिप्सिपोः अदर्द्रक् 'क्विन्प्रत्ययस्य कु'रित्यत्र क्विन् कुरिति वक्तव्ये प्रत्ययग्रहणं यस्मात् क्विनस्ति तस्य सर्वत्र पदान्ते कुत्वार्थमिति षत्वं बाधित्वा दकारस्यान्तरतम्यात्कुत्वेन खकारे 'वावसाने'चर्त्वं ककारः । दर्शयति रूपतर्कं कार्षापणम् । अदीदृशत् । अददर्शत्, 'उर्ऋद्वा' । दृशेः सर्वत्र प्रयोज्यस्य रूपतर्कस्य कर्मत्वं, यदायं दृशिश्चक्षुःसाधने ज्ञानविशेषे वर्त्तते तद्देदमुपसंख्यानं, यदा तु ज्ञानमात्रवचनस्तदा बुद्ध्यर्थत्वादेव सिद्धम् । तत्र बुद्ध्यर्था ज्ञानसामान्यवचना न तु विशेषवचना इति स्थितं, यदा तु ण्यन्तादात्मनेपदं तदा 'अभिवादिदृशोरात्मनेपदउपसंख्यान'मिति प्रयोज्यस्य कर्मत्वविकल्पनात् दर्शयते रूपतर्केण कार्षापणं रूपतर्कमित्युभयं भवति, पश्यन्ति भृत्या राजानं, दर्शयते भृत्यान् राजा भृत्यैरिति वा । संपश्यते 'दृशेश्चेति वक्तव्य'मिति संपूर्वात् अकर्मकात् तङ् । संददृशे । संद्रक्ष्यते । संपश्यताम् । समपश्यत । संपश्येत । आशिषि संदृक्षीष्ट । समदृक्षत लिङ्सिचोः कित्त्वात् न गुणः, नाप्यमागमः । झलि सिज्लोपे प्रत्ययलक्षणेन' षढोः

कः सी'ति कत्वं न भवति सिज्लोपस्य प्रत्ययलक्षणेऽसिद्धत्वादिति तन्नोक्तम् । कर्मणि दृश्यते । अदर्शि । स्यादिषु पक्षे चिण्वदिटि दर्शिष्यते । द्रक्ष्यते । अदर्शिषाताम् । अदृक्षाताम् । दर्शिषीष्ट । दृक्षीष्ट । दर्शिता । द्रष्टेत्युभयं भवति । दृश्यम् । 'ऋदुपधाच्चे'ति क्यप् । उत्पश्यः । 'पाघ्राध्माधेट्दृशः श'इति उपसृष्टात् कर्त्तरि शे पश्यादेशः । दर्शनं पश्यः । अत्र 'पश्यार्थै'रिति निपातनात् भावे शः । अदर्शनमित्यादिनिर्देशात् ल्युडपि भवति । असूर्यंपश्या राजदाराः । गुप्तिपरं चैतत् । एवं नाम गुप्ता यदपरिहार्यदर्शनं सूर्यमपि न पश्यन्ति इति 'असूर्यललाटयोरि'ति खश् । अत एवासूर्येति निर्देशात् दृशिना नञ्संबन्धेन असमर्थत्वेपि समासः । उग्रंपश्यः । 'उग्रपश्येत्या'दिना स्त्रियःविशेषणे कर्मण्युग्रशब्दउपपदे खशि निपात्यते । तादृक् । 'त्यदादिषु दृशोनालोचने कञ् चे'ति त्यदादिषु कर्मसूपपदेषु आलोचनात् चक्षुर्विज्ञानात् अन्यत्र वर्त्तमानात् दृशेः कञ् प्रत्ययः । चकारात् क्विन्, कञः कित्वात् न गुणः, तादृशी । 'टिड्ढाणञि'त्यादिना ङीप्, तादृक्षः, 'क्सश्च वक्तव्य'इति क्सश्च । 'आ सर्वनाम्न'इति दृग्दृशवतुषु परतः सर्वनाम्नोऽन्त्यस्याकारः । 'दृक्षे चेति वक्तव्य'मिति चाकारः । सदृक् । सदृशः । सदृक्षः । दृग्दृशवतुषु इति समानस्य सभावे 'दृक्षे चेति वक्तव्यमि'ति दृक्षे च सभावे, अत एव दृगादिषु सभाववचनात् समानान्ययोश्चेति व्यक्तव्याद्वा कञ् । क्विन् कः । समानान्ययोरपि उपपदयोर्भवति । सदृशीत्यत्र पूर्ववन्ङीब् भवति । परलोकदृश्वा । 'दृशेःक्वनिबि'ति कर्मण्युपपदे भूते क्वनिप् । स्त्रिया 'वनो र चे'ति ङीप् । परलोकदृश्वरी । सुदर्शनः । 'भाषाया शासियुधिदृशिभ्यो युज्वक्तव्य'इति खलोपवादो युच् । कन्यादर्शं वरयति । यां यां कन्या पश्यति ता तां वरयतीत्यर्थः । 'कर्मणि दृशिविदोः साकल्य'इति कर्मण्युपपदेस्मात् साकल्ये गम्ये णमुल् । पशुः । 'अर्जिदृशी'त्युप्रत्ययः पशादेशश्च । यदायमसत्त्ववचनस्तदा चादित्वान्निपातत्वं, यथा लोध नयन्ति पशु मन्यमाना इति, पशु सम्यगिति ह्यत्रार्थः । दर्शनः । 'भृदृशी'त्यादिना ऽनच् । दृक् । संपदादित्वात् क्विप् । 'क्तिनपीष्यत'इति क्तिनि दृष्टिः ॥ ९९८ ॥

दश दशने ॥ दंशनं दृष्ट्राव्यापारः। अत एव निर्देशादनुनासिकलोप इति स्वामी। दशति। तत्रापि 'दंशसञ्जे'ति अनुनासिकलोपः, शपि। ददंश। ददंशतुः। ददंशिथ। ददंष्ठ। ददंशिव। दंष्टा। दङ्क्ष्यति। दशतु। अदशत्। दशेत्। दश्यात्। 'क्किदाशिषी'ति यासुटः क्कित्त्वादनुनासिकलोपः। अदाङ्क्षीत्। अदांष्टाम्। 'वदव्रजे'ति वृद्धिः। दिदङ्क्षति। दन्दश्यते। 'लुपसदचरजपजभदहदशगृभ्यो भावगर्हाया'मिति यङ् भावगर्हायाम्। 'जपजभदहदशे'त्यभ्यासस्य नुक्। दन्दशीति। दन्दंष्टि। दन्दष्टः। यङ्विधौ नुग्विधौ च दशेति कृतनलोपस्य निर्देशात् यङ्लुकि अक्ङित्यपि लोपो नुक् च भवति। दशयति। अददशत्। दन्दशूकः। 'यजजपदशां यङः' इति यङन्तादूकप्रत्यये 'अतो लोपः' 'यस्य हल' इत्यल्लोपयलोपौ। दंष्ट्रा। 'दाम्नी'त्यादिना ष्ट्रन्। अजादिषु दर्शनात् टाप्, अत्रैव पाठात् नलोपाभावश्च ष्ट्रनि, दशेति नलोपनिर्देशस्तु करणे ल्युडर्थः, दशनइति, दंष्ट्री। 'व्रीह्यादिभ्यश्चे'ति मत्वर्थीय इनिः। मूलकोपदंशं भुङ्क्ते मूलकेन उपदंशमिति वा। उपदंशस्तृतीयाया'मिति णमुल्। 'तृतीयाप्रभृतीनी'ति समासविकल्पः। वासरूपविधिना क्त्वापि भवति। मूलकेनोपदश्यते। उक्तं च सर्वत्रैवात्र प्रकरणे क्रियाभेदे सति वासरूपविधिना क्त्वापि भवतीति। मूलकोपदंशमित्यत्र मूलकस्य भुजिनैवान्वयो न दंशिना। न ह्यत्र मूलकेन करणेनान्य उपदश्य भुङ्क्त इत्यर्थः। ननु तेन तृतीयान्तस्योपदंशिना सामर्थ्याभावात् उपपदत्वं नेति कथं प्रत्ययः, वचनं दशनोपदंशं भुङ्क्त इत्यत्र सावकाशं, मुच्यते। यद्यत्रैव स्यात् करण इत्येव ब्रूयात्। तृतीयायामिति वचनात्तु सर्वत्र भविष्यति। तद्धि तृतीयान्तस्योपदंशिना आर्थेऽप्यन्वये यथा स्यादिति, अस्ति चात्रार्थान्वयः, कर्मापेक्षस्योपदंशेः सन्निहितेन मूलकेन संबन्धात् ॥ ९९९ ॥

कृष विलेखने ॥ विलेखनमिहाकर्षणं, तथा च पुरुषकारे कर्षतिश्चाकर्षणे प्रसिद्ध इति द्विकर्मकोऽयं, कर्षति शाखां ग्रामम्। चकर्ष। चकृषतुः। चकर्षिथ। चकृषिव। क्रष्टा। कर्ष्टा। 'अनुदात्तस्य चर्दुपध-

स्ये’त्यत्राम्विकल्पः । कर्क्ष्यति । क्रक्ष्यति । कर्षतु । अकर्षत् । कर्षेत् । कृष्यात् । अकृक्षत् । अकृक्षताम् । ‘शल इगुपधे’ति क्सः । यदा ‘स्पृशमृशकृषतृपदृपां सिज्वे’ति सिच् तदा पूर्वमेवामागमविकल्पे हलन्तलक्षणायां वृद्धौ आकार्क्षीत् । आकार्ष्टाम् । अक्राक्षीत् । अक्राष्टामित्यादि । चिकृक्षति । ‘हलन्ताच्चे’ति सनः कित्त्वान्न गुणो नाप्यमागमः । चरीकृष्यते । चर्कर्ष्टि । चरिकर्ष्टि । चरिकृषीति । चरीकृष्टः । चरिकृष्ट इत्यादि । लोटि हेर्धित्वष्टुत्वजश्त्वयोरमागमपक्षे चरीकृष्टि । लङि तिप्सिपोः हल्ङ्यादिलोपे च अचरीकर्ट् । अमागपक्षे अचरीकृट् । एव वचनान्तरेषु सर्वेषु रिक्रीकोश्च उदाहार्यम् । कर्षयति शाखा ग्रामं देवदत्तं यज्ञदत्तः । अचीकृषत् । अचकर्षत् । ‘उच्चैद्रुा’ । अत्र कृषेः प्रापणार्थत्वेपि अस्ति फलतया गतेः प्रतीतिरिति गत्यर्थत्वात् ‘गतिबुद्धी’ति प्रयोज्यस्य कर्मत्वम्, अत्र ग्रहणमुपसर्जनीभूतयापि गत्या तदर्थत्वे लिङ्गम्, अन्यथा ण्यन्तस्य गमनार्थ इति किं णिग्रहणेन । अत एव तत्र नीवह्योः प्रतिषेधः कृतः । कर्मणि लादयो नयत्यादिवद्वेयाः । कृष्यम् । ‘ऋदुपधाच्चे’ति क्यप् । कर्षतीति कृषः । इगुपधलक्षणः कः । पाण्युपकर्षं पयः पिबति, पाणिना उपकृष्य, पाणावुपकृष्य वा पयः पिबतीत्यर्थः । ‘सप्तम्यां चोपपीडरुधकर्ष’ इति सप्तम्यन्ते चशब्दात् तृतीयान्ते च उपपदे उपपूर्वात् अस्मात् णमुल् । तृतीयाप्रभृतित्वात् समासविकल्पनात् पाणावुपकर्षम्, पाणिनोपकर्षमित्यपि भवति । क्रियाभेदेन वासरूपेण क्त्वापि भवतीति प्रागेवोक्तम् । अत्र णमुल्विधावुपसर्गग्रहणं पीडेरेव विशेषणमिति भाववृत्तौ, भट्टिकारस्त्वतन्त्रं मन्यते । यदाह धनुररिभिरसह्यमुष्टिपीडं दधान इति । इदं तावत् साहसमात्रं, यदाचार्येण प्रयुक्तस्यातन्त्रत्वाङ्गीकरणं, यदपि पीडिनैव संबन्धकथनं तदपि न न्याय्यं, बह्वच्कस्यास्य पूर्वनिपातायोगात्, अत एव वृत्तिन्यासपदमञ्जर्यादिषु सबन्धोङ्गीकृतः । कर्ष्टा शाखां, क्रष्टा शाखाम् । अत्र तृनि ‘ञ्नित्यादिर्नित्यमि’ति प्रकृतेराद्युदात्तत्वेप्युपदेशावस्थायां कृषेरनुदात्तत्वात् अमागमविधौ चोपदेशग्रहणानुवर्त्तनात् पक्षे ऽमागमो भवत्येव । अयं तुदादावपि ॥ ९७० ॥

दह भस्मीकरणे॥ दहति। ददाह। देहतुः। देहिथ। ददग्ध। थलि भारद्वाजनियमादिड्विकल्पः। तत्रानिट्पक्षे 'दादेर्धातोर्घः' 'झषस्तथोर्धोधः', 'झलां जश् झशी'ति घत्वधत्वजश्त्वानि। दग्धा। धक्ष्यति। हकारस्य घत्वे 'एकाच'इति भष्भावेन दकारस्य धकारे धकारस्य 'खरि चे'ति चर्त्वं, दहतु। अदहत्। दहेत्। दह्यात्। अधाक्षीत्। घत्वादि पूर्ववत्। अदाग्धाम्, झलि सिज्लोपः। दंदह्यते। 'लुपसदे'त्यादिना यङः 'जपजभे'ति नुक्, दंदग्धि। दाहयति। अदीदहत्। परिदाही। घिनुण्। निदाघः। अवदाघः। परिदाघः। सञ्ज्ञायां मघमेघनिदाघावदाघा इति न्यङ्क्वादिपाठात् कुत्वं, दहनः॥ ९९१॥

मिह सेचने॥ मेहति। मिमेह। मिमेहिथ। मिमिहिव। क्रादिनियमादिट्। मेढा। ढत्वधत्वष्टुत्वढलोपगुणाः। मेक्ष्यति। षत्वकत्वे, मेहतु। अमेहत्। मेहेत्। मिह्यात्। अमिक्षत्। 'शलइगुपधादिति' क्सः। मिमिक्षति। 'हलन्ताच्चे'ति सनः कित्त्वान्न गुणः। मेमिह्यते। मेमेढि। मेमीढः। ढलोपे, दीर्घः। मेहयति। अमीमिहत्। मेढ्रम्। 'दाम्नी'त्यादिना ष्ट्रन्। मेघः अचि, सञ्ज्ञायां मेघेति न्यङ्क्वादिषु पाठात् कुत्वं, मीढ्वान्। साह्वान्मीढ्वाश्चेति क्वसावद्वित्वानिट्त्वोपधादीर्घत्वढत्वानि निपात्यन्ते। मिहिरः। इषिमिहीत्यादिना किरच्। स्कन्दादय एतदन्ता अनुदात्ता उदात्तेतः॥ ९९२॥

कित निवासे रोगापनयने च॥ अयमुदात्तेत्। गुपिवदयमपि नित्यसन्नन्तः। चिकित्सति। 'गुप्तिजि'ति सन्। अस्य सनोऽनार्द्धधातुकत्वान्नेटःप्रसङ्गो नापि गुणस्य। अत्र वृत्तौ व्याधिप्रतीकारे सनिति यदुक्तं तदुपलक्षणं, यतः स्वयमेव 'क्षत्रियच् परतन्त्रे चिकित्स्य'इत्यत्र निग्रहापनयननाशनाद्यर्थात् वक्ष्यति, तथा च य एव विद्वान्विचिकित्सतीत्यादौ संशयेपि प्रयुज्यते, निघण्टुरपि विचिकित्सा तु संशय इति। चिकित्सयति। इच्छासनन्त इत्यत्र सन्प्रतिषेधः, केतयतीति चौरादिकस्य। अत्राभरणकारो गुपादिसूत्रे गुप्तिज्किद्भ्य इत्यनुक्रम्य गुपादिष्वनुबन्धकरणमात्मनेपदार्थमिति भाष्ये वार्त्तिके चोक्तत्वात्कित् परस्मैपदिषु पठितोपि आत्मनेपदी।

न च गुपादिष्विति बहुवचनं वक्ष्यमाणमर्थापेक्षमिति वक्तुं युक्त, यतस्तु खलु तत्र गुप्तिज्किदित्यनुक्रम्य गुपादिष्वित्युक्तमित्याह । कैयटे तु क्रम-दर्शनाय कितिः पठितो न त्वयमनुदात्तेदिति । हरदत्तोपि गुपादिष्विति बहुवचन मान्बधसूत्राभिप्राय कितिस्तु परस्मैपदीत्याह । इन्दुरपि गुप्ति जावनुदात्तेत्तौ न कितिः, तस्य चिकित्सतीत्येव प्रयोग इति, एवं स्वामि-काश्यपादयोपि । एव बहुवचन मान्बधसूत्राभिप्रायम्, एवं बहुभिर्महाय-न्यैर्विरोधात्परस्मैपदिषु पाठाच्चाभरणाद्युक्त यत्कि चित्[1] ॥ ९७३ ॥

दान खण्डने ॥

शान तेजने ॥ इमावपि नित्यसनन्तौ स्वरितेतौ । दीदांसति । दीदांसते । शीशांसति । शीशांसते । 'मान्बधे'त्यादिना सनीत्वे च कृतेभ्यासस्य दीर्घः, अय नार्द्धधातुक इति नेट्प्रसङ्ग इत्युक्तम् । दानेरा-र्जवे, शानेर्निशान, इति वृत्तावर्थविशेषेणाय सनुक्तः । दानयति । शान-यतीत्यादि चौरादिकस्य ॥ ९७५ ॥

डुपचष् पाके ॥ इतो वहत्यन्ता अनुदात्ताः स्वरितेतः ॥ पचति । पपाच, पेचतुः । पपक्थ । पेचिथ । पक्ता, पक्ष्यति । पचतु । अपचत् । पचेत् । पच्यात् । अपाक्षीत् । पचते । पेचे । पक्ता । पक्ष्यते । पचताम् । अपचत । पचेत । पक्षीष्ट । अपक्त । अपक्षाताम्, झलि सिज्लोपः । स्वामिदासौ पचत इत्यत्र दासधर्मस्य स्वामिन्यारोपात् परस्मैपदम् । पचेते इत्यत्र स्वामिधर्मस्य दासे समारोपात्तङिति कैयटादौ । पिपक्षति । पिपक्षते । पापच्यते । पापक्ति । पापक्तः । क्तिष्ठ स्वयमेव पच्यन्त इति क्लिष्ट-पच्याः । राजसूयादौ क्यपि निपात्यते, कर्मकर्त्तरि निपातनमिति वृत्तिः । पचः । अच् । श्वान पचतीति श्वपचः । पचादिपाठसामर्थ्यात्कर्मोपप-दादप्यच् । उक्त च

> अज्विधिः सर्वधातुभ्यः पठ्यन्ते च पचादयः ।
> अण्बाधनार्थमेव स्यात् सिद्ध्यन्ति श्वपचादयः ॥

१ चिन्त्यमिति २ पु पा० ।

इति । श्वपाकः । मासपाकः । पिण्डपाकः । कपोतपाकः । अत्र न्यङ्क्वादिपाठात्कर्मण्यणि कुत्वम् । दूरेपाकः । फलेपाकः । न्यङ्क्वादिपाठादपि वृद्धिकुत्वे । 'तत्पुरुषे कृती'त्यलुक् । न्यङ्क्वादिपाठादेव चेमौ कर्मकर्त्तरीति वृत्तौ । क्षणेपाकइति के चित्पठन्ति, दूरेपाका फलेपाकेति टाबन्तावन्ये । उकारान्तावपरे। दूरेपाकुः । फलेपाकुरिति उप्रत्ययो निपातनादिति वृत्तौ । प्रस्थपचः । मितपचः । नखंपचः । 'परिमाणे पच' इति 'मितनखे चे'ति परिमाणवाचिनि कर्मण्युपपदे मितनखयोश्च खच् । उत्पचिष्णुः । 'अलङ्कृञित्यादि'नेष्णुच् । पचेलिमाः शालयः । केलिमर उपसंख्यानमिति केलिमर् । अयं कर्मकर्त्तरीति वृत्तिः । रेफ 'उपोत्तमं रिती'ति स्वरे विशेषणार्थः । पक्त्रिमम् । 'ड्वितः क्त्रि'रिति क्त्रिप्रत्यये 'क्त्रेर्मम्नित्य'मिति मप् । पाकेन निर्वृत्तं पाक्त्रिमम् । 'भावप्रत्ययान्तादिमप् वक्तव्य' इति इमप् । पक्तिः । 'स्थागापापच' इति क्तिन् । षित्वादङि पचा । पक्वः । पक्ववानिति 'पचो व'इति निष्ठातकारस्य वकारः । तस्य पूर्वत्रासिद्धत्वाज् झल्परत्वा'च्चोः कु'रिति कुत्वम् । प्रपक्वानि फलानीत्यत्र 'कुमति चे'ति कवर्गवत्युत्तरपदे पूर्वपदस्थान्निमित्तात्परस्य प्रातिपदिकान्तनुम्विभक्तिस्थस्य नस्य प्राप्तं णत्वं युवादीनां प्रतिषेध इति न भवति । पाकः । पचनम् । मांसस्य पाको मांस्पाकः । मांसपाकः । एवं मांसस्य पचनं मांस्पचनम् । मांसपचनम् । मांसस्य पचि युड्घञोरिति पक्षेऽन्त्यलोपः । पचनः । भृशीत्यादिना युच् । अयं द्विकर्म्मक इति माधवाद्युक्तं, तेन तण्डुलानोदनं पचतीति भवति । अत्र कैयटकारः । अत्र विक्लेदनोपसर्जननिवर्तनार्थो धातुरिति तण्डुलानां विक्लेदनापेक्षं कर्मत्वम् । ओदनस्य तु प्रधानभूतनिवर्त्तनापेक्षमिति तण्डुलानोदनं पचतीतिप्रयोगः । प्रकृतिविकाराभावविवक्षायां तण्डुलैरोदनं पचतीति साधकतमत्वविवक्षायाम् । उदुम्बरः फलं पच्यते । दुहिपच्योर्बहुलं सकर्म्मकयोरिति कर्त्तुः कर्म्मवद्भावः । अत्र कैयटो वृक्षस्य कर्तृत्वविवक्षायामन्यतमप्राप्ते वचनम् । अन्ये त्वाहुः । पचिरत्र विषये द्विकर्म्मकः । वृक्षस्य पाकमन्तरेण फलपाकासम्भवात् वृक्षोऽकथितं कर्म्म । तस्यैव च यदा कर्तृत्वविवक्षा तदाऽयं कर्म्मवद्भावः । एवंविधे

रर‌ञ्जतुः । ररङ्‌थ । ररञ्जिथ । क्रादिनियमादिट् । थलि भारद्वाजनियमाद्विकल्पः । रङ्क्ता । रङ्क्ष्यति । रजतु । अरजत् । रजेत् । आशिषि रज्यात् । 'क्ङिदाशिषी'ति क्ङित्त्वादनुनासिकलोपः । अराङ्क्षीत् । अराङ्क्ताम् । अराङ्क्षुः । रजते । ररञ्जे । ररञ्जिषे । रङ्क्तासे । रङ्क्ष्यते । रजताम् । अरजत । रजेत । रङ्क्षीष्ट । अरङ्क्त । अरङ्क्षाताम् । रिरङ्क्षति । रिरङ्क्षते । रारज्यते । रारङ्क्ति । रारक्तः । तसौ ङित्त्वादनुनासिकलोपः । रजयति मृगान् । अरीरजत् । रञ्जेर्णौ मृगरमणे' इति नलोपः । 'जनीजॄष्क्नसुरञ्जोऽमन्ताश्चे'ति मित्त्वाद्ध्रस्वः । मृगादन्यत्र रञ्जयति पक्षिणः । तथा रमणादन्यत्रापि रञ्जयति मृगान् तृणादिदानेन, वशयतीत्यर्थः । कर्मकर्त्तरि 'कुषिरञ्जोः प्राचां श्यन्परस्मैपदं चे'ति पक्षे श्यन्परस्मैपदयोः रज्यति वस्त्रं स्वयमेव । रज्यतु । अरज्यत् । रज्येदिति भवति, अन्यदा यगात्मनेपदयोः रज्यतइत्यादि । श्यनो ङित्त्वाद्यकः क्ङित्त्वाच्च नलोपः, श्यन्विधौ रज्यन्तीत्यत्र 'शप्श्यनोर्नित्यमि'ति नित्यनुमर्थः, एते च श्यन्परस्मैपदे प्राचांग्रहणस्य व्यवस्थितविभाषात्वाल्लक्ष्यविषये । तथा च वार्त्तिकम् । 'कुषिरञ्जोः श्यन्विधाने लसार्वधातुकवचनमवचने हि लिङ्लिटोः प्रतिषेधः स्यादिविषये चे'ति । अत्र लिङाशीर्विषयः, स हि सार्वधातुकप्रतियोगी, तेन रङ्क्षीष्ट वस्त्रं स्वयमेव । ररंसे । रङ्क्तासे । रङ्क्ष्यते । अरञ्जि । अरङ्क्षातामित्यत्र श्यन्परस्मैपदं न भवति । रजकः । 'शिल्पिनि ष्वुन्' । रजकरजनरजःसूपसंख्यानमिति नलोपः । रजकस्य वस्त्रं ददातीति भाष्ये प्रयोगादिति । न्यासे ण्वकृङित्यपि रञ्जेर्मित्त्वविधानाल्लिङ्गाच्चलोप इति तरङ्गिणीपदमञ्जर्योः । इदं प्रौढिवादमात्रं, यतो मित्त्वं रञ्जेर्णाविति नलोपे रजयति मृगानित्यत्र ह्रस्वार्थं स्यात् । तथा नलोपाभावे अरञ्जि । अराञ्जि । रञ्जंरञ्ज, राञ्जराञ्जमित्यत्र 'चिण्णमुलो'रिति दीर्घविकल्पार्थं स्यात् । 'दंशसञ्जस्वञ्जां शपी'त्यत्र भाष्ये तु रजकरजनरजःसूपसंख्यानमिति नलोपं प्रेरयित्वा कित एवैते त्वौणादिका इति परिहृतम् । अत्र कैयटेन रजक इति 'क्वुन् शिल्पिसंज्ञयोरि'ति क्वुन् प्रत्ययः । रजकीति तु 'पुंयोगादाख्यायामि'ति ङीषि । अपुं-

योगे तु ङीपा न भाव्यमिति भाष्यकाराभिप्रायः । रजनमित्यत्र 'रञ्जेः क्युनि'ति क्युन्प्रत्ययः, स च बाहुलकादिति द्रष्टव्यः । तेन रजनीति ङीप् भवति । रज इत्यत्र 'भूरञ्जिभ्यां किदि'त्यसुन्प्रत्ययः किद्वचनीन्युक्तम् । एवमेतत्पदमञ्जर्यामपि । रागी । सपृचादिन्वाद् घिनुण् । अत्रैव रजेति निर्देशान्नलोपः । रञ्जनं रागः । रज्यतेऽनेनेति वा । 'घञि च भावकरणयो'रिति नलोपः । अन्यत्र स्वयमेव रज्यन्ति प्रेक्षकाना मनांसि यत्रेति रङ्गः । 'हलश्चे'ति घञ् । विरागमर्हति वैरागिकः । 'छेदादिभ्यो नित्य'मिति तदर्हतीति विषये ठक् । अत्र 'विरागो विरङ्ग चे'ति पाठाद्विरङ्गादेशः । रजः । असुन् । विरजीकरोति । 'अरुर्मन'इत्यादिना च्विसलोपौ । 'अस्य च्वा'वित्यकारस्येकारः । सरजनम् । 'अव्ययं विभक्ती'त्यादिना साकल्येऽव्ययीभावः । 'अव्ययीभावे चाकाले' इति सहस्य सः । 'अचतुरे'त्यादिपाठादच् । अयमव्ययीभाव इति वृत्त्यादौ । तेनान्यत्र सरजस्क पङ्कजमित्येव भवति । यस्तु बहुव्रीहौ सरजसमिति भारविप्रयोगः स वामनालङ्कारे दूषितः, सरजसमित्यव्ययीभाव इति । रजोऽस्यास्तीति रजस्वला । 'रजः कृष्यासुती'त्यादीना मत्वर्थे वलच् । 'तसौ मत्वर्थे'इति भसंज्ञया पदसंज्ञाया बाधनात्सकारस्य न रुत्वम् । रजनम् । पृधीरञ्जिभ्यः किदित्यतच् । तस्य विकारो राजतम् । 'प्राणिरजतादिभ्योऽञ्' इति षष्ठ्यन्ताद्विकारेऽञ्प्रत्ययः । अत्रा'नुदात्तादे'रित्येवाञि सिद्धे पुनरञ्विधान 'मयड्वैतयोरि'ति विकारमयटो बाधनार्थं, मयं दिवादावपि ॥ ९७९ ॥

शप आक्रोशे ॥ इहाक्रोशो विरुद्धानुध्यानम् । शपति । शशाप । शेपतुः । शशप्थ । शेपिथ । क्रादिनियमादिट् । थलि भारद्वाजनियमादिड्विकल्पः । शप्ता । शप्स्यति । अशपत् । शपेत् । शप्यात् । अशाप्सीत् । अशाप्ताम् । शपते । शेपे । शप्तासे । शपताम् । अशपत । शपेत । शप्सीष्ट । अशप्त । अशप्सातनाम् । शिशप्सति । शाशप्यते । शाशप्ति । शापयति । अशीशपत् । देवदत्ताय शपते । देवदत्त शपथेन किं चिज्ज्ञापयतीत्यर्थः । 'शप उपालम्भन'इति अकर्त्रभिप्राये तङ्, 'श्लाघह्नुङि'त्यादिना ज्ञीप्स्यमानस्य संप्रदानत्वाच्चतुर्थी, वाचा शरीरस्य स्पर्श-

ररञ्जतुः । ररङ्क्थ । ररञ्जिथ । क्रादिनियमादिट् । थलि भारद्वाजनियमाद्विकल्पः । रङ्क्ता । रङ्क्ष्यति । रजतु । अरजत् । रजेत् । आशिषि रज्यात् । 'किदाशिषी'ति कित्त्वादनुनासिकलोपः । अराङ्क्षीत् । अराङ्क्ताम् । अराङ्क्षुः । रजते । ररञ्जे । ररञ्जिषे । रङ्क्तासे । रङ्क्ष्यते । रजताम् । अरजत । रजेत । रङ्क्षीष्ट । अरङ्क्त । अरङ्क्षाताम् । रिरङ्क्षति । रिरङ्क्षते । रारज्यते । रारङ्क्ति । रारक्तः । तस्मौ ङित्त्वादनुनासिकलोपः । रजयति मृगान् । अरीरजत् । 'रञ्जेर्णौ मृगरमणे' इति नलोपः । 'जनीजॄष्क्नसुरञ्जोऽमन्ताश्चे'ति मित्त्वाद्ध्रस्वः । मृगादन्यत्र रञ्जयति पक्षिणः । तथा रमणादन्यत्रापि रञ्जयति मृगान् तृणादिदानेन, वशयतीत्यर्थः । कर्मकर्त्तरि 'कुषिरञ्जोः प्राचां श्यन्परस्मैपदं चे'ति पक्षे श्यन्परस्मैपदयोः रज्यति वस्त्रं स्वयमेव । रज्यतु । अरज्यत् । रज्येदिति भवति, अन्यदा यगात्मनेपदयोः रज्यतइत्यादि । श्यनो ङित्त्वाद्यकः कित्त्वाच्च नलोपः, श्यन्विधौ रज्यन्तीत्यत्र 'शप्श्यनोर्नित्यमि'ति नित्यनुमर्थं', एते च श्यन्परस्मैपदे प्राचांग्रहणस्य व्यवस्थितविभाषात्वाद्यग्विषये । तथा च वार्त्तिकम् । 'कुषिरञ्जोः श्यन्विधाने लसार्वधातुकवचनमवचने हि लिङ्लिटोः प्रतिषेधः स्यादिविषये चे'ति । अत्र लिङाशीर्विषयः, स हि सार्वधातुकप्रतियोगी, तेन रङ्क्षीष्ट वस्त्रं स्वयमेव । ररंसे । रङ्क्तासे । रङ्क्ष्यते । अरञ्जि । अरङ्क्षातामित्यत्र श्यन्परस्मैपदं न भवति । रजकः । 'शिल्पिनि ष्वुन्' । रजकरजनरजःसूपसंख्यानमिति नलोपः । रजकस्य वस्त्रं ददातीति भाष्ये प्रयोगादिति । न्यासे ण्वकृङित्यपि रञ्जेर्मित्त्वविधानाल्लिङ्गाच्चलोप इति तरङ्गिणीपदमञ्जर्योः । इदं प्रौढिवादमात्रं, यतो मित्त्वं रञ्जेर्णाविति नलोपे रजयति मृगानित्यत्र ह्रस्वार्थं स्यात् । तथा नलोपाभावे अरञ्जि । अराञ्जि । रञ्जंरञ्जं, राञ्जराञ्जमित्यत्र 'चिण्णमुलो'रिति दीर्घविकल्पार्थं स्यात् । 'दंशसञ्जस्वञ्जां शपी'त्यत्र भाष्ये तु रजकरजनरजःसूपसंख्यानमिति नलोपं प्रेरयित्वा कित एवैते त्वौणादिका इति परिहृतम् । अत्र कैयटेन रजक इति 'क्वुन् शिल्पिसंज्ञयोरि'ति क्वुन् प्रत्ययः । रजकीति तु 'पुंयोगादाख्यायामि'ति ङीषि । अपुं-

योगे तु ङीपा न भाव्यमिति भाष्यकाराभिप्रायः । रजनमित्यत्र 'रञ्जेः क्युनि'ति क्युन्प्रत्ययः, स च बाहुलकादिति द्रष्टव्यः । तेन रजनीति ङीप् भवति । रज इत्यत्र 'भूरञ्जिभ्यां किदि'त्यमुन्प्रत्ययः किद्भवतीत्युक्तम् । एवमेतत्पदमञ्जर्यामपि । रागी । संपृचादित्वाद् घिनुण् । अत्रैव रजेति निर्देशान्नलोपः । रञ्जनं रागः । रज्यतेऽनेनेति वा । 'घञि च भावकरणयो'रिति नलोपः । अन्यत्र स्वयमेव रज्यन्ति प्रेक्षकाणां मनांसि यत्रेति रङ्गः । 'हलश्चे'ति घञ् । विरागमर्हति वैरागिकः । 'छेदादिभ्यो नित्य'मिति तदर्हतीति विषये ठक् । अत्र 'विरागो विरङ्ग चे'ति पाठाद्विरङ्गादेशः । रजः । असुन् । विरजीकरोति । 'अरुर्मन इत्यादिना च्विमलोपौ । 'अस्य च्वा'वित्यकारस्येकारः । सरजसम् । अव्ययं विभक्ती'त्यादिना साकल्येऽव्ययीभावः । अव्ययीभावे चाकाले' इति सहस्य सः । 'अचतुरे'त्यादिपाठादच् । अयमव्ययीभाव इति वृत्त्यादौ । तेनान्यत्र सरजस्कं पङ्कजमित्येव भवति । यस्तु बहुव्रीहौ सरजसमिति भारविप्रयोगः स वामनालङ्कारे दूषितः, सरजसमित्यव्ययीभाव इति । रजोऽस्यास्तीति रजस्वला । 'रजः कृष्यासुती'त्यादीना मत्वर्थे वलच् । 'तसौ मत्वर्थे'इति भसंज्ञया पदसंज्ञाया बाधनात्सकारस्य न रुत्वम् । रजतम् । पृषीरञ्जिभ्यः किदित्यतच् । तस्य विकारो राजतम् । 'प्राणिरजतादिभ्योऽञ्' इति षष्ठ्यन्ताद्विकारेऽञ्प्रत्ययः । अत्रा'नुदात्तादे'रित्येवाञि सिद्धे पुनरञ्विधानं 'मयड्वैतयोरि'ति विकारमयटो बाधनार्थं, मयं द्विवादावपि ॥ ९७९ ॥

शप आक्रोशे ॥ इहाक्रोशो विरुद्धानुध्यानम् । शपति । शशाप । शेपतुः । शशप्थ । शेपिथ । क्रादिनियमादिट् । थलि भारद्वाजनियमाद्विकल्पः । शप्ता । शप्स्यति । अशपत् । शपेत् । शप्यात् । अशाप्सीत् । अशाप्ताम् । शपते । शेपे । शप्तासे । शपताम् । अशपत । शपेत । शप्सीष्ट । अशप्त । अशप्साताम् । शिशप्सति । शाशप्यते । शाशप्ति । शापयति । अशीशपद्देवदत्ताय शपते । देवदत्तं शपथेन किं चिज्ज्ञापयतीत्यर्थः । 'शप उपालम्भन'इति अकर्त्रभिप्राये तङ्, 'श्लाघह्नुङि'त्यादिना ज्ञीप्स्यमानस्य संप्रदानत्वाच्चतुर्थी, वाचा शरीरस्य स्पर्श-

नमुपलम्भनमिति वृत्तिः । अत्र हरदत्तः । त्वत्पादौ स्पृशामि नैतन्मया कृतमित्येतद्रूपः शपथविशेष इति । भागवृत्तिकारस्य तूपलभनं प्रकाशन, देवदत्ताय शपते किंचित्प्रकाशयतीत्यर्थः । त्वचा शरीरस्य स्पर्शनमित्यदः कस्य चित्काव्यमिति । कैयटे चोपलम्भनं प्रकाशनमिति । शाकटायनस्तूपलम्भन प्रकाशनं, देवदत्ताय शपतइत्येवं भूतोऽसाविति देवदत्तमाचष्टइत्यर्थः । अथ वा स्वाभिप्रायस्य परत्राविष्करणमुपलम्भनं शपथः । देवदत्ताय शपते । वाचा मात्रादिशरीरस्पर्शनेन देवदत्ते स्वाभिप्राय प्रकाशयतीत्यर्थ इति । चन्द्रभोजकौमारास्तु प्रोषितस्य भावयोरुपलब्ध्यव्ययोः किं चिदासेवनमुपलम्भन, देवदत्ताय शपतइति प्रोषितस्य देवदत्तस्य भावाभावयोरुपलब्ध्योः किं चिदासेवनइत्यर्थः । भोजादयस्तु शपः शपथइति । 'शीङ्शपिगमिवञ्चिविजित्राशिभ्योऽथ' इत्यथः प्रत्ययः । शबलः । 'शपेर्बश्चे'ति कलप्रत्यये बकारश्चान्तादेशः । शब्दः । शाशपिभ्यान्ददनावि'ति दन्, 'शब्दवैरे'ति निपातनात् बत्वं, शब्द करोति शब्दायते । 'शब्दवैरे'ति क्यङ् । शब्द करोति शाब्दिकः । 'शब्ददर्दुरं करोती'ति द्वितीयान्तात्करोतीत्यर्थे ठक् । माशब्द इत्याह माशब्दिकः । 'तदाहेति माशब्दादिभ्य उपसंख्यानमि'ति ठक् । एवं नैत्यशब्दिक इत्यादि । अयं दिवादावपि ॥ ९८० ॥

त्विष दीप्तौ ॥ त्वेषति । तित्वेष । तित्विषतुः । तित्वेषिथ । तित्विषिव । क्रादिनियमादिट् । त्वेष्टा । त्वेक्ष्यति । त्वेषतु । अत्वेषत् । आशिषि त्विष्यात् । अत्विक्षत् । अत्विक्षाताम् । 'शल इगुपधादनिटः क्सः' । त्वेषते । तित्विषे । त्वेष्टासे । त्वेक्ष्यते । त्वेषताम् । अत्वेषत । त्वेषेत । त्विक्षीष्ट । अत्विक्षत । अत्विक्षाताम, त्विक्षन्त । 'क्सस्याची'त्यलोपः । तित्विक्षति । तित्विक्षते । तेत्विष्टि । तेत्विष्टः । त्वेषयति । अतित्विषत् । त्वष्टा । त्विषेर्देवतायामकारश्चोपधाया इति तृन् उपधाया अत्वं, त्वष्टारौ । 'ऋतो ङी'ति गुणे 'अप्तृन्नि'त्यादिना दीर्घोऽसंबुद्धौ सर्वनामस्थाने । तृन्नन्तत्वादेव सिद्धे नप्त्रादीनां ग्रहणं व्युत्पत्तिपक्षे नियमार्थं संज्ञाशब्दानामेषामेवेति वृत्तौ । त्वष्टुरिदं त्वाष्ट्रम् । अचामा-

देरचो वृद्धिरन्त्यलक्षणा वृद्धिं बाधतइति वृत्तौ । त्विट् । सपदादित्वात् क्विप् । अवपूर्वाय दानिरसनये।रिति मैत्रेयादयः ॥ ९८१ ॥

यज देवपूजासङ्गतिकरणदानेषु ॥ यजति । इयाज । ईजतुः । इयजिथ । इयष्ठ । ईजिव । क्रादिनियमादिट् । थलि भारद्वाजनियमादिट्विकल्पः । इडभावे छन्दस्त्वा'द्व्रश्चे'त्यादिना षत्वम् । किति 'वचिस्वपियजादीनां किती'ति संप्रसारणे पुनः प्रसङ्गविज्ञानाद् द्विर्वचनमकिति 'लिट्यभ्य'सस्योभयेषामि'ति वच्यादीनां ग्रहादीनां चाभ्यासस्य संप्रसारणम् । अत्राधिकारादेवोभयेषामिति सिद्धे पुनस्तत्करणं विध्यत्यादौ परमपि हलादिशेषं बाधित्वा संप्रसारणं यथा स्यादिति । यष्टा । यक्ष्यति । यजतु । अयजत् । यजेत् । आशिषि किन्त्वात्संप्रसारणे इज्यात् । अयाक्षीत् । अयाष्टाम् । यजते । ईजे । यष्टासे । यक्ष्यते । यजताम् । अयजत । यजेत । यक्षीष्ट । अयष्ट । अयक्षाताम् । यियक्षति । यियक्षते । यायज्यते । यायष्टि । याजयति । अयीयजत् । इज्यते । यकि संप्रसारणे ऐज्यतेत्यत्र लङ्सङ्गं वापेक्षमाणादडागमादन्तरङ्गत्वात्पूर्वं लादेशः । कृते च लादेशे नित्यत्वादट. पूर्वं यगटोरुभयोरपि कृताकृतप्रसङ्गित्वाविशेषेण यकि कृते तदन्तस्याङ्गस्य अकृते तु केवलस्येति शब्दान्तरप्राप्त्या अटोऽनित्यत्वं, कृते च यकि नित्यत्वात्संप्रसारणे पश्चादजादित्वादाडागमः । नन्वत्राटः प्राप्तिराटा बाध्यते न तु संप्रसारणेनैवेति यस्य च लक्षणान्तरेण निमित्तं व्याहन्यते न तदनित्यमिति अड्यमनित्यः । अत्र हरदत्तः । यस्य च लक्षणान्तरेणेति न्यायोऽनित्वादिह नाश्रीयतइति, यद्वा संप्रसारणं संप्रसारणाश्रयं च बलवदिति अटः पूर्वमेव संप्रसारणं भविष्यति, अथ वा परित्यज्यापवादविषयमुत्सर्गोऽभिनिविशतइत्याट् पश्चाद्भविष्यतीत्यडागमो नैवात्र प्रसजति । याज्य, ण्यति 'यजयाचे'ति कुत्वनिषेधः । यागः । घञि 'चजोः कुघिण्ण्यतो'रिति कुत्व, सोमेनेष्टवान् सोमयाजी । 'करणे यज'इति करणवाचिन्युपपदे भूते णिनिः । यज्वा । 'सुयजोर्ङ्वनिबि'ति भूते ङ्वनिप्, यजमानः । 'पूङ्यजोः शानचि'ति शनान्, यजमानकर्म्म याजमान. युवादित्वादण् । यायजूकः । 'यज-

जपदशां यङ'इति यङन्तादूकः प्रत्ययः । अल्लोपयलोपौ च । इष्टिः । 'श्रयजिस्तुभ्यः करणे' इति क्तिन् । इज्या । 'व्रजयजोर्भावे क्यबि'ति क्यप् । यज्ञः । 'यजयाचे'ति नङ् प्रत्ययः, कुत्वनिषेधः । यज्ञविद्यामधीते वेद वा याज्ञविद्यिकः । 'क्रतूक्थादिसूत्रान्ताट्ठगि'ति उक्थादिपाठाट्ठक् । याज्ञिकानां धर्म्म आम्नायो वा याज्ञिक्यम् । 'छन्दोगौक्थिकयाज्ञिकबह्वृचनटाञ्ञ्य' इति षष्ठ्यन्ताद्धर्म्माम्नाययोर्ञ्यः । यज्ञमर्हति यज्ञियो यजमानः । 'यज्ञर्त्विग्भ्यां घखञा'विति द्वितीयान्तादर्हतीत्यर्थे घः । यज्ञकर्मार्हति यज्ञिय ऋत्विक् । यज्ञऋत्विग्भ्यां तत्कर्मार्हतीति चोपसंख्यानमिति घः । ऋत्विक्, ऋतौ यजति ऋतु यजति ऋतुप्रयुक्तो वा यजतीति 'ऋत्विगा'दिना क्विनि निपातितः । नवयज्ञोऽस्मिन्वर्त्तते नावयज्ञिकः । 'तदस्मिन्वर्त्तत' इति नवयज्ञादिभ्य उपसंख्यानमि'ति ठक् । एवं पाकयज्ञिकः । इष्टमनेन इष्टी । 'इष्टादिभ्यश्चे'ति प्रथमान्तात्तृतीयार्थे इनिः । यजुः । 'अर्तिपृवपी'त्यादिनोसिप्रत्ययः । ऋग्यजुषम् । 'अचतुरे'त्यादिना द्वन्द्वेऽजन्तो निपात्यते । यद् । 'यजियमितनिभ्यो डिदि'त्यदिप्रत्यये डित्वाट्टिलोपः । त्यच्छब्दवत्सर्वनामकार्यं त्यदादिकार्यं च । यस्मिन्काले यदा । 'सर्वैकान्ये'त्यादिना दाप्रत्ययः । 'प्राग्दिशो विभक्ति'रिति विभक्तित्वात्त्यदाद्यत्वम् । यस्मिन्काले यर्हि । 'अनद्यतने र्हिल्' । पूर्ववद्विभक्तित्वात्त्यदाद्यत्वम् । यत्परिमाणमस्य यावान् । 'यत्तदेतेभ्यः परिमाणे वतुबि'ति परिमाणोपाधिकात्प्रथमान्तादस्येत्यर्थे वतुप् । अर्थादिह षष्ठ्यर्थः परिमाणी । 'आ सर्वनाम्न' इति दृग्दृशवतुषु परेष्वित्याकारः । सा'वत्वसन्तस्ये'ति दीर्घः । 'उगिदचामि'ति नुम् । हल्ङ्यादिसंयोगान्तलोपौ । 'उगितश्चे'ति ङीपि यावती । 'बहुगणवतुडति संख्ये'ति संख्यात्वात् यावता पूरणइति विगृह्य 'तस्य पूरणे डडि'ति षष्ठ्यन्तात्संख्याशब्दात्पूरणे डटि कृते 'वतोरिथुगि'ति इथुगागमः । यावतिथः । यतरो भवतो देवदत्तः स समागच्छतु । 'कियत्तदो निर्द्धारणे द्वयोरेकस्य डतरजि'ति द्वयोर्मध्ये जातिक्रियासञ्ज्ञाभिरेकस्य निर्द्धारणे पृथक्करणे गम्यमाने स्वार्थे डतरच् । महाविभाषया विकल्पनाद्यो

भवतोरित्यपि भवति । यतमो भवतां ब्राह्मणः स आगच्छतु । 'वा बहूनां जातिपरिप्रश्ने डतमच्' । जातिश्च परिप्रश्नश्च जातिपरिप्रश्नं समाहारद्वन्द्वस्तद्विषयेभ्यः किंयत्तद्भ्यो बहूनामेकस्य निर्द्धारणे वा डतमजिति डतमच् । अत्र जातिग्रहणं सर्व्वैरपि सम्बध्यते । परिप्रश्नग्रहणं तु यत्तदोरसम्भवात्किम एव । वाग्रहणमकजर्थम् । यको भवतां ब्राह्मण इति वाक्य तु महाविभाषया भविष्यति । डतरडतमेति सर्वादौ पाठादेतदन्तयोस्सर्वनामकार्यं पूर्ववत् । नपुंसकाभ्यामनुपसर्जनाभ्यां डतरडतमाभ्यां परयोः स्वमोरमादेशापवादो 'ऽड्डतरादिभ्यः पञ्चभ्य' इत्यदडादेशे डित्त्वाट्टिलोपे च यतरत् । यतमत् इति भवति. यद्यय डित्वस्यात्सोरदादेशे कृते 'ऽतो गुण' इति पररूपत्वं बाधित्वा प्रथमयोः पूर्वसवर्णदीर्घः स्यात्, अमादेशे तु स्थानिवद्भावेनापि पूर्वो भविष्यतीति न दोषः । एवं तर्हि पूर्वसूत्रादमनुवर्त्य सोरप्यमं कृत्वा ऽड्डतरादिभ्य इति पञ्चम्याः षष्ठीं प्रकल्प्य द्वयोरमोः स्थानेऽदादेशः कार्यः किं डकारेण, कि चैवमकारेणापि नार्थः, दकार एव तु विधेयः, स चा'देः परस्ये'त्यमोऽकारस्य भविष्यति । मकारस्य च संयोगान्तलोपे कतरत् कतमदितीष्ट सेत्स्यति । सत्य सिध्यति । हे कतरदित्यादौ हे कुण्डेत्यादिव'देङ्ह्रस्वा'दिति सम्बुद्धिसम्बन्धिनो हलो विधीयमानो लोपः स्यात्तस्माड्डकारोकारवांश्च कर्त्तव्यः । यका । 'प्रत्ययस्थादि'तीत्व'न यासयो'रिति निषिध्यते । यथा । यः प्रकारः, 'प्रकारवचने थालि'ति थाल् प्रत्ययः । यथायथम् । यो य आत्मा यत्तदात्मीयमिति वाक्यार्थः । 'यथास्वे यथायथ'मिति यथाशब्दस्य द्विर्वचन नपुंसकत्वं चोक्तेर्थे निपात्यते । आयथातथ्यम् । अयाथायथ्यम् । आयथापुर्यम् । अयाथापुर्यम् । यथातथायथापुरयो शब्दयोरव्ययीभावे नञा समासे ब्राह्मणादिपाठात् ष्यञि 'यथातथयथापुरयोः पर्यायेणे'ति पूर्वोत्तरपदयोः पर्यायेण वृद्धिः । भाष्ये तु अयथातथाभाव अयथापुराभाव इति विगृह्यते तत्र 'सुप्सुपे'ति समासो द्रष्टव्यः ॥ ९८२ ॥

टुवप् बीजसन्ताने ॥ वपति । उवाप । उवप्थ । उवपिथ ।

उपदेशा यङ इति यङन्तादूकः प्रत्ययः । अल्लोपयलोपौ च । इष्टिः । 'श्रयजिस्तुभ्यः करणे' इति क्तिन् । इज्या । 'व्रजयजोर्भावे क्यबि'ति क्यप् । यज्ञः । 'यजयाचे'ति नङ् प्रत्ययः, कुत्वनिषेधः । यज्ञविद्यामधीते वेद वा याज्ञविद्यिकः । 'क्रतूक्थादिसूत्रान्ताट्ठगि'ति उक्थादिपाठाट्ठक् । याज्ञिकानां धर्म्म आम्नायो वा याज्ञिक्यम् । छन्दोगौक्थिकयाज्ञिकबह्वृचनटाञ्ञ्य' इति षष्ठ्यन्ताद्धर्म्माम्नाययोर्ञ्यः । यज्ञमर्हति यज्ञियो यजमानः । 'यज्ञर्त्विग्भ्यां घखञा'विति द्वितीयान्तादर्हतीत्यर्थे घः । यज्ञकर्मार्हति यज्ञिय ऋत्विक् । यज्ञऋत्विग्भ्यां तत्कर्मार्हतीति चोपसंख्यानमिति घः । ऋत्विक्, ऋतौ यजति ऋतु यजति ऋतुप्रयुक्तो वा यजतीति 'ऋत्विगा'दिना क्विनि निपातितः । नवयज्ञोऽस्मिन्वर्त्तते नावयज्ञिकः । 'तदस्मिन्वर्त्तत' इति नवयज्ञादिभ्य उपसंख्यानमिति ठक् । एवं पाकयज्ञिकः । इष्टमनेन इष्टी । 'इष्टादिभ्यश्चे'ति प्रथमान्तात्तृतीयार्थे इनिः । यजुः । 'अर्तिपृवपी'त्यादिनोसिप्रत्ययः । ऋग्यजुषम् । 'अचतुरे'त्यादिना द्वन्द्वेऽजन्तो निपात्यते । यद् । 'यजियमितनिभ्यो डिदि'त्यदिप्रत्यये डित्त्वाट्टिलोपः । त्यच्छब्दवत्सर्वनामकार्यं त्यदादिकार्यं च । यस्मिन्काले यदा । 'सर्वैकान्ये'त्यादिना दाप्रत्ययः । 'प्राग्दिशो विभक्ति'रिति विभक्तित्त्वात्त्यदाद्यत्वम् । यस्मिन्काले यर्हि । 'अनद्यतने र्हिल्' । पूर्ववद्विभक्तित्वात्त्यदाद्यत्वम् । यत्परिमाणमस्य यावान् । 'यत्तदेतेभ्यः परिमाणे वतुबि'ति परिमाणोपाधिकात्प्रथमान्तादस्येत्यर्थे वतुप् । अर्थादिह षष्ठ्यर्थः परिमाणी । 'आ सर्वनाम्न' इति दृग्दृशवतुषु परेष्वित्याकारः । सा'वत्त्वसन्तस्ये'ति दीर्घः । 'उगिदचामि'ति नुम् । हल्ङ्यादिसंयोगान्तलोपौ । 'उगितश्चे'ति ङीपि यावती । 'बहुगणवतुडति सङ्ख्ये'ति संख्यात्वात् यावतां पूरणइति विग्रह्य 'तस्य पूरणे डडि'ति षष्ठ्यन्तात्सख्याशब्दात्पूरणे डटि कृते 'वतोरियुगि'ति इयुगागमः । यावतिथः । यतरो भवतो देवदत्तः स समागच्छतु । 'किंयत्तदो निर्द्धारणे द्वयोरेकस्य डतरजि'ति 'द्वयोर्मध्ये जातिक्रियासञ्ज्ञाभिरेकस्य निर्द्धारणे पृथक्करणे गम्यमाने स्वार्थे डतरच् । महाविभाषया विकल्पनाद्यो

भवतोरित्यपि भवति । यतमो भवता ब्राह्मणः स आगच्छतु । 'वा बहूनां जातिपरिप्रश्ने डतमच्' । जातिश्च परिप्रश्नश्च जातिपरिप्रश्नं समाहारद्वन्द्वस्तद्विषयेभ्यः कियत्तद्भ्यो बहूनामेकस्य निर्द्धारणे वा डतमजिति डतमच् । अत्र जातिग्रहणं सर्व्वैरपि सम्बध्यते । परिप्रश्नग्रहणं तु यत्तदोरसम्भवात्किम एव । वाग्रहणमकजर्थम् । यको भवता ब्राह्मण इति वाक्य तु महाविभाषया भविष्यति । डतरडतमेति सर्वादौ पाठादेतदन्तयोस्सर्वनामकार्यं पूर्ववत् । नपुंसकाभ्यामनुपसर्जनाभ्यां डतरडतमाभ्यां परयोः स्वमोरमादेशापवादो 'ऽड्डुतरादिभ्यः पञ्चभ्य' इत्यदडादेशे डित्त्वाट्टिलोपे च यतरत् । यतमत् इति भवति, यद्यत्र डित्वस्यात्सोरदादेशे कृते'ऽतो गुणे'इति पररूपत्वं बाधित्वा प्रथमयोः पूर्वसवर्णदीर्घः स्यात्, अमादेशे तु स्थानिवद्भावेनामि पूर्वो भविष्यतीति न दोषः । एवं तर्हि पूर्वसूत्रादमनुवर्त्त्य सोरप्यमं कृत्वा ऽड्डुतरादिभ्य इति पञ्चम्याः षष्ठीं प्रकल्प्य द्वयोरमोः स्थानेऽदादेशः कार्यः किं डकारेण, किं चैवमकारेणापि नार्थः, दकार एव तु विधेयः, स चा'देः परस्ये'त्यमोऽकारस्य भविष्यति । मकारस्य च संयोगान्तलोपे कतरत् कतमदितीष्ट सेत्स्यति । सत्य सिध्यति । हे कतरदित्यादौ हे कुण्डेत्यादिव'देङ्ह्रस्वा'दिति सम्बुद्धिसम्बन्धिनो हलो विधीयमानो लोपः स्यात्तस्माड्डुकारोकारवांश्च कर्त्तव्यः । यका । 'प्रत्ययस्थादि'तीत्त्व न यासयो'रिति निषिध्यते । यथा । यः प्रकारः, 'प्रकारवचने थालि'ति थाल् प्रत्ययः । यथायथम् । यो य आत्मा यत्तदात्मीयमिति वाक्यार्थः । 'यथास्वे यथायथ'मिति यथाशब्दस्य द्विर्वचन नपुंसकत्वं चोक्तेर्थे निपात्यते । आयथातथ्यम् । अयाथातथ्यम् । आयथापुर्यम् । अयाथापुर्यम् । यथातथायथापुरयोः शब्दयोरव्ययीभावे नञा समासे ब्राह्मणादिपाठात् ष्यञि 'यथातथयथापुरयोः पर्यायेणे'ति पूर्वोत्तरपदयोः पर्यायेण वृद्धिः । भाष्ये तु अयथातथाभाव अयथापुराभाव इति विगृह्यते तत्र 'सुप्सुपे'ति समासो द्रष्टव्यः ॥ ९८२ ॥

टुवप् बीजसन्ताने ॥ वपति । उवाप । उवप्थ । उवपिथ ।

उवपिवेत्यादि यजिवत् । प्रणिवपति । 'नेर्गदेति' णत्वम् । प्रण्यवपत् । अड्व्यवायेपीष्यत इति णत्वम् । प्रवपाणि । 'आनि लोडि'ति उपसर्गस्थान्निमित्तात्परस्य लोट्सम्बन्धिन आनेर्नकारस्य णत्वम् । वाप्यम्, 'आसुयुवपी'ति ण्यत् । वापी । 'ऋदृस्ववपीनामिति यज्ञादिपाठादिनिः । उप्त्रिमम् । 'ड्वितः क्त्रिः' । सम्प्रसारणं, 'क्त्रेर्मम्नित्य'मिति मप् । वापिः । इञ् स्वपिवपिभ्य इतीञ् । वापी । 'कृदिकारादक्तिन' इति ङप् । वप्रः । वृधिवपिभ्यां च रन्निति रन्प्रत्ययः । बीजसन्तान क्षेत्रे बीजविकरणे, मयं गर्भाधानेऽपि दृश्यते, यथा मा वः क्षेत्रे परबीजान्यवाप्सुः । छेदनेऽपि दृश्यते केशान्वपतीति ॥ ९८३ ॥

वह प्रापणे ॥ वहति । उवाह । ऊहतु । उवहिथ । उवोढ । ऊहिव । क्रादिनियमादिट्, थलि भारद्वाजनियमादिडभावे धत्वढत्वष्टुत्वढलोपेषु 'सहिवहोरोदवर्णस्ये'त्योत्वे उवोढेति भवति । एवमन्यत्रापि तवर्गादौ ढत्वादि । यजित्वात्सम्प्रसारणम् । वोढा । वक्ष्यति । 'षढोः कः सी'ति कत्वे षत्वम् । वहतु । अवहत् । वहेत् । आसिषि किच्चात्संप्रसारणे उह्यात् । अवाक्षीत् । अवोढाम् । अत्र ढत्वादीनामसिद्धत्वात्पूर्वमेव हलन्तलक्षणायां वृद्धौ पश्चाड्ढत्वादीति । अवोढामित्यत्राकारस्य 'सहिवहो'रित्योत्वे पुनर्वृद्धिः प्रागेव कृतत्वान्न भवति । वहते । वोढा । वक्ष्यते । ऊहे । ऊहिषे । वहताम् । अवहत । वहेत । वक्षीष्ट । अवोढ । अवक्षाताम् । अवक्षत । अवोढाः । अवोढम् । अवक्षि । प्रवहति । 'प्राद्वह' इति कर्त्रभिप्राये क्रियाफलेऽपि परस्मैपदम् । केचि'त्परेर्मृष' इत्यत्र वहिमनुवर्त्य परिपूर्वादपि नित्य परस्मैपदमेवाहुः । परिवहतीति । प्रणिवहति । 'नेर्गदे'त्यादिना णत्वम् । इदमड्व्यवायेऽपि प्रण्यवहदित्यत्रापि भवति । प्रवहाणि । 'आनि लोडि'ति णत्वम् । कर्मणि । उह्यते । औह्यत, अत्र यजिवल्लादेशे यकि सम्प्रसारणे आडागमः । विवक्षते । धावक्षते । वावोढः । वावहतीत्यादि । वाहयति भारं देवदत्तेन । अवीवहत् । अत्र प्रयोज्यस्य नीवह्योः प्रतिषेध इति कर्मत्वनिषेधः । गत्यादिसूत्रे तु फलतया प्रतीयमानगतयोरपि गत्यर्थत्वेन ग्रह्यन्ते इत्ययं

प्रतिषेधः । अयं च वहेर्नियन्तृकर्तृकस्येति वचनान्नियन्तृकर्तृकस्य न भवतीति वाहयति रथान्बलीवर्दानित्यत्र प्रयोज्यः कर्मैव । नियन्ता सारथिः । वहत्यनेनेति वह्यं शकटादि । 'वह्यं करण'मिति यति निपात्यते, अन्यत्र ण्यति वाह्यः । कूलमुद्वहः । 'उदि कूले रुजिवहो'रित्युत्पूर्वाद्वहेः कूलशब्दउपपदे खः । वहत्यनेनेति वहः । 'गोचरे'त्यादिना करणे घः । पुरुषवाहं वहति पुरुषप्रेष्यो भूत्वा वहतीत्यर्थः । 'कर्त्रोर्जीवपुरुषयोर्नशिवहो'रिति यथासङ्ख्यात् कर्तृवाचिनि पुरुषउपपदे णमुल्, कषादित्वात्तस्यैव धातोरनुप्रयोगः । ऊढः । ऊढिः । निष्ठाक्तिनोः संप्रसारणे ढत्वादि । कल्पनाया अपोढः । कल्पनापोढः । 'अपेतापोढमुक्तपतितापत्रस्तैरल्पश' इत्यनेन पञ्चमीसमासः । प्रौढः, प्रौढिः । 'प्रादूहोढोढ्येषैष्येषु वृद्धिर्वक्तव्ये'ति वृद्धिः । प्रवाहणः । ण्यन्तानां नन्द्यादिपाठाल्ल्युः । 'कृत्यचः' । 'णेर्विभाषे'ति णत्वं 'पूर्वपदात् संज्ञाया'मिति वा, प्रवाहणस्यापत्यम्, प्रावाहणेयः । प्रवाहणेयः । 'शुभ्रादिभ्यश्चे'ति ढकि 'प्रवाहणस्य ढे' इति पूर्वपदस्य वा वृद्धिः । उत्तरपदस्य तु नित्या, स्वत एवोत्तरपदस्य वृद्धिमत्त्वेऽपि पुनर्वृद्धिविधानं पूर्वपदवृद्ध्यभावपक्षेऽपि प्रवाहणेयीभार्य इत्यत्र 'वृद्धिनिमित्तस्य च तद्धितस्यारक्तविकारे' इति पुंवद्भावनिषेधो यथा स्यादिति 'स्त्रियाः पुंवदि'ति पुंवत्त्वं रक्तविकारव्यतिरिक्तार्थवृद्धिनिमित्ततद्धितान्तस्य स्त्रीप्रत्ययान्तस्य नेति सूत्रार्थः । ननु प्रवाहणेयीशब्दस्य गोत्राभिधायित्वाद्'गोत्रं च चरणैः सहे'ति जातित्वा'ज्जातेश्चे'ति पुंवद्भावनिषेधस्य सिद्धत्वात्किं तदर्थेन वृद्धिविधानेन, एवं तर्हि 'जातेश्चे'त्यस्यानित्यत्वमनेन ज्ञाप्यते, तेन हस्तिनीनां समूहो हास्तिकमित्यत्र लिङ्गविशिष्टपरिभाषया 'अचित्तहस्तिधेनोष्ठग्'इति ठकि 'भस्याढे तद्धिते' इति पुंवद्भावो भवति । प्रवाहणेयस्यापत्यं प्रावाहणेयः । 'तत्प्रत्ययान्तस्ये'ति ढान्तस्य प्रवाहणेयशब्दस्य ञिति णिति किति वा तद्धिते परतः पूर्वपदस्य वा वृद्धिरुत्तरपदस्य तु नित्या, अत्र त्वाद्यतद्धितनिमित्ता नित्या वृद्धिः पक्षे बाध्यते । इक्षुवाहनम् । उपरिनिपतितेक्षुकं वाहनमित्यर्थः । इक्षुशब्द आहितेष्विक्षुषु वर्त्तते, 'वाहनमाहितादि'ति णत्वं, वाहने यदा-

रोपित तदाहितमित्युच्यते, तादृक्पूर्वपदस्थान्निमित्तात् परस्य वाहनशब्दस्यनकारस्य णकार इति सूत्रार्थः । आहितादन्यत्र दाक्षिवाहनम् । वह्निः । वहिश्रिश्रुयुद्रुग्लाहात्वरिभ्यो नित्रिति निप्रत्ययः । नित्त्वादाद्युदात्तः । वधूः । वहेर्धश्चेति ऊकारप्रत्ययो धश्चान्तादेशः । वध्वा भावकर्म्मणी वाधवम् । युवादित्वादण् । अनड्वान् । अनसि वहो क्विप्, डश्चानसीति उणादिसूत्रेण अनस्युपपदे वहेः क्विप् अनसोन्त्यस्य डकारश्च सम्प्रसारणपूर्वत्वे सौ 'सावनडुह' इति नुम्, अयं च आदित्यधिःकारेणावर्णान्ताद् विधानाच्'चतुरनडुहो'रित्यामं न बाधते, अन्यथा सर्वनामस्थानान्तरे सावकाशमात्व सो विशेषविहिते नुम् बाधेत, हकारस्य संयोगान्तलोपः, 'वसुस्रंस्वि'त्यादिना दत्वे पूर्वत्रासिद्धत्वात् न भवति । हे अनड्वन्नित्यत्र आमम्बाधित्वा 'अम् सम्बुद्धा' विति अमागमः । अनेनापि नुमो न बाधः । अदित्यधिकारादेव, अनडुद्भ्यामित्यादौ पदत्वे 'वसुस्रंस्वि'त्यादिना दत्वम् । अनुडुही । अनड्वाही । गौरादिपाठात् ङीष्यपि पक्षे आमागमः । प्रियोऽनड्वान् यस्य प्रियानडुत्कः । उरःप्रभृतिषु अनड्वानिति पाठात् कप् । अस्मिन् स्वादौ पदत्वात् दत्वम् । चर्त्वम् । अत्रैकवचनान्तस्य तस्य पाठात् वचनान्तरेण विग्रहे 'शेषाद् विभाषे'ति कपो विकल्पनात् प्रियानड्वानित्यपि भवति । अङ्गाधिकारे तस्य तदन्तस्येत्युक्तत्वादत्रापि नुमादि भवति । धेनुश्च अनड्वांश्च धेन्वनडुहम् । 'अचतुरे'त्यादिना द्वन्द्वेऽजन्तो निपातितः । पचादयोनुदात्ताः स्वरितेतः ॥ ९८४ ॥

वस निवासे ॥ अनुदात्त उदात्तेत् । वसति । ग्राममुपवसति । ग्रामे वसतीत्यर्थः, 'उपान्वध्याङ्वस' इति उपाद्युपसृष्टात् वसेराधारस्य कर्मत्वात् द्वितीया । एव ग्राममनुवसतीति, ग्रामे उपवसति । अशननिवृत्तिं करोतीत्यर्थः । अत्र वसेरश्यर्थस्य प्रतिषेध इति कर्म्मत्वनिषेधः । अत्र अशिशब्देन अशननिवृत्तिरुच्यते, यद्वार्थशब्दो निवृत्तिवचनो यथा श्लेष्मणोर्थे कटुकौषधीः प्रयुञ्जीतेति, तेन निवृत्तेः सम्बन्धिनो वसेरित्यर्थो भवति । उवास, ऊषतुः, उवसिथ । उवक्थ । ऊषिव । संप्रसा-

रण यजिवन् । वस्ता । वत्स्यति । 'सः स्यार्द्धधातुके' इति सकारे तत्वम् । वसतु । अवसन् । उष्यात् । अवात्सीत् । अवात्ताम् । अवात्सुः । नकारादौ 'झलो झली'ति सिज्लोपस्य पूर्वत्रासिद्धत्वात् 'सः स्यार्द्धधातुके' इति सकारे तत्वे पश्चात् सलोपः । क्व भवानुषितः, अहमत्रावात्सम् । वसेर्लुङ्, रात्रिशेषे जागरणसन्ततावित्ति लुङ् । यदि कश्चित् केनचित् रात्रिशेषे तुर्ये यामे पृष्टो यामत्रयवास प्रतिवक्ति तदा लुङित्यर्थः । यामत्रयस्याद्यतनत्वाल्लङि प्राप्ते वचनम् । भूतसामान्यविवक्षयैव लुङि सिद्धे वचनमिदं लङ्निवृत्त्यर्थं, जागरणसन्ततावित्ति वचनात् सुप्त्वा प्रतिबुद्ध्य प्रतिवचने नायं नियमः । विवत्सति । वावस्यते । वावस्ति । लङि 'तिप्यनस्ते'रिति सकारस्य पदान्तत्वाद्दत्वे अवावत् । सिपि तु 'सिपि धातो रुर्वे'ति अवाव इत्यपि भवति । वासयति । अवीवसत् । अत्र 'णावकर्म्मकादि'ति परस्मैपदस्य 'न पादमी'त्यादिना निषेधात् वासयते इत्यपि भवति । उषितवान् । 'भाषायां सदवसे'ति भूतसामान्ये लिटो नित्यं क्वसुः । अस्मादेवादेशविधानात् भूतसामान्ये पक्षे लिडनुमीयते । परस्मादनुवृत्तेर्लुङ्विषयेऽप्यय लिडिति सीदनावुपसादिनम् । वास्तव्यः । 'वसेस्तव्यत्कर्त्तरि णिच्चे'ति व्यक्तत्वात् णिद्वद्भावात् वृद्धिः । अमा सह वसतः सूर्याचन्द्रमसावत्रेत्यमावास्या, 'अमावस्यदन्यतरस्या'मिति ण्यति पक्षे वृद्ध्यभावो निपात्यते, अन्यदा वृद्धिः । अमावस्यायां जात अमावस्यकम् । अमावस्यम् । 'अमावस्याया वा' 'अवे'ति सप्तम्यन्ताज्जातार्थे वुन्नकारौ च, वाग्रहणात् 'सन्धिवेले'त्यादिना शैषिकेऽणि आमावस्यमिति भवति । एकदेशविकृतमिति न्यायेन त्रय एते प्रत्यया अमावास्याशब्दादपि, अमावास्यकम् । अमावास्यम् । आमावास्यमिति । आवासी । 'याव्याहृसव्याहृव्रजवदवसां प्रतिषिद्धाना'मिति ग्रहादिपाठात् णिनिः । प्रतिषिद्धानां नञ्पूर्वाणामित्यर्थः । प्रवासी । 'प्रे लपे'त्यादिना घिनुण् । अनुषितो गुरु शिष्यः । अनुषितो गुरुः शिष्येण । 'गत्यर्थाकर्म्मके'त्यादिना कर्तृकर्म्मणोः क्तः । अत्र वसिग्रहणं सकर्मकार्थम् । अकर्म्मकत्वे तु 'क्तोऽधिकरणे चे'ति कर्तृभावाधिकरणेषु क्तो भवति । उषितः ।

उषितमनेन, इदमेषामुषितमिति । उषित्वा । उषितः । उषितवान् । 'वसतिक्षुधोरिडि'ति क्त्वानिष्ठयोरिट् । 'न क्त्वासेडि'ति निषेधं बाधित्वा 'मृडमृदे'त्यादिना सेट किञ्चविधानात् सम्प्रसारणम् । उपवस्या प्राप्ताऽस्य औपवस्यम् । उपवस्यादिभ्य उपसंख्यानमिति तदस्य प्राप्तमिति विषये ण्यप्रत्ययः । प्रवासाय प्रभवति प्रावासिकः । एवमौपवासिकः । 'तस्मै प्रभवति सन्तापादिभ्य'इति चतुर्थ्यन्तात्प्रभवत्यर्थे ठक् । वत्सरः । संवत्सरः । परिवत्सरः । वसेश्चेति सप्रतिपूर्वात्सरप्रत्ययः । चकारादनुवत्सरादयः । संवत्सरे जातं फलं पर्व वा सांवत्सरम् । सन्धिवेलादिषु 'संवत्सरात् फलपर्वणो'रिति पाठाच्छैषिकोऽणप्रत्ययः । कालाट्ठञोऽपवादः । संवत्सरे देयमृणं सांवत्सरिकम् । सांवत्सरकम् । 'संवत्सराग्रहायणीभ्यां ठञ् चे'ति सप्तम्यन्ताद्देये ऋणे ठञ्वुञौ । अत्र संवत्सराग्रहायणीभ्यां चेत्युच्यमाने ऽनुवृत्त्या ठञ् भविष्यति तद्विकल्पनात् कालाट्ठञपि, एवं सिद्धे ठञ्चेति प्रतिपदमनयोर्विधानं यदा देयमृणं फलं भवति तदा 'संवत्सरात् फलपर्वणोरि'ति प्राप्तस्याणो बाधनार्थम् । द्विसंवत्सरीणः । द्विसांवत्सरिकः । 'रात्र्यहः संवत्सराच्चे'ति रात्राद्यन्तात् द्विगो'स्तेन निर्वृत्त''तमधीष्टो भृतो भूतो भावी'ति विषये खप्रत्ययः । 'संख्यायाः संवत्सरसंख्यस्य चे'ति उत्तरपदवृद्धिः । अधीष्टस्सत्कृत्य व्यापारितः । भृतो वेतनेन क्रीतः । भूतभाविनौ प्रसिद्धौ । अनुसंवत्सरं दीयते कार्यं वा ऽऽनुसांवत्सरिकम् । 'तत्र च दीयते कार्यं भववदि'त्यतिदेशेन कार्यदीयमानयोर्भवलक्षणः कालाट्ठञ् । 'अनुशतिकादीनां चे'ति उभयपदवृद्धिः । आवसथः । उपसर्गे वसेरित्यथः । आवसथे वसति आवसथिकः । 'आवसथात् ष्ठलि'ति ष्ठल् । षित्वात् स्त्रियामावसथिकी । वसतिः । 'सहिवस्यर्त्तिभ्यः किदि'त्यतिप्रत्ययः । वसतौ साधु वासतेयम् । 'पथ्यतिथिवसती'ति ढञ्, वस्नं मूल्यम् । 'सुमूल्यादायवस्यतिभ्यो न' इति नः । वस्नं हरत्यावहति वा वस्निकः । 'वस्नक्रयविक्रयाभ्यां कन्कनौ'विति द्वितीयान्ताद्धस्नाद्धरत्यादिष्वर्थेषु यथासंख्यात् कन् । वास्निकः । 'वस्नक्रयविक्रयाट्ठन्नि'ति तृतीयान्तात् जीवत्यर्थे ठन्, वसन्तः । 'तॄभूवहिवसी'ति अन्तच् । वसन्तसहचरितोऽपि यन्यो वसन्तः । तमधीते वेद

वा वासन्तिकः । 'वसन्तादिभ्यष्ठगि'ति अध्येतृवेदित्रोष्ठक् । वसन्ते पुष्यन्ति वासन्त्यः कुन्दलताः । 'सन्धिवेलाद्यृतुनक्षत्रेभ्योऽणि'ति सप्तम्यन्तात्कैषिकोऽण् । एवं माधुरच्यमानयोरपि । वसन्ते उप्तं वासन्तम् । वासन्तकम् । 'ग्रीष्मवसन्तादन्यतरस्या'मिति तत्रोप्तमित्येतस्मिन्विषये वुञ् वा । वस्तिः । 'वसे'स्ति रिति तिः । वस्तेरिव वास्तेयम् । 'वस्तेर्ढञि'ति तीवार्थे ढञ् । वस्तौ भवमपि वास्तेयमिति । 'दृतिकुक्षिकलशिवस्त्यस्त्यहेर्ढञि'ति सप्तम्यन्ताद् भवार्थे ढञ् । 'वसेस्तुन्नि'ति तुनि वास्तु । अगारे णिच्चेति णित्त्वाद्वृद्धिः । वस्त्रम् । ष्ट्रन् । वस्त्रैः समाच्छादयति सवस्त्रयति । 'मुण्डमिश्रे'त्यादिना णिच् । वस्त्रात्समाच्छादनइति वृत्तिः । वासिः । वसिवपियजिराजिव्रजिसदिहनिवाशिवादिभ्य इञिनीञ् प्रत्ययः । वसु । शृस्वृस्निही'त्यादिना उप्रत्ययः । वसुमत्तमो वसिष्ठः । वसुमत्तरो वसीयान् । मतुबन्तादिष्ठन्नीयसुनो'र्विन्मतोर्लुगि'ति मतुपो लुगिष्ठेमेयःस्विति वर्तमाने 'टे'रिति टिलोपः । अस्मादेव लुग्विधानाद् गुणवचनादपि मत्वन्तादिष्ठन्नीयसुनावनुमीयेते । वासिष्ठः । वासिष्ठौ । वसिष्ठाः । 'ऋष्यन्धकवृष्णिकुरुभ्यश्चे'त्यपत्यार्थेऽण् । तस्या'त्रिभृगुकुत्सवसिष्ठगोतमाङ्गिरोभ्यश्चे'ति बहुषु लुक् । श्वोवसीयः । श्वोवसीयसम् । 'श्वसो वसीयःश्रेयस' इति समासान्तोऽच् । आच्छादनेऽयमदादिः । स्तम्भने दिवादिः । स्नेहनादौ क्र्यादिश्चुरादिश्च । वस उपसेवायामाच्छादनइति च क्र्यादिः ॥ ९८५ ॥

वेञ् तन्तुसन्ताने ॥ वयति । वयते । उवाय । ऊयतुः । ऊयुः । उवयिथ । ऊयथुः । ऊय । उवाय । उवय । ऊयिव । ऊयिम । 'वेञो वयि'रिति वा वयादेशः । तस्य 'ग्रहिज्यावयिव्यधिवष्टिविचतिवृश्चतिपृच्छतिभृज्जतीनां ङिति चे'ति सम्प्रसारणम् । चकारात् किदनुकृष्यते । अकिति तु 'लिट्यभ्यासस्योभयेषामि'ति अभ्यासस्य सम्प्रसारणम् । सर्वस्य यकारस्य 'लिटि वयो य' इति निषेधान्न सम्प्रसारणम् । सर्वत्र क्रादिनियमादिट् । थल्य'चस्तास्वदि'ति निषेधो न भवति वयेस्तासावसत्त्वात् । अत एव भारद्वाजविकल्पोऽपि न भवति । किति लिटि वश्चास्यान्यतरस्या

क्कितीति पक्षे यकारस्य वकारे ऊवतुः । ऊवुरित्यादि । वयादेशस्य स्थानिवद्भावेन ञित्त्वात्तङि ऊये । ऊयाते । ऊयिद्वे । ऊयिध्वे । ऊयिवहे । ध्वमि 'विभाषेट' इति मूर्द्धन्यविकल्पः । अत्रापि वकारादेशपक्षे ऊवे । ऊवाते इत्यादि । वयादेशाभावपक्षे 'आदेच' इत्यात्वे ववौ । ववतुः । ववाथ । वविथ । ववथुः । वव । ववौ । वविव । क्रादिनियमादिट् । थलि भारद्वाजनियमाद्विकल्प । 'आत औ णल' इति णल औत्वमन्यत्रा'तो लोप इटि चे'त्याल्लोपः । 'वचिस्वपियजादीना क्किती'ति 'लिट्यभ्यासस्योभयेषामि'ति च प्राप्त सम्प्रसारणं 'वेञ' इति लिटि निषिध्यते । ववे । ववाते इत्यादि । वाता । वास्यति । वास्यते । वयतु । वयताम् । अवयत् । अवयत । वयेत् । वयेत । आशिषि ऊयात् । वासीष्ट । यासुटि 'क्किदाशिषी'ति क्कित्त्वे सम्प्रसारणे परपूर्वत्वे वाऽ'कृत्सार्वधातुकयो'रिति दीर्घः । अवासीत् । अवासिष्टाम् । अवास्त । अवासातामित्यादि । परस्मैपदे 'यमरमनमाता'मिति सगिटौ । विवासति । विवासते । वावायते । वावाति । वावेति । वावीतः । 'ई हल्यघो'रि'तीत्वम् । वावति । 'श्नाभ्यस्तयो'रि त्याल्लोपः । लोटि हावीत्वे वावीहि । वाययति । अवीवयत् । 'शाच्छे'ति युक् । प्रवाय । 'न ल्यपी'ति वेञः सम्प्रसारणनिषेधः । तन्तुवायः । 'ह्वावामश्चे'ति कर्म्मण्युपपदेऽण् 'आतोऽनुपसर्गे क' इति कस्यापवादः । उता । उतः सम्प्रसारणपूर्वत्वे । निष्प्रवाणिः । नव वासः प्रोयतेऽस्यामिति प्रवाणी तन्तुवायशलाका भण्यते । निर्गताः प्रवाण्यो यस्मादिति बहुव्रीहौ 'निष्प्रवाणिश्चे'ति निपातनात्कबभाव । 'गोस्त्रियोरुपसर्जनस्ये'ति ह्रस्वः ॥ ९८६ ॥

व्येञ् संवरणे ॥ व्ययति । व्ययते । विव्याय । विव्यतुः । विव्युः । विव्ययिथ । विव्याय 'न व्यो लिटी'त्यात्वनिषेधः । णिति वृद्धावायादेशे तस्य 'द्विर्वचनेची'ति स्थानिवत्त्वाद् व्येशब्दस्य द्विर्वचने 'लिट्यभ्यासस्योभयेषामि'त्यभ्यासयकारस्य सम्प्रसारणे पररूपत्वम् । संप्रसारणे चोभयेषांग्रहणाद्धलादिशेषं बाधित्वा भवति, 'न सम्प्रसारणे सम्प्रसारणमि'ति वकारस्य संप्रसारणं न भवति, किति 'वचिस्वपी'त्यादिना सम्प्रसारणे पूर्व-

रूपत्वे द्विर्वचने 'एरनेकाच' इति यण् । थलि 'इडत्यर्तिव्ययतीनामि'तीट् नित्यमन्यत्र क्रादिनियमादिट् । विव्ये । विव्याते । विव्यिरे । विव्यिध्वे । विव्यिद्वे । विव्यिवहे । सर्वत्र 'वचिस्वपी'त्यादिना सम्प्रसारणे पररूपत्वे द्वित्वम् । व्याता । व्यास्यति । व्यास्यते । व्ययतु । व्ययताम् । अव्ययत् । अव्ययत । व्ययेत् । व्ययेत । आशिषि । वीयात् । व्यासीष्ट । यासुट-क्त्वात्सम्प्रसारणपूर्वत्वयो'र्हल' इति दीर्घः । अव्यासीत् । अव्यास्ताम् । परस्मैपदे सगिटौ । विव्यासति । विव्यासते । वेवीयते । 'स्वपिस्यमि-व्येञां यङी'ति सम्प्रसारणे परपूर्वत्वे 'हल' इति दीर्घः । द्विर्वचनम् । वाव्येति । वाव्याति । वाव्यीतः । वाव्यति । क्ङिति 'श्नाभ्यस्तयो'रित्या-कारलोपः । हलादा'वी हल्यघोरि'तीत्वम् । व्याययति । 'शाच्छासे'त्या-दिना युक् । सव्याय । 'व्यश्चे'ति ल्यपि सम्प्रसारणनिषेधः परिपूर्वत्वे तु 'विभाषा परे'रिति प्रसारणविकल्पनात्परिवीय परिव्यायेत्युभयं भवति । नीविः । नौ व्यो यलोपः पूर्वपदस्य च दीर्घ इति इकारप्रत्यये डित्वा-ट्टिलोपयलोपयोः पूर्वपददीर्घः । नीवी । 'कृदिकारादक्तिन' इति वा ङीप् ॥ ९८७ ॥

ह्वेञ् स्पर्धायां शब्दे च ॥ ह्वयति । ह्वयते । जुहाव । जुहुवतुः । जुहुविथ । जुहोथ । अत्र 'चाभ्यस्तस्य चे'त्यभ्यस्तीभविष्यतो ह्वेञः प्रागेव द्विर्वचनात्प्रसारणेऽन्तरङ्गत्वात्परपूर्वत्वे पश्चाद् द्विर्वचनम् । पूर्वं तु द्विर्वचने 'न सम्प्रसारणे सम्प्रसारणमि'त्यभ्यासस्य सम्प्रसारणं न स्यात् । व्यवधानान्नायं निषेधः स्यादिति न वाच्यम् । तत्र समानाङ्गग्रहणस्य चोदितत्वात् । तत्र णलि वृद्ध्यावादेशयोः स्थानिवत्त्वाद् हुशब्दस्य द्विर्व-चनम्, अत्र परपूर्वत्वाभावे 'आत औ णल' इति स्यात् । जुहुवतुरित्या-दा'वचि श्नुधात्वि'त्यादिनोवङादेशः । तत्रापि सम्प्रसारणेऽन्तरङ्गत्वात्परपूर्व-त्वमवश्यमेष्टव्यम् । अन्यथा'तो लोप' इत्याल्लोपे तस्य स्थानिवत्त्वाद् द्विर्वचने 'असिद्धवदत्रे'त्यसिद्धत्वाद्व्यवधानादुवङ् न स्यात् । थलि गुणः । भारद्वाजनियमाद्विकल्पः । उत्तमे णलि णित्त्वाभावपक्षे गुणेऽवादेशः । जुहुवे । जुहुवाते । जुहुविषे । जुहुविध्वे । जुहुविद्वे । ह्वाता ।

ह्वातासे । ह्वास्यति । ह्वास्यते । ह्वयतु । ह्वयताम् । अह्वयत् । ह्वयेत् । आशिषि हूयात् । ह्वासीष्ट । यासुटि क्त्वात्संप्रसारणे 'हल' इति दीर्घः । अह्वत् । अह्वताम् । 'लिपिसिचिह्वश्चे'ति परस्मैपदे सिजपवादोङ् । 'आत्मनेपदेष्वन्यतरस्यामि'त्यङो विकल्पनात् । अह्वत । अह्वताम् । अह्वत । अह्वास्त । अह्वासाताम् अह्वासतेत्युभयं भवति, अङि सर्वत्र 'आतो लोप इटि चे'त्याल्लोपः । इदमङ्विकल्पनं कर्त्तरीति कर्म्मणि अह्वायि । अह्वासातामित्यादौ चिण्सिचावेव भवतः । चिण्वदिटि अह्वायिषातामित्यादि । एवं स्यसिच्सीयुट्तासिषु ह्वायिष्यते । ह्वायिषीष्ट । ह्वायितेत्यादि द्रष्टव्यम् । कर्मकर्त्तरि तु शब्दे 'अचः कर्म्मकर्त्तरी'ति चिणो विकल्पनात्तदभावे 'आत्मनेपदेष्वन्यतरस्यामि'ति पक्षे ऽङ् । तदभावे सिच् । तस्य च पक्षे चिण्वदिटि अह्वायि । अह्वत । अह्वास्त । अह्वायिष्टेति चातूरूप्यम् भवति । निह्वयते । संह्वयते । उपह्वयते । विह्वयते । आह्वयते । 'निसमुपविभ्यो ह्वः' 'स्पर्द्धायामाङ' इत्यत्र कर्त्रभिप्राये तङ् । अत्र स्पर्द्धा धात्वर्थस्य शब्दनस्य हेतुतया विषय इति वृत्त्यादौ स्थितम् । स्पर्द्धमान आह्वानं करोतीत्यर्थः । अत्र च ह्व इति न प्रयोगस्थस्याकारान्तस्यानुकरणं किन्तु धातोरैजन्तस्य, आत्वन्तु लक्षणवशादिति निह्वयतइत्यादौ तङ् भवति । एकदेशविकृतस्यानन्यत्वान्निह्वास्यतइत्यादिष्वपि । जुहूषति । जुहूषते । 'अभ्यस्तस्य चे'ति प्रसारणे परपूर्वत्वे 'हल' इति दीर्घे धातोरिगन्तत्वा'दिको झलि'ति सनः कित्त्वाद्गुणो न भवति । जोहूयते । जोहोति । जोहूतः । जोहुवति । 'हुश्नुवोः सार्वधातुक'इति यण् हुशब्दस्य लाक्षणिकत्वादनर्थकत्वाच्च न भवति । ह्वाययति । जुहावयिषति । अजूहवत् । अजूहवताम् । अजूहवन् । अत्र 'ह्वः संप्रसारणमि'ति सन्परे चङ्परे णौ प्रसारणे परपूर्वत्वे वृद्ध्यावादेशयोर्णौ कृत स्थानिवदिति स्थानिवत्त्वाद्धूशब्दस्य हौशब्दस्य वा द्विर्वचनं 'णौ चङ्युपधाया ह्रस्व,इदं च संप्रसारणं संप्रसारणं तदाश्रयं च कार्यं बलवदिति वा 'णौ च संश्चङोरि'ति विषयसप्तमीत्वा'दातो युगि'ति युकः प्राक् प्रवर्त्तते । कृते चान्तरङ्गत्वात्परपूर्वत्वमिति युग न भवति । नन्वत्रा'भ्यस्तस्य चे'ति

अभ्यस्तकारणस्य ह्वयतेः सम्प्रसारणविधानात्सिद्धमेव तदिति किं 'ह्वः सम्प्रसारणमि'त्यनेनेति ज्ञापनार्थमभ्यासनिमित्तप्रत्ययेन व्यवधाने यदि भवति णावेवेति । तेन ह्वायकमिच्छति जिह्वायकियति. ह्वायकीयतेः सन् जिह्वायकीयिषतीत्यादौ सम्प्रसारणं न भवति । एवञ्च सन्परे चङ्परे णौ 'अभ्यस्तस्य चे'त्येव सम्प्रसारणं तच्चाभ्यस्तीभविष्यत इति जुहावयिषति, अजूहवदित्यत्रापि णिजुत्पत्तेः प्रागेव प्रसारणेनान्तरङ्गत्वात्परत्वे च नैव युक्तः प्रसङ्गः । आह्व । 'आतोनुपसर्गे कः' इत्यत्र भाष्ये सर्वत्र प्रसारणिभ्यो डो वक्तव्य इति डप्रत्यये टिलोपमुक्त्वा 'आतोनुपसर्गे कः' इति कप्रत्यये वा परत्वादाल्लोपे सम्प्रसारणे यणि आह्व इति सिद्धमित्युक्तम् । उवङ् तु आल्लोपस्या'सिद्धवदत्रे'त्यसिद्धत्वाद्व्यवधानान्न भवति । निहवः । अभिहवः । उपहवः । विहवः । 'ह्वः सम्प्रसारणं च न्यभ्युपविषु' 'आङि युद्धे' 'भावेऽनुपसर्गस्ये'त्यप्प्रत्यये प्रसारणम् । आहावः । 'निपानमाहावः' इति प्रसारणे वृद्धौ निपात्यते । निपानमुपकूपं जलाशये । यत्र गावः पानार्थमाहूयन्ते । आहूा । 'आतश्चोपसर्ग' इति स्त्रियामङ्याल्लोपः । आहूतिः सहूतिरिति बाहुलकात् क्तिन् वेञादयस्त्रयोऽनुदात्ता उभयतो भाषाः ॥ ९८८ ॥

वद व्यक्तायां वाचि ॥ वदति । उवाद । ऊदतुः । ऊदुः । उवदिथ । उवाद । उवद । ऊदिव । यजादित्वात्किति सम्प्रसारणम् । पिति 'लिट्यभ्यासस्ये'त्यभ्यासस्य । वदिता । वदिष्यति । वदतु । अवदत् । वदेत् । आशिषि । उद्यात् । अवादीत् । 'वदव्रजे'ति वृद्धिः । विवदिषति । वावद्यते । वावदीति । वावत्ति । वादयति । अवीवदत् । वादयते । अवीवदत । वदेः कर्म्माविवक्षाया'मणावकर्मकादि'ति प्राप्त परस्मैपदं 'न पादमी'त्यादिना निषिध्यते । अभिवदति गुरुं देवदत्तः । अभिवादयते गुरुं देवदत्तं देवदत्तेनेति वा, 'अभिवादिदृशोरात्मनेपदे उपसंख्यानमि'ति पक्षे प्रयोज्यस्य कर्म्मत्वं परस्मैपदे तु कर्तृत्वात्तृतीयैव । वदते व्याकरणे यज्ञनारायणः । भासमानस्तत्र सूत्रार्थं वक्तीत्यर्थः । कर्म्मकराननुपवदते । उपसान्त्वयतीत्यर्थः । वदते यज्ञनारायणाचार्यः । जानाति वदितुमित्यर्थः । गेहे वदते, तद्विषयमुत्साहमाविष्करोतीत्यर्थः । गेहे

विवदन्ते । विमतिपतिता विचित्र भाषन्तइत्यर्थः । कुलभार्यामुपवदते । उपच्छन्दयतीत्यर्थ. । भासनोपसम्भाषाज्ञानयत्नविमत्युपमन्त्रणेषु वद' इति तङ् । भासन दीप्तिः, उपसम्भाषणमुपसान्त्वन, ज्ञान सम्यगवबोधः । यत्न उत्साहः, विमतिर्नानामति. । उपमन्त्रण रहस्युपच्छन्दनम् । उपसान्त्वनमुपच्छन्दन च धातोरर्थतया विशेषणम्, अन्यत्र धात्वर्थस्य, सप्रवदन्ते राजानः । सम्भूयोच्चारयन्तीत्यर्थ. । 'व्यक्तवाचा समुच्चारण'इति तङ् । व्यक्तवाचो मनुष्याः । समुच्चारण सम्भूयोच्चारण, अर्थस्वभावादुपसर्गयोगः । अव्यक्तवाक्तु पर्यायोच्चारणे च परस्मैपदमेव । सप्रवदन्ति कुक्कुटाः । ब्राह्मणो वदति, क्षत्रियो वदति । अनुवदते कठः कलापकस्य अनुः सादृश्ये, यथा कालापोऽधीयानो वदति तथा कठ इत्यर्थः । 'अनोरकर्म्मकादि'ति अनुवदतेस्तङ् । अत्रानुः सादृश्ये इति सादृश्यप्रतिपादनपरत्वादकर्म्मकत्वम् । अयमपि योगो व्यक्तवाग्विषये एव । अनुवदति वीणा गायकस्येत्यत्र न तङ्, अकर्म्मकादित्युक्तेः पूर्वोक्तमनुवदतीत्यत्र च न भवति । विप्रवदन्ते मौहूर्त्तिकाः । युगपद्विरुद्ध भाषन्तइत्यर्थः । 'विभाषा विप्रलाप'इति तङ्विकल्पः । विप्रलापो विरुद्धभाषणम् । 'व्यक्तवाचा समुच्चारण'इतिप्राप्ते इय विभाषेत्यव्यक्तवाक्कर्तृके विरुद्धभाषणे तङ् न भवति । विप्रवदन्ति शकुनीयाः । तथा व्यक्तवाक्कर्तृके विरुद्धभाषणे क्रमिकेऽपि न तङ्, मौहूर्त्तिकाः क्रमेण विप्रवदन्तीति । धनकामो न्यायमपवदते । धनार्थी न्यायं नाद्रियतइत्यर्थः । 'अपाद्वद' इति कर्त्रभिप्राये तङ् । अवद्य पापम् । 'अवद्यपण्ये'त्यादिना यति गर्ह्ये निपात्यते । ब्रह्मोद्य, ब्रह्मणो वदनमित्यर्थः । 'वदः सुपि क्यप् चे'त्यनुपसर्गे सुप्युपपदे क्यपि प्रसारणं चकाराद्यति ब्रह्मवद्यम् । अनुपसर्गादुपसृष्टाच्च ण्यति वाद्य प्रवाद्यमिति । मृषोद्यम् । 'राजसूये'त्यादिना भावकर्मणोः क्यपि निपात्यते । अवादी । ग्रहादिषु यावव्याहृइत्यादिसूत्रेण नञ्पूर्वाण्णिनिः । वदः । वदावदः । पचाद्यचि 'चलिपतिवदी'त्यादिना द्विर्वचनमभ्यासस्य त्वागागमः । प्रियंवदः । वशंवदः । 'प्रियवशे वदः खजि'ति खच् । परिवादी । सपृचादित्वाद् घिनुण् । प्रवादी । 'प्रे लपे'त्यादिन

घिनुण् । परिवादकः । 'निन्दहिंसे'त्यादिना ण्यन्ताद्वुञ् । अपवादकस्याऽपत्यं आपवादकिः । 'कुर्वादिभ्यो ण्य' इति ण्यः । कुर्वादिपाठादेव यङन्ताद्वदेरकप्रत्ययः । प्रवादुकादयः प्रयोगाश्चिन्त्याः उदित्वात् 'स्मृदृत्वरे'त्यादिना सेटः क्त्वः कित्वात्सम्प्रसारणम् । अच्छोद्य । अच्छ गत्यर्थवदेष्वि'ति अच्छशब्दस्य गतित्वात्समासे सत्यपि प्रसारणम् । वादिः । वदिवपीत्यादिना इञ्प्रत्ययः । वत्सः । 'वृतृवदी'त्यादिना सप्रत्ययः । वत्सलः कामवान् । 'वत्सांसाभ्यां कामबल' इति लच्प्रत्ययो मत्वर्थीयः । कामबलशब्दावर्शआद्यजन्तौ तद्वति वर्तेते वृत्तौ कामबलार्थौ । वत्सतरः । प्रथमवयोनिक्रान्त इत्यर्थः । 'वत्सोक्षाश्वर्षभेभ्यश्च तनुत्व' इति प्रवृत्तिनिमित्ततनुत्वोपाधिकार्थादस्माद्वत्सादेः स्वार्थे ष्टरच् । वत्सशब्दस्य प्रवृत्तिनिमित्तं प्रथमवयःसम्बन्धः । षित्वात् ङीष् स्त्रियां वत्सतरी । वत्सानां समूहो वात्सकम् । 'गोत्रोक्ष'त्यादिना वुञ् । वादित्रम् । 'अशित्रादिभ्य इत्रोत्रा'विति ण्यन्तादित्रः । अण्यन्ताद्वा हलन्ताद्वृद्धिः । वदान्यः । वदेरान्य इत्यान्यप्रत्ययः । अपमानुदीयश्च ॥ ९८९ ॥

टुओश्वि गतिवृद्ध्योः ॥ अयं वदतिश्च परस्मैभाषावुदात्तेतौ । श्वयति । शुशाव । शुशुवतुः । शुशुवुः । शुशविथ । शुशुवथुः । शुशुव । शुशाव । शुशुविव । शुशुविम । 'विभाषा श्वे'रिति लिड्यङोः सम्प्रसारणविकल्पः । अत्र सम्प्रसारणं सम्प्रसारणाश्रयकार्यं च बलीय इति 'लिड्यङोश्चे'ति विषयसप्तमीत्वाद्वा संप्रसारणमुभयोरग्रहणाद् हलादिशेषं बाधित्वा पूर्वं भवति । कितिं 'वचिस्वपी'त्यादिना सम्प्रसारणे परहपत्वे द्विर्वचने शुशुवतुः, शुशुवुः । पित्वचनेषु गुणवृद्धिभ्यामन्यत्र यणश्च पूर्वं सम्प्रसारणेऽन्तरङ्गत्वात् पररूपत्वे च यथायोगं वृद्धिगुणयोरावावादेशौ । किन्तु तूवङादेशः । 'द्विर्वचनेऽची'ति स्थानिवत्वाच्छुशब्दस्य द्विर्वचनं, प्रसारणाभावे शिश्वाय । शिश्वियतुः । शिश्वियुः । शिश्वयिथ । शिश्वियथुः । शिश्वाय । शिश्वय । शिश्वयिव । शिश्वयिम । यथायोगं वृद्धिगुणयोरायवौ । कितीयङ् पूर्ववत्, स्थानिवत्वाच्छिशब्दस्य द्विर्वचनमिति 'लिट्यभ्यासस्योभयेषामि'त्यभ्यासस्य सम्प्रसारणं, 'श्वयतेर्लिट्यभ्यासलक्षणप्रतिषेध'

इति निषेधान्न भवति । श्वयिता । श्वयिष्यति । श्वयतु । अश्वयत् । श्वयेत् । आशिषि । शूयात् । किस्त्वा'द्रुचिस्वपी'त्यादिना प्रसारणे 'हल' इति दीर्घः । अश्वयत् । 'जृस्तम्भिम्रु'त्यङ्, वा तत्र परे'श्वयतेर' इतीकारस्याकारे अतो लोपः । पररूप च अङोभावे 'विभाषा धेट्श्व्यो'रिति पक्षे चङि द्विर्वचने इयङि अशिश्वियत्, अशिश्वियताम्, अशिश्वियन् । अशिश्वियः । अशिश्वियम् । अशिश्विय । अशिश्वियाव । चङङोरभावे सिचि । अश्वयीत् । अश्वयिष्टामित्यादि, 'ह्म्यन्तक्षणे'ति वृद्धिनिषेधः । शिश्वयिषति । शेश्वीयते । शोशूयते । 'लिड्यङो'रिति वा सम्प्रसारणं, शेश्वयीति । शेश्वेति । शेश्वितः । शेश्वियति । लुङि प्रकृतिग्रहणादङ्चङौ । अशिश्वियदित्यादि । अङि 'श्वयतेर'इत्यत्व श्तिपा निर्देशान्न भवति इति तदेव रूपम् । यङ्लुकि 'लिड्यङो'रिति' सम्प्रसारणं लुका विषयत्वाप हारान्न भवति. मित्पक्षे अशिश्वायीत् । श्वापयति । अशिश्वपत् । अशूशवत् । शिश्वापयिषति । शुशावयिषति । अत्र 'विभाषा श्वेः' 'णौ च सञ्चङो'रिति सन्परे चङ्परे णौ भाविनि पक्षे सम्प्रसारणे अन्तरङ्गत्वात्परपूर्वत्वे वृद्ध्यावौ । तयोः स्थानिवत्त्वात् शुशब्दस्य श्विशब्दस्य वा द्विर्वचनम् । श्वयथुः । ट्वितो ऽथुच् । शूनवान् । शूनः । 'श्वीदितो निष्ठायामि'त्यनिट्त्वम् । अत्र पदमञ्जर्यादौ 'ओदितश्चे'ति ओदितोऽनन्तरस्य निष्ठातकारस्य नत्वविधानादेवेडभावस्य सिद्धे श्वयतिग्रहणं शक्यमकर्त्तुन् इति । उदकेन श्वयतइति उदश्वित् । 'क्विप् चे'ति क्विप् । उदश्वित इति निर्देशात् प्रसारणाभावः । 'उदकस्योदः सञ्ज्ञायामि'ति उदकस्योदभावः । उदश्विति संस्कृतमौदश्वित्कम् । 'उदश्वितोऽन्यतरस्यामि'ति सप्तम्यन्तात् संस्कृतमित्यर्थे ठक् । ठस्य 'इसुसुक्तान्तात्कः' इति कादेश । ठगभावे प्राग्दीव्यतीयेऽणि औदश्वितम् । श्वा । श्वन्नुक्षन्निति निपात्यते । शुनः पश्यन्यादौ 'श्वयुवमघोनामतद्धित इति तद्धितवर्जिते भसञ्ज्ञानिमित्ते प्रत्यये प्रसारणे परपूर्वत्वम् । अतद्धितइति वचना'त्प्राणिरजतादिभ्योऽञ्'इति विकारावयवयो प्राणिलक्षणेऽणि 'नस्तद्धित'इति टिलोपे 'द्वारादीना चे'त्यैजागमे शौव मांसमिति भवति । शौवः

सङ्कोचः । अत्र प्राग्दीव्यतीयेऽणि 'शुनः सङ्कोचे उपसंख्यान'मिति 'अन्नि'ति प्रकृतिभावं बाधित्वा टिलोपः । सङ्कोचादन्यत्र शौवनम् । शुने हितं शुन्यम् । शुनः सम्प्रसारणं वा च दीर्घत्वमिति गवादिपाठाद्यति प्रसारणे वा दीर्घः । अत्र 'नस्तद्धिते'ति टिलोपः कस्मान्न भवति । न च प्रसारणस्य सामर्थ्यादिति वाच्यम् । यतः कृते परपूर्वत्वे टिलोपार्थमेव तत् स्यात्, अन्यथा 'ये चाभावकर्म्मणो'रिति प्रकृतिभावः स्यात् । दीर्घविधान-सामर्थ्यान्न भवति । अस्तु चैवम्, अदीर्घपक्षे कस्मान्न भवति । तदुच्यते, द्वौ चकारौ क्रियेते वा च दीर्घत्वं चेति, तत्रान्त्यः सन्नियोगार्थः, आद्यो भिन्नक्रमः सम्प्रसारणमित्यनेन सम्बध्यते प्रसारणं चेति । तत्रान्त्यस्य समु-च्चयितव्याभावात् पुनरपि प्रसारणं समुच्चीयते । तच्चावस्थापनार्थं सत् टिलोपं बाधिष्यते । शुनी । गौरादिपाठात् ङीष् । शुन इव शेपमस्य शुनःशेपः । एवं शुनःपुच्छः । शुनोलाङ्गूलः । 'शेपपुच्छलाङ्गूलेषु शुन उपसंख्यान'मिति अलुक् । अकारान्तोऽप्यस्ति शेपशब्दो न केवलं सकारान्त इति कैयटपदमञ्जर्यादिषु । शुनोदन्तः श्वादन्तः । 'शुनो दन्तदंष्ट्रा-कर्णवराहपुच्छपदेष्वि'ति पूर्वपदस्य दीर्घः । एवं दंष्ट्रादिषूदाहार्यम् । श्वादंष्ट्रस्यापत्यं श्वादंष्ट्रिः । श्वभस्त्रस्यापत्यं श्वाभस्त्रिः । अत्र 'श्वादेरि-ञी'ति द्वारादिलक्षण ऐजागमो वृद्धिप्रतिषेधश्च निषिध्यते । अयमेव निषेधो द्वारादौ तदादिविधिज्ञापकः । श्वन्शब्दोऽपि तत्र पठ्यते 'श्वादे-रिञी'त्यत्र वार्त्तिके इकारादिग्रहणं च गणिकाद्यर्थमिति । श्वगणेन चरति श्वागणिकः, 'श्वगणाट्ठञ् चे'ति चरत्यर्थे तृतीयान्ताट्ठक्ठञौ । आदिशब्देन श्वायूथिकादिर्गृह्यते । अत्र च प्राग्वतेरिति ठञ् इञाद्यन्ता-द्यदान्यस्तद्धित उत्पद्यते तदापि 'श्वादेरिञी'ति प्रतिषेधो भवत्येव । तथा च तत्र वृत्तिः । तदन्तस्य चान्यत्रापि तद्धिते प्रतिषेध इष्यतइति । तेन श्वाभस्त्रेरिदमिति विगृह्य 'इञश्चे'त्यणि कृते ऐजागमवृद्धिनिषेधयोरभा-वात् श्वाभस्त्रमिति भवति । यदा पुनरिकारादेरन्यस्तद्धितो भवति तदा श्वदंष्ट्रायां भवो मणिः शौवादंष्ट्र इति वृद्धिप्रतिषेध ऐजागमश्च भवति । श्वापदे भवः शौवापदः । श्वापदः । 'पदान्तस्यान्यतरस्या'मिति श्वादेः

पदशब्दान्तस्य द्वारादिलक्षण ऐजागमो वृद्धिप्रतिषेधश्च पक्षे निषिध्यते। शुनः समीपमुपशुनम्। 'अव्ययं विभक्तिसमीपे'त्यव्ययीभावे ऽचतुरादिषु निपातनादच् टिलोपाभावश्च सम्प्रसारणं च, गोष्ठे श्वेव गोष्ठश्वः, अयमप्यचतुरादिषु निपातितः। श्वानमतिक्रान्तोतिश्वः। 'अतेः शुन'इति टच्। अतेरिति वचनान्निश्वा लोष्ट इत्यादौ न भवति। श्वेव पाषाणः पाषाणश्वः। 'उपमितं व्याघ्रादिभि'रिति समासः। 'उपमानादप्राणिषु' उपमानवाची यः श्वन्शब्दोऽप्राणिषु वर्त्तते तदन्तात्टजिति टचि 'नस्तद्धिते' इति टिलोपः। अत्र श्वशब्दः सादृश्यात्पाषाणवृत्तिरित्यप्राणिवचनः, अप्राणिष्विति वचनात् श्वेव वानरः वानरश्वेत्यादौ टज् न भवति। मातरि सर्वस्य परिच्छेत्तर्याकाशे वर्द्धतइति मातरिश्वा वायुः। श्वन्नुक्षन्नित्यादिना मातरि पूर्वपदे श्वयतेः कनिनि इकारलोपो लुक्च निपात्यते, 'तत्पुरुषे कृति बहुलमि'ति चालुक्सिद्धिः॥ ९९०॥

वृत्॥ यजादयो वृत्ता इत्यर्थः। भूवादिस्त्ववशिष्यतइति व्याख्यातारः। तेन चुलुम्पतीत्येवमादीनामाप्तप्रयोगसिद्धानां सग्रहः सिद्धो भवति॥

इति पूर्वदक्षिणपश्चिमसमुद्राधीश्वरकम्पराजसुतसङ्गमराजमहामन्त्रिणा मायणपुत्रेण माधवसहोदरेण सायणेन विरचितायां माधवीयायां धातुवृत्तौ शब्विकरणा भ्वादयः॥

शुभं भूयात्॥

श्रीगणेशाय नमः ॥

# माधवीयधातुवृत्तौ ।

## अदादिः

अद भक्षणे ॥ अत्ति । अत्तः । अदन्ति । अत्सि । अत्थ । अत्थ । अद्मि । अद्वः । अद्मः । 'अदिप्रभृतिभ्यः शपः' इति शपो लुक् । 'खरि चे'ति चर्त्वं, जघास । जक्षतुः । जक्षुः । जघसिथ । जक्षथुः । जक्ष । जघास । जघस । जक्षिव, जक्षिम, 'लिट्यन्यतरस्या'मित्यदेः पक्षे घस्लादेशः । 'लिटि वृद्धिः' । उत्तमे तु णिद्विकल्पः । अपित्स्व 'असंयोगाल्लिट् कि'दिति कित्त्वे 'गमहने'त्युपधालोपः, तस्य 'द्विर्वचनेऽची'ति स्थानिवत्त्वाद् द्विर्वचनं, 'शासिवसिघसीनां चे'ति[1] षत्वम्, अत्रोपधालोपस्य पूर्वस्मादपि विधाविति स्थानिवत्त्वं षत्वविधानवैयर्थ्यप्रसङ्गात्पूर्वत्रासिद्धे न स्थानिवदिति वा न भवति । घकारस्य 'खरि चेति' चर्त्वं ककारः अत्राप्युपधालोपस्य न स्थानिवत्त्वं न पदान्ते'त्यादिना वा पूर्वत्र सिद्धे न स्थानिवदित्यनेन[3] वा तन्निषेधात्, अतः स्तास्वदिति वलीडनिषेधस्तासौ सत इत्युक्तेन घस्लादेशस्य तासावसत्त्वा[4]दत्र स निषेधः । अत एव तद्विषयो भारद्वाजनियमोऽपि न भवति, यद्वा स्थानिवद्भावादिडत्त्यर्तीति नित्यमिट् भविष्यति । नन्वस्ति प्रकृत्यन्तरं घसिस्तासौ नित्यानिट् च तस्मात्थलि[5] जघस्थेति दुर्वारम्, नैवम् । प्रकृत्यन्तरस्य घसेर्यत्र लिङ्गं वचनं वास्ति तत्रैव प्रयोजनं न सर्वत्रेति तस्यैव धातावुपपादितत्त्वात्, अतो नास्ति लिटि प्रयोगः । घस्लादेशाभावे, आद, आदतुः । आदुः । आदिथ । आदिव । क्रादिनियमादिट् । थलि भारद्वाजनियम इडत्त्यर्तिव्ययतीनामिति बाध्यते । अत आदेरित्यभ्यासादेर्दीर्घः । अत्ता, अत्तासि, अत्तास्मि, अत्स्यति, अत्स्यसि, अत्स्यामि, अत्तु

---

१ इयाको परत्वे इति ३ । ४ । पुस्तकेऽधिकम् ।
२ इहार्थेति २ पु पा । ३ इत्येवेति नास्ति २ पु ।
४ न भवतीति ४ पु नात्र प्रतिषेध इति २ पु । नास्ति निषेध इति ३ पु पाठ ।
५ थलीति नास्ति २ पु ।

अत्तात् । अद्धि । अदानि । आदत् । आदः । आदम्, 'अदः सर्वेषा'मित्यदोऽङ्गात्परस्य सार्वधातुकापृक्तस्याडागमः । अद्यात् । अद्याः । अद्याम् । आशिषि अद्यात्,[1] अन्यत्र तु सलोपाभावो विशेषः । अद्यास्तामित्यादि । अघसत् । अघसताम् । अघसन्, अघसः । अघसतम् अघसत, अघसम् । अघसाव । अघसाम । 'लुङ्सनोर्घसॢ'ति घस्लादेशे ऌदित्त्वादङ्, जिघत्सति । घस्लादेशे 'सस्यार्द्धधातुक'इति तत्वम् । आदयते ऽत्र देवदत्तेनादयतीति वा । आदिदत । आदिदत्, णिलोपस्य स्थानिवत्त्वाद्दिशब्दस्य द्विर्वचन, निगरणचलनेति कर्त्रभिप्राये प्राप्तस्य परस्मैपदस्यादेः प्रतिषेध इति निषेधः । 'आदिखाद्योः प्रतिषेध' इति प्रयोज्यस्य कर्[2]तुः कर्मत्त्वनिषेधः । व्यत्यत्ते । व्यत्यदाते । व्यत्यदते । 'कर्त्तरि कर्म्मव्यतिहारे' इति तङ्, 'आत्मनेपदेष्वनत' इति झस्यादादेशो ऽनकारान्तादङ्गात्परत्वात्, व्यत्यदन्ति वृका मेषानिति हिंसाया द्रष्टव्य, तत्र हि न गतिहिंसेति तङ् निषिध्यते । व्यतिजक्षे । व्यत्यादे । व्यत्यत्ता । व्यत्यत्स्यते, व्यत्यताम्, व्यत्यात्त । व्यत्यदीत । आशिषि व्यत्यत्सीष्ट । व्यत्यघत्त । व्यत्यात्त । 'सस्यार्द्धधातुक'इति तत्त्वे झलो झलीति सिचो लोपः, कर्म्मण्यद्यते । अदती । शत्रन्ता 'उगितश्चे' ति ङीप् । नित्यत्वादन्तरङ्गत्वाच्च नुमः पूर्वं शपो लुगिति शप्श्यनोर्नित्यमिति नुमत्र न भवति । न च प्रत्ययलक्षणमस्ति, तत्रादित्यधिकाराद्गुणाश्रये च तन्निषेधात् । जग्धः । प्रजग्ध्य । 'अदो जग्धिर्ल्यप्ति किती'ति जग्ध्यादेशः । पुत्रो जग्धो यया सा पुत्रजग्धी, 'राजदन्तादिषु पर'मिति निष्ठान्तस्य परनिपातः । 'अस्वाङ्गपूर्वपदाद्वा' इत्यस्वाङ्गवाचिपूर्वपदात् क्तान्तादन्तोदात्ताद्बहुव्रीहेर्वा ङीष्, 'वा हतजग्धयो' इति पुत्रतकारस्य वा द्वित्वम्, अन्नं लब्धा आन्नः, 'अन्नाण्ण' इति द्वितीया[3]न्ताद् लब्धेत्यर्थे णप्रत्ययः । अत एवान्नादिति निर्देशात्सञ्ज्ञाया न जग्ध्यादेशः,[4] सर्वप्रकारमन्नं भक्षयति सर्वान्नीनो भिक्षुः । 'अनुपदसर्वान्नायानयं

१ आशिषि सलोपाभावो विशेष इति ४ । पु पाठः ।
२ कर्त्तुरिति ४ पु॰ नास्ति ।
३ द्वितीयासमर्थादिति ३ पु॰ पाठः ।
४ जग्ध्यादेशाभाव इति ३ पु॰ पाठः ।

अद्भ्राभक्षयतिनेयेष्वि'ति द्वितीयान्तादस्माद्व्ययासङ्ख्याद् भक्षयतीत्यर्थे ख्यः । काकादनी, गवादनी, ल्युटि गौरादित्वान् ङीष्, प्रात्तीति प्रघसः । अच्, अच्युपसङ्ख्यानमिति घस्लादेशः । सस्यमत्तीति सस्यात् । 'अदोऽनन्ने' इत्यवादन्यस्मिन्कर्मण्युपपदे विट् । अन्ने तूपपदे कर्मण्यण्यवादः । सस्याद इति वासरूपेण । क्रव्यात् । 'क्रव्ये चे'ति विट् । 'अदोऽनन्ने' इत्येव सिद्धे पुनर्विधानं वासरूपबाधनार्थमिति भाष्यादौ स्थितम् । क्रव्यादशब्दस्तु कृत्तविकृत्तपक्वमांसशब्दे उपपदे ऽणि पृषोदरादित्वादुपपदस्य क्रव्यभाव इति वृत्त्यादौ, व्याप्तं गुहाशयैः क्रूरैः क्रव्यादैः सनिशाचरैरित्यासमासभक्ष्ये व्याघ्रादौ भट्टिप्रयोगश्चिन्त्यः । राक्षसः कौणपः क्रव्यात् क्रव्याद इत्यादौ कृत्तविकृत्तपक्वमांसस्यापि भक्षणं सम्भवतीति क्रव्यादव्यवहारः । पुत्रादिनी । सुप्यजातावित्ति णिनिः । अत्र पुत्रतकारस्य प्राप्तम'नचि चे'ति द्वित्वं 'नादिन्याक्रोशे पुत्रस्ये'त्यादिनीशब्दे उत्तरपदे आक्रोशे गम्यमाने नेति निषिध्यते । 'तत्परे चे'तिवचनात्पुत्रपुत्रादिनीत्यत्रापि द्वित्वं न भवति । घस्मरः, सृघस्यद इति क्मरच्, घासः । अकर्तरि च कारकइति घञि 'घञपोश्चे'त्यदेर्घस्लादेशः । महत्या घासो महाघासः । महदात्त्वे घासकरविशिष्टेषूपसङ्ख्यानमिति पुंवद्भाव आत्त्वञ्च, विघसः । 'उपसर्गेऽदः' इत्यप्, नौ तूपपदे 'नौ ण चे'त्यप्णौ भवतः । न्यादो निघसः । 'घञपोश्चे'त्यपि घस्लादेशः । अन्धोऽन्नम् । 'अदेर्नुम् धश्चे'त्यसुनि नुमागमो दकारस्य धकारः, अत्री अत्ता राक्षसादिरुच्यते । अत्रिर्ऋषिः, [1] 'अदेस्त्रिनि चे'ति त्रिनिप्रत्ययः चकारात् त्रिप् च । त्रिनेरिकारो नकारपरित्राणार्थः । अत्रेरपत्यमात्रेयः । 'इतश्चानिञः' इति ढक् । अस्य बहुत्वे ऽत्रिभृगुकुत्सेति लुकि अत्रय इति भवति । अद्यते फलमूलादिकमस्येत्यद्रिः । अदिशदिभूशुभिभ्यः क्रिनिति क्रिन् प्रत्ययः । अध्वा, 'अदेर्धुं चे'ति क्वनिप् । दकारस्य च धकारः, अध्वानमलङ्गच्छतीति अध्वन्यः । अध्वनीनः । 'अध्वनो यत्खा'विति द्वितीयान्तादलङ्गामीत्यर्थे यत्खौ, यति 'ये चाभावकर्मणो'रिति खे तु 'आत्माध्वानौ खे' इति प्रकृतिभावः । विहीनो ध्वा व्यध्वः, एव दुरध्वः

१ त्रिबित्यनुवर्तमाने अदेस्त्रिनि चेति त्रिनित्रिपौ प्रत्ययौ ।

'उपसर्गादध्वन' इत्यच् समासान्तः । उपसर्गग्रहणं प्रादुपलक्षणम् । प्राध्वशब्दो मान्तोऽव्ययमानुकूल्ये वर्तते ॥ १ ॥

हन हिंसागत्योः ॥ हन्ति । हतः, घ्नन्ति । हंसि । हथः । हथ हन्मि, हन्वः । हन्मः, झलादौ क्ङित्यनुदात्तोपदेशेत्यनुनासिकलोपः । झावन्त रङ्क्त्वादन्त देशेऽजादित्वाद्गमहनेत्युपधालोपे 'हो हन्तेर्ञ्णिन्नेष्विति' ञिति णिति प्रत्यये नकारे च परे कुत्वविधानात्स्थानिनो घोषवतो नादवतो महाप्राणस्य हकारस्य तादृशो घकारः । अत्रोपधालोपस्य स्थानिवत्त्व नकारे परतः कुत्वविधानसामर्थ्यान्न भवति, सत्यपि वा स्थानिवत्त्वे वचनसामर्थ्यादीदृश व्यवधानमाश्रयिष्यते । जघान, जघ्नतुः । जघ्निथ । जघन्थ । जघ्न, जघान, जघन । जघ्निव । क्रादिनियमादिट् । थलि भारद्वाजनियमाद्विकल्प, यत्रोपधालोपस्तत्र 'द्विर्वचनेऽची'ति स्थानिवत्त्वाद् द्विर्वचन, जघ्निवान् जघन्वान् । 'विभाषा गमहनविदविशा'मिति क्वसोरिड्विकल्पः, इटि गमहनेत्युपधालोपे हो हन्तेरिति कुत्वम्, अनिटि त्व'भ्यासाच्चे'त्यभ्यासादुत्तरस्य हन्तिहकारस्य कुत्वम् । चान्द्रास्तु भाषायामस्य प्रयोगमिच्छन्ति, हन्ता, हनिष्यति, 'ऋद्धनोः स्य' इतीट्, हन्तु, हतात् । हतां, घ्नन्तु । जहि, हतं, हनानि, तातङि तस्य ङित्त्वादनुनासिकलोपः । हौ 'हन्तेर्जः' इति जादेशः । अस्या सिद्धवदत्राभादित्यसिद्धत्वा दतो हेरिति लुङ् न भवति । हतात्त्वमित्यत्र जादेशात्परत्वात्तातङि तस्य स्थानिवद्भावेन ङित्त्वाभावेऽपि जादेशः सकृद्गतिपरिभाषया न भवति । अहन् । अहताम् । अघ्नन्, अहन् । अहतम् । अहत । अहनम् । अहन्व, हल्ङ्यादिना तिस्योर्लोपः । हन्यात् । हन्याताम् । हन्युः । हन्याम् । हन्याव । आशिषि वध्यात् । वध्यास्ताम् । वध्यासुः । वध्यासम् । 'हनो वध लिङी'ति धातुकादेशे वध इति अदन्तो वधादेशे अल्लोपेन्यादिनाकृतस्यार्द्धधातुकयोरिति दीर्घमतो लोपो बाधते । अवधीत् । अवधिष्टाम् । अवधिषुः । अवधीः । अवधिषम् । अवधिष्ट, 'लुङि चे'ति वधादेशः । अल्लोपस्य

१ पुनरिति पा ३ ।

२ दीर्घोऽतोलोपेन बाध्यते इति २ पु पाठ ।

स्थानिवत्त्वात्तल्लक्षणा वृद्धिर्न भवति, वध इत्यस्यानेकाच्त्वादुदा-त्तत्वनिपातनादनुदात्तत्वाभावात्सिचो वलादिलक्षण इड् भवति। यङ्लुगन्तस्यापि हन्तेर्लिङ्लुङोः नित्यत्वादिन वधादेशे वध्यादवधी-दित्येव रूपम्। अत्रादेशस्य स्थानिवत्त्वेन यङन्तत्वाद् द्विर्वचनं स्यादिति न वाच्यम्। यत्र हि प्रकृतिरूपं सान्यस्तत्वं प्रतिदिश्येत तत्रैवान्या-सस्येति निर्देशः स्यात्। आहते। आघ्नाते। आघ्नते, आहसे। आघ्नाथे। आहध्वे। आघ्ने। आहन्वहे। पूर्ववदनुनासिकलोपः। अनादौ तूपधालोपः। 'आङो यमहनः' इत्यकर्मकादप्याङ्कर्मकाच्चेति तङ्। आजघ्ने। आजघ्नाते। आजघ्निषे आहन्ता से आहनिष्यते। आह-ताम्। आघ्नाताम्। आहन्व। आहनै। आटि पित्त्वाच्चोपधालोपः। आहत। आघ्नाताम्। आहथाः। आघ्नि। आहन्वहि। आघ्नीत। आघ्नीयाताम्। आघ्नीयाः। आघ्नीय, लिङः सलोपः, आशिषि आवधि-षीष्ट आवधिषीयास्ताम्। 'हनो वध लिङी'ति वधादेश इडागमः॥ आवधिष्ट। आवधिषाताम्। आवधिष्ठाः। आवधिध्वम्। आवधिषि। 'आत्मनेपदेष्वन्यतरस्याम्' इति पक्षे वधादेशः। अन्यदा आहत। आहसा-ताम्। आहसत। आहथाः। आहध्वम्। आहसि। आहन्वहि। अत्र हनः सिजि'ति झलादेरात्मनेपदपरस्य सिचः कित्त्वादनुनासिक-लोपे 'ह्रस्वादङ्गादि'ति झलि सिचो लोपः। 'आङो यमहनः' इति तङ् अकर्मकात्स्वाङ्गकर्मकाच्चेत्युक्तम्। अथ कथमाजघ्ने विषमविलोचनस्य वक्ष इति। अत्र के चिदाजन इति पदं छित्त्वा घ्न इति भावे क्विपि चतु-र्थ्येकवचनान्तमुक्त्वा घ्ने हन्तुमाजगामेत्यर्थ इति समर्थयन्ते। तदयु-क्तम्। 'अजेर्व्यघञपोः' इति निष्ठार्द्धधातुके वीभावेन भाव्यत्वात्[2]। अन्ये तु विषमविलोचनस्य समीपमेत्य स्वं वक्ष आस्फालितवानित्यर्थ इति। मल्लो ह्युत्साहाविष्करणाय स्वं वक्ष आस्फालयतीति। भागवृत्तौ तु 'नैवाय माधुरित्यायोध'[3] इति पाठान्तरमुक्तम्, एवं च

१ किंचिदितीत्यधिकं २ पु। २ भवितव्यमिति २ पु पाठः।
३ अयोधे युद्धे, आयोधे इति २ पु पा।

मोदाहध्वं रघूत्तममिति भट्टिप्रयोगोपि चिन्त्यः । तथा मदर्थेऽरीन् विजङ्घ्रियेति च । अत्र सिपः पित्त्वाद'सयोगाल्लिट्कि'दित्यत्र चापिदित्यधिकारात् कित्त्वाभावादुपधालोपोपि दुर्लभः । अपिदधिकारश्चे'न्धिभवतिभ्यां चे'त्यत्र भवतिग्रहणाज्ज्ञायते । तथा च तत्र वार्त्तिकमिन्धेः सयोगार्थं वचनं भवतेः पिदर्थमिति । 'आङो यमहन' इति तङ् प्रकृतिग्रहणन्यायेन यङ्लुगन्तादपि भवति, आजङ्घ्नते । आजङ्घाचक्रे इत्यादि भवति । अत्रापि लिङ्लुङोर्वधादेशे प्रकृतिवदेव रूपम् । आवधिषीष्ट । आवधिष्टेति । लुङि वधादेशाभावे अ जङ्घनिष्टेत्यादि, 'हनः सिजि'त्यत्र झलीत्यधिकारादिडा[1]गमे कित्त्वाभावादुपधालोपाभावः । जिघांसति । अज्झनगमेति दीर्घः । 'अभ्यासाच्चे'ति कुत्व, जङ्घन्यते । 'नुगतो नुना[2]सिकान्तस्ये'ति नुक् । इदं चानुस्वारोपलक्षणार्थं पदान्तवदिति च प्रागेवोक्तम् । तेन 'वा पदान्तस्ये'ति परसवर्णो विकल्पेनोदाहार्यः ॥ यङि हन्तेर्हिंसाया घ्नीभावो वक्तव्य इति घ्नीभावविधानाद् हिंसाया जेघ्नीयत इति भवति । जङ्घनीति, जङ्घन्ति । जङ्घतः । जङ्घ्नति । अत्र सुधाकरः । के पुनरनुदात्तोपदेशा यम्यादय इति व्याख्यातृभिर्गणत्वेन निर्देशाविर्दिष्ट यद्ग्रणेन चेति यङ्लुकि अनुनासिकलोपाभावादनुनासिकस्येति दीर्घे जङ्घात इत्युक्त्वा न क्वचिदाचार्येणानुदात्तोपदेशाना गणेन निर्देशः कृत इति भवितव्यमेवानुनासिकलोपेनेत्याह । 'हन्तेर्जः' इत्यत्र च न्यासे हन्तेरिति तिपा निर्देशाद् यङ्लुकि जभावाभावाज्जङ्घहीति भवतीति कृतानुनासिकलोपः प्रत्युदाहृतः, अत्रासिद्धवदत्रेत्यनुनासिकलोपस्यासिद्धत्वाद्धिलुङ् न भवति । अत्रात्रेयः । न्यासे प्रत्युदाहरणं जङ्घनीहीति पठन् भाषायां हेरपित्त्वादीडभावाच्छान्दसमुदाहरणमित्याह । घातयति । अजीघतत्, 'हनस्तो चिण्णलो'रिति हन्तेर्ञिति णिति प्रत्यये चिण्णल्वर्जिते परे नकारस्य तकारः । प्रकृतिग्रहणन्यायेन यङ्लुगन्तेपि तत्वे जङ्घातयति । कर्मणि हन्यते । जघ्ने, हन्ता । घानिता । हनिष्यते । घानिष्यते । हन्यताम् । अहन्यत । हन्येत । आशिषि घानिषीष्ट, वधिषीष्ट । अवधि । अघानि । अव-

१ इडादेरकित्त्वादिति । २ पु पा ।

धिषाताम् । अहसाताम् । अघानिषतामित्यादि । स्यादिषु चिण्वद्भाव-पक्षे वृद्धिकुत्वे । नन्वबधीत्यत्र चिणि वधभावो दृश्यतइति चिण्वद्भावेन स कस्मान्नातिदिश्यते । उच्यते । नात्र चिणि दृष्टमात्रमतिदिश्यते किन्त्वाङ्गं चिणि दृष्टमिति वधादेशो न भवति । लिङ्लुङोः कर्तृवद्वधादे-शतद्विकल्पौ, लिङि चिण्वत्पक्षे वधादेशो न भवति, यतश्चिण्वदिट् परत्वेन पूर्वं वधादेशं बाधते, कृते तु सकृद्गतिपरिभाषया न भवति, ननु द्वितीयाध्याये आर्द्धधातुके इति विषयसप्तमी, तेन प्रागेव प्रत्ययोत्पत्तेर्वध-भावेन भाव्यं चिण्वद्भावस्तु भावकर्मविषयेषु स्यादिषु परतो विधीयतइति कथमन्तरङ्गबहिरङ्गयोर्विप्रतिषेधः । नैष दोषः । यत्रार्द्धधातुकसामान्य निमित्तत्वेनोपादीयते 'अस्तेर्भू'रित्यादौ तत्रैव विषयसप्तम्याश्रयणात्, न पुनर्यत्र विशेष उपादीयते 'हनो वध लिङी'त्यादौ तत्रापीति । उक्तं चैवं चिण्वत्सूत्रे व्याख्यातृभिः । वार्त्तिके च वधभावात्सीयुटि चिण्व-द्भावो विप्रतिषेधेनेति । कैयटेन तु विषयसप्तम्याश्रयणेनापि परिहार उक्तः ॥ यथा 'एकाच उपदेशेनुदात्ता'दित्यत्र वक्ष्यति भाष्यकारः । वधिषीष्टेत्यत्र निपातनस्वरः प्रत्ययस्वरो बाध्यते आर्धधातुकीयाः सामान्येन भवन्त्यनव[1]-स्थितेषु प्रत्ययेष्वित्येव ब्रुवता लिङीति विषयसप्तम्येवाभ्युपगता, ततश्चा-न्तरङ्गत्वाद्वधभावः प्राप्नोति, प्रतिपदविधेर्वनीयस्त्वाच्चिण्वद्भावो भव-तीति, कर्म्मकर्त्तरि आहते माणवकः स्वयमेव, आवधिष्ट माणवकः स्वयमे-वेत्यत्र यक्चिणोः प्रतिषेधइत्यादिना यक्चिणोर्निषेधात् शप्सिचौ भवतः । अत्र हरदत्तेनात्मनेपदविधावकर्म्मका ये धातवो निर्दिष्टास्ते यदान्त-र्भावितण्यर्थाः सकर्म्मका भवन्ति तदात्मनेपदाकर्म्मका आहन्ति माणवक-मिति तदा सकर्म्मकत्वादनुदाहरणमिति केचित् । अन्ये त्वात्मनेपदाकर्म्म-केति धातूपलक्षणत्वात्कर्म्माविवक्षयामात्मनेपदस्य निमित्तत्वात्सकर्म्मके-प्यविरुद्धमुदाहरणमित्याहुः । इत्येतन्ना[2]विगीतमुदाहरणम् । 'वेःशब्दक-र्म्मणः' 'अकर्म्मकाच्च' विकुर्व्वते सैन्धवाः, वल्गन्तीत्यर्थः, तान्यदाऽन्यो

१ अनवस्थितेषु प्रत्ययेष्विति । ३ । ४ । पु नास्ति ।
२ इदमत्राविगीतमुदाहरणमिति । ३ । ४ । पु पाठः ।

बलायति तदा तेषां कर्म्मकत्वं, पुनः सौकर्यातिशयाय कर्तृत्वविवक्षाया विकुर्वते सैन्धवाः स्वयमेव वलातीत्युक्तं, चोरस्य निप्रहन्ति, चोरस्य निहन्ति, चोरस्य प्रहन्ति,चोरस्य प्रणिहन्ति, अत्र नेर्गदेतिणत्वं, जासिनिप्रहणेति कर्म्मणि शेषषष्ठी, तत्र निप्रग्रहणं सघातविगृहीतविपर्यस्तार्थमित्युक्तं प्रहण्मि । प्रहन्मि । प्रहन्वः, प्रहण्वः । प्रहन्मः, प्रहण्मः । अत्र 'हन्तेरत्पूर्वस्ये'त्युपसर्गस्थान्निमित्तात्परस्यात्पूर्वस्य हन्तिनकारस्य विधीयमानं णत्वं प्रहण्यते प्रहणीत्यादाविव नित्यप्राप्तं वमोर्वे'ति नकारवकारयोः परयोर्विकल्प्यते । प्राघ्नीत्यत्र 'त्पूर्वस्ये'ति तपरकरणात् णत्वस्य न प्रसङ्गः, प्राहन्नित्यत्र तु 'पदान्तस्ये'ति निषेधः, प्रहन्तीत्यत्रानुस्वारे कर्त्तव्ये णत्वं पूर्व्वत्रासिद्धमिति न भवति, कृते तु परसवर्णे तस्यासिद्धत्वात्पुनर्णत्वं न भवति, 'अन्तःशब्दस्याङ्किविधिणत्वेषूपसर्ग्गत्वं'मित्युपसर्गसंज्ञोपसंख्यानात्तत्पूर्वस्यापि सर्वमिदं णत्वं द्रष्टव्यम्, अन्तर्हणीत्यादि, एवं चा'न्तर देशे' इति हन्तेर्नकारस्य णत्ववचनमर्थाद्देशे णत्वनिषेधार्थं भवति अन्तर्हननो नाम वाहीकेषु ग्रामेषु देशविशेषः, अन्यत्रान्तर्हणनमिति णत्वं भवति, मध्ये हननमित्यर्थः सर्वमिदं णत्वं तिपा निर्द्देशाद्यङ्लुकि न भवति प्रणिजङ्घ्नीत्यादि, जासिनिप्रहणेति षष्ठीतु भवत्येव । चोरस्य प्रणिजङ्घ्नीत्यादि । अन्तर्हत्य मध्ये हत्वेत्यर्थः, । 'अन्तरपरिग्रहे'इत्यन्तरो गतित्वा'त्कुगतिप्रादय' इति तत्पुरुषे ल्यपि 'वा ल्यपी'त्यनुनासिकलोपे तुक् । वाग्रहणस्य व्यवस्थितविभाषात्वात्मान्तेषु विकल्पितो ऽनुनासिकलोपो ऽत्र नित्य इत्युक्तम् । परिग्रहेऽगतित्वादन्तर्हत्वा मूषिकां श्येनो गत इति भवति, परिगृह्येत्यर्थः । अत्र न्यासोद्योते अन्तरशब्दो धातोः परिग्रहे वृत्तिं करोतीति, एवं चान्तरपि परिग्रहस्यैव द्योतक इत्युक्तं भवति, कणेहत्य पयः पिबति, मनोहत्य पयः पिबति । 'कणेमनसी श्रद्धाप्रतीघाते' इति कणेमनःशब्दयोर्गतित्वे समासादि पूर्ववत्, अत्र कणेशब्दः सप्तमीप्रतिरूपको निपातो ऽभिलाषातिशये वर्त्तते, मनः शब्दोऽपि साहचर्यादभिलाषावृत्तिरेवेति न्यासपदमञ्जर्यां, हन्तिरत्रावधीकरणाद्गे निवृत्तौ वर्त्तते, सा च सन्निधानात्कणेमनश्शब्दार्थयोस्तौ च निवर्त्यमानतया

ऽवधीन्नि नयोश्च प्रतिषेधो विपर्ययतया विशेषण तत्त्वमर्थः । अभिलाष-निवृत्तिरर्थ इत्यन्ये पयः पिबतीति । उक्तञ्च न्यासे ऽदन्ते, प्रतीघाते हन्तिरय-श्विकरणोक्ते निवृत्तौ वर्त्तत इति । अभिलाषनिवृत्तिमवधीकृत्य पयः पिब-तीति, हरदत्तोऽपि अतिशयेन अभिलष्य तद्विवृत्तिपर्यन्त पय पिबतीत्यर्थः । एव चाभिलाषनिवृत्तेरवधिकरणस्य पयःपानान्तर्वर्त्तित्वात् त्वोपपत्ति-श्रृङ्गाप्रतीघातादन्यत्र कणे हत्वा मनो हत्वा कणशब्द. मूले तन्दुलावयवे वर्त्तते. मन.शब्दस्तु चेतसि, योगद्वयमिदं स्वभावाद्वृत्तिविषयं वध्य. । 'हनो वध चे'ति कर्म्मणि यत्, तत्सन्नियोगेन वधादेशश्च घात्यइति ग्यति । ब्रह्महत्या, 'हनस्त चे'त्यनुपसर्गे उपपदे क्यप् तत्सन्नियोगेन नकारस्य तकारः । सोपसर्गादनुपपदाच्च नाय विधिरिति घात इति घञ् भवति । तयोरेवेति भावकर्मणोः ण्यदन्तानभिधानाच भवतीत्यात्रेय । अश्विह-त्याया भवमाश्विहात्यम्, 'अनुशतिकादीना चे'त्युभयपदवृद्धिः । अत्र के-चिदश्वहत्येति पठन्ति । ततो 'बह्वचो ऽदन्ता'दश्वहत्याशब्दो ऽस्मिन्नध्याये-स्तीत्यण्याश्वहात्यनिति भवति. हत्याशब्द पानमहत्स्वित्यादावनुपपदे क्यबार्षः । घनाघन. । हन्तेर्यङ्न्त चेत्यचि द्विर्वचनमभ्यासस्यागागमो हका-रस्य घकारः परस्या 'भ्यासाच्चे'ति कुत्वम्, आको दीर्घोच्चारणसामर्थ्यात्र हलादिशेषः, यदि स्यादकमात्र विद्यात्सवर्णदीर्घेणाकारो भविष्यति, फलप त्वविधानवैयर्थ्यान्न भविष्यति । शत्रुहः । शत्रु वध्यादित्यर्थः । 'आशिषि हन' इत्याशिषि गम्यमानाया कर्म्मण्युपपदे डप्रत्ययः । डित्वसामर्थ्याट्टिलोप. । दार्वाहन्तीति दार्वाघाट., 'दारावाहनो ण्यन्तस्य च टः सञ्ज्ञाया मित्याद्युर्थाद्वृत्ते कर्त्तव्यण्, नकारस्य च टकार । चार्वाह-न्तीति चार्वाघाटः चार्वाघातो वा । 'चारौ वे'ति चारौ कर्म्मण्युपपदेण् प्रत्यये नकारस्य वा टकारः । तदभावे 'हनस्तोऽचिण्णलो'रिति तत्व, क्रियाविशेषणत्वाच्चारो कर्म्मत्व, वर्णान्सहन्तीति वर्णसघाटो वर्णसघातो वा, 'कर्म्मणि समि चे'ति कर्म्मणि समि चोपपदे ऽण वा ऽन्यस्य च

१ मवधीकृत्येति ३ पाठ । २ अर्थस्वभावादिति २ । पु पा । ३ सघात इति २ अधिकम् । ४ सामर्थ्यादिति २ पुस्तके पाठ ।

टकारः । क्लेशापहः तमोपहः । 'अपेः क्लेशतमसो'रिति क्लेशतमसोः कर्म्मणोरुपपदयो रपपूर्वाद्धन्तेर्डः, स्रगिय यदि जीवितापहेति प्रयोगस्तु 'क्विप् चे'ति सार्व्वकालिके क्विपि, ऋन्नेभ्य इति ङीप् न भवति बह्वादिषु ङीष्विकल्पार्थं हन्निति पाठात् । यदि हि ङीषभावे ङी स्याद् गौरादिष्वेव हन्निति पठित्वा नित्य ङीषमेव विदध्यात्, अथ वा तदपि न कुर्यात्, ङीपैव सिद्धत्वात् । नात्र ङीष्ङीपो रूपे विशेषोऽस्ति, नापि स्वरे जीवितापहशब्दस्य 'गतिकारकोपपदात् कृदि'त्युत्तरपदप्रकृतिस्वरेणान्तोदात्तत्वे ऽन्तुदात्तस्य ङीपो 'ऽल्लोपोऽन' इत्युदात्तलोपनिमित्तस्या 'नुदात्तस्य च यत्रोदात्तलोप' इत्युदात्तत्वात्, तस्माद्बह्वादिषु हन्निति ङीष्विकल्पार्थं तदभावे ङीब् न भवति, ज्वरापहादिवद 'न्येष्वपि दृश्यत' इति डो वा । कुमारघाती शीर्षघाती, 'कुमारशीर्षयोर्णिनि'रित्यनयोः कर्म्मणोरुपपदयोर्हन्तेः कर्त्तरि णिनिः । अस्मादेव निर्द्देशान्मन्त्यमनियोगे शिरसः शीर्षभावः । जायाघ्नो ब्राह्मणो, जायाहननहेतुलक्षणयुक्त इत्यर्थः । एवं पतिघ्नी वृषली । 'लक्षणे जायापत्योष्टगि'त्यनयोः कर्म्मणोरुपपदयोर्हन्तेर्हननलक्षणवति कर्त्तरि टक्, लक्षणमात्रे उत्तरसूत्रेण सिद्धत्वात्तद्वानिह लक्षणशब्देनोच्यते । कित्त्वाद्गमहनेत्युपधालोपः, टित्त्वान्ङीप् । जायघ्नस्तिलकालकः । पतिघ्नी पाणिरेखा । श्लेष्मघ्न मधु । 'अमनुष्यकर्तृके चे'ति कर्म्मण्युपपदे मनुष्यादन्यकर्तृके हन्त्यर्थे टक् । मनुष्ये त्वणेव, आखुघातः शूद्रः । कृतघ्नो ब्राह्मणो गोघ्नो ब्राह्मण इत्यादिषु 'कृत्यल्युटो बहुल'मिति बहुलवचनाट्टक्, मूलविभुजादित्वात्क इत्येके । अनयोः स्त्रिया विशेषो ङीप्टाब्भ्या, चोरघातो हस्तीत्यत्रामनुष्ये कर्तर्यप्यस्मादेव बहुलवचनादण् भवति, हस्तिघ्नो भटः, हस्तिहनने शक्त इत्यर्थः । एव कपाटघ्नश्चोरः, 'शक्तौ हस्तिकपाटयो'रित्यनयोः कर्म्मणोरुपपदयोश्शक्तौ गम्यमानायां हन्तेष्टक् । अशक्तौ विषेण हस्तिन हन्ति हस्तिघात इत्यण् भवति, पाणिघस्ताडघः, शिल्पिविशेषौ, 'पाणिघताडघौ शिल्पिनी'ति पाणिताडयोः कर्म्मणोरुपपदयोर्हन्तेष्टकि टिलोपघत्वे च निपात्येते, शिल्पिनोन्यत्र पाणिघातः ।

१ मनुष्यइत्यधिकं ३ पु॰, ब्रह्मम इति २ पु अधिकम ब्राह्मणइति च नास्ति ।

सूत्रद्वयमिदं मनुष्यकर्तृकं,[1] राजानं हन्तीति राजघन्तीन्द्र उच्यते । राजघ उपसंख्यानमिति पूर्ववन्निपात्यते । पितृव्यं हतवान् पितृव्यघाती । 'कर्मणि हनः' इति कर्मण्युपपदे कुत्सिते कर्त्तरि भूते णिनिः । अकुत्सिते चौरघात इत्यणेव, ब्रह्माणं हतवान् ब्रह्महा, एवं भ्रूणहा वृत्रहा, 'ब्रह्मभ्रूणवृत्रेषु क्विबि'ति हन्तेर्ब्रह्मादिषूपपदेषु भूते क्विप् । 'क्विप् चे'ति सामान्येन क्विपि सिद्धे नियमार्थं सूत्रं, चतुर्विधश्चात्र नियमः । धातूपपदप्रत्ययकालविषयः, तेन हिमहेत्यादौ 'क्विप् चे'ति क्विप् सार्वकालिकः । 'सौ चे'ति दीर्घः । ब्रह्महणावित्यादिष्वि 'न्हन्पूषार्यम्णां शी' विति शावेव प्रत्ययउपधानतणमात्रो दीर्घो नान्यत्रेति नियमात्सर्वनामस्थाने दीर्घो न भवति, नापि क्विपमाश्रित्यानुनासिकस्य क्विझलोरिति । ननु सर्वनामस्थानदीर्घनिषेधसामर्थ्यादेव क्विबाश्रयोऽपि दीर्घो न भविष्यति, सत्यमिह वृत्रहणी ब्राह्मणकुले इति वृत्रहणि ब्राह्मणइति नपुंसकाद्विवचनसप्तम्येकवचनान्तयोश्चा 'ल्लोपोन' इत्यवन्तस्य भस्य विधीयमाने लोपे 'विभाषा ङिश्यो'रिति विकल्पिते क्विपमाश्रित्यानुनासिकस्य क्वाविति दीर्घः स्यात् । अथ दीर्घनियम उपधालक्षणस्यैव नान्यस्येति वृत्रहेवाचरन्ति वृत्रहायतइत्यत्राकृत्सार्वधातुकयोरिति दीर्घो भवति, वृत्रहणावित्यादा वेकाजुत्तरपदे णः' इति णत्वम्, एकाजुत्तरपदं यस्य तत्र समासे उत्तरपदप्रातिपदिकान्तनुम्विभक्तिस्थनकारस्य पूर्वपदस्थान्निमित्तात्परस्य नित्यं णः इति सूत्रार्थः । भसंज्ञायामल्लोपउत्तरपदस्यानचकत्वात् स्थानिवद्भावश्चाल्विधित्वान्नेत्येकाजुत्तरपदत्वाभावा 'त्प्रातिपदिकान्तनुम्विभक्तिषु चे'ति विकल्पो भवति वृत्रघ्नो वित्रघ्न इति । अत्राधिक्रतस्य पूर्वपदस्य संबन्धिशब्दत्वात्तेनाक्षिप्तेनोत्तरपदेन प्रातिपदिकस्य विशेषणादुत्तरपदप्रातिपदिकान्ते नुमि विभक्तौ च स्थितस्य नकारस्य पूर्वपदस्थान्निमित्तादुत्तरस्य वा णः इति सूत्रार्थः । तेन गर्गाणां भगिनी गर्गभगिनीत्यत्र यदुत्तरपदं भगिनीशब्दो न तत्प्रातिपदिकं नापि नान्तम् । यच्चान्तं भगिनीति प्रातिपदिकं न तदुत्तरपदमिति णत्वं न भवति । गर्गभगिणीशब्दस्तु गर्गाणां

१ कर्तृकार्थमिति २ पाठ ।

भगो गर्भभगः सोऽस्यास्तीतीन्प्रत्यये रषाभ्यामिति णत्वे । नन्वत्र 'पूर्व्वपदात्संज्ञायामग' इति पूर्व्वपदस्थान्निमित्तादुत्तरे यदि भवति संज्ञायामेवेति नियमात्कुतो णत्वप्रसङ्गः । नैष दोषो, यतोऽत्र पूर्वपदग्रहणेन सम्बन्धिन उत्तरपदस्याक्षेपात्तस्यैवायं नियम इति, अत्र च नकारो नोत्तरपदस्थः किन्तु समासप्रातिपदिकाद्विहितेनिप्रत्ययस्य, एवं च मातृभोगीण इत्यादौ भोगोत्तरपदलक्षणे खे नित्यं णत्वं भवति । माषानभीक्ष्णं वपति माषवापिणौ माषवापिनीत्यत्र 'बहुलमाभीक्ष्ण्ये' इति सुप्युपदे आभीक्ष्ण्ये गम्यमाने णिनौ गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक् सुबुत्पत्तेरिति कृदन्तावस्थायामेव समासे कृतात्ततो ङीबिति णिनेर्नकार उत्तरपदप्रातिपदिकान्तस्य इति णत्वविकल्पः । अभ्याघाती, सम्पृचादिना घिनुण् । घातुकः । लषपतादिनोकञ् । विघ्नः । घञर्थे कविधानमिति कः । वधः । 'हनश्च वधः' इत्यनुपसृष्टाद्धनो भावेऽप्प्रत्ययस्तत्सन्नियोगेन वधादेशश्च, हनश्चेति चकारो भिन्नक्रमो हनस्यापोऽनन्तर इति घञपि भवति घात इति, भावादन्यत्रोपसृष्टाद्भावे च घञेव, हन्यत इति घातः, आहन्यते आहननमिति वाऽऽघातः । ननु वधिः प्रकृत्यन्तरमस्ति तस्मात्सिद्धं घञि 'जनिवध्योश्चे'ति ञिति णिति कृति यदुक्तं तन्नेति वृद्धिनिषेधाद्वध इति भविष्यति हन्तेश्च घात इति किं 'हनश्च वध' इत्यनेन, उक्तं च जनिवध्योरित्यत्र वृत्तौ, वधिः प्रकृत्यन्तरं व्यञ्जनान्तमप्यस्ति तस्यायं प्रतिषेधो विधीयत इति, तथा च हरदत्तोऽपि वध हिंसायामिति भ्वादौ पाठादिति, सत्यमेव, वध इति रूपं सिध्यति स्वरस्तु न सिध्यति[1] । अयं ह्यादेशोऽकारान्तोदात्तः, तत्रापसमाश्रित्यातो लोप उदात्तनिवृत्तिस्वरेणाप उदात्तत्वादन्तोदात्तो वधशब्दः, घञि त्वाद्युदात्तः, एवं च कर्म्मण्युपपदेऽपि हनो वधादेशाभावस्य प्रयोजनमन्तोदात्तवधशब्दनिवृत्तिर्भवति । प्रकृत्यन्तरेणाद्युदात्तो भवत्येव । अभ्रघनः, अभ्रस्य काठिन्यमित्यर्थः. 'मूर्तौ घनः' इति हनोऽप्प्रत्यये घनादेशः मूर्तिरिह काठिन्यं, घनं दधीत्यादौ धर्म्मशब्देन धर्मी भण्यते । अन्तर्घणो वाहीकदेशविशेषः । 'अन्तर्घनो

१ भिद्यते इति ३ पु ।

देश' इत्यन्तः पूर्वस्य हनेरपि घनादेशो निपात्यते, केचिदन्तर्घणइति णकारं पठन्ति तदपि ग्राह्यमेवेति वृत्तिन्यासयोः । देशादन्यत्रान्तर्घात', प्रघणः प्रघाणः । 'अगारैकदेशे प्रघणः प्रघाणश्चे' ति प्रपूर्व्वस्य हनेरपि घनादेशो वा वृद्धिश्च निपात्यते । अत्रागारैकदेशशब्दो निपातनस्य रूढ्यर्थत्वाद्बाह्य द्वारप्रकोष्ठके वर्त्तते, प्रघाण इत्यत्र णत्वमपि निपात्यते, 'हन्तेरत्पूर्व्वस्ये' ति तपरकरणाच्च प्राप्नोति । अगारैकदेशादन्यत्र प्रघातः । उद्घनः । 'उद्घनो-त्याधान' मिति निपात्यते । उद्धुपरि यस्य निधायान्यत्काष्ठं तक्ष्यते तदिहा-त्याधानम्, अपघनः पाणिः पादश्च, 'अपघनोऽङ्ग' मित्यपपूर्व्वस्य हनेरपि घनादेशो निपात्यते । अयो हन्यते येन सोऽयोघनः । विहन्यते येन स विघनः समीकरणसाधनम् । द्रुर्हन्यते येन स द्रुघनः, 'करणेयोविद्रुष्वि' त्ययोविद्रुपूर्वपदेषु हनेरपि घनादेशः । अत्र वृत्तौ द्रुघण इति केचिदुदाह-रन्ति तत्र कथं णत्वमक्षोहणादिपाठात्पूर्व्वपदात्संज्ञायामिति वेति । अन्य-त्रायोघात इत्यादि भवति, स्तम्बघ्नः स्तम्बघनः । दाशादिः, 'स्तम्बे क च' ति स्तम्बशब्द उपपदे करणे हनः कः प्रत्ययः, चकारादप् तत्सन्नियोगेन घनादेशश्च । अत्र स्त्रिया विप्रतिषेधेन क्तिन् प्राप्नोति तं बाधित्वा कर-णाधिकरणयोरिति ल्युड् भवति, अत्र भाष्यम्, अथ यया इषीकया स्तम्बो हन्यते कथं तत्र भवितव्यं, केचिदाहुः । स्तम्बघ्नेति भवितव्यम् । अपर आह । स्तम्बहेतिरिति, 'ऊतियूतिजूतिसातिहेतिकीर्तयश्चे' ति निपात-नादिति । अपर आहुः । स्तम्बहननीति भवितव्यं वक्तव्यमेतद् 'अजब्भ्यां स्त्रीखलनाः स्त्रिया खलनौ विप्रतिषेधेने' ति, अत्र कैयटे स्तम्बघ्नेति कप्रत्यये रूपं, तस्य सर्वापवादत्वादिति भावः, स्तम्बहेतिरिति निपात-नस्य सर्व्वापवादत्वादिति भाव इति, अत्र हरदत्तः कापोः सर्व्वाप-वादत्वात् 'कृत्यल्युटो बहुल' मिति बहुलवचनाद्विना स्त्रिया स्तम्बघ्ना स्त-म्बहननेति भवत इति । परिघः 'परौ घ' इति पराबुपपदे करणे हनेरप्प्रत्ययो घश्चादेशः । 'परेश्च घाङ्कयो' रिति परेरेफस्य वा लत्वं, पलिघः । प्रतिघ इति बाहुलकादित्यात्रेयः । उपघ्नः प्रत्यासन्नः 'उपघ्न आश्रये' इत्युपपूर्वाद्धनेरप्युपधालोपो निपात्यते, इहाश्रयशब्दः प्रत्यासत्तिव-

पद्धती, बाह्वादित्वाद्वा ङीष् । वार्त्रघ्नः, तस्येदमित्यादिनाण् 'वपूर्वहन्धृतराज्ञामणी' त्यल्लोपः, धातोः स्वरूपग्रहणे तत्प्रत्यये कार्यविज्ञानाद्धुनन्त' इति तत्त्वं न भवति, भ्रौणहत्य 'दाण्डिनायनहास्तिनायनाथर्वणिकजैह्माशिनेयवाशिनायनिभ्रौणहत्यधैवत्यसारवैक्ष्वाकमैत्रेयहिरण्मयानी'ति नकारस्य तत्त्वं ष्यञि निपात्यते । हयो विपणः । हनिकुषीत्यादिना क्थनि अनुदात्तोपदेशेत्यनुनासिकलोपः । हिमम् । 'हन्तेर्हिंचे'ति मकि हि भावः, हिमं न सहते हिमेलुः 'हिमाच्चेलुर्वक्तव्य' इति तत्र सहते इति विषये चेलुः । महद्धिमं हिमानी, इन्द्रवरुणेत्यादिना ङीषानुकौ । तत्र हिमारण्ययोर्महत्त्वे इति पठ्यते । हेमन्तः, हन्तेर्मुट् हि चेति झच्प्रत्यये मुडागमः, धातोर्हिभावे गुणः, झस्य चान्तादेशः । हेमन्ते भवं हैमन्तिकं, 'हेमन्ताच्चे'ति शैषिकष्ठञ् यद्यप्यत्र सूत्रे छन्दोग्रहणमनुवर्तितं वृत्तौ तथाप्युत्तरसूत्रे सर्वत्र ग्रहणाद्भय भाषाविषयेऽपीति वृत्तावेवोक्तं, हैमनं 'सर्वत्राण् च तलोपश्चे' त्यणि तलोपः, अत्र चकारेण ऋत्वणोऽभ्यनुज्ञानाद्धैमन्तमित्यपि भवति, तलोपोऽत्र न भवति सर्वत्राणिति विधीयमानाणमनियोगशिष्टत्वात्तस्य, हनुः । [1]शृस्वृस्निहित्रप्यसिवसिहनिक्लिदिबन्धिमनिभ्यश्चेत्युप्रत्ययः । परिहनु भवं पारिहनव्यम् । 'अव्ययीभावाच्चे'ति भवार्थे ञ्यः । तत्र 'परिमुखादिभ्य उपसंख्यान'मिति परिमुखादिरेवाव्ययीभावः परिगण्यते । हनुलः 'सिध्मादिभ्यश्चे'ति मत्वर्थे लच् । हनूमान् 'शरादीनाञ्चे'ति संज्ञायां मतौ दीर्घः । अत्रैव पाठान्मतुपः 'संज्ञाया'मिति वत्वं यवादेराकृतिगणत्वान्न भवति । हसः, वृतृवदीत्यादिना सः । आगत्य हन्तीत्याहिः, आङि श्रिहनिभ्यां ह्रस्वश्चेतीण् प्रत्ययः । स च डित् पूर्वपदस्य च ह्रस्वः, डित्त्वाट्टिलोपः, आङो ह्रस्वः । अहौ भवमाहेयं, दृतिकुक्षीत्यादिना ढञ् । अहीवती, शरादित्वाद्दीर्घः, 'संज्ञाया'मिति वत्वम् । उपहत्नुः । कृहनिभ्यां क्त्नुरिति क्त्नुः । कित्त्वादनुनासिकलोपः, अनेहा अनेहसौ, नञि हन एह चेति नञ्युपपदे असुन् एहादेशश्च हनः, 'नलोपो नञ' इति उत्तरपदे नञो नलोपः, 'तस्मानु-

१ शृस्वृस्निहीत्यादिना उरिति २ । ३ । ४ पु॰ पाठः ।

इचीति लुप्तनकारात्त्र, परस्याजादेरुत्तरपदस्य नुडागमः । ऋदुशने-त्यादिना ऽनडादेश, सावसम्बुद्धौ सर्वनामस्थाने चेति दीर्घः, सम्बुद्धौ तु हे अनेहः जघन 'हन्तेर्द्विचे'त्यनचोरन्यतरस्मिन् द्वित्वम् 'अभ्यासाच्चे'ति कुत्व, जघने भवन्तस्मै हित वा जघन्य, 'दिगादिभ्यो यत्' 'शरीरावय-वाच्चे'ति योगाभ्या यत् । [1]दिगादावस्य पाठोऽशरीरावयवार्थः । प्लीहा, श्वन्नुक्षन्नित्यादिना कनिनन्तो निपातितः । उणादयोऽव्युत्पन्नानि प्राति-पदिकानीति व्युत्पत्तिकार्याभावादिन्हन्पूषेति नियमाभावात्सर्वत्र सर्व-नामस्थाने दीर्घो भवति । प्लीहा प्लीहानावित्यादि । अदिहनी अनुदात्ता-वुदात्तेतौ ॥ २ ॥

द्विष अप्रीतौ ॥ लिङ्न्तो अनुदात्तः स्वरितेतः ॥ द्वेष्टि, द्विष्टः, द्विषन्ति । द्वेक्षि, द्विष्ठ, द्विष्ठ, द्वेष्मि, द्विष्वः[3] । द्विष्टे । द्विषाते । द्विषते, द्विक्षे, द्विड्ढ्वे । द्विषे । द्विष्वहे । ष्टुत्व तवर्गादौ, सकारादौ ष्टुत्वस्य पूर्वत्रासिद्धत्वा त्षढोः कः सीति कत्वे षत्व, दिद्वेष, दिद्विषतुः । दिद्वेषिथ । दिद्वेष । दिद्विष । दिद्विषिव । दिद्विषे । दिद्विषिषे, दिद्वि-षिवहे । क्रादिनियमादिट् । द्वेष्टा । द्वेष्टासे । द्वेक्ष्यति । द्वेक्ष्यते । द्वेष्टु द्विष्टात् । द्विष्टाम् । द्विषन्तु । द्विड्ढि । द्वेषाणि । द्वेषाव । द्वेषाम । द्विक्ष्व । द्विड्ढ्वम् । द्वेषै । 'द्विषश्च' ति लङि विधीयमानो जुस्भावो 'लोटो लङ्व' दित्यतिदेशाच्च भवति, लङः शाकटायनेत्यत्र लङ्ग्रहण मुख्यलङ्ग्रहणार्थमिति स्थितत्वात्, हौ हे[4]र्धित्वे ष्टुत्वे षकारस्य जश्त्वेन डकारः । उत्तमस्याटि पित्त्वादङित्त्वाद्गुणः, अद्वेट्, अद्विष्टाम् । अद्विषुः । अद्विषन् । अद्वेट् । अद्वेषम्, अद्विष्व । अद्विष्ट । अद्विषा-ताम् । अद्विषत, अद्विष्ठाः । अद्विषि, तिप्सिपोर्हल्ङ्यादिलोपे गुणे जश्त्वचर्[5]त्वे 'द्विषश्चे'ति भेर्वा जुस्भावः । द्विष्यात् । द्विष्यातास्, द्विष्याः,

---

१ हन्तेर्द्वित्व चेति द्वित्वमिति २ पु पा

२ शरीरावयवत्वादेव यति सिद्धे इह पाठ इति २ पु पाठ ।

३ द्विष्म इत्यधिक ३ । ४ । पु । ४ हेरिति २ । पु· नास्ति ।

५ जश्त्वे वा चर्त्वमिति २ । पु पा ।

द्विष्याम् । द्विषीत । द्विषीथाः । द्विषीय । द्विषीवहि, अपित्सार्वधातुकत्वान्न गुणः । आशिषि मलोपाभावो विशेषः, द्विक्षीष्ट, गुणाभावो लिङ्सिचाविति कित्त्वात् । अद्विक्षत् । अद्विक्षताम् । अद्विक्षन् । अद्विक्षः, अद्विक्षम् । अद्विक्षाव । अद्विक्षत । अद्विक्षाताम् । अद्विक्षन्त । अद्विक्षथाः, अद्विक्षि । अद्विक्षावहि । 'शल इगुपधादनिटः क्सः, अचि 'क्सस्याची'त्यल्लोपः, दिद्विक्षति । दिद्विक्षते । 'हलन्ताच्चे'ति सनः कित्त्वान्न गुणः, देद्विष्यते । देद्विषीति । देद्वेष्टि । ईटि नाभ्यस्तस्याचि पितीति गुणाभावः । लङि सिजभ्यस्तेति नित्य झेर्जुस्भावे[1]परत्वात् प्रकृतिग्रहणन्यायेन 'द्विषश्चेति[2]' विकल्पे अदेद्विषुः, अदेद्विषन्नित्युभय भवति, यङ्लुगन्तस्य सेट्त्वाल्लुङि क्साभावाददेद्वेषीदि'ति सिजेव । तथा क्त्वासनोरपि सेट्त्वे रलो व्युपधादिति कित्त्वविकल्पनाद् देद्वेषिषति, देद्विषिषति, देद्वेषित्वा, देद्विषित्वा इति भवति, द्वेषयति । अदिद्विषत् । कर्म्मणि द्विष्यतइत्यादि । विप्रद्विट्,[3] प्रद्विट्, । सत्सूद्विषेति सोपपदात्सोपसर्गाच्च क्विप् । द्विट्शब्दस्तु 'अन्येभ्योपि दृश्यत'इति ताच्छीलिके क्वपि । द्वेषी, संपृचादिना घिनुण् । शत्रुं द्विषन् शत्रोर्वा द्विषन् । 'द्विषो ऽमित्र' इति शता । अयमलादेशः । 'द्विषः शतुर्वे[4]'ति कर्मणि षष्ठी विकल्पः, द्वेषण इति बाहुलकात्कर्तरि ल्युडित्यात्रेयः, द्वेष्टा, द्विष्टः, द्विष्टवान् ॥ ३ ॥

दुह प्रपूरणे ॥ दोग्धि । दुग्धः ॥ दुहन्ति । धोक्षि । दुग्धः । दुग्ध, दोह्मि । दुह्वः, दुह्मः । दुग्धे । दुहाते । दुहते । धुक्षे । धुग्ध्वे । दुहे । दुह्वहे । झलि पदान्ते च दादेरिति हकारस्य घकारः, झषस्तथोर्धोऽध इति तकारथकारयोर्धकारः ॥ 'झलां जश् झशी'ति घकारस्य गकारः, सकारादौ ध्वे पदान्ते च एकाचो बशो भषिति भष्भावेन दकारस्य धकारः, तत्र सकारादा'विण्को'रिति षत्वे 'खरि चे'ति चर्त्वम्, दुहन्ति दुहते इत्यत्र पूर्व्वत्रासिद्धत्वादन्तरङ्गत्वाद्वा प्रागेवान्त्यदादेशयोर्झल्परत्वाभावान्न घत्वप्रसङ्गः । दुदोह । दुदुहतुः । दुदोहिथ । दुदु-

१ जुसभावादिति २ । ३ । पु॰ पा॰ २ अनेनेति २ पु अधिकम् ।
३ विप्रद्विड् इति ४ । पु अधिकम् । ४ वचनमित्यधिक २ पु॰ ।

हयुः । दुदुह । दुहोऋ । दुदुहिव । दुदुहे । दुदुहिषे, दुदुहिढ्वे । दुदुहिध्वे । दुदुहिवहे, क्रादिनियमादिट् । ध्वमि 'विभाषेट' इति मूर्द्धन्यविकल्पः । दोग्धा । दोग्धासे, धोक्ष्यति, धोक्ष्यते । दोग्धु, दुग्धात्, दुग्धाम् । दुग्धि । दोहानि दोहाव, दुग्धां, दुहाता, धुक्ष्व । धुग्ध्व, दोहै । हेरपित्त्वाच्च गुणः । आटि तु पित्त्वाद्गुणः । अधोक् । अदुग्धाम् । अदुहन् । अधोक् । अदुग्धम् । अदुग्ध । अदोहम्, अदुह्व, अदुग्ध । अदुहाताम् । अदुग्धाः, अदुग्ध्वम् । अदुहि । अदुह्वहि, तिप्सिपे, हल्ङ्याब्भ्य इत्यादिलोपः । पदान्तत्वाद्दादेरिति हकारस्य घकारः, एकाचो बश इति दकारस्य धकारः[1], जश्त्वचर्त्वे, प्रत्ययलक्षणेन लघूपधगुणः, दुह्यात् । दुह्याताम् । दुह्याम्[2] । दुहीत । दुहीथाः । दुहीय । अपित्सार्वधातुकत्वाच्च गुणः । आशिषि सलोपाभावो विशेषः, दुह्यात्, दुह्यास्ताम्, धुक्षीष्टेत्यादि । तङि लिङ्सिचावित्ति कित्त्वाच्च गुणः । घत्वभष्भावौ । धुक्षीध्वमित्यत्रेणः षीध्वमिति मूर्द्धन्यो न भवति, । घत्वे षत्वस्य पूर्वत्रासिद्धत्वात्सीध्वमोऽभावात्, कृते तु घत्वादौ षीध्वमिणः परो न भवति । अधुक्षत् । अधुक्षताम् । अधुक्षन् । अधुक्षः । अधुक्षम् । अधुक्षाव । अधुक्षत । अधुक्षाताम् । अधुक्षन्त, अधुक्षथाः । अधुक्षि । अधुक्षावहि । 'शल इगुपधादनिटः क्सः' 'क्सस्याची'त्यल्लोपः । अत्र केचित् क्सस्य भाविनीमनकारान्ततामाश्रित्य झस्याद्भावे 'क्सस्याची'त्यल्लोपे ऽधुक्षतेनीच्छन्ति । तदमत् । तत्राचीत्यस्य परसप्तमीत्वात् । अत्र दन्त्यादौ तङि लुग्वा दुहदिहेत्यादिना क्सस्य वा लुक्,[3] अदुग्ध, अदुग्धम्, अदुह्वहीति भवति । अत्रात्मनेपदे ताविति वक्तव्ये दन्त्यग्रहणाद्दन्त्योष्ठ्योऽपि वकारो दन्त्यग्रहणेन गृह्यते । दुधुक्षति, दुधुक्षते । दोदुह्यते । दोदुहीति, दोदोग्धीत्यादि द्विषिवत् । दोहयति । अदूदुहत् । अयं द्विकर्म्मकः, गा दोग्धि पय इति । तत्र पुरुष-

१ धकारादेश इति २ । पु॰ पा । २ दुह्युरिति २ पु अधिकम् ।

३ तत्तत्कार्यं सर्वत्र २ । ४ । पु सप्तम्यन्तपदेनोपात्तम् । सूत्रस्याये इतीत्यस्य स्थाने इत्यनेन क्स चिदित्यादिनेति सर्वत्र पाठः ।

प्रवृत्तेः पयोर्थत्वात्पयः प्रधानं कर्म्मान्यदप्रधानम् । तत्राप्रधाने दुहादीनामिति वचनात् कर्म्मणि लादयोऽप्रधाने भवन्ति । दुह्यते गौः पयो देवदत्तेन, अदोहि गौ, दोग्धव्या, सुदोहा, दुग्धेति कृद्योगलक्षणषष्ठी द्वितीयावदुभयोरपि कर्म्मणोर्भवति दोग्धा गोः पयस इति । उभयथा र्गाणिकापुत्र इति भाष्यउक्तत्वादप्रधाने द्वितीयापि भवति । दोग्धा गाः पयस इति । दोग्धव्या गौः पयो देवदत्तेनेत्यत्राभिहिते कर्म्मणि कर्त्तरि च कर्तृकर्म्मणोरिति षष्ठी न भवति, उभयप्राप्तौ कृत्ये षष्ठीनिषेधस्योक्तत्वात् । उपपादितं चैतद्वृत्तौ,[1] कर्म्मकर्तरि न दुहस्नुनमामिति निषेधाद्यगस्य न भवति । दुग्धे गौः पयः स्वयमेव । [2]अदुग्धम् । अदुग्ध, दुहीतेति, पयो मुञ्चतीत्यर्थः, चिण् तु 'दुहश्चे'ति विकल्पनात्पक्षे भवत्येव[3], अदोहीति । अन्यदा कर्तृवत् । क्से तस्य च वा लुकि अधुक्षत, अदुग्धेति[4] भवति । एवं च न दुहेति चिण्निषेधो दुहिव्यतिरिक्तार्थो भवति । अस्ति च[5] दुहेः सकर्मकस्यापि कर्म्मवद्भावो 'दुहिपच्योर्बहुलं सकर्म्मकयो'रिति, न दुह इति निषेधो 'दुहश्चे'ति चिण्विकल्पश्च प्रकृतिग्रहणन्यायेन यङ्लुगन्तेपि भवति । दोदुग्धे गौः पयः । अदोदोहि । अदोदोहिष्टेति । यङ्लुगन्तस्य सेट्कत्वाद् न क्सोस्तीति 'च्लेः[6] सिजि'ति सिजेव । दुह्य, दोह्यम् । शसिदुहिगुहिभ्यो वेति वक्तव्यमिति क्यब्ण्यतौ, गोधुक्, प्रधुक् । सत्सूद्विषेत्यादिना सोपपदात्सोपसर्गाच्च क्विप् । कामदुग्धा, 'दुहः कब् घश्चे'ति कप्प्रत्ययो हस्य च घः । दोही, सम्पृचेत्यादिना घिनुण्, दुहिता । नप्तृनेष्ट्रित्यादिना तृचीटि गुणा[8]भावो निपात्यते । ऋन्नेभ्य इति ङीप् स्वस्रादिपाठान्न भवति, दुहितरावित्यादौ सर्वनामस्थानेऽप्तृनिति दीर्घो

१ नाप्यतावि'ति २ पु वृत्ताविति ३ पु पा ।
२ रूपत्रयमपि २ पु नास्ति । ४ पु दुहीतेति नास्ति ।
३ एवेति २ । ४ पु नास्ति । ४ अपीत्यधिकम २ पु ।
५ हीति २ पु॰ पा॰ । ६ च्लेः सिजिति नास्ति २ । ३ । ४ पु॰ ।
७ सोपसृष्टाच्चेति २ । ४ पु॰ पा॰ ।
८ इह गुणाभावश्चेति २ । पु इट्यगुणे इति ४ पु पा ।

न भवति तत्र नप्त्रादीनां ग्रहणं मन्त्रशब्दस्य स्मार्ताच्छन्दसि नप्त्रादिकानामेषामेव दीर्घ इति नियमार्थमित्युक्तत्वात् । सौ तु ऋदुशनस्पुरुदंसोऽनेहसां चेत्यनङि नान्तत्वात्सर्वनामस्थाने चेति दीर्घः[1] । दुहितुरपत्यं दौहित्रः । बिदादित्वादञ् । स्त्रिया दौहित्री शार्ङ्गरवाद्यञ इति ङीन् । सुतपुत्री सुतदुहिता । सुतेच्छिभोजराजमेरुभ्यो दुहितुः पुत्रड्वा वक्तव्य इति पुत्रडादेशः, टित्त्वात् ङीप् । एवमुग्रपुत्रीत्यादयोऽपि भवन्ति, वाचस्पत्य इत्यत्र वृत्तौ पुत्रडादेशमुक्त्वा केचित्तु शार्ङ्गरवादिषु पुत्रशब्दं पठन्ति तस्य पुत्रीति भवति, अन्यत्रापि हि दृश्यते[2] इत्युक्तम् । कथं तर्हि वा सूतकापुत्रिकावृन्दारकाणामितीत्वविकल्प उक्तः । अत्र हरदत्तः पुत्रिके शार्ङ्गरवादिपाठात् ङीनि स्वार्थे कन्, केण[3] इति ह्रस्व इकारस्तस्य पक्षेऽत्त्व विधीयत[4] इति । इरिदयमर्द्दनार्थः शपि गतः । ४ ॥

दिह उपचये ॥ देग्धि । दिग्ध इत्यादि पूर्ववत् । प्रणिदेग्धि नेर्गदेति णत्वम्, अत्र देग्धीति श्तिपा निर्देशात् प्रनिदेदिग्धीत्यत्र णत्वं न भवति । देहः । अकर्त्तरि च कारके[5] इति कर्म्मणि घञ्, देहोऽस्यास्तीति देही । 'अत इनिठनौ' विनीति यद्यप्येकाक्षरात्कृतो जातेः सप्तम्यां च न तौ स्मृता विनीनिठनौ कृदन्तान्निषिध्येते तथापि तदस्यास्त्यस्मिन्नित्यत इतिकरणस्यानुवर्त्तनात् तस्य च विषयनियमार्थत्वात्कार्यीत्यादिवद्देहीति भविष्यति । उक्तं च वृत्तौ इतिकरणो विषयनियमार्थः सर्वत्र सम्बध्यत इति । दिह्यते उपलिप्यते इति देहली । बाहुलकात् कर्म्मणि ल्युट्, गौरादित्वात् ङीष् ॥ ५ ॥

लिह आस्वादने ॥ लेढि लीढः, लिहन्ति । लेक्षि, लीढः, लेह्मि । लीढे । लिहाते । लिहते । लिक्षे लिहाथे । लीढ्वे । लिहे, लिह्वहे । झलि 'हो ढः' झषस्तथोर्धोऽध इति तयोर्धत्वे 'ष्टुना ष्टुः' इति ष्टुत्वे तस्य चाश्रयासिद्धत्वाड् ढो ढे लोपे ढ्रलोपे पूर्व्वस्य दीर्घ इति दीर्घः । सकारादौ

१ नान्तत्वादिति २ पु नास्ति । २ शिन्नित्यधिकम ४ पु ।
३ केण इति नास्ति २ पु । ४ अकारस्तस्य पक्षेव विधीयते २ । ४ पा ।
५ सञ्ज्ञायामिति २ । ४ पु अधिकम ।

पढोरिति कत्व, तिपि ढत्वस्य पूर्वत्रासिद्धत्वात्पूर्वमेव गुणे ढत्वादि । लिहन्ति । लिहतइत्यत्राप्यसिद्धत्वादिना पूर्वमेवान्त्यदादेशयोर्झलपरत्वाभावाद् ढत्व न भवति । लिलेह । लिलिहतुः । लिलिहुः, लिलेहिथ । लिलिहिव । लिलिहे, लिलिहिषे । लिलिहिद्वे, लिलिहिध्वे, लिलिहिवहे । क्रादिनियमादिट् । लेढा । लेढासे । लेक्ष्यति, लेक्ष्यते । लेढु, लीढात्, लीढाम्, लिहन्तु, लीढि, । लेहानि । लीढा, लिहाताम् । लिक्ष्व,लीढ्वं, लेहै । हो धित्वे ष्टुत्वादि । अलेट्, अलीढाम्, अलिहन्, अलेट्, अलीढम्, अलीढ । अलेहम्, अलिह्व, अलीढ, अलिहाताम्, अलीहत, अलीढाः अलीढ्वम्, अलिहि, अलिह्वहि । लिह्यात् । लिह्याः, लिह्यां, लिहीत । लिहीयाः लिहीय । अपित्सार्वधातुकत्वाच गुणः, आशिषि लिह्यात्, लिह्यास्ता, लिक्षीष्टेत्यादि । लिङ् सिचाविति तङि[1] कित्त्वाच्च गुणः, लिक्षीध्वमित्यत्र ढत्वे षत्वस्यासिद्धत्वाच षीध्वमस्ति,कृते ढत्वे कत्वषत्वयोश्च नेणः परः षीध्वमिति नास्ति मूर्द्धन्यप्रसङ्गः । अलिक्षत् । अलिक्षताम् । अलिक्षन् । अलिक्षः, अलिक्षम् । अलिक्षाव । अलिक्षत । अलिक्षाताम् । अलिक्षथाः, अलिक्षि, लुग्वा दुहेत्यादिना दुहिवत् क्सस्य वा लुकि अलीढ, अलीढाः, अलीढ्वम्, अलिह्वहीत्यपि भवति । लिलिक्षति, लिलिक्षते, लेलिह्यते, लेलिहीति, लेलेढि । लेलिहान इति चानशि, लेहयति । अलीलिहत् । लेहः । श्याद्व्यधेतीगुपधलक्षणस्य कस्यापवादो णः । वहलिहः । अभ्रलिह. । 'वहाभ्रे लिह' इति वहाभ्रयोः कर्म्मणोरुपपदयोः खश् । अरुर्द्विषदजन्तस्येति पूर्व्वपदस्य मुम्, खशः शित्त्वेनापित्सार्व्वधातुकत्वेन न गुणः । शपस्तु लुका लुप्तत्वाच्च तदपेक्षापि । अत्रात्रेयः । गणकार्यस्यानित्यत्वात् सृक्किण्यौलिहति जिह्वया कदाचिदिति, सञ्ज्ञापूर्वको विधिरनित्य इति गुणाभावेपि, [2]एव वैद्यके अलिहदित्यादय इति, श्वलिड्ढौकतइत्यत्र हो ढे पदान्तरनिरपेक्षत्वेनान्तरङ्गत्वाज्जश्त्वमिति ढलोपो न भवति, लिढा । बाहुलकात् क्सः ।

१ तङीति नास्ति २ । ४ । पु ।

२ एवं वैद्यके इत्यस्य स्थाने इतोच्छन्त्येके इति ४ पुस्तके पाठः ।

यूकालिक्ष, 'क्षुद्रजन्तव' इति नित्यं समाहारद्वन्द्वे नपुंसकत्वम् । द्विषाद-योनुदात्ताः स्वरितेतः ॥ ६ ॥

अथात्मनेपदिनः ॥ चक्षिङ् व्यक्तायां वाचि ॥ अनुदात्तोऽनुदात्तेत् । अयं दर्शनकर्म्मा च, यथा विश्वा रूपाभिचष्टे शचीभिरिति । प्रायेणायमाङ्पूर्वः । चष्टे स्कोरिति कलोपः । चक्षाते । चक्षते । कलोपे 'षढोः कः सीति' कत्वं,[3] चड्ढ्वे । कलोपष्टुत्वयोर्जश्त्वं, षो डः । चचक्षे । चचक्षाते । चचक्षिरे, चचक्षिषे, चचक्षिध्वे । चचक्षे, चचक्षिवहे । चख्ये । चख्याते, चख्यिरे । चख्यिषे । चख्यिध्वे । चख्ये । चख्यिवहे । चख्यिमहे 'वा लिटी'ति ख्याञादेशो वा, उभयत्र क्रादिनियमादिट् । 'आतो लोप इटि चे'त्याल्लोपोऽजादौ क्ङिति इटि च, ध्वम्याल्लोपे इणन्तादङ्गात्पर[4] इडिति 'विभाषेट' इति मूर्द्धन्यविकल्पाभावः परस्तादुपपादयिष्यते । ख्याञो ञित्त्वात्पक्षे परस्मैपदमपि भवति, चख्यौ । 'आत औ णलः,' चख्यतुः । चख्युः, चख्यिथ । चख्याथ । चख्यथुः । चख्य । चख्यौ । चख्यिव । थल्यवस्तास्वत्त्वतो भारद्वाजस्येतीड्विकल्पः, क्शादिरप्ययमादेश इष्यते इति वृत्तौ, तेन चक्शे । चक्शाते । चक्शिध्वे । चक्शिवहे । चक्शतुः चक्शुः, चक्शिथ । चक्शाथ, चक्श । चक्शौ । चक्शिवेति भवति । भाष्ये तु ख्याञ्क्शाञावुक्त्वोभयोः सयाहक्रमादेशान्तरमुक्तं, यथा, क्शादिर्वा अथ ख्शादिर्भविष्यति । केनेदानीं क्शादिर्भविष्यति चत्वेन अथ ख्यादिः कथम्, असिद्धे शस्य यवचनं विभाषेति । असिद्धे शस्येत्यस्य कैयटः, 'पूर्वत्रासिद्ध' मित्यधिकारे णत्वविधानानन्तरं शस्य यत्वं विभाषा वक्तव्यमिति, हरदत्तोऽप्येवम् । सुधाकरस्तु वाशब्दोपजीवनाय 'यरोऽनुनासिकेऽनुनासिको वे'त्यस्यानन्तरमिति । अस्याश्च कल्पनायाः प्रयोजनानि सुप्रख्यस्य भावः सौप्रख्यमित्यत्र 'योपधाद्गुरूपोत्तमाद्वुञि'ति योपधलक्षणे वुञि, यत्वस्य पूर्वत्रासिद्धत्वेनायोपधत्वाद्वुञभावाद्गुणवचनब्राह्मणा-

---

१ उदात्तइति ३ पा० । २ ३पुस्तके लटि आङ्पूर्वक एवायमुदाहृतः ।
३ 'इणः को'रिति षत्वमित्यधिकं ३ पुस्तके । ४ उत्तरइति ३ पु पा० ।

दिभ्य इति ष्यञ्, तथा सुप्रख्येन निर्वृत्तो देशस्सौप्रख्यस्तत्र भवः सौप्रख्यीय इत्यत्र 'धन्वयोपधाद्वुञि ति वुञ्[1] न भवति, यत्वस्यासिद्धत्वात्तदभावाद्वृद्धाच्छः । पुंसः ख्यानं पुंस्ख्यानमित्यत्र च संयोगान्तत्वेन सलोपे संपुकानां सो वक्तव्य इत्यम्परे खयि मकारस्य विधीयमानः सकारो यत्वस्यासिद्धत्वादम्परत्वाभावान्न भवति, चख्यिध्वे इत्यत्र ध्वमि इत्याल्लोपइणः षीध्वंलुङ्लिटां धोऽङ्गात् विभाषेटः' इति मूर्द्धन्यो यत्वस्यासिद्धत्वाद् न भवति, नमः ख्यात्र इत्यत्रापि यत्वस्य 'शर्परे खरि विसर्जनीय' इति विसर्जनीये कर्तव्येऽसिद्धत्वादस्ति शर्परतेति विसर्जनीयः, अन्यथा 'कुप्वोः ≍क ≍पौ च'ेति विसर्जनीयजिह्वामूलीयौ द्वौ स्याताम्, किं च ख्यातमित्यत्र 'संयोगादेरातो धातोर्यण्वतः' इति निष्ठानत्वे कर्तव्ये यत्वस्यासिद्धत्वान्नत्वाभावः, तथा पर्याख्यानमित्यत्र 'कृत्यचः' इति नत्वे यत्वस्यासिद्धत्वादनटा शकारेण व्यवधानाद् णत्वाभावः । ननु ख्यात इत्यत्र न ध्याख्येति नत्वप्रतिषेधस्य सिद्धत्वात्कथमिदं भाष्ये प्रयोजनमुक्तम् । अत्र कैयटः । न ध्याख्येति तु प्रतिषेधः ख्या प्रकथनइत्यस्यैव प्रतिपदोक्तत्वादस्य तु शस्य यत्वेन लाक्षणिकत्वादिति मन्यतइति । ननु नमः ख्यात्रे इत्यत्र जिह्वामूलीयस्याभावः कथं प्रयोजनमुक्तं, यस्मात्स दुर्वारः । तथाहि, ख्या प्रकथनइत्यस्मादपि तृचि ख्यातृशब्दस्य सद्भावात्तत्स्यस्य यकारस्यानादेशत्वादसिद्धत्वाभावात् [2]शर्परे खरि विसर्जनीय इत्यस्याप्रसङ्गात् कुप्वोरिति प्राप्तस्य जीह्वामूलीयस्य बाधकाभावात् । नैष[3] दोषः । ख्यातिरप्यार्द्धधातुके ख्शादिः, असिद्धे शस्य यवचनं विभाषेत्येतदपि तस्यापि साधारणमिति । अत्र च प्रमाणं सस्थानत्वं नमः ख्यात्रइत्यत्र सस्थानत्वं न भवतीति भाष्यवार्त्तिकयोः सस्थानाभावस्य प्रयोजनकत्वेन कथनं, सस्थानमिति जिह्वामूलीयस्य सञ्ज्ञा, तथा चाह पदम[4]ञ्जर्यां हरदत्तः, ख्या प्रकथने इति वक्ष्यते सोपि ख्शादिः । असिद्धे शस्य यव-

१ वुञ् न भवतीति २ । ४ । पु नास्ति ।
२ न शर्परत्वमिति २ । ४ पु अधिकम् ।
३ नैवमिति ३ पा ।   ४ पदमञ्जर्यामिति २ । ३ । ४ पु॰ नास्ति ।

चन विभाषेत्या[1]दि तस्यापि साधारणं द्रष्टव्यमिति । आत्रेयोपि सर्व-
त्रार्द्धधातुके चक्षिङ इत्रास्य रूपमिति । एव चर्क्षिङिव ख्यातिरपि नित्याया
ख्शादिः । शकारस्य चासिद्धे शस्य यवचन विभाषेति वा यत्व, तच्च संयो-
गादेरात इति निष्ठानत्वे ऽसिद्धमिति यत्वस्याभावात्त्वस्य नैव प्रसङ्ग
इति । न ध्याख्येतिप्रतिषेध ख्यान्यत्रापि न कर्तव्यो भवति । अत्रेद
विचार्यते । आचख्याविन्त्यादौ यत्वाभावे चर्त्वे '[2]खयो द्वितीया शरि
पौष्करसादे'रिति खकारो भवति वा नेति, नेत्याह । अस्मिन्कर्तव्ये चर्त्वस्य
पूर्वत्रासिद्धत्वाद् द्वितीयभाविनः खयोऽभावात्, खयो द्वितीया इत्येतद्वा-
दित्याक्रोशे पुत्रस्येत्यत्र हि पठ्यते । न चैव भ्रमितव्यं क्शादिरयमादेश
इष्यते इति वृत्तौ ककारादिरयमादेश उच्यतइति द्वितीयभाविनः
खयः सम्भवादस्ति खयो द्वितीया इत्यस्य प्राप्तिरिति, यतो वृत्तिकार-
निर्देशो भाविचर्त्वापेक्षः, अन्यथा ऽथ वा क्शादिर्भविष्यति केनेदानीं
क्शादिर्भविष्यति चर्त्वेनेत्यादि भाष्यविरोधप्रसङ्गः । ख्याता, ख्यातासे,
ख्याताहे, क्शाता, क्शातासे, क्शाताहे, ख्याता, ख्यातासि, ख्यातास्मि ।
क्शाता क्शातासि क्शातास्मि. चक्षिङः ख्याञि'त्यार्द्धधातुके ख्याञा-
देशः, लि[3]ड्वत् क्शादित्वमनुसन्धेय, ख्यास्यते । ख्यास्यसे, ख्यास्ये, ख्यास्य
तीत्यादि क्शादिपक्ष उदाहार्यः । चष्टा चक्षाता, चक्षताम् चक्ष्व,
चक्षाथाम्, चड्ढ्व, क्लोपादि लड्वत् । चक्षै, अचष्ट, अचक्षाताम् ।
अचक्षत । अचष्ठाः, अचड्ढ्वम् । अचक्षि, अचक्ष्वहि । चक्षीत, चक्षी-
याता चक्षीरन्, चक्षीथाः, चक्षीयाथा चक्षीध्व, चक्षीय । आशिषि, ख्या-
सीष्ट, ख्यासीयास्ता, ख्यासीष्ठा, ख्यासीध्व, ख्यासीय ख्येयात् । ख्येया-
स्ता, ख्येयासुः, ख्येयाः, ख्येयास्त, ख्येयासम्, एर्लिङि 'वान्यस्य संयो-
गादे'रिति वा लिङ्यार्द्धधातुके एत्वम्[4] । एत्वाभावे ख्यायात्, ख्यायास्ता

---

१ त्यपि २ पु पा ।

२ चयो द्वितीया इति वार्तिके खयो द्वितीया इत्येव वक्तुं युक्तं, चप्रत्याहार[illegible] कल्पनेन साधवादित्याशयेन माधवाचार्यैः खयो द्वितीया इत्युक्तमिति प्रतिभाति ।

२ लिटि च क्शादित्वमिति ३ । ४ । १ पु पा ।

३ एत्व वा हन्तादौ कित्यर्धधातुके लिङीति २ । ४ । पु पा ।

ख्याया, ख्यायास, क्शासीष्ट, क्शायात् क्शेयादित्यादि चोदाहार्यम्, अख्यत । अख्येताम् । अख्यन्त । अख्यथाः । अख्यध्वम्, अख्ये । अख्यावहि । अख्यत् । अख्यताम्, अख्यन्, अख्यः, अख्यम्, अख्याव, 'अस्यतिवक्तिख्यातिभ्योऽङि'ति च्लेरङादेशः कर्त्तरि, ख्या इति प्रकृत्यनार्थस्य चादेशस्य च ग्रहणमिति वृत्तिः । 'आतो लोप इटि चे'त्याल्लोपोऽङि, अख्येतामित्यादावा'तो ङित' इतीयादेशः । यञादावतो दीर्घः, अङ्विधौ ख्यातीति कृतयत्वायाः विकृतेर्निर्द्देशादकृतयत्वायाः प्रकृतेर्न ग्रह इति यदा क्शादित्व तदा सिजेव, अक्शास्त, अक्शासाताम्, अक्शासत । अक्शास्थाः, अक्शासि । अक्शास्वहि । अक्शासीत् । अक्शासिष्टाम्, अक्शासिषुः । अक्शासीः । अक्शासिषम् । यमरमनमातामिति सगिटौ । ननु 'निसमुपविभ्यो ह्व' इति कृतात्वस्यानुकरणेन विधीयमानस्तङ् निह्वास्यते इत्यादावाकारान्ते एव स्यान्न तु प्रकृतेरेदन्तस्य ह्वेइत्यस्य । निह्वयते इत्यादि सिद्ध्यर्थं विकृतिरपि प्रकृतिं गृह्णात्येव, कथं विज्ञायते यदय 'न व्यो लिटी'त्यात्वभूतस्य वेञो निर्द्देशेनात्वप्रतिषेधं शास्ति ततो ज्ञायत-इत्युक्तं न्यासे । तद्वदिहापि विकृत्या प्रकृतेर्ग्रहणादङ् स्यात् । मैवम् । न तत्र विकृत्या प्रकृतिग्रहणात्तङ् किं तु एजन्तैव प्रकृतिरनुक्रियते इत्यनुकरणस्यात्वं तु लक्षणवशात् । 'न व्यो लिटी'त्यत्राप्यनुकार्यमेजन्तमेव लक्षणवशादनुकरणमात्वभूतमिति न विकृत्या प्रकृतिग्रहणस्येदं ज्ञापकं, सर्वमेतत्प्रपञ्चितं ह्वयतौ, अख्यास्यत, अख्यास्यत् । अक्शास्यत । अक्शास्यत् । कर्म्मणि ख्यायते क्शायते इत्यादि । स्यादिषु वा चिण्वदिटि ख्यायिष्यते, अख्यायिष्यत, अख्यायिषीष्ट, ख्यायितेत्यादि । इडभावे ख्यास्यते । अख्यास्यत, ख्यासीष्ट, ख्यातेत्यादि, क्शादिरप्युदाहार्यः, एवं कर्म्मकर्त्तर्यपि । लुङि तशब्दे कर्म्मणि नित्यश्चिण्, कर्म्मकर्त्तरि तु 'अचः कर्म्मकर्त्तरी'ति पाक्षिकः । तदभावे द्विवचनादौ चास्यतिवक्तिख्यातिभ्य इत्यङ्, अख्यायि । अख्यत । अख्येतामित्यादि । क्शादित्वे त्वङ् नास्तीत्युक्तं, तेनाक्शायीति चिणि तदभावे सिचि चिण्वदिटो भावाभावाभ्याम् अक्शायिष्ट अक्शास्त । अक्शायिषाताम् अक्शासातामित्यादि, तदेवं क्शादि-

पक्षे तशब्दे त्रैरूप्यम् । सनि चिख्यासते, चिख्यासति, चिक्शासते, चिक्शासति । चाख्यायते । चाक्शायते । यङ्लुकि न लुमता[1] तस्मिन्निति लुमता लुप्तप्रत्ययनिमित्ते आङ्गे चानाङ्गे च कार्ये प्रत्ययलक्षणनिषेधाद्यङ्परत्वाभावान्न ख्याञादेशः । नन्वार्धधातुकइति विषयसप्तमीति प्रागेव तदुत्पत्तेः ख्याञादेशेन भाव्य, मैव, लुका[2]तद्विषयत्वमेवापह्रियते तथा च 'न लुमताङ्गस्ये'त्यत्र कैयटे न लुमता तस्मिन्निति चेट्टनि णिङादेशा न सिद्ध्यन्तीति भाष्यवार्त्तिकयोरुक्ते'लुङि चे'त्यादौ विषयसप्तम्याश्रयणेनादेशाः सेत्स्यन्तीत्याशङ्क्य लुका लुङो विषया[3]पहारात् विषयसप्तम्याश्रयणेऽप्यसिद्धिरित्युक्तम् एव चाङ्विधौ ख्यातीति श्तिपानिर्देशः प्रकथनार्थस्य यङ्लुक्यङ्निवृत्त्यर्थो भवति, यदुक्तं वर्द्धमानेन. ख्यातीति श्तिपा निर्देशाद् यङ्लुकि अचाख्यासीदिति तदपि प्रकथनार्थपरं व्याख्येयं, ख्यापयति क्शापयति, अचिख्यपत्, अचिक्शपत् आख्येयम् आक्शेयम्, आर्द्धधातुके इत्यस्य विषयसप्तमीत्वात् प्रागेव प्रत्ययोत्पत्तेः ख्याञादेश इति अजन्तलक्षणो यद्भवति 'ईद्यती'तीत्वे गुणः, संचक्ष्यः । वर्ज्जनीय इत्यर्थः । वर्जने प्रतिषेध इति ख्याञभावे हलन्तलक्षणो ण्यत्, शोभनं प्रचष्टे सुप्रख्यः, उपसृष्टादकर्म्मोपपदा दातश्चोपसर्ग' इति कः । उपसृष्टात्कर्म्मोपपदात्तु कर्म्मण्यणि युकि गोप्रख्याय इति । गा सचष्टे गोसख्य इत्यत्र तु 'समि ख्य' इति कर्म्मणि समि चोपपदेणोपवादः कः । तथा स्त्रियमाचष्टे स्त्राख्य[4] इत्यत्र मूलविभुजादिभ्य इति कोपि भवति । तथानुपसृष्टात् कर्म्मोपपदा 'दातोनुपसर्गे क' इति के गोख्यः, अनुपसृष्टादनुपपदात्तु श्याद्व्यधेत्याकारान्तलक्षणे णे युकि ख्याय इति. गोख्यायो व्रजति गोसख्यायो व्रजति प्रियाख्येयो व्रजतीत्यत्रा 'ण् कर्म्मणि चे'ति कर्म्मणि क्रियाया[5] चोपपदे विधीयमानेण 'आतोनुपसर्गे कः' 'समि ख्यः' 'मूलविभुजादिभ्य उपसंख्यान'मिति च विधीयमानं कं परत्वाद् बाधते । तथा च वृत्तिः, कर्म्मणि सामा-

१ अङ्गस्येत्यत्रेति २ । ४ पु० पा । २ लुकात्र विषयत्वमिति २ । ४ पु पा । ३ त्वेति २ । ४ । पु अधिकम् । ४ प्रियाख्यइति चेति ३ पु अधिकम् । ५ क्रियार्थायामिति २ पु पा० ।

न्यविहितोऽपि वासरूपविधेरभावाद् ण्वुला बाधितः पुनरण् विधीयते सोऽपवादत्वाद् ण्वुलं बाधते परत्वाच्च क्तादीन्, तेनापवादविषयेऽपि भवत्येवेति, वासरूपाभावश्च क्तल्युट्तुमुन्खलर्थेषु वासरूपविधिप्रतिषेध इति । ईषदाख्यानम् 'आतो युजि'ति युच् ईषदादिषु कृच्छ्राकृच्छ्रार्थेषु उपपदेषु, आख्या । 'आतश्चोपसर्गे' इत्यङ्, सर्वत्रापि क्तस्तु क्तादिरप्युदाहार्यः । अत्रेकारे विप्रतिपद्यन्ते । अयमनुदात्तः, प्रयोजन विचक्षण इत्यत्रानुदात्तेतश्चेति युजिति कैयटपदमञ्जरीकारादयः । अत्रासनयोः प्रतिषेध इति ण्याऽभावः । इदितोनुमिति नुमिह न भवति [1]अन्तग्रहणानुवृत्तेरन्तेदित एव तद्विधानात्, अथ चासनयोश्चेति ण्यात्प्रति[2]षेधः सञ्ज्ञाया, यदाह भाष्यकारः, बहुलं तणीति वक्तव्यम् अन्नवधकगात्रविचक्षणाजिराद्यर्थं. किमिदं तणीति संज्ञाच्छन्दसोर्ग्रहणमिति. तेनासञ्ज्ञाया भावादौ ल्युट्याख्यानमिति भवति, अत्रानुदात्तत्वादेव तङि सिद्धे इकारोऽन्तेदित्त्वविघातायेति केचित् । एवं हि चक्ष इत्यकारमेवानुदात्तमितमासजेत् । तस्मादन्तेदित्त्वाभावार्थः सन्ननुदात्तत्वप्रयुक्तमात्मनेपदमनित्यमिति ज्ञापनार्थोऽय इकारः, तेन तालैः शिञ्जद्वलयसुभगैः, तृष्णे[3]जृम्भसि, प्रार्थयन्ति शयनोत्थित प्रिया इत्यादयः प्रयोगा उपपद्यन्ते । ननु शिङ्क्ते इति शिञ्जः जृम्भत इति जृम्भः, तद्वदाचरतीति क्वौ शतरि सिपि च शिञ्जत् जृम्भसीति सिध्यतः । तथा प्रार्थनं प्रार्थः, तत्करोतीति णौ[4] प्रार्थयन्तीति, तत् किमने[5]न ज्ञापनेन, सत्यं, शब्दाः सिद्ध्यन्ति अर्थास्तु सहृदयहृदयङ्गमा न भवन्ति । अत्रात्रेयः, ङित्करणमेकानुबन्धस्यात्मनेपदस्यानित्यत्वज्ञापनार्थमिति नेहार्जवं पश्यामः । यस्मादवश्य युजर्थमनुदात्तत्व कर्त्तव्यन्तेनैव च तङि सिद्धे पुनस्तदर्थः क्रियमाणो इकारोऽनुदात्तत्वप्रयुक्तस्य तङोऽनित्यत्वज्ञापनायैव भवति, तथा गणकृतमात्मनेपदमनित्यमिति ज्ञापनार्थमिति तरङ्गिणीग्रन्थोऽप्येतेनैव प्रत्युक्तः,

१ तत्रेति अधिक २ । ४ पु । २ निषेध इति पा· २ । ४ । पु ।
३ कृष्णे इति १ । ३ । ४ पु पा· । ४ तिपि प्रार्थयतीति २ । ४ पु· पा ।
५ अनेनेति २ । ४ पु नास्ति ।

समनाकारमित्वकार उच्चारणार्थ इति मन्यते विचक्षण इत्यत्र युक् न स्यात् । ल्युट्येव ख्याञभावोऽस्त्विति न शक्यते वक्तुं सूर्या उभा चन्द्रमामा विचक्षणेत्यन्तोदात्तावेव[1] पठन्, ल्युटि हि मध्योदात्तेन भाव्य म चाववधकगात्रविचक्षणेति[2] निर्द्देशो युक्तमपि कल्पयेत्, यस्मादयमार्द्ध-धातुके ख्याञभावमात्रपर इति ल्युट्येव ख्याञभावेऽपि चरितार्थः । अववधकेत्यत्र विचक्षण इति ल्युटीति वदन् न्यासकारोऽपि स्वरविरोधेनैव प्रत्युक्तः । नृचक्षा रक्षः, असुन्नित्यसुन्प्रत्यय, असन्तदीर्घेति ख्याञ-भावः । चक्षुः । चक्षेः शिच्चेत्युस्प्रत्यय, तस्य शित्त्वात्सार्व्वधातुकत्वात् ख्याञभावः । अचक्षुः चक्षुः करोति चक्षूकरोति । ऊर्म्मनइत्यादिना च्वौ सलोपे 'च्वौ चेति दीर्घः' ॥

शब्दतन्त्रस्वतन्त्रेण प्रक्रियेयं प्रपञ्चिता ।

तस्या निःशेषतो मन्ये[3] बोद्धारो भाष्यपारगाः ॥ ७ ॥

ईर गतौ कम्पने च ॥ इतः पृचिपर्यन्ता उदात्ता अनुदा-त्तेतः ॥ ईर्त्ते ईराते, ईरते, । ईर्षे ईराथे । ईरे, ईराञ्चक्रे । इजादेश्च गुरुमत इत्याम् । अत्र के चिदिन्धिभवतिभ्यां चेति इन्धेः परस्य लिटः कित्त्वविधानाज्ज्ञापकादामः पाक्षिकत्व ज्ञापयन्तो रथचरणादिभिरीरिरे नु[4]वीरा इति प्रयोग समर्थयन्ते, न च समीधे दस्यु हन्तममित्यादौ मन्त्रे[5]ऽतदामो निषेधे श्रूयमाणस्य लिटः कित्त्वार्थं सूत्र स्यात्, यस्मा-दत्र 'छन्दस्युभयथे'ति सार्व्वधातुकत्वात्'सार्व्वधातुकमपि'दिति ङित्त्वा-देव कित्कार्यमनिदितामित्युपधालोपः सिद्ध्यति, तस्माज्ज्ञापकमे-वेति । सत्यमेव शक्यते कल्पयितु भाष्यकारवार्त्तिककारयोस्तु नेष्टं, यत्सूत्रमेवैतत्प्रत्याचक्ष्यतु' । इन्धेश्छन्दोविषयत्वाद्भुवो वुको नित्यत्वात्ताभ्या लिटः किद्वचनानर्थक्यमिति । ईरिता । ईरितासे । ईरिताहे । ईरिष्यते । ईरिष्यसे । ईरिषे । ईर्त्ताम् । ईर्ष्व । ईर्ध्वम् । ईरै । ऐर्त्त ।

---

१ अध्ययनादिति २ पा ।  २ एवेतदित्यधिक २ पु ।

३ तत्त्वमिति ४ पु सन्तु इति २ पुस्तके पाठ ।

४ अथ इति २ . ४ पु पा ।  ५ न्त्वत्वादिति २ । ३ पु पा ।

ऐराताम् । ऐरत । ऐर्थाः । ऐरि, ऐर्वहि । ईरीत । ईरीयाताम् । ईरीथाः । ईरीय । आशिषि ईरिषीष्ट । ईरिषीष्ठाः । ईरिषीध्वम् । ईरिषिड्ढ्व 'विभाषेटः' । ऐरिष्ट । ऐरिषाताम् । ऐरिष्ठाः । ऐरिध्वम् । ऐरिढ्वम्, 'धि चे'ति सलोपे 'विभाषेटः,' ऐरिषि । ऐरिष्वहि । कर्म्मणि ईर्य्यत-इत्यादि । ईरिरिषते, ईरयति, माभवानीरिरत्, समीरणः । अनुदात्ते-त इति युच्, ण्यन्तान्नन्द्यादित्वेन ल्युरित्यात्रेयः, निर्गमीतेरिति नीर, निःशब्दोय वृत्तिविषये[1] निर्गवचनः, तस्मिन्नुपपदे 'कर्मण्यणि'त्यण्, इगुपधलक्षणः क इत्यात्रेयः, अकारादनुपपदात् कर्म्मोपपदो विप्रतिषे-धेनेत्युक्तन्वार्त्तिचित्य, स्वेनाभिप्रायेणेरितु शीलमस्येति स्वैरी, ताच्छील्ये णिनिः, ईरणमीरः, स्वेनाभिप्रायेणेरोऽस्मिन्निति स्वैर, स्वभावादयं क्रिया-विशेषण, नपुंसकलिङ्गश्च, उभयत्र 'स्वादीरेरिणोर्वृद्धिर्व्वक्तव्ये'ति वृद्धिः, ईर्म्मं, बाहुलकान्मः, दक्षिणमीर्ममस्य दक्षिणेर्मा मृगः, व्याधेन दक्षिणे पार्श्वे वृणित इत्यर्थः, ईर्मशब्दो वृत्तौ धर्म्मिणि वर्त्तते 'दाक्षिणेर्मा लुब्धयोग' इत्यनिजन्तो बहुव्रीहौ निपात्यते, अन्यत्र लुब्धयोगाद्दक्षि-णेर्म्मं शकटमिति भवति । ईर क्षेपे इत्याधृषीयः ॥ ८ ॥

ईड स्तुतौ ॥ ईट्टे । ष्टुत्वचर्त्वे । ईडाते । ईडिषे, ईडिध्वे । ईडे, ईड्वहे, 'ईडजनोर्ध्वे च' अत्र ईश इति वर्त्तते से इति च, ईशीडिजनीभ्यः सेध्वेशब्दयोः सार्व्वधातुकयोरितीट् । ईडाचक्रे । ईडिता, ईडितासे । ईडिताहे । ईडिष्यते, ईट्टाम् । ईडाताम् । ईडिष्व । ईडिध्वम् । ईडै । 'सवाभ्यां वामौ' विति वामयोः कृतयोरप्येकदे-शविकृतस्यानन्यत्वात् सेध्वेशब्दावेवेतीट् । ऐट्ट । ऐडाताम् । ऐट्ठाः । ऐड्ध्वं, विकृतिग्रहणे प्रकृतिग्रहणाभावान्नेट् । ऐडि । ऐड्वहि । ईडीत । ईडीथाः । ईडिध्वम् ईडिय । आशिषि ईडिषीष्ट । ईडिषीष्ठाः ईडिषीध्वम्, ईडिषीय । ऐडिष्ट । ऐडिध्वम् । ऐडिषि, कर्म्मणि ईड्यते इत्यादि । ईडिडिषते । ईडयति । माभवानीडिडत् । ईडा । गुरोश्च हल इत्यकारः । 'ईडाया वे'ति निर्द्देशाद्धस्वः । ईड्यस्तुत्यः, ण्यत् 'ईडवन्द-

१ वृत्ताविति २ । ३ । ४ पु॰ पा॰ ।

वृशसद्गुहा ण्यत' इत्याद्युदात्तत्वम्, ईडेन्यः औणादिक एन्यप्रत्ययो बाहुलकात् । अथ चुरादौ च ॥ ९ ॥

ईश ऐश्वर्ये ॥ धनस्येष्टे, ईशिषे । ईशिध्वे । व्रश्चादिना षत्वे ष्टुत्व झलि पदान्ते च, 'आधीगर्थदयेशां कर्म्मणी'ति कर्म्मणि शेषे षष्ठी अशेषत्वविवक्षायां धनमीष्टे ईशाचक्रे इत्यादि पूर्व्ववत् । ईशानः, लट शानच् ताच्छीलिकश्चानश्वा । वाचामीशो वागीशः, इगुपधज्ञप्रीकिरः कः, ननु कर्म्मणि शेषत्वेन विवक्षिते षष्ठ्या सिद्धाया पुनस्तद्विधानं समासनिवृत्त्यर्थमिति कथमधीगर्थषष्ठ्याः समासः । सत्य, नायमधीगर्थषष्ठ्या[1] किं तु 'कर्त्तृकर्म्मणोः कृती'त्यशेषषष्ठ्याः । तदुक्त कृद्योगा च षष्ठी समस्यतइति, ईश्वरः, स्थेशभासेति वरच्, 'नेड्वशि कृती'तीडभाव. । ईश्वरा । टाप्, ईश्वरीति औणादिके वरटि टिड्ढाणञिति ङीबित्यात्रेयादयः । धनेष्वीश्वरो धनानामीश्वरः । स्वामीश्वरेति षष्ठीसप्तम्यौ शेषे । कथं धनेश्वर इति यावता प्रतिपदविधाना षष्ठी न समस्यतइत्युक्त, सत्यं, नात्र चकारेण[2] षष्ठी पुनर्विधीयते किन्त्वनया सप्तम्या सा आधीत्यभ्यनुज्ञायते । यद्वा पूर्व्ववत् 'कर्त्तृकर्म्मणोः कृती'ति[4] षष्ठ्याः समासः । औरूप्य चेह साध्य, न ईश्वरः, अनीश्वर. न विद्यते वा ईश्वरो यस्य सोनीश्वरः । तस्य भावोऽनैश्वर्यमानैश्वर्यं, ब्राह्मणादित्वात् ष्यञ्, नञः शुचीश्वरक्षेत्रज्ञ इत्यादिनोत्तरपदस्य नित्यं वृद्धिः पूर्वपदस्य तु वा ॥ तत्पुरुषादपि न नञ्पूर्वादिति निषेधं बधित्वा ब्राह्मणादि[5]त्वात् ष्यञ्, बहुव्रीहेः[6]सामान्येनैव सिद्धत्वात्तत्पुरुषार्थः स पाठः ॥ १० ॥

आस उपवेशने ॥ आस्ते । अत्रा'नचि चे'ति द्वित्वपक्षे द्वौ सकारौ, अन्यदा त्वेकः । न च द्वित्वे स्कोरिति सलोपप्रसङ्गः । द्वित्वस्यासिद्धत्वात् । आस्से इत्यत्र द्वित्वपक्षे त्रयः सकाराः, न च झरो झरीति

१ समास इत्यधिक २ । पुस्तके । २ चेत्यधिकं २ । ३ पु॰
३ अपूर्वेत्यधिक ४ पु ४ अशेषेत्यधिक ३ पु॰
५ पाठादिति २ । ३ । ४ पु॰ । ६ बहुव्रीहाविति २ । ४ पु॰

लोपाद् द्वावेवेति मन्तव्यं, तस्यापि विकल्पितत्वात् । आध्वे । 'धि चे'ति सलोपे धकारस्य द्वित्वे जश्त्वम्, आसे, आसाञ्चक्रे 'दयायासश्चे'-त्याम् । आसिता । आसितासे । आसिताहे आसिष्यते । आस्ताम् आस्व, आध्वम् । आसै । आस्त । आसाताम् । आस्थाः । आध्वम् । आसि । आस्वहि । आसीत् । आसीथाः । आसीय । आशिषि आसिषीष्ट । आसीषिष्ठाः । आसीषीय । आसिष्ट, आसिषाताम् । आसिष्ठाः, आसिड्ढ्वम् । 'धि चे'ति सिचो लोपे इणः षीध्वमिति मूर्द्धन्यः, आसिषि[1] । सनि आसिसिषते । आसयति, मा भवानासिसत्, ग्राममध्यास्ते । 'अधिशीङ्स्थासां कर्म्मे'ति आधारस्य कर्म्मत्वं, मासमास्ते मासमासनेन व्याप्नोतीत्यर्थः । सकर्म्मकव्यापनरूपधात्वर्थोऽङ्गकासने धातोर्वृत्त्या व्यापनापेक्ष मासस्य कर्म्मत्वं, एवमस्य मासादिना सकर्म्मकत्वेपि तत्र-तत्राकर्म्मकग्रहणेषु कालभावाध्वगन्तव्यदेशव्यतिरिक्तेन कर्म्मणाऽकर्म्मकाणां ग्रहणमिति आसयति मासं देवदत्तमिति प्रयोज्यस्य गतिबुद्धीति कर्म्मत्वं भवति । तथाऽणावकर्म्मकादिति नित्यं परस्मैपदं च, एवं लः कर्म्मणि चेत्यादिना विधीयमाना लादयोप्यस्य वस्तुतो मासादिना सकर्म्मकत्वाद्[2]कर्म्मकग्रहणेन ग्रहणाच्च भावकर्म्मणोरुभयोरपि भवन्ति आस्यते मासं देवदत्तेन आस्यते मासो देवदत्तेन, मासस्यासितव्य-मासितव्यो मासः, स्वासं मासं स्वासो मास इति, खलोर्न लोकाव्ययेति कर्म्मणि षष्ठ्या निषेधः । अयं च प्रकारोऽकथितं च' कालाध्वनोरित्यादौ भाष्यकैयटपदमञ्जर्यादिषु सहस्रशः प्रपञ्चितः[4] । अस्माभिरपि भवतौ प्रपञ्चितः । ननु कटे आस्ते इत्यादौ मासादिवत् [5]व्याप्त्यपेक्षया कटादेरपि कर्म्मकत्वेन भाव्यम्, अत्र कैयटः । नियतत्वाच्च प्रयोगस्य कटआस्तइत्यादौ त्वासनमात्रेणाङ्गीकृतक्रियान्तरे आसिर्वर्त्तत-इत्यतिप्रसङ्गो नोद्भावनीय इति । आसीनः 'ईदास' इति आसेः

१ २ पुस्तके आशिषि तु इट' प्रत्ययभक्तत्वेनाङ्गस्यानिट्त्वादासिषीध्वमित्येवेति पाठो दृश्यते ।

२ कर्मसंज्ञेति २ । ३ । ४ पु ।
३ अकर्मकत्वादित्यधिकं २ पु ।

४ स्फोरित इति २ । ४ पु ।
५ आस्यपेक्षयेति ३ पु॰ ।

परस्यानन्त्यादेरीकारः । आसना । 'ण्यासश्रन्थो युच्' इति युच् आस्या वासरूपविधिना ण्यत्, अस्त्रियामिति निषेध उभयोरपि स्त्र्यधिकार बिहितत्व' बाहुलकात् क्वचिदपि भवति उपास्तिरिति. उपासितो गुरुं शिष्यो वा उपासितो गुरुः शिष्येण, गत्यर्थाकर्मकेत्यादिना कर्तृकर्मणोः क्तः । उपसर्गवशात् कालादिव्यतिरिक्तेनापि सकर्मकत्वं, कैलासः. केलिः प्रयोजनमस्य कैलः चूडादिभ्य उपसंख्यानमित्यण्, आस्यतेस्मि-न्नित्यासः, 'हलश्चे'त्यधिकरणे घञ् । कैलश्चासावासश्चेति विशेषणविशेष्येति सञ्ज्ञात्वाल्लोहितशाल्यादिवत् समासो नित्यम् ॥ ११ ॥

आङः शासु इच्छायाम् ॥ आशास्ते । आशासाते । आशास्से । आशाध्वे आशासे । 'शास इदङ्हलो'रित्यङि हलादौ च क्ङिति विधीयमानमुपधाया इत्वमस्य न भवति संयोगस्य विशेषस्मृतिहेतुत्वाद् अङ्सम्बन्धिन एव शासेस्तत्र ग्रहणाद् अस्य च नास्त्यङ्सम्बन्धः सर्तिशास्तीत्यत्र सर्त्यर्तिभ्यां परस्मैपदिभ्यां साहचर्यात्तादृश एव परस्मैपदिनः[2] शासेर्ग्रहणमिति । आशशासे । आशशासाते । आशशासिरे । आशशासिषे । आशशासिध्वे । आशशासे आशशासिवहे । आशिवदन्ये लकाराः । आशिशासिषते । आशाशास्यते । आशाशासीति । आशाशास्ति । आशाशयति । आशीः । आङ्[3]शासः क्वि-तीत्वम्, सकारस्य रुत्वे र्वोरुपधाया इति दीर्घः, क्वियाशीरिति निर्द्देशा-द्वेत्वं, आशिषावित्यादौ शासिवसिघसीन्यादिना षत्वं, तत्र हि न केवलं शासनार्थस्य ग्रहणं किं त्वस्या[4]पि, तथा चाशिषि लिङ्लोटाविति निर्द्दिश्यते । आशिषा । आप चैव हलन्तानामित्यात्रेयः । अन्या आशीः अन्यदाशीः । 'अषष्ठ्यतृतीयास्थस्यान्यस्य दुगाशीराशास्थास्थितोत्सुकोतिकारकरागच्छेषु' । षष्ठीतृतीयाव्यतिरिक्तविभक्त्यन्तस्यान्यशब्दस्याशीरादिषूत्तरपदेषु छे च प्रत्यये दुगिति दुगागमः, षष्ठीतृतीयान्तत्वे तु अन्याशीः । अत्राषष्ठ्यतृतीयास्थस्येति निषेधः कारकच्छव्यतिरिक्तविषयः ॥ उक्तं च ॥

१ अपाति ३ पु सर्वेति २ पु॰ पा । २ परस्मैपदिन इति नास्ति २ । ४ पु । ३ आङ शास इति पा २ पु । ४ अस्य चेति २ । ४ । पु॰ ।

दुगागमो ऽविशेषेण कर्तव्यः कारकच्छयोः ।
षष्ठीतृतीययोर्नेष्ट आशीरादिषु सप्तमु ॥

इति । आशिषं करोति आशिषयतीत्यत्र सोपसर्गात् मयामयतेरेवेति नियमाच्छिषशब्दादेव णिनुत्पत्तौ 'प्रकृत्यैकाजि'ति प्रकृतिभावाणाविष्ठवदिति टिलोपो न भवति । अत्रात्रेयमैत्रेयस्वामिकाश्यपा अमुमुदितं पठित्वा 'नाग्लोपिशास्वृदिता'मित्यत्रास्यापि सामान्येन ग्रहणाद् आशशामदित्युपधाह्रस्वनिषेधो भवतीति । आत्रेयमैत्रेयौ तु प्रयोजनान्तरं[1] चाहतुः ॥ 'क्त्वापि छन्दसी'ति ल्यपोपवादे क्त्वादेशे आशास्त्वा आशासित्वेतीड्विकल्पः, निष्ठाया 'यस्य विभाषे'ति[2]निषेधादिड् न भवति । अशास्त आशास्तवानिति भवतीति, [3]वर्द्धमानममताकारादयस्त्वनुदितं पठित्वा नाग्लोपीत्यत्रोदितानुशासनार्थस्यैव ग्रहणादस्य ह्रस्वनिषेधाभावादशीशसदिति ह्रस्वेन भाव्यमित्याहुः ॥ वर्द्धमानोदितमते निष्ठायामाशासित इति च भवितव्यम्, अत्र हरदत्तेन

शक्यः शासिग्रहो कर्त्तुमृदिदे[4]वैष पठ्यते ।
ऋशासु अनुशिष्टा'वित्येवमेके प्रचक्षते ॥

इत्यनुशासनार्थस्य शासेर्मतान्तरसिद्धमृदित्पाठमाश्रित्य ऋदित्त्वादेवोपधाह्रस्वनिषेधसिद्धेः शासिग्रहणं न कर्तव्यमित्यभिधानात् तन्मतेप्यस्य शासेरुदित्त्वमनभिमतेन प्रतीयते । उदित्त्वे शास्वित्यु[5]कारानुबन्धकरणमेतदर्थं स्यादिति कथं प्रत्याख्यायेत, एवमृदित्त्ववादिना शासिग्रहणे निरर्थके यन्मतान्तरेण फलमुक्तं हरदत्तेनैव

वदन्त्यन्ये तु सूत्रे ऽस्मिन् शासिं निरनुबन्धकम् ।
पठन्तः प्रतिषेधोस्य यङ्लुक्यपि भवेदिति ॥

इति, तदयुक्तं, प्रकृतौ निरर्थकत्वे[6] विकृत्यर्थं शासिग्रहणं स्यात्, इह त्वाशासेर्मुक्तानुबन्धकस्यानुवादत्वेन प्रकृत्यर्थत्वं शक्यते [7]वक्तुम् ।

१ अपीति २ । ४ पु । २ इटप्रतिषेधादिति २ । ४ पु० ।
३ वर्धमानक्षमताकारा दीर्घं त्वित्ति ४ पुस्तके पाठ उपलभ्यते परं स न युक्त इति प्रतिभाति । ४ देव पठिष्यते इति २ । ४ पु ।
५ उकारानुबन्धकरणमिति २ । ४ पु० नास्ति
६ विकृत्यर्थत्व शासि ग्रहणस्वेति २ । ४ । पु । ७ विज्ञातुमिति ४ । पु०

प्रायेणायमाङ्पूर्व्वं इति नमो वाक प्रशास्महे इति भवभूतिप्रयोगोपपत्तिरित्यात्रेयः । एतिस्तुशासामित्यत्राऽऽदिनो निर्द्देशात्तस्मात् क्यपः प्रसङ्ग इत्याशास्यमिति ण्यदेव, येनामन्यायुदित्त्वेन तत्र ग्रह इष्टस्तेपामयाशास्यमित्येव रूप, यस्मात्क्षाम इदङ्हलो'रितीत्वमस्य नास्तीति प्रागेवोक्तम् । आशासा, 'गुरोश्च हल' इत्यकारः । आशन्ततइतीच्छाया, शसतीति स्तुतौ, शसतीति हिसाया अपि, शास्तीत्यनुशासने ॥ १२ ॥

वस आच्छादने ॥ निवासे वसतीति गतं शपि । वस्ते । वस्से । वध्वे, वसे । ववसे । ववसिषे ववसिवहे । न शसददवादीत्येत्वाभ्यासलोपनिषेध. । वसितेत्याद्यासिवदुदाहार्यम् । विवसिषते, वावस्यते । वावसीति, वावस्ति । वासयति वस्त्र देवदत्तेन वासयते इति वा । यदा तु व्यापारान्तरनिवृत्तिपराया चोदनायामविवक्षितकर्मकोऽयमकर्मकस्तदाणावकर्म्मका'दिति परस्मैपदमेव, गतिबुद्धीत्यादिना प्रयोज्यस्य कर्म्मत्व देवदत्तमिति[1], न पादमित्यत्र लुग्विकरणत्वान्नास्य ग्रह इत्युक्तम्, अत एव प्रे लपसुद्रुनयवदवसेत्यादावपि नास्य ग्रहः । वसित्वा, वसित, वसित इत्यत्र वसिस्वपीति सप्रसारणस्य नात्र प्रसङ्गो ऽयजादित्वात्, वस्यते आच्छाद्यतेऽनेनेति वसनम्, करणे ल्युट्, यद्वा वस्ते आच्छादयतीत्यनुदात्तेत इति कर्त्तरि युच्, वस्त्रम्, ष्ट्रन्, वस्त्रेण समाच्छादयति सवस्त्रयति, मुण्डमिश्रेत्यादिना णिच् । वस्त्रात्समाच्छादनइति वृत्तिः, वासः, वाससी वसेर्णिच्चेत्यसुनि णित्त्वाद् वृद्धिः । अत्तिर्वासोऽस्येति कृत्तिवासाः । अत्वसन्तस्येत्यत्वन्तस्यासम्बुद्धौ सौ दीर्घः । अकारान्तस्तु कृत्तिवस्तइति कर्म्मण्यणि चर्मव इत्यादि प्रयोगश्चर्म वस्त इति 'क्विप् चे'ति क्विपि क्विबन्ता धातुत्व न जहतीति अधातो'रिति निषेधादत्वसन्तस्येति न दीर्घः, अयमेवाधातो'रि'ति निषेध क्विबन्ता धातुत्व न जहतीत्यस्य मूल, वसा, शरीरान्तर्गतस्नेहद्रव्य, पचाद्यचि टाप्. तद्धि व्याप्य तिष्ठति ॥ १३ ॥

१ प्रयोज्य कर्म देवदत्त वासयतीति २ । पु प्रयोज्य. कर्म देवदत्तमिति ३ । ४ । पु ।

कसि गतिशासनयोः । कंस्ते । कंसाते । कंसते । कंसे । कन्ध्वे 'धि चेति सलोपः, अत्रायोगवाहानामट्सु णत्वमविशेषेण संयोगोपधासंज्ञाऽलोन्त्यद्विर्वचनस्यानिवृत्त्यतिदेशा इति यत्र प्रयोजनं तत्रत्यायोगवाहानामुपदेशस्य चोदितत्वादनुस्वारस्याच्त्वाश्रयणे धकारस्यानचि चेति वा द्विर्वचने पूर्वस्य जश्त्वेऽनुस्वारस्य च परसवर्णे नकारदकारधकारवकाराः संयुज्यन्ते. द्विर्वचनाभावे तु दकारस्याभावादन्ये त्रय. । ननु द्वित्वपक्षेपि 'झरो झरि सवर्णे' इति दकारस्य लोपात्त्रया[1]णामेव संयोगः स्यात् । नैवम् । अस्य विभाषितत्वात् । एवं कंस्तइत्यादावपि सकारस्य झल्परत्वे पक्षे द्विर्वचनं द्रष्टव्यं, न च स्कोरिति सलोपस्य विद्यमानत्वाद् द्विर्वचनमकृतसमानिति मन्तव्य,मस्मिन् द्विर्वचनस्यासिद्धत्वात् । कस्वहीत्यादौ झल्परत्वाभावाच्च न सलोपप्रसङ्गो ना[3]पि झरो झरीति सलोपेन वैयर्थ्यमाशङ्क[4]नीयं तस्य विकल्पितत्वात् । एवमुदाहरणेषु द्वौ सकारावेको वा मध्यमैकवचने द्वित्वे त्रयः सकाराः, अद्वित्वे झरो झरीति यदा लोपस्तदैकः, अन्यदा तु द्वौ, चकसे । चकसिषे चकसिवहे कसिता, कसिष्यते । कस्ता, कस्व, कन्ध्व, कसै । अकस्त, अकंस्थाः, अकसि । कसीत, कसीथाः । कंसीय । आशिषि कसिषीष्ट । अकसिष्ट, अकसिष्ठाः । अकसिषि । चिकसिषते । चाकस्ति, चाकस्यते । चाकसीति । लङि अ[5]टि तिप्सिपोर्हल्ङ्यादिलोपे संयोगान्तलोपे अचाकन्, कसयति । अचकसत, सर्वत्र दित्त्वान्नुम् । अत एव [6]चाकस्यतइत्यादौ लोपाभावः, अयं पाठो मैत्रेयादीनाम्[7] । अन्ये तु व्याख्यान्तरे[8]ऽमुं तालव्यान्तमनिदितं म[9]न्यन्ते । तथा च 'प्रतिष्कशश्च कशेरि'त्यत्र वृत्तिः, कश गतिशासनयोरिति सूत्रे सुधाकरश्च, पारायणिकैरयमिदिद्दन्त्यान्त्य उदाहारि ।

---

१ त्रिव्यञ्जन एवेति ३ । ४ । त्रिभिर्व्यञ्जनैरेवेति २ । पु पाठ ।
२ हलिति २ । पु पा ।
३ न चेति २ । पु पा॰ ।
४ आशङ्क्यमि २ । पु पा ।
५ अटीति २ । ४ । पु॰ नास्ति ।
६ कस्यतइति २ । ४ । पु पा॰ ।
७ मैत्रेयात्रेयादीनामिति २ । पु पा॰ ।
८ व्याख्यान्तरे ऽमुमिति २ । ३ । ४ । पु नास्ति ।
९ अधीयतइति २ । पु पा॰ ।

णिसि चुम्बने ॥ इदित्त्वान्नान्तः । निंस्ते इत्यादि कसिवत् । अत्रात्रेयादयः प्रणिंस्ते प्रनिंस्तइत्युदाहृत्य वा निंसेति णत्वविकल्पमाहुः । अस्माभिस्तु तत्प्रकृतिपर इति निन्दतावुपपादितम् । आ[1]भरणकारस्तु तालव्यान्त पठित्वा वानिशेति सूत्रमपि स्वपाठानुगुणं पपाठ तत्तु 'नुम्विसर्जनीयशर्व्यवायेऽपी'त्यत्र वृत्तिन्यासपदमञ्जर्याद्यपर्यालोचनविजृम्भित, तत्र हि नुमादिभिः प्रत्येक व्यवाये षत्वमिष्यते तेन निंस्से निंस्वित्यत्र न भवतीत्युक्तम्, अस्य तालव्यान्तत्वे व्रश्चादिषत्वे षढोरिति कत्वे कवर्गात्परत्वेन षत्व दुर्वारमिति कथ प्रत्युदाह्रियेत ॥ १५ ॥

णिजि शुद्धौ ॥ निङ्क्ते । कुत्वे चर्त्वे, निञ्जाते । निञ्जते । निङ्क्षे कुत्व[2]चर्त्वयोः षत्वम् । निनिञ्जे । निनिञ्जिषे । निञ्जिता । निञ्जिष्यते । निङ्क्ताम् । अनिङ्क्त, निञ्जीत आशिषि । निञ्जिषीष्ट । अनिञ्जिष्ट, निनिञ्जिषते । नेनिञ्ज्यते । इदित्त्वान्नुम् सर्व्वत्रात एव क्ङिति नलोपाभावः । नेनिञ्जीति, नेनिङ्क्ति, । निञ्जयति । अनिनिञ्जत् ॥

पचि वचिं विचिरिचिरञ्जिपृच्छतीन् ।
निजि सिचि मुचिभजिभञ्जिभृञ्जतीन् ॥

इत्यत्र निरनुषङ्गपाठाद् णिजिर् शौचपोषणयोरिति जौहोत्यादिकस्यैव ग्रह[3]णादय सेडेवोदाहृतः ॥ १६ ॥

शिजि अव्यक्ते शब्दे ॥ शिङ्क्ते इत्यादि पूर्व्ववत् । तालेः शिञ्जदित्यात्मनेपदाग्नित्यत्वज्ञापनादिति च[4]त्वावुक्तम्, शिञ्जा, पचाद्यचि टाप् गुरोश्च हल इत्यकारो वा । शिञ्जिनी । आवश्यणिन्यन्तान् ङीप् ॥ १७ ॥

पिजि वर्णे ॥ सपर्चने इति शाकटायनः । उभयत्रेति समता । अवयवे इति काश्यपः । अथ शिञ्जिश्च द्व व्यक्ते शब्दइति काश्यप । पिङ्क्ते-

१ कश्चिदिति २ पु पा० ।
२ इत्यत्र कुत्वषत्वचर्त्वानुस्वारपरसवर्णा इति २ पु पाठः ।
३ ग्रह०, अय सेडुदाहृत इति २ पु० पाठ० । ४ चष्टाविति । २ पु० पा० ।

इत्यादि पूर्व्ववत्। पिङ्गः। घञ्। पिञ्जरः, पिङ्गलः बाहुलकादरलौ, पुरुषपिङ्गलः। पिङ्गलरुक्मः 'कडाराः कर्म्मधारये' इति विशेषणस्य वा परनिपातः, कडारादिपाठादेव जकारस्य गकारः पिङ्गला पिङ्गलिका गौरादिपठात् ङीष् पिङ्गलिमा। पैङ्गल्यम्। 'वर्णदृढादिभ्यः ष्यञ् च'-तीमनिच्ष्यञौ पिञ्जूलं तृणसंघातश्च, खर्जपिञ्जादिभ्य ऊरोलचा-विन्यूलच्। पृञ्जी त्येके, पृङ्क्ते इति मैत्रेयः रक्षमात्रेयश्च पिजि भाषार्थः॥ तुजि पिजि हिंसाबलदाननिकेतनेष्विति चुरादौ॥ १७॥

वृजी वर्ज्जने। दन्त्योष्ठ्यादिः॥ इदिदित्यात्रेयादयो दीर्गाश्च। वृक्ते। वृजाते। वृते। वृग्ध्वे वव्रृजे। ववृजिषे। ववृजिवहे। वर्जिता। वर्जिष्यते वृक्ता, वृक्त, वर्जै वर्जावहै। आटि गुणः। अवृक्त। अवृक्थाः। अवृजि। वृञ्जीत। वृञ्जीयाः। वृञ्जीय, आशिषि वर्जिषीष्ट, अत्र लिङ्-सिचावित्यत्र झलीत्यनुवर्त्तनान्न कित्त्वम्। अवर्जिष्ट, अवर्ज्जिष्ठाः। अवर्जिषि, विवर्जिषते वरीवृज्यते रीगभ्यासस्य वर्वर्क्ति रुगागमः। रीयि-कोरप्युदाहार्य्यम्। वर्जयति। अवीवृजत् अववर्जत्। 'उर्ऋदित्यृ'कारो वा गुणापवादः। वर्जित्वा। वृक्तम्। निष्ठाया 'श्वीदितो निष्ठाया'-मित्यनिट्त्वम्। वृज्यः, 'ऋदुपधाच्चे'ति क्यप्। वृजयो जनपदाः। इगुपधात्किच्चेतीन् प्रत्ययः, कित्त्वान्न गुणः। वृजिषु भवो वृजिकः। 'मद्रवृज्योः कनि'ति कन्[3] शैषिकः। वर्गः। घञि कुत्वम्, वर्गे भवो वर्ग्यः। दिगादित्वाद्यत्[4]। कवर्गीयः। 'वर्गान्ताच्चे'ति भवार्थे छः, वासुदेववर्गे भवो वासुदेववर्ग्यः। वासुदेववर्गीणः, 'अशब्दे यत्खावन्यतरस्या'मिति यत्खौ अन्यतरस्याग्रहणाच्छश्च[5], वासुदेववर्गीय इति। वृजिन पाप, वृजेः किच्चेतीनच् प्रत्ययः[6]। कित्त्वान्न गुणः। वृजनम्। कृपृवृजिमन्दिनिधाञ्भ्यः क्युनिति क्युन्यनादेशः। अयं रुधादौ युजादौ च अयमिदिदिति मैत्रेयः। तथा चाधीयते चतुरेव भ्रातृव्यस्य वृङ्क्ते

[1] पिङ्गलिकेति २। ४ पु नास्ति। [2] तृणसंघात इति ३। ४ पु पा।
[3] प्रत्यय इत्यधिक २ पु। [4] प्रत्यय इत्यधिक २। ३। ४ पु।
[5] यद्ग्रहणाद्दृतेश्चेति १। ३। पु पाठो दृश्यते परं तु सूत्रएवान्यतरस्याग्रहणाच्च स युक्त। [6] प्रत्ययइति २। ४ पु नास्ति।

इति। तथा च शाबरभाष्ये प्रवृञ्जनमिति प्रयुज्यते । तथा च स्वामी वृज इति दौर्गाः, तदा वृक्ते वर्जितेति [illegible], यदाह पिजु वृजु पृचै सम्पर्चने इति, तेन ह्युदिदिदित्स्थाने क्रियते एदिदीदित् स्थाने, तन्मते पूर्वाय वक्ष्यमाणाय[1] सम्पर्चनार्थे । वृञ्जाते वृञ्जते । वृङ्क्षे । ववृञ्जे, ववृञ्जे । वृञ्जिता । वृञ्जिष्यते । वृङ्क्ताम् । अवृङ्क्त । वृञ्जीत । आशिषि वृञ्जिषीष्ट अवृञ्जिष्ट, विवृञ्जिषते, वरीवृञ्ज्यते, वरीवृङ्क्ति, वृञ्जयति । अववृञ्जत् ॥ १९ ॥

पृची सम्पर्चने ॥ ओप्यादिरीदित्, पृक्ते इत्यादि वृजीवत् । इदिदिति दुर्गकाश्यपनन्दिधनपालादयः । इदित्तृतीयान्त इति कौशिकः । ईदिदित्यपरे । तत्र वृत्तौ सम्पृचादिसूत्रे पृचीं सम्पर्क इति रुधादिर्गृह्यते न त्वादादिरित्यभिधानात् प्रथमान्त ईदिदेव युक्तः, उणादिवृत्तौ पर्जन्यशब्दव्युत्पादने अर्जः पर्जं चेत्यन्यप्रत्यये पर्जादेश [illegible] यान्तपाठः, पिजु वृजु पृचै[2] सम्पर्चने इति पठन् शाकटायनोऽप्यत्रैवानुकूलः, तेन ह्युदिदिदित्स्थाने क्रियते । ईदित्स्थाने चैदिदित्युक्तम् । अथ रुधादौ, युज पृच संयमन इति चुरादौ । ईरादय उदा[3]त्ता अनुदात्तेतः ॥ २० ॥

षूङ् प्राणिगर्भविमोचने ॥ सूते । सुवाते, सुवते, । सूषे, सूध्वे । सुवे, सूवहे, सूमहे । ऋजादावुवङ्, सुषुवे । सुषुवाते । सुषुविषे । सुषुविढ्वे । सुषुविध्वे 'विभाषेटः' सुषुविवहे । 'आदेशप्रत्यययो' रितीणः परस्य सस्य[4] षत्वम् ॥

श्र्युकः किति निषेधोऽत्र स्वरत्यादिविकल्पनात् ।
पूर्वं निषेधकाण्डस्य प्रारम्भाद्बलवत्तरः ।
तथा[5]पि क्रादिसूत्रेण बाध्यते तत्र वृग्रहात् ॥

तेन इण् नित्यः, एतच्च स्वरतावेवोपपादितम् । सोता । सविता । सोष्यते । सविष्यते स्वरत्यादिनेड्विकल्पः, सूताम् । सुवाता, सूष्व,

१ वक्ष्यमाणास्त्वय इति क्वचित्कोपपाठ ।
२ पृचैहिति १ । ३ । ४ पु ।
३ उदात्ता इति २ पु नास्ति ।
४ सस्येति २ । ४ पु॰ नास्ति ।
५ स चेति २ । ४ । ४ पु पा ।

सुवै, आटि पित्त्वाद्ङित्त्वेपि 'भूसुवोस्तिङी'ति निषेधान्न गुणः । असूत । असुवाताम् । असुवत । असूध्वम् । असुवि असूवहि । सुवीत । सुवीयाताम् सुवीथाः, सुवीय आशिषि सविषीष्ट, सविषीयास्ताम् । सविषीरन् सविषीष्ठाः, सविषीढ्वम् सविषीध्वम् । सविषीय सोषीष्ट, सोषीयास्ताम्, सोषीरन्, सोषीष्ठाः । सोषीढ्वम् सोषीय आर्धधातुकत्वात्स्वरत्यादिनेड्विकल्पः । अत एव 'भूसुवोस्तिङी'ति गुणनिषेधोपि न भवति । न हि सार्वधातुकविषये, इणः षीध्वमिति नित्यो मूर्धन्योऽनिट्पक्षे, इट्पक्षे तु गुणादेशयोर्विकल्पः[1] एवं लुङ्यपि । असविष्ट, असविषाताम् । असविष्ठाः । असविध्वम् । असविढ्वम् असविषि, असविष्वहि । असोष्ट, असोषाताम् । असोष्ठाः । असोढ्वम् । असोषि सुसूषते । स्तौतिण्योरेवेति नियमान्न षत्वं 'सनि ग्रहगुहोश्चे'ति चशब्देनोकोनुकर्षणादिण्निषेधः 'श्युकः किती'ति निषेधोपि स्वरत्यादिविकल्पं बाधते । उक्तं च न्यासे । 'श्युकः किती'ति 'सनि ग्रहगुहोश्चे'ति पूर्वं विधेः प्रतिषेधसामर्थ्यात् तु स्वरत्यादेः प्रतिषेधनियमन्येति । सोषूयते सोषुवीति, सोषोति, प्रकृतिग्रहणे यङ्लुगन्तस्यापि ग्रहणमिति 'भूसुवोस्तिङी'ति गुणप्रतिषेधः, सावयति । असूषवत् । णेः ङनस्य स्थानिवद्भावात्सूशब्दस्य द्विर्वचनम् । कर्मणि सूयते, असावीत्यादि स्यादिषु तु वा चिण्वदिटि साविष्यते इत्यादि, अन्यदा कर्तृवदिड्विकल्पे द्वैरूप्यम् तदेव त्रीणि रूपाणि भवन्ति । लुङ्लिङोर्ध्वमि तु शुद्धइटि वा चिण्वदिट्यपि 'विभाषेटः' इति मूर्धन्यविकल्पनात्पञ्च रूपाण्युदाहार्याणि, एवं कर्मकर्तर्यपि लुङेकवचने 'अच कर्मकर्तरि' इति चिणसिचौ द्वौ भवतः, सिचश्च वा चिण्वदिट् तदभावे शुद्धेड्विकल्पश्चेति चातूरूप्यम् । असावि असविष्ट, असाविष्ट असोष्टेति । गोषु प्रसूतः, गवां प्रसूतः स्वामीश्वरेत्यादिना शेषे षष्ठीसप्तम्यौ भवतः । तत्र षष्ठी सप्तम्या मा बाधीति पक्षे केवलमभ्यनुज्ञापकत्वेन पुनर्विधीयत इति प्रतिपद-

१ विभाषेट इति मूर्धन्येति अधिकम् ३ । पु ।
२ भावादिति नास्ति ३ । ४ पु ।

विधानाभावाद्गोप्रसूत इति समासोपि भवति । ईश[1]ताावयमर्थः प्रपञ्चितः । पुत्रसूः प्रसूः । सत्सूद्विषेत्यादिना कर्म्मण्युपसर्गेपि उपपदे क्विप्, तत्र यद्यपि सुपीति चानुवर्त्तते तथापि तस्याकर्मकैरेव सम्बन्ध इति गृहे सूत इत्यत्र क्विप् न भवति, अयं च क्विब्विधिर्द्विषा साहचर्यात् लुग्विकरणत्वेप्यस्यैव भवति न तु षूङ् प्राणिप्रसवइति दैवादिकस्य, नापि षू प्रेरणे इति तौदादिकस्य । सूत्वा । 'श्र्युकः किती' तीण्निषेधः । सूतः, सूतवानित्यत्रानेन वा'यस्य विभाषे'ति वा इडभावः । सूतका । सूतिका । स्वार्थे कः । 'केण' इति टापो ह्रस्वः । वा सूतकापुत्रकावृन्दारकाणामित्यत इत्वविकल्पः । प्रसवः, 'ऋदोरप्' घञोपवादः । सुषूतिः । निःषूतिः । विषूतिः । दुःषूतिः 'सुविनिर्दुर्भ्यः सुपिसूतिसमा' इति स्वादिभ्यः परस्य सुप्यादेः सकारस्य षत्वम् । सुपीति कृतसम्प्रसारणस्य स्वपेर्निर्देशः । इतरत्र स्वरूपग्रहणमिति अति[2]सूत इत्यत्र 'सात्पदाद्यो'रिति षत्वनिषेध एव भवति । सूरि । षूङः क्रिरिति क्रिः । स्त्रीविवक्षाया कृदिकाराद्वा ङीषित्यात्रेय' । सूरः । सुसूधागृधिभ्यः क्रनिति क्रन्, सूनुः, सुवः किदिति नुप्रत्ययः, कित्त्वान्न गुणः, अलुग्विकरणात्स्माद्वा व्युत्पाद्यः, पुमान्, अस्माद्धातोर्डुम्सुन्प्रत्ययः, सकारस्य षकारः । डकारष्टिलोपार्थः । अकार उच्चारणार्थः, अन्त्य उकार उगित्कार्यार्थः, नकारः स्वरार्थः । 'पुंसोऽसुङि'ति सर्वनामस्थानेऽसुङादेशो ङित्त्वादन्त्यस्य, उकार उच्चारणार्थः । प्रत्ययस्योदित्त्वात्सर्वनामस्थाने नुम् सिद्धः, 'सान्तमहतः संयोगस्ये'ति संयोगात्पूर्वस्यासम्बुद्धौ सर्वनामस्थाने दीर्घः, सम्बुद्धौ तु असुङि नुमि संयोगान्तलोपे हे पुमन्निति, पुमासावित्यादौ 'नश्चापदान्तस्य झली'त्यनुस्वारः । अजादावसर्वनामस्थाने पुंस इत्यादि । हलादौ तु पूर्वस्य पदत्वात्संयोगान्तलोपे मो नुस्वारे तस्य च 'वापदान्तस्ये'ति यथि वा परसवर्णे पुम्भ्या पुम्भ्यामित्यादि । पुंस्वित्यत्र 'नुम् विसर्ज्जनीयशर्व्यवायेपी'ति षत्वं न भवति । नुमो योनुस्वारस्तस्यैव नुम्ग्रहणेन तत्र ग्रहणात् । अयमसुङादेशोङ्गाधिकारविहितत्वात्तदन्तस्यापि भवतीति

[1] ईशाविति ब पु ईष्टाविति ३ । पा ।  [2] सुइति । २ । ३ । ४ । पु ।

परमपुमानित्यादावपि भवति । बहवः पुमांसो यस्यामिति बहुव्रीहौ बहुपुंसीत्यत्र अन्तर्वर्त्तिनः सर्वनामस्थानस्य लुका लुप्तत्वात्प्रत्ययलक्षणाभावाच्च सर्वनामस्थानपरत्वेनासुङ् न भवति । डुम्सुन्प्रत्ययस्योगित्त्वात् ङीप् । उरःप्रभृतिषु पुमानित्येकवचनान्तपाठात्तेनैव समासे नित्यं कप् । अन्यत्र 'शेषाद्विभाषे'ति विकल्प इतीह कबभावः, यदा कप् तदा प्रातिपदिकस्य कबन्तत्वेनोगिदन्तत्वाभावान्नात्र भवति । बहुपुंस्केत्यत्र सकारस्य संयोगान्तलोपे नकारस्य संपुंकानां स इति सः, 'पुमः खय्यम्परे' इति रुत्वापवादः सकारः । अत्रानुनासिकः पूर्वस्य तु वेत्युकारस्य वानुनासिकादेशः । नन्वत्र रुप्रकरणस्य रुणा सह सन्नियोगप्रतिपन्नार्थत्वात्कथमत्रानुनासिकः । नैष दोषः । रुप्रकरणे यद्विधीयते तदुपलक्षणार्थत्वाद्रुग्रहणस्य, यदा नानुनासिकस्तदा 'अनुनासिकात्परोऽनुस्वारः' इत्युकारात्परोऽनुस्वारः, अत्रान्यशब्दस्याध्याहारेणानुनासिकादन्यो वर्णस्ततः परोऽनुस्वार इति सूत्रार्थः । एवं नपुंसकेऽप्यन्तर्वर्तिनः सर्वनामस्थानस्य लुप्तत्वादसुङ् न भवति, बहुपुमन् नगरमिति, सकारस्य संयोगान्तलोपः । बहुपुंसी इत्यत्रान्तर्वर्तिनीं लुप्तां विभक्तिमाश्रित्य प्रत्ययलक्षणेन तदन्तत्वेन पदत्वात्सकारस्य संयोगान्तलोपो न शङ्क्यः, उत्तरपदत्वे चापदादिविधावित्युत्तरखण्डस्य प्रत्ययलक्षणेन पदत्वनिषेधात् । यद्वात्र भ[1]सञ्ज्ञया पदसंज्ञाबाधे नैव सलोपप्रसङ्गः । बहुपुमांसीत्यत्र शेः सर्वनामस्थानत्वेनासुङ् । तृतीयादिषु पुंल्लिङ्गवत् । पौंस्नम् । अपत्यादौ स्त्रीपुंसाभ्यामिति स्नञ्, पुंस्त्वं पुंस्ता, नञ्स्नञौ त्वतलोर्न बाधकाविति न्यायता युक्तम् । पुंवदिति निपातनाद्वतिः, स्त्री च पुमांश्च स्त्रीपुंसौ । अचतुरादावितरेतरयोगे द्वन्द्वेऽजन्तो निपातितः, तत्पुरुषे तु स्त्रियाः पुमान् स्त्रीपुमानित्येव । न स्त्री पुमान् नपुंसकः, नभ्राडित्यादौ निपातनान्नञः प्रकृतिभावः । स्त्रीपुंसशब्दस्य च पुंसकादेशः ॥ २१ ॥

---

१ भसंज्ञाया पदसंज्ञाया बाधादिति ४ पु. भसंज्ञया पदसंज्ञाया बाधनादिति २ पु. पा. ।

विधानाभावाद्गोप्रसून इति समासोपि भवति । ईश[1]तावयमर्थः प्रपञ्चितः । पुत्रसूः प्रसूः । सत्सूद्विषेत्यादिना कर्म्मण्युपसर्गेपि उपपदे क्विप्, तत्र यद्यपि सुपीति चानुवर्त्तते तथापि तस्याकर्मकेरेव सम्बन्ध इति गृहे सूत इत्यत्र क्विप् न भवति, अय च क्विबिधिर्द्विषा साहचर्यात् लुग्विकरणत्वे प्यस्यैव भवति न तु षूङ् प्राणिप्रसवइति दैवादिकस्य, नापि षू प्रेरणे इति तौदादिकस्य । सूत्वा । 'श्र्युकः किती' तीपिनषेधः । सूतः, सूतवानित्यत्रानेन वा'यस्य विभाषे'ति वा इडभावः । सूतका । सूतिका । स्वार्थे कः । 'केण' इति टापो ह्रस्वः । वा सूतकापुत्रकावृन्दारक ग् इत्वविकल्पः । प्रसवः, 'ऋदोरप्' घञोपवादः । सुषूतिः । निःषूतिः । विषूतिः । दुःषूतिः 'सुविनिर्दुर्भ्यः सुपिसूतिसमा' इति स्वादिभ्यः परस्य सुप्यादेः सकारस्य षत्वम् । सुपीति कृतसप्रसारणस्य स्वपेर्निर्देशः । इतरत्र स्वरूपग्रहणमिति अति[2]सूत इत्यत्र 'सात्पदाद्यो' रिति षत्वनिषेध एव भवति । सूरि । षूङः क्रिरिति क्रि. । स्त्रीविवक्षायां कृदिकाराद्वा ङीषित्यात्रेय' । सूरः । सुसूधागृधिभ्यः क्रन्निति क्रन्, सूनुः, सुवः किदिति नुप्रत्ययः, कित्वान्न गुणः, अलुग्विकरणत्वाद्वा व्युत्पाद्यः, पुमान्, अस्माद्धातोर्डुमसुन्प्रत्ययः, सकारस्य षकारः । डकारष्टिलोपार्थः । अकार उच्चारणार्थः, अन्त्य उकार उगित्कार्यार्थः, नकारः स्वरार्थः । 'पुंसोऽसुङि'ति सर्वनामस्थानेऽसुङादेशो ङित्वादन्त्यस्य, उकार उच्चारणार्थः । प्रत्ययस्योदित्त्वात् सर्वनामस्थाने नुम् सिद्धः, 'सान्तमहतः सयोगस्ये'ति सयोगात्पूर्वस्यासबुद्धौ सर्वनामस्थाने दीर्घ, सबुद्धौ तु असुङि नुमि सयोगान्तलोपे हे पुमनिति, पुमामावित्यादौ 'नश्चापदान्तस्य झली'त्यनुस्वारः । अजादावसर्वनामस्थाने पुंस इत्यादि । हलादौ तु पूर्वस्य पदत्वात्सयोगान्तलोपे मो नुस्वारे तस्य च 'वापदान्तस्ये'ति यथि वा परसवर्णे पुभ्या पुम्भ्यामित्यादि । पुंस्वित्यत्र 'नुम् विसर्ज्जनीयशर्व्यवायेपी'ति षत्व न भवति । नुमो योनुस्वारस्तस्यैव नुम्ग्रहणेन तत्र ग्रहणात् । अयमसुङादेशोङ्गाधिकारविहितत्वात्तदन्तस्यापि भवतीति

१ ईशाविति ३ पु ईष्टाविति ३ । पा । २ सुइ ति । २ । ३ । ४ । पु ।

परमपुमानित्यादावपि भवति । बहवः पुमांसो यस्यामिति बहुव्रीहौ बहुपुंसीत्यत्र अन्तर्वर्तिनः सर्वनामस्थानस्य लुका लुप्तत्वात्प्रत्ययलक्षणाभावाच्च सर्वनामस्थानपरत्वेऽप्यसुङ् न भवति । उगितश्चेत्यस्योगित्वात् ङीप् । उरःप्रभृतिषु पुमानित्येकवचनान्तपाठात्तेनैव समासे नित्यं कप् । अन्यत्र 'शेषाद्विभाषे'ति विकल्प इतीह कबभावः, यदा कप् तदा प्रातिपदिकस्य कबन्तत्वेनोगिदन्तत्वाभावादाब् भवति । बहुपुंस्केत्यत्र सकारस्य संयोगान्तलोपे नकारस्य सपुकानां स इति सः, 'पुमः खय्यम्परे' इति रुत्वापवादः सकारः । अत्रानुनासिकः पूर्वस्य तु वेत्युकारस्य वानुनासिकादेशः । नन्वत्रग्रहणस्य रुणा सह सन्नियोगप्रतिपत्त्यर्थत्वात्कथमत्रानुनासिकः । नैष दोषः । रुप्रकरणे यद्विधीयते तदुपलक्षणार्थत्वादत्रग्रहणस्य, यदा नानुनासिकस्तदा 'ऽनुनासिकात्परोऽनुस्वारः' इत्युकारात्परोऽनुस्वारः, अत्रान्यशब्दस्याध्याहारेणानुनासिकादन्यो वर्णस्ततः परोऽनुस्वार इति सूत्रार्थः । एवं नपुंसकेऽप्यन्तर्वर्तिनः सर्वनामस्थानस्य लुप्तत्वादसुङ् न भवति, बहुपुमन् नगरमिति, सकारस्य संयोगान्तलोपः । बहुपुंसी इत्यत्रान्तर्वर्तिनीं लुप्तां विभक्तिमाश्रित्य प्रत्ययलक्षणेन तदन्तत्वेन पदत्वात्सकारस्य संयोगान्तलोपो न शङ्क्यः, उत्तरपदत्वे चापदादिविधाविन्युत्तरखण्डस्य प्रत्ययलक्षणेन पदत्वनिषेधात् । यद्वात्र भसंज्ञया पदसंज्ञाबाधे नैव सलोपप्रसङ्गः । बहुपुमांसीत्यत्र शेः सर्वनामस्थानत्वेनासुङ् । तृतीयादिषु पुंल्लिङ्गवत् । पौंस्नम् । अपत्यादौ स्त्रीपुंसाभ्यामिति स्नञ्, पुंस्त्वं पुंस्ता, नञ्स्नञौ त्वतलोर्न बाधकाविति न्यायतः सुकरम् । पुंवदिति निपातनाद्वृत्तिः, स्त्री च पुमांश्च स्त्रीपुंसौ । अचतुरादाविति इतरेतरयोगे द्वन्द्वेऽजन्तो निपातितः, तत्पुरुषे तु स्त्रिया पुमान् स्त्रीपुमानित्येव । न स्त्रीपुंसौ नपुंसकः, नभ्राडित्यादौ निपातनान्नञः प्रकृतिभावः । स्त्रीपुंसशब्दस्य च पुंसकादेशः ॥ २१ ॥

---

१ भसंज्ञाया पदसंज्ञाया बाधादिति ४ पु. भसंज्ञया पदसंज्ञाया बाधनादिति ३ पु. पा. ।

शीङ् स्वप्ने ॥ शेते । शयाते । शेरते, शेषे, शेध्वे । शये, शेवहे । शीङः सार्वधातुकइति गुणः, 'शीङो रुडि'ति भादेशस्याच्छब्दस्य रुट् अस्य परादित्वादिगन्तत्वमविहितमिति शीङः सार्वधातुक इति गुणः सिद्धः,[1] शिश्ये, शिश्याते, शिश्यिषे । शिश्यिढ्वे । शिश्यिध्वे । शिश्ये, शिश्यिवहे । एरनेकाच इति यणादेशः । अत्र यदुक्तव्य तदीर गताविव्यत्रोक्तम् । ध्वमि 'विभाषेट.' । शयिता, शयिष्यते । शेताम् । शयाताम् । शेरताम् । शेष्व, शेध्वम् । शयै । शयावहै । अशेत । अशयाताम् । अशेरत, अशेथाः । अशयि । अशेवहि । शयीत । शयीथाः .शयीय । आशिषि शयिषीष्ट । शयिषीष्ठाः शयिषीढ्वम् । शयिषीध्वम् । शयिषीय । अशयिष्ट, अशयिष्ठाः । अशयिध्वम् अशयिढ्वम् । अशयिषि । शिशयिषते, शाशय्यते, 'अयङ्यि क्ङिती'ति शीङो यकारादौ क्ङित्ययङ्, स च ङित्वादन्त्यस्य, परत्वादस्मिन्कृते द्वित्वम् । शेशयीति, शेशेति । शेशीतः, शेश्यति । शीङ इति सानुबन्धकनिर्देशान्न गुणो नापि रुट्, व्यतिशेश्यतइति । पिद्वचने तु 'सार्वधातुकार्द्धधातुकयो'रिति गुणः । शेशीयते भवतेत्यत्र भावे लकारे यकि शीङ इति सानुबन्धनिर्देशादयङ् न भवति । शाययति देवदत्तम्, अशीशयत् । अणावकर्मकादिति चित्तवत्कर्तृकत्वे नित्य परस्मैपदम् । अन्यदा तूभयम् । अकर्मकत्वात्प्रयोज्यस्य कर्मत्व, ग्रामोधिशय्यते । अधिशीङ्स्थासामित्याधारस्य कर्मत्वात्[2]कर्मणि लादयो भवन्ति, यकारादित्वादयङादेशः, भावे शय्यते देवदत्तेन कालभावाध्वगन्तव्यदेशेषु कर्मस्वासिवद्भावे कर्मणि च लादयो भवन्ति शय्यते मास देवदत्तेन शय्यते मासो देवदत्तेनेत्यादि । अस्योपादान भवतावनुगन्तव्यं, स्यादिषु चिण्वदिटि शायिष्यतइत्याद्युदाहार्यं, तदभावे कर्तृवदेव रूपं, कर्मकर्त्तर्यप्येवम् । लुङ्येकवचने 'ऽचः कर्मकर्त्तरी'ति चिण्सिचौ, सिचः पक्षे चिण्वदिट्चेति त्रैरूप्यम् । अत्यशायि अत्यशायिष्ट अत्यशयिष्टेति । विशयी देशविशेषः 'विशयी देश' इति ग्रहादि.

१ गुणसिद्धिरिति २ । ३ । ४ । पु पा० ।
२ तत्र लकार इति २ । ४ । पु पा ।

पाठाण्णिनिः, वृद्ध्यभावश्च । खे शयः खशयः । 'अधिकरणे शेतेः' इत्यच् । 'शयवासवासिष्वकाला' दित्यकालवाचिनः पूर्वपदात्सप्तम्या वाऽलुक् कालवाचित्वे तु पूर्वाह्णशय इति लुगेव, । पार्श्वाभ्यां शेत इति पार्श्वशयः । उरसा शेते उरःशयः, 'पार्श्वादिषूपसङ्ख्यान' मित्यच्, उत्तानश्शेते उत्तानशयः । एवमूर्ध्वशयः । 'उत्तानादिषु कर्तृषु' इत्यच् । दिग्धेन सह शेते इति दिग्धसहशयः, 'दिग्धसहपूर्वाच्च' इत्यच् । दिग्धसहशब्दयोर्मयूरव्यंसकादित्वादस्मादेव निर्देशाद्वा तत्पुरुषः । तेन शयशब्दस्योपपदसमासः । सप्तमीनिर्देशाभावेऽप्युपपदाधिकारे विधानात्सुपीत्यनुवर्तनाद्वा उपपदत्वं दिग्धसहशब्दस्याविरुद्धम् । स्यादेवमुपपदसमास इति । गिरिशः । 'गिरौ डश्छन्दसि' इति डे टिलोपः, संज्ञाशब्दत्वाद्भाषायामप्येष प्रयुज्यते तु[1]रापाडिति वेत्यात्रेयः । हरदत्तस्तु लोमादिलक्षणेन शप्रत्ययेन भाषायामपि भवति गिरिश इति, भाष्ये त्वि[2]दं वचनं प्रत्याख्यातं नहि तो वेति । शयालुः । आलुचि शीङो ग्रहणमित्यालुच् । शयितः । मतिबुद्धीत्यत्र चकारस्यानुक्तसमुच्चयार्थत्वाद्वर्तमाने क्तः, अतिशयितो गुरुः शिष्यः अतिशयितो गुरुः शिष्येण । गत्यर्थाकर्मकेति कर्तृकर्मणोः क्तः । उपसर्गवशात्सकर्मकोऽयं, तदर्थ एव हि पाठः, सेटो निष्ठाया निष्ठाशीङिति कित्त्वनिषेधाद्गुणः । सानुबन्धकनिर्देशाद्यङ्लुकि कित्त्वमेवेति शेश्यितः इत्येरनेकाच इति यणेव भवति । तव विशायस्तवोपशायः, शयनं तव प्रा[3]प्तावसरमित्यर्थः, 'व्युपयोः शेतेः पर्याये' इति घञ् । पर्यायादन्यत्रोपशय इत्यच् । पूर्वसूत्रादनुपात्ययइत्यनुवृत्त्यैव पर्यायत्वे सिद्धे पुनः पर्यायग्रहणा 'दभिविधौ भावइनुणि' तीनुणं परमपि बाधित्वाऽभिविधावपि घञेव भवति उपशायो वर्ततइति । अभिविधिरभिव्याप्तिः, पर्यायशयनं सर्वैस्त्रिकमित्यर्थः । शेरतेऽस्मिन्नङ्गुलय इति शयः पुंसि संज्ञायामिति घः । शय्या । संज्ञायां समजनिपदेत्यादिना

१ तुरापाडितिवत् इति ३ । पु तुरापाडिवेति ४ । पु॰ पा॰ ।
२ इदमिति २ । ४ । पु पा॰ ।
३ पर्यायावसरमिति ३ । पु उपरि लिखितः पाठः ।

ऽधिकरणे स्त्रियां क्यप् । शयनीयम् । बाहुलकादधिकरणे ऽनीयर् । सुख शयन पृच्छति सौखशायनिकः, 'पृच्छतौ सुस्नातादिभ्य' इति ठक् । अतिशये भवमित्यातिशायिकम् । अध्यात्मादित्वाठ्ठञ्, अनुशतिकादित्वादुभयोरुदाहरणयोरुभयपदवृद्धिः । व्याप्तमातिशयिकेन रसेनेति माघप्रयोगश्चिन्त्यः । अतिशायन, ल्युट्, अतिशायनइति निपातनाद्दीर्घः । अबाधकान्यपि निपातनानीत्यतिशयनमित्यपि भवति । संशयमापन्न. सांशयिकोर्थ. । 'संशयमापन्न' इति ठक्, अत्र यद्यपि कर्मवत् कर्तुरपि संशयापन्नत्वमस्ति तथापि संशयादिति पञ्चम्या निर्देष्टव्ये प्रकरणमिद्धाया अपि द्वितीयाया. संशयमिति शब्देन पुनरुपादान कर्मणोऽत्र प्राधान्यख्यापनार्थमिति तत्रैवाय प्रत्ययः । पूज्यः प्रतीक्ष्यः सांशयिकः संशयापन्नमानस इति वदन्निघण्टुकारस्तु सूत्र साधारण मन्यते, एतदात्रेयन्यासकारपदमञ्जरीकारादयो न सहन्ते । शोभनः शयोस्याः सुशयिका । कपि ह्रस्वे प्रत्ययस्थात्कादितीत्वम्, उदीचामातः स्थानइति निषेधस्तु न भवति, यकपूर्वत्वे धात्वन्तयकोः प्रतिषेध इति । शयुरजगरः । भृमृशीन्युप्रत्यय. । शयानकः । स एव, आनकन् शीङ्भियइत्यानकन् । शेवा निङ्गाकृतिः, शेवायह्वतिवचन्तो निपात्यते । शेव सुखम्, इणशीभ्यां वन्निति वन् । शीधुः । शील शैवाल, शैवल, शीङो धुग्लक्वालञ्वलञ इति धुग्लक्वालञ्वलञः प्रत्ययाः । अपरे शीङः स्युगिति पठन्तः प्रत्यय द्वितीयादि मन्यन्ते । शीङो धुगित्येव सूत्रम् । अन्ये तूहिताः सह पठन्ते । यदाहुरात्रेयादयः । बाहुलकाद्वालञ्वलञाविति । शीलशब्दः शीलतेर्वा । शेवलमिति बाहुलकाद्वलञ् । शेप[1], शेपसी, वृञ्शीङ्भ्यां रूपस्वाङ्गयोः पुट् चेत्यसुन् पुडागमश्च यथासख्य रूपे स्वाङ्गे च । अकारान्तस्तु शेपशब्दः पप्रत्यये । उक्त च कैयटपदमञ्जर्योरकारान्तोपि शेपशब्दोस्ति । यथा च वार्तिकमपि पठ्यते शुनः शेपपुच्छलाङ्गूलेष्विति । शिखा । शीङो निद्ध्रस्वश्चेति खप्रत्ययो निद्ध्र

१ अव.—आतिशायिकइति च पुल्लिङ्ग पाठ २ । ४ पु ।

स्वश्च धातोः, शिखावलो मयूरः । 'दन्तशिखात्संज्ञाया'मिति मत्वर्थीयो वलच् । शिखी 'व्रीह्यादिभ्यश्चे'ति इनिः । शिखावलं नगरं, 'शिखाया वलजि'ति चातुरर्थिको वलच् । शिनिः क्षत्रियविशेषः, नित्य्यो ह्रस्व इति कार्त्तकौजप इत्यत्र न्यासे व्युत्पादितम् ॥ २२ ॥ आत्मनेभाषा-वुदात्तौ ॥

यु मिश्रणे ॥ एतदादयस्त्रौत्यन्ता उदात्ता उदात्तेतः । यौति युतः, युवन्ति । यौषि । यौमि । 'उतो वृद्धिर्लुकि हली'ति हलादौ पिति सार्वधातुके वृद्धिः । अजादौ क्ङित्युवङ् युयाव । युयुवतुः । युय-विथ । युयुवथु । युयुव । युयाव । युयव । युयुविव । 'श्र्युकः किती'तीण्निषेध क्रादिनियमेन बाध्यतइत्युक्तं यविता । यविष्यति । यौतु । युतात् । युताम्, युवन्तु । युहि । हेरपित्त्वात्र गुणो नापि वृद्धिः, यवानि । यवाव । आटि पित्त्वेप्यहलादित्वाच्च वृद्धिः । अयौत् । अयुताम् । अयु-वन् । अयौः । अयवम् । युयात युयाताम् युयुः । युयाः युयातं युयात, युयाम्, युयाव । पिद्वचनेषु यासुटो ङित्त्वेन पित्त्वङित्त्वे भवतीति पित्त्वा-भावात्र वृद्धिर्नापि गुणः । आशिषि यूयात् । यूयास्ताम् । अकृत्सार्वधा-तुकयोरिति दीर्घः अयावीत् । अयाविष्टाम् । अयावीः । अयाविषम् सिचि वृद्धिः । यियविषति । सनीवन्तर्द्धेत्यादिना सनो वेडागमः । युयूषति । अनयोर्द्विर्वचने चीति स्थानिवत्त्वाद्युशब्दो द्विरुच्यते । ओः पुयण्ज्योनी-त्वम् । इडभावे युयूषति । 'इको झलि'ति सनः कित्त्वान्न गुणः । अज्झनेति दीर्घः । योयूयते । योयवीति । योयोति । उतो वृद्धिरित्यत्र नाभ्यस्तस्येत्य-नुवृत्तेर्न वृद्धिः । यावयति । अयीयवत् । णौ कृतस्य स्थानिवत्त्वाद्युश-ब्दस्य द्विर्वचने ओः पुयण्ज्योनीत्वे 'दीर्घो लघो'रिति दीर्घः । कर्मणि । यूयते, यूयताम् । अयूयत । यूयेत यकि अकृत्सार्वधातुकयोरिति दीर्घः । स्यादिषु चिण्वदिट्पक्षे याविष्यते । अयाविषाताम् । याविषीष्ट, या-

१ प्रत्यये इति २ । पु पा । २ पदिनाविति २ । पु पा ।
३ आदेशाविति नास्ति २ । पु । ४ वृद्धावादिति २ पु पा ।
५ वकारादिति २ पु पा । ६ भावति ३ । पु पा ।

विता । अन्यदा यविष्यते । अयविषाताम् । यविषीष्ट । यविताेत्यादि, लुङ्लिङो ध्वमि मूर्द्धन्यविकल्पाव्यानुरूप्य, लुङ्येकवचने ऽ चः कर्मकर्त्तरीति पक्षे चिण् । तस्य च ला चिण्वदिट् । अयावि । अयाविष्ट । अयविष्टेति द्वैरूप्यम् । याव्यम् । आस्युवपीत्यादिना ण्यत् । वृद्धौ धातोस्तन्निमित्तस्यैवेत्यावादेशः । यव्यमिति युनातेर्यति । सानुबन्धकत्वादिह नाय ग्रहणमिति न्यासे, योत्रम्, दाम्नीत्यादिना ष्ट्रन् । सयावः । 'समि युद्रुदुव' इति घञ् । समोऽन्यत्र प्रयवः । 'ऋदोरप्' । उद्यावः । उदिश्रयतियौतीति घञ् । यौतीतिनिर्देशाद् युनातेरुद्यव इति । उद्यावो भक्ष्यविशेषः । अ प्रायन्यायोद्यावेति सञ्ज्ञाया करणाधिकरणयोर्घञि निपात्यते । यूतिः । ऊतियूतीतिक्तिनि दीर्घत्वमन्तोदात्तत्व च निपात्यते । ग्रहयुतिरित्येतत्तु युनाते. । यूतिरितिनिपातन यौतेरेवेति वृत्तिन्यासयोः । यौत्यत्र रसादिकमिति यव । पुसि सञ्ज्ञायामिति घ, यवनः । नद्यादित्वाल्ल्युः । दुष्टो यवो यवानी । यवनाना लिपिर्यवनानी । इन्द्रवरुणेत्यादिना ङीषानुकौ । तत्र यवाद्दोषे । यवनाल्लिप्यामित्युक्तम् । यवनीमुखपद्मानामितिप्रयोगः पुयोगलक्षणे ङीषि । यवाना भवन क्षेत्र यव्य, यवक्य, 'यवयवकषष्टिकाद्य'दिति यत् । यव एव यवकः । यवस्य विकारो यावः । स एव यावकः । 'यावादिभ्यः कन्'िति कन् । रञ्जनद्रव्ये यावकमिति सञ्ज्ञाया ण्वुलि[1] । यवमान् । मादुपधायाश्चेति वत्वमयवादिभ्य इति निषेधान्न भवति । युत्वा युतः । 'श्युक. किती'तीण्निषेधः । युतमित्यत्र 'यस्य विभाषे'ति वा नेट् । यूपः । कुयुभ्या चेति पप्रत्ययो दीर्घश्च । यूका । अजियुधूनीभ्यो दीर्घश्चेति कनि दीर्घः, यवसम् । ऋतन्यञ्जीत्यादिना सप्रत्यय, यवासः । 'अन्येषामपि दृश्यत' इति दीर्घ । युवा । कनिन्युवृपीत्यादिना कनिन् । भसञ्ज्ञायां 'श्वयुवमघोनामतद्धित' इति सम्प्रसारणे यूनइत्यादि, 'न सम्प्रसारणे सम्प्रसारण'मिति सम्प्रसारणनिषेधः पूर्वस्य । यूनो भावकर्मणी यौवन यौवनिका, 'हायनान्तयुवादिभ्योण्' 'द्वन्द्वमनो-

१ ण्वुलिति २ पु॰ पा॰ ।

ज्ञादिभ्यश्चेत्यण्वुञ्' स्वभावाद् वुञ् स्त्रियां. श्वयुवेति सम्प्रसारणमनङ्गित्वन्निषेधान्न भवति । 'नस्तद्धिते' इति टिलोपोऽपि न भवति, 'अन्' प्रकृत्यादि राजन्यमनुष्ययुवानः' इति चाण्वुञो प्रकृतिभावात् । यविष्ठः यवीयान् स्थूलदूरेत्यादिनेष्ठेयसुनोर्यणादिपरलोपे पूर्वस्य च गुणः । कनिष्ठः कनीयान्, 'युवाल्पयोः कनन्यतरस्याम्' इति वा कनादेशे 'प्रकृत्यैकाजिति प्रकृतिभावः । यवयति । कनयति । णाविष्ठवद्भावेन यणादिलोपगुणौ, 'युवाल्पयोः' इति कनादेशश्च पक्षे. भाष्यकारप्रयोगाद् वृद्ध्यभावः । स्त्रियां 'यूनस्तिः' इति तिप्रत्यये युवतिः. सर्वतोऽक्तिन्नर्थादिति वा ङीषि युवतीति । युवतीः पश्येत्यादौ लिङ्गविशिष्टपरिभाषया श्वयुवेति सम्प्रसारणं न भवति. श्वादीनां प्रसारणे नकारान्तग्रहणमनकारान्तप्रतिषेधार्थमित्युक्तत्वात् । तिप्रत्यये यूनः पदत्वान्नलोपः । युवतीनां समूहो यौवनम् 'भिक्षादिभ्योऽण्' इत्यण् । युवत्या भावकर्मणी यौवनं, यौवनिका, । लिङ्गविशिष्टपरिभाषया हायनान्तेत्यण् मनोज्ञादित्वाद् वुञ् च । 'भस्याढे तद्धिते' इति पुंवद्भावः सर्वत्र, भिक्षादिषु युवतिशब्दस्य पाठसामर्थ्यात्पुंवद्भावो नेति वृत्तौ, सामर्थ्यं च यदि स्यात्पुंवद्भावः 'भस्याढे तद्धिते' पुंवद्भावः सिद्धश्च प्रत्ययविधाविति प्रत्यये भाविनि पूर्वमेव पुंवद्भावविधानात् युवशब्दस्य च कनिनन्तत्वेनाद्युदात्तत्वात् 'तस्य समूहः' इत्येवाणि सिद्धे पुनः पाठो[3]ऽनर्थकः, पुंवत्त्वाभावे तु युवतिशब्दस्य प्रत्ययस्वरेणान्तोदात्तत्वादनुदात्तादेरित्यञो बाधनार्थं पाठो युज्यते । यथा तु वार्त्तिकं तथा पुंवद्भाव इष्यते । यदाह । भिक्षादिषु युवतिग्रहणानर्थक्यं पुंवद्भावस्य सिद्धत्वात्प्रत्ययविधाविति । युवखलतिः. युवा खलतिः, युवतिः खलतिः । 'युवा खलतिपलितवलिनजरतीभिः' इति विशेषणसमासः । लिङ्गविशिष्टपरिभाषया युवतिशब्दस्य ग्रहणं. तस्य पुंवत्कर्मधारयेति पुंवत्त्वम्, एवं युव-

१ इत्यन्तमर्थविवरण इति ह पु॰ पा ।
२ इत्येकवृत्त्यधिक वृत्ति नास्ति ह पु ।
३ अनर्थक इति ह पु नास्ति ।

आनविग्राः आनविरे । आनूनूयते । यङ्लुक्यप्ययन्तङ् भवति । आनोनुते । दीर्घान्तोय तुदादौ ॥ २५ ॥

टुक्षु शब्दे ॥ क्षौति ॥ चुक्षाव । क्षवितेत्यादि यौतिवत्, विक्षावः । 'वौ क्षुश्रुव' इति घञ्, क्षवथुः । 'ट्वितो ऽथुच्' । क्षुमा अतसी । अर्त्तिस्तुस्त्यादिना मनिन् । बाहुलकान्न गुणः । क्षुरम् । ऋज्र-इत्यादिना रन् ॥ २५ ॥

क्ष्णु तेजने ॥ क्ष्णौति । चुक्ष्णाव । चुक्ष्णुवतुः, चुक्ष्णुवुः. क्ष्णवितेत्यादि यौतिवत् । सङ्क्ष्णुते शस्त्र, सचुक्ष्णुवे । सङ्क्ष्णविता, सङ्क्ष्णविष्यते, सङ्क्ष्णुता, समक्ष्णुत, सङ्क्ष्णुवीत । सङ्क्ष्णुविषीष्ठ । समक्ष्णविष्ट, सचुक्ष्णुषतइति । 'समः क्ष्णुव' इति तङ् ॥ २६ ॥

ष्णु प्रस्रवणे ॥ स्नौति । सुष्णाव । स्नविष्यति । स्नौतु । अस्नौत् । स्नुयात् । स्नूयात् । अस्नावीत् । दुस्नूषति ॥ 'स्नौतिण्योरेवेति न षत्व, सोष्णूयते । सोष्णवीति । सोष्णोति । स्नावयति । असुष्णवत् । कर्मणि स्नूयते । सुष्णुवे, सुष्णुपे, सुष्णुध्वे । सुष्णुवहे । स्नोता । स्नोतासे । स्नोष्यते । स्नूयताम् । अस्नूयत । स्नूयेत स्नोषीष्ट । अस्नावि । अस्नोषातामित्यादि । 'स्नुक्रमोरनात्मनेपदनिमित्त' इत्यात्मनेपदेन समानपदस्यस्य स्नुक्रमिभ्या परस्य वलादेरार्द्धधातुकस्येण्निषेधः । प्रस्नवितेवाचरति प्रस्नवित्रीयतइत्यत्रात्मनेपदेन समानपदस्यत्वेपि निषेधात्प्रागेवान्तरङ्गत्वादिडागमः प्रवर्त्ततइति पदमञ्जर्यादौ [1]व्यवस्थापितम् । अस्माभिरपि क्रामतावेव प्रतिपादितम् । स्यादिषु पक्षे चिण्वदिटि स्नाविष्यतइत्याद्युदाहार्यम् । कर्मकर्त्तरि तु 'न दुहस्नुनमा यक्चिणा'विति यक्चिणौ न भवतः । प्रस्नुते गौः स्वयमेव । प्रस्नुता गौः स्वयमेव । प्रास्नुत गौः स्वयमेव । प्रस्नुवीत गौः स्वयमेव । प्रास्नोष्ट गौः स्वयमेवेति । ननु कर्मवदित्त्यतिदेशेन प्राप्ते 'चिण्भावकर्मणो रिति चिणि न दुहस्नुनमामिति प्रतिषिद्धेपि 'अचः कर्मकर्त्तरी'ति वैकल्पिकश्चिण् पक्षे कस्मान्न भवति । न चैवं सति स्नुग्रहणमनर्थकं स्यादिति वाच्यम् । तस्य यङ्निषेधार्थत्वेना-

[1] स्थापितमिति २ । पु० । पा ।

प्युपपत्तेः । नैष दोषः । अमवद्भिन्दनिर्देशेन नित्यं प्राप्तस्य चिणः स विकल्पः. अस्य तु न दुहस्नुनमामिति चिणो निर्देश एव निषिध्यते । तथा च वृत्तिः प्राप्तविभाषेयमिति । न चोभयत्रविभाषात्वफलेन चिणः प्रसङ्गः । आश्रीयमाणेप्युभयत्रविभाषात्वे यत परत्वात दुहस्नुनमामिति प्रतिषेध एव भविष्यति । अत्रात्रेयो न दुहस्नुनमामिति विकल्पस्यापि निषेध इत्याह सूत्रवृत्तौ च यक्चिणोरेव निषेध इति तस्याभिप्रायो मृग्यः । स्नुता । स्नुक्रमोरनात्मनेपदनिमित्ते इति क्तः । युप्रभृतय उदात्ता उदात्तेतः । नौतिस्त्वनुदात्तः. ॥ २८ ॥

ऊर्णुञ् आच्छादने ॥ उदात्त उभयतोभाषः । ऊर्णुते ऊर्णुवाते[1] । ऊर्णुवते । ऊर्णुवे । ऊर्णुवहे । ऊर्णुनुवे । ऊर्णुनुविषे । ऊर्णुनुविध्वे, ऊर्णुनुविढ्वे । ऊर्णुनुवे । ऊर्णुनुविवहे । असंयोगाल्लिडिति लिटः कित्त्वात गुणः । 'अजादेर्द्वितीयस्ये'ति नुशब्दस्य द्विर्वचनम् रेफस्य तु न न्द्राः इति न भवति । नोपधायाः णत्वं तु साहितिकम्, तच्च द्विर्वचनेऽसिद्धमिति कृते द्विर्वचने पूर्वस्य णत्वं परस्य तु व्यवधानात भवति । पूर्वत्रासिद्धीयमद्विर्वचन इत्येतत्तु 'भौसाभ्यासस्ये'ति लिङ्गात प्रवर्त्तत इति नैतावुक्तम् । सूचिसूत्र्यन्यत्र हरदत्तेनाप्ययमर्थः स्फोरितः[2] । ऊर्णोतेश्चोपसंख्यानमित्याम्प्रतिषेधः । ऊर्णविता । ऊर्णुविता । ऊर्णुविष्यते । ऊर्णविष्यते । 'विभाषोर्णोरि'तीडादेः प्रत्ययस्य पक्षे ङित्त्वात गुणः । ऊर्णुताम् । ऊर्णुष्व । ऊर्णवै । आटि गुणावौ । और्णुत । और्णुथाः । और्णुवि । और्णुवहि । ऊर्णुवीत । ऊर्णुवीयाताम् । ऊर्णुवीथाः, ऊर्णुवीय । ऊर्णुवीवहि । आशिषि । ऊर्णुविषीष्ट ऊर्णुविषीढ्वम् । ऊर्णुविषीध्वम् । ऊर्णुविषीय. ङित्त्वपक्षे उवङ् । अन्यदा तु[3] गुणः, ऊर्णविषीष्टेत्यादि और्णविष्ट । और्णविष्ठाः और्णविषि[4] । ङित्त्वपक्षे उवङुदाहार्यः । और्णुविष्टेत्यादि. । ऊर्णोति । ऊर्णौति । ऊर्णुतः । ऊर्णुवन्ति ।

१ नते इति २ पु पा । तस्यार्थाहेति ३ । ४ । पु॰ अधिकम् ।
२ स्फारित इति ३ । ४-पु पा । ३ तु गुण इति ३-४-पु॰ नास्ति ।
४ और्णुविष्ठा और्णुविषि इति ३ पु पा ।

ऊर्णौषि, ऊर्णोषि ऊर्णौमि । ऊर्णोमि । 'ऊर्णोतेर्विभाषे'ति हलादौ पिति सार्वधातुके पक्षे वृद्धिः, अन्यदा[1]गुणः । ऊर्णुनाव । ऊर्णुनुवतुः । ऊर्णुनुविथ । ऊर्णुनविथ । ऊर्णुनुविव । ऊर्णुनविव 'विभाषोर्णो'रिति ङित्त्वविकल्पनात् पक्षे उवङ् । अन्यदा गुणः । अन्यत्र 'असंयोगाल्लिट् कि'दिति नित्यं कित्त्वादुवङेव । ऊर्णुविता । ऊर्णविता । ऊर्णुविष्यति, ऊर्णविष्यति । ऊर्णौतु, ऊर्णोतु । और्णौत् । और्णुताम् । और्णोः । और्णवम् । ऊर्णोतेरित्यधिकृत्य 'गुणोऽपृक्त'इति वृद्ध्यपवादो गुणः । ऊर्णुयात् । ऊर्णुयाः । ऊर्णुयाम्, ङिच्च पिन्न भवतीति पित्त्वाभावान्न वृद्धिर्नापि गुणः । आशिषि ऊर्णूयादित्यादि, और्णावीत् । और्णावीः । और्णाविषम् 'ऊर्णोतेर्विभाषे'तीडादौ परस्मैपदपरे सिचि वा वृद्धिः, अन्यदा गुणोऽङित्त्वपक्षे, ङित्त्वपक्षे तूवङ् । और्णवीदौर्णुवीदित्यादि । ऊर्णुनूषति । ऊर्णुनविषति । ऊर्णुनुविषति । सनीवन्तेतीड्भावपक्षे 'इको झलि'ति कित्त्वम्, इटि तु पूर्ववद्वा ङित्त्वम्, ऊर्णोनूयते । सूचिमूत्रीत्यादिना यङ् । ऊर्णोनोति । 'उतो वृद्धिर्लुकि हली'ति वृद्धिः, नाभ्यस्तस्येति निषेधोऽभ्यस्तस्येहानङ्गत्वान्न भवति । 'ऊर्णोतेर्विभाषे'ति वृद्धिविकल्पस्तु श्तिपा निर्देशा[2]न्नाशङ्क्यः । अत एव 'गुणोऽपृक्त'इति गुणश्चापृक्ते, ऊर्णोनुवन्तीत्यत्रा'दभ्यस्तादि'त्यद्भावो न भवति, अभ्यस्तस्यानङ्गत्वात् । पारायणिकास्त्वङ्गस्येत्यनाश्रित्याद्भावमिच्छन्ति । अङ्गाधिकारः कथं बाध्येतेति तच्चिन्त्यम् । लुङि ऊर्णोतेरिति श्तिपा निर्देशाद्वृद्धिविकल्पो नेति नित्या सिचिवृद्धिर्भवति । और्णोनावीदित्यादि । 'विभाषोर्णो'रिति ङित्त्वपक्षे उवङ् । और्णोनुवीदित्यादि । ऊर्णावयति । और्णुनवत् । अत्र णौ कृतं स्थानिवदिति नुशब्दस्य द्विर्वचने उपधाह्रस्वत्वे 'दीर्घो लघो'रित्यभ्यासस्य दीर्घो न भवति, चङ्परे णौ यदङ्गं तस्य योऽभ्यास इति सूत्रार्थव्यवस्थापनात्, अत्र त्वङ्गावयवस्याभ्यासो न त्वङ्गस्य । ऊर्णुत्वा । श्युकः

१ वृद्ध्यभावः । अन्यत्राजादावुवङ्, इति २ पुस्तके उपरिलिखितः पाठः ।
२ न भवति यङ्लुकि २ पु उपरि लिखितः पाठः ।

क्त्वी'त्यनिट्त्वम्. अत्र यद्यप्येकाच इत्यनुवर्तते तथापि न दोषोऽस्य नुवद्भावात् । उक्तं च ॥

वाच्य ऊर्णोर्णुवद्भावो यङ्प्रसिद्धिः प्रयोजनम् ।
आमश्च प्रतिषेधार्थमेकाचश्चेडुपग्रहात् ॥

इति । ऊरु: 'ऊर्णोतेर्नुलोपश्च' इत्युप्रत्यये नुगन्तलोपः । उरुः । महति ह्रस्वश्चेति ह्रस्वश्च धातोः । रम्भेवोरू यस्याः सा रम्भोरूः । 'ऊरूत्तरपदादौपम्ये' इत्यूङ्प्रत्ययः । संहितोरूः । शफोरूः, वामोरूः । लक्षणोरूः, 'संहितशफलक्षणवामादेश्च' इत्यत्र संहितादूरूत्तरपदादूङ् प्रत्ययः, शफशब्दः खुरपर्यायः, संहितोरूः । हितेन सहितं संहितं, सहोरूः । सहशब्दस्य संहितवचन । 'संहितसहाभ्यां चे'त्यूङ् । अतिशयेनोरुर्वरिष्ठः । वरीयान् । उरोर्भावकर्मणी वरिमा, पृथ्वादित्वादिमनिच्, 'प्रियस्थिरे'त्यादिना वरादेशः । उरुमाचष्टे वारयती यत्र णाविष्ठवदिति वरादेशे वृद्धिः । टिलोपस्तु 'प्रकृत्यैकाजि'ति प्रकृतिभावान्न भवति । ऊर्णा । ऊर्णोतेर्ड इति डप्रत्ययः । ऊर्णायुः । 'ऊर्णाया युसि'ति मत्वर्थीयो युस्, 'सिति चे'ति पदत्वाद्भत्वाभावाद्यस्येति लोपो न भवति । ऊर्णा नाभौ यस्य स ऊर्णनाभः । 'अच्[1]प्रत्यन्ववे'त्यत्राजिति योगविभागात्समासान्तः । ङ्यापोः संज्ञाछन्दसोरिति ह्रस्वः ॥ २८ ॥

द्यु अभिगमने ॥ अनुदात्त उदात्तेत् । द्यौति, दुद्याव । दुद्युवतुः । दुद्यविथ । दुद्योथ । दुद्युव । दुद्याव । दुद्यव, दुद्युविव, क्रादिनियमादिट् । थलि भारद्वाजनियमाद्विकल्पः । द्योता । द्योष्यति । द्यौतु । द्युतात् । द्युहि, द्यवानि । अद्यौत् । अद्युताम् । अद्यौः । अद्यवम् । द्युयात् । द्युयाताम् । द्युयाः । द्युयाम् । आशिषि द्यूयादित्यादि, अद्यौषीत् । अद्यौष्टाम् । अद्यौषीः । अद्योषम् । दुद्यूषति । दोद्यूयते । दोद्योति । देद्यवीति । द्यावयति । अदुद्यवत् । द्युत्वा । द्युतः । केचिदस्य सेट्त्वमिच्छन्तीति धातुपारायणे । तत् 'उतो च रुस्नुवौ क्षुवन्तयोर्णौतिमध्ये युणुन्नुव' इत्युकारान्तसेट्परिगणने पाठाभावादिच्छामात्रम् ॥ २९ ॥

१ अचप्रत्यन्ववेत्यत्रेति नास्ति ङ पु ।

षु प्रसवैश्वर्ययोः ॥ अनुदात्त उदात्तेत् ॥ प्रसवोऽभ्यनुज्ञानमिति । ओमिति ब्रह्मा प्रसौति । सुषाव । सोतेत्यादि स्नुवत् असौषीदित्यत्र स्तुसुधूञ्भ्य इतीड्विकल्पो[1] न भवति यतस्तत्रोभयतो ञितोः[2] स्तुञ्धूञोः साहचर्यात् ञितः सुनोतेरेव ग्रहणं न पुनरस्याञितो लुग्विकरणस्यापि । सुषवी प्रसवशीला पचाद्यचि सुषामादित्वात्षत्वं गौरादित्वान्ङीष् । धात्वन्तराद्वा ॥ ३० ॥

कु शब्दे ॥ अयमप्यनुदात्त उदात्तेनः । कौति । चुकाव । चुकविथ । चुकोथ । चुकुविव । कोतेत्यादि[3] पूर्ववत् । चोकूयते । चोकोति । चोकवीतीत्यत्र 'न कवतेर्यङी'त्यभ्यासस्य कुत्वनिषेधः शपा निर्देशान्न भवति । कविः । 'अच इ'रितीप्रत्ययः । कवेः कर्म काव्यं, ब्राह्मणादिषु दर्शनात्ष्यञ् । अव्यक्ते शब्दे कवते इति गतं शपि । अयमनिट् चेति रौतेरनन्तरं नोक्तः ॥ ३१ ॥

ष्टुञ् स्तुतौ ॥ अनुदात्त उभयतोभाषः । स्तुते । स्तुवाते स्तुवते । स्तुषे । स्तुध्वे, स्तुवे स्तुवहे । तुष्टुवे । तुष्टुवाते, तुष्टुविरे, तुष्टुषे । तुष्टुध्वे । तुष्टुवहे । अभ्यासे खयः शेषः । क्रादिषु पाठादिडभावः । स्तोता । स्तोष्यते । स्तुताम् । स्तुवाताम् । स्तुष्व । स्तुध्वम् । स्तवै । अस्तुत । अस्तुवाताम्, अस्तुथाः, अस्तुवि, स्तुवीत । स्तुवीयाताम् । स्तुवीथा । स्तुवीय । आशिषि स्तोषीष्टेत्यादि । अस्तोष्ट, अस्तोषाताम् । अस्तोढाः । अस्तोढ्वम् । अस्तोषि, हलादौ सार्वधातुके शब्विषये यदा तुरुस्तुशम्यम इतीट् तदा स्तुवीते । स्तुवीषे स्तुवीध्वे । स्तुवीवहे, स्तुवीताम् । स्तुवीष्व । स्तुवीध्वम्, अस्तुवीत । अस्तुवीथाः, अस्तुवीध्वम् । अस्तुवीवहीति । लिङि सलोपे ऽहलादित्वान्नेट् प्रसङ्गः । अन्यत्र सार्वधातुके विकरणेन व्यवधानान्नै[4]वास्तीट प्राप्तिः । स्तौति । स्तुवीति । स्तुतः,

१ विकल्प इति २ पु नास्ति ।

२ उभयतो ङित्साहचर्याद् ङितः सुनोतेरेव ग्रहणं न पुनरस्याङित इति २ । ३ । पु॰ पाठ उपलभ्यते तत्र ञित, ञित इत्यस्य स्थाने ङित्,ङित इति अञित इत्यस्य स्थाने ऽङित इति प्रमादपतितमिति प्रतिभाति ।

३ दित्यादिति– २ पु उपरिलिखित. पाठः । ४ एवेति नास्ति २ पुस्त ।

स्तुवीतः, स्तौषि । स्तवीषि । स्तौमि । स्तवीमि । स्तुवः । स्तुवीवः
तिप्सिपोरिट्पक्षे गुणः । अपृक्ते वृद्धिः । अस्तवीदिति सर्वत्रोवङ् तु-
ष्टाव । तुष्टोथ तुष्टव । थलि 'श्र्युकः क्किती'ति निषेधं बाधित्वा पुरस्तात्प्रतिषे-
धारम्भसामर्थ्यात् क्रादिप्रतिषेध एव भवति । स्तोता । स्तोष्यति ।
स्तौतु । स्तवीतु । स्तुतात् । स्तुवीतात् । स्तुताम्, स्तुवीताम् स्तुवन्तु ।
स्तुहि । स्तुवीहि । हेरपित्त्वात् ङित्त्वान्न गुणो नापि वृद्धिः, स्तवानि ।
अस्तौत् । अस्तवीत् । अस्तुताम् । अस्तुवीताम् । अस्तुवन् । अस्तौः ।
अस्तवीः । अस्तवम् । अस्तुत । अस्तुवीत । स्तुयात् । स्तुवीयात् ।
स्तुयाताम्, स्तुवीयाताम् स्तुयुः, स्तुवीयुः, स्तुयाः । स्तुवीयाः । स्तुया-
ताम् । स्तुवीयाताम् । स्तुयाम् । स्तुवीयाम् । अत्र यासुटि ङिद्वचने-
नोतो वृद्धिर्लुकि हली'ति वृद्धिरीडश्च पित्त्वेति पित्त्वनिषेधान्न भवति ।
आशिषि स्तूयादित्यादि । अस्तावीत्, अस्ताविष्टाम् । अस्तावीः ।
अस्ताविषम् । 'स्तुसुधूञ्भ्यः परस्मैपदेष्वि'तीटि सिचि वृद्धिः । अभि-
ष्टौति । अभ्यष्टौत् । उपसर्गात्सुनोतीति प्राक्सितादड्व्यवायेऽपीति षत्व
पर्यस्तौत् । पर्यष्टौत् । 'सिवादीनां वाड्व्यवायेऽपी'ति परिनिविभ्यः पर-
स्याड्व्यवाये वा षत्वम् । अग्निष्टुत् । 'क्विप् चे'त्यग्नावुपपदे क्विप् ।
अग्निष्टोमः । ज्योतिष्टोम । आयुष्टोम । अर्तिस्त्वित्यादिना मन्प्रत्य-
यान्तस्तोमशब्दः, एते यज्ञविशेषाः । 'अग्नेस्तुत्स्तोमसोमाः' 'ज्यो-
तिरायुषः स्तोम' इति षत्व, परिस्तोम इत्यत्रोपसर्गादित्यादिना षत्वम्
उणादयोऽव्युत्पन्नानि प्रातिपदिकानीति न भवति । स्तुत्यः । एतिस्त्वि-
त्यादिना क्यप् । क्वचित्तु वर्तमाने पुनः क्यब्ग्रहणादवश्यस्तुत्य इत्य
त्राप्यावश्यके ण्यतं बाधित्वा क्यबेव । मयूरव्यंसकादित्वात्समासः ।
लुम्पेदवश्यमः कृत्ये इत्यवश्यमो मलोपः । ग्रावस्तुत् । भ्राजभासेत्यादिना
ताच्छीलिकः क्विप् । आयस्तूः । क्विब्वचीत्यादिना क्विप्दीर्घौ । स्तोत्रम्, दा-
म्नीत्यादिना ष्ट्रन् । प्रस्तावः । 'प्रे द्रुस्तुस्रुव' इति घञ् । यज्ञकर्मणि छन्दोगा
यत्र देशे समेत्य स्तुवन्ति स संस्तावः । 'यज्ञे समि स्तुव' इति घञ् ।

१ अभ्यस्तव इति ख-पु पा ।

र्थम् । अपरे पुनराहुः । प्रपूर्वो वचिरशब्दसंज्ञायामेव वर्त्तते प्रवाच्य इति. ग्रन्थविशेषप्रतीतिस्तु प्रकरणादिनेत्यत्राप्यशब्दसंज्ञायामित्येव कुत्वनिषेधस्य सिद्धत्वात्प्रवचिग्रहणं नियमार्थम्, अशब्दसंज्ञायामिति निषेधः सोपसर्गत्वे प्रपूर्वस्यैवेति उपसर्गान्तरयोगे विवाक्यमिति कुत्वं भवतीति, एतच्च भाष्ये दूषितं, यत इह कुत्वमहर्विशेषएवेष्यते, अन्यत्र त्वविवाच्यमित्येव भवितव्यमिति, अहर्विशेषश्च द्वादशाहे अभितो रात्रे मध्ये दशरात्रस्तस्य दशममहः । तथा चाश्वलायनेनास्मिन्नहनि केन चित्कस्य चिद्विवाक्यमविवाक्यमित्या¹चक्षत इति । अहर्विशेषे कुत्वं तु पृषोदरादित्वात्, न्यङ्क्वादित्वाद्वा द्रष्टव्यं, वाक् । क्विब्वचिप्रच्छीत्यादिना क्वि वसम्प्रसारणं दीर्घत्वं च । वाचा । आपं चै³व हलन्तानामिति टाप् । वागस्यास्तीति वाग्मीति. 'वाचो ग्मिनि'रिति ग्मिनिः । पदत्वात्कुत्वे जश्त्वं कुत्सिता वागस्यास्तीति वाचालो वाचाटः । 'आलजाटचौ बहुभाषिणी'त्यालजाटचौ, बहुभाषिग्रहणं कुत्सितोपलक्षणार्थम् । सन्दिश्यमानमर्न्दिश्यमानस्य वाक् वा वाचिकम् । 'वाचो व्याहृतार्थायामि'ति व्याहृतार्थत्वोपाधिकाद्वाचः स्वार्थे ठक्, वाचिकञ्च पूर्वमेव हृत अति स्वामिनोक्तार्थमिति व्याहृतार्थं भवति, अपर आह, लेख्यादिना ऽवधारितेर्थे प्रवर्त्तमाना वाग्वाचिकमिति । तथा च माघे 'निर्द्धारितेर्थे लेख्येन खलूक्त्वा खलु वाचिक'मिति । स्वार्थिकाः प्रकृतितो लिङ्गवचनान्यनिवर्तन्त इति वाचिकशब्दस्य नपुंसकत्वम् । वाचोयुक्तिः । 'वाग्दिक्पश्यद्भ्यो युक्तिदण्डहरेष्वि'ति षष्ठ्या अलुक् । ब्राह्मणिब्रुवा । 'कुत्सितानि कुत्सनै, रिति कर्मधारयः । चेलादयो वृत्तिविषये कुत्सनवचना इति प्रागेवोक्त, घरूपेति ह्रस्वः । अत्रैव सूत्रे ब्रुवेतिनिर्देशात्पचाद्यचि, ⁴विदुषिब्रुवा । विदुषीब्रुवा, श्रेयसिब्रुवा श्रेयसीब्रुवा । 'उगितश्चे'ति ह्रस्वविकल्पः । अनयोः पुवद्भावोपीष्यते । विद्वद्ब्रुवा । श्रेयोब्रुवेति । उक्त्वा । उक्तम् । पौनरुक्तम् । नैरुक्तम् । अणटगयनादिभ्य'इति

१ सतीदिति अधिक २ पु । २ क्विबिति २ । पु पा ।
३ चापीति २ । पु पा । ४ वच्यादेशगुणयोरभाव इत्यधिक ३ । ४ पु ।

इतीयङ्, यकारस्य विधानसामर्थ्यान्न हलादिशेषः । क्रादिनियमादिट् । थलि भारद्वाजनियमाद्विकल्पः । एता । एष्यति, एतु, इतात्, । इताम् । यन्तु । इहि, अय.नि । अवैहि मा क्रिङ्करमित्यत्रानेजादित्वादेतेरेत्येधतीत्यस्याप्रसङ्गाद्वृद्धिरवद्या, न चाङ्श्लेषेणैजादित्वा[1]द्वृद्धि., यतस्तामन्तवद्भावेनौ माङोश्चे'ति पररूपं बाधत इत्युक्तम् । ऐत् । ऐताम् । 'आटश्चे'-त्यान्तरतम्यादैकारो वृद्धिः । आयन् । अ न्तरङ्गत्वाल्लादेशे ऽन्तिभावे ऽच्परत्वा द्गुणो यणि[2] त्यस्यासिद्धवदत्रेत्यसिद्धत्वात्पश्चादजादित्वेनाडागमः । ऐहि, आयम् । अत्रापि परत्वाद्गुणायादेशयोराट्याकारो वृद्धिः । इयात् । इयाताम् । इयाः, इयाम् । इयाव । आशिषि ईयात्, ईयास्ताम् । अकृत्सार्वधातुकयोरिति दीर्घः । समियात् समियास्तामित्यादौ 'एतेर्लिङी'त्युपसर्गात्परस्यैतेरार्धधातुके लिङि ह्रस्वत्वम् । अभीयात् प्रेयादित्यादावेकादेशस्य ह्रस्वो न भवति, उपसर्गाभावाद्, उपसर्गात्परस्यैतिदीर्घस्याभावात् । अन्तादिवद्भावश्च नास्त्युभयाश्रितत्वात् । आ ईयात्, एयात् । समेयादित्यत्राद्विवद्भावा[3]देकारस्य[4] तेर्दीर्घत्वे[5] सम उपसर्गात्परत्वेप्यण इति तत्रानुवर्त्तनान्न ह्रस्वः । अणचेह सामर्थ्यात्पूर्वं, समीयादित्यादिप्रयोगस्तु ई गताविति भौवादिकस्य । अगात् । अगाताम् । अगु । अगाः, अगाम् । अगाव । 'इणो गा लुङी'ति गादेशः । गातिस्थेति सिचो लुक् 'आत'इति झेर्जुस् 'उस्यप-दान्तादि'ति पररूपत्वम् । अत्रात्रेयः । 'न माङ्योग' इत्यत्र ङित्तु माङुपात्तस्तेनाङित्यपि माशब्दे सार्वकालिको लुङनुमीयतइति मा वालि पथमन्वगा इति, मा निषाद प्रतिष्ठा त्वमगमः शाश्वतीः समा इत्यादा[6]वागम उपपन्न इत्याह । तदयुक्तम् । 'माङि लुङि'ति सार्वकालिकलुङो विधावपि ङितो ग्रहणाद्ङिति तस्याभावादनर्थकं स्यात्, तथा च तत्र वृत्तिः । मा भवतु मा भविष्यतीत्यङितो माशब्दस्य प्रयोग इति

१ एजादित्वेनेति २ । ४ पु॰ पा॰ ।
२ व्यपवर्गाभावादिति २ । ४ पु पा ।
३ भावेनेति २ पु पा॰ ।
४ एतेरिति नास्ति २ पु॰ ।
५ सतीत्यधिकं ३ पु ।
६ अडागम इति पा॰ २ । ४ । पु ।

ङ्किच' न माङ्योग इति माङनुबन्धकनिर्देशो भूतसामान्ये लुङि लङ्लृङोश्च माङ्शब्दयोगे ऽडागमार्थः. स्यादिति नैव पूर्वस्य लुङः कल्पकः स्यात् । अथ वा न धर्ममसुवोधममयमवगान याचिता इति माघप्रयोगो वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोरित्यवशब्दान्त लोपे द्रष्टव्यः । कर्मणि । ईयते । अगायीत्यादि. स्यादिषु वा चिण्वद्भावे आयिष्यते, आयिषाताम् । आयिषीष्ट । आयिता । अन्यदा गास्यते, अगासाताम् गासीष्ट. गाता, लुङि चिण्वत्पक्षे चिण्वदिटा परेण बाधाद् न गादेशः, सकृद्गते[2]परिभाषया च न पुनः प्रवर्तते इति केचित्, आत्रेयादयस्तु वधभावात्सीयुटि चिण्वद्भावो विप्रतिषेधेनेति वार्त्तिके तद्व्याख्याने भाष्यादौ च वधभावमेवाधिकृत्य विप्रतिषेधकथनाद्गादेशमाहुः । अगायिषातामित्यादि, स्यादिषु चिण्वद्भावेन चिणि दृष्टो गादेशो न भवति चिणि दृष्टस्याङ्गाधिकारविहितस्यैव सोऽतिदेश इति, गादेशश्च केवलं चिणि दृष्टो न त्वङ्गाधिकारविहितः । जिगमिषति. 'सनि च' इत्यवबोधनार्थस्य गम्यादेशः । 'गमेरिट् परस्मैपदेषु' इत्यत्रास्यापि ग्रह इति मतः सकारादिप्रत्ययत्वादिडागमः । अथ चेडागम आत्मनेपदेन समानपदस्थ[3]स्य नेष्यते, अन्यत्र सर्वत्रेष्यत इति गच्छतावुक्तं तेन कल्यामि' परस्मैपदत्वं[illegible] च भवति । जिगमिषिता, जिगमिषाञ्चकार, जिगमिषत्वमिति । भावकर्मणोर्लिङ्ग्यामि चात्मनेपदाभावादिडेव । जिगमिषा बभूवे । जिगमिषा चक्रे देवदत्तेनेति । यत्तु पदशेषकारदर्शनं गम्युपलक्षणार्थं परस्मैपदग्रहणम्, तेन परस्मैपदेषु दृष्टस्य गमेरभावादात्मनेपदे गमिष्यत इतीडुवर्तनीति तदपि गच्छतावेव दूषितमितीडात्र न भवितव्यम् । तथा च 'अज्झनगमां सनी'त्यत्र कैयटपदमञ्जर्योर्गमेरिङादेशस्य ग्रहणमिति वार्त्तिके इङ्ग्रहणमिण्णिकोरप्युपलक्षणं, तेनेणिगादेशस्यापि भावकर्मणोरात्मनेपदइडभावे जिगांस्यत इति दीर्घो भवत्येवेति, अन्ये तु तत्रेङ्ग्रहणं नोपलक्षणमिति दीर्घत्वं नेच्छन्ति, जिगमिष्यत इति । यदाय गमिरादेशो ऽकर्मकः सपूर्वश्च

१ यदि तु अपिसाहचर्यादवस्यादेरेव लोपो विज्ञायते तदा वयातेत्येव पाठः कल्पनीयः इदानीन्तनपुस्तकेषु तु अवय तेत्येव पाठो दृश्यते । सन्नोनाथसमतश्चायमेव पाठः ।
२ सकृद्गतेति ३ पु पा ॥ ३ स्येति अधिक ३।४।पु ॥ ४ अर्यीति ४ पु पा ।

मज्जिगमिरन्नि वसो मात्रेति तदा 'पूर्ववत्सन' इत्यतिदेशेन समो गम्यृच्छीत्यात्मनेपदं स्यादिति न मन्तव्यं, यतः प्रकृतौ दृष्टस्य सनन्तेऽतिदेशः, इह च सनमन्तरेण नैवास्य प्रयोगः, जुगुप्सत इत्यादौ तु सनमन्तरेण प्रकृतेरप्रयोगेऽप्यवयवे कृतं लिङ्गं सामर्थ्या[1]त्समुदायस्य विशेषकमित्यात्मनेपदमिति प्रागेवोक्तम् । गमयति । 'णौ गमिरबोधने'इति गमिरादेशः । अमन्तत्वान्मित्त्वे 'मितां ह्रस्व' इति ह्रस्वः, बोधने तु नायमादेश इति प्रत्याययति प्रतीपिपतीति भवतः । अजादित्वाद् द्वितीयस्यैकाच सनो द्विर्वचने अभ्यासस्येत्वे उभयोरपि सकारयोरिण उत्तरत्वेन षत्वं, प्रतीपिपन्तीत्यत्र सन्शपोरकारयोरेकादेशस्यान्तवद्भावेन पूर्ववत्त्वेन ग्रहणे'ऽप्यदभ्यस्तादि'ति नादादेशः । अभ्यस्तादङ्गादुत्तरस्य तद्विधानात् । अत्र हि इकारादिः समुदायो ऽङ्गमिकारवर्जं चाभ्यस्तम् । उपेयिवान् । 'उपेयिवाननाश्वाननूचानश्चे'ति लुङ्लङ्लिड्विषयस्य पाक्षिकस्य लिटो नित्यं क्वसुरिट् च निपात्यते । अत्र हि क्रादिनियमात्प्राप्तादिटः पूर्वं नित्यत्वाद् द्विर्वचनमिति हरदत्तादयः । कृतेपीटि द्विर्वचनं प्राप्नोत्यकृतेपीति नित्यत्वम् । द्विर्वचने तु नेटः प्राप्तिः वस्वेकाजादिति कृतद्विर्वचनानामेकाचामेव क्रादिनियमादिट् क्वसाविति नियमादस्य च द्विर्वचनोत्तरकालमनेकाच्त्वात् । न च सवर्णदीर्घत्वेनैकाच्त्वं शङ्क्यम् । यत इइवमिति स्थिते सवर्णदीर्घात्परत्वाद्विशेषविहितत्वाच्च 'दीर्घ इणः किती'त्यभ्यासस्य दीर्घेण भाव्यं, तद्विधानसामर्थ्याच्च पुनः सवर्णदीर्घो नैव प्रसजतीत्यनेन च निपातनेन क्रादिनियमात्प्राप्तो वस्वेकाजादिति नियमादप्राप्त इट् प्रतिप्रसूयत इति । उपेयुष इत्यादौ भसंज्ञायां 'वसोः सम्प्रसारण'[3]मिति सम्प्रसारणे वलाद्यभावादिण्न भवति । उपोपसर्गग्रहणमतन्त्रं, तेन ईयिवान् समीयिवानित्याद्यपि भवतीति वृत्तिकारादयः, पारायणिकास्तूपसर्गग्रहणस्य प्रयोजनमजन्तस्यान्यस्योपसर्गस्य निवृत्तिरित्याहुः । इत्यः । उपेत्यः । एतिस्त्वित्यादिना क्यपि

१ सामर्थ्यादिति नास्ति २ । ४ पु० । २ द्विर्वचनमिति ३ पु० । नास्ति ।
३ वसो सम्प्रसारणमितीति नास्ति ३ । ४ । पु ।

लुक् । उपेत्येत्यत्र 'पत्वतुकोरसिद्धः' इत्येकादेशस्यासिद्धत्वाद् ह्रस्वाश्र-यस्तुग् भवति । उपेयमिति प्रयोगो भौवादिकस्य दैवादिकस्य वा इणो यत्प्रत्ययेन । न अभ्याशो अनभ्याशः, स गन्तव्यो यस्य सोऽनभ्याश-मित्यः । 'इन्धे वाऽनभ्याशस्ये'ति मुम् । अत्येतीत्यत्ययः । श्याद्व्यधेत्या-दिना णः । अत्ययी, जिदृक्षिविश्रीत्यादिनेनिः । इत्वरः । 'इण्न-शी'ति क्वरप्, इत्वरी, स्त्रियां 'टिड्ढाणञि'ति ङीप् । न्यायः, 'परिन्योर्नी-णोर्द्यूताभ्रेषयो'रिति घञ् । अभ्रेषः पदार्थानामनपचारः, यथाप्राप्तकरणम्, पर्यायः । 'परावनुपात्यय इणः' इति घञ् । अनुपात्ययः क्रमप्राप्तस्या-नतिपातः परिपाटी, अन्यत्र कालपर्यायः, परत्ययः इत्या । संज्ञायां समजेत्यादिना स्त्रियां क्यप् । इतिः । बाहुलकात् क्तिजित्यात्रेयः, अयनम्, अन्तरयणम् । 'अनरदेश इत्यधिकृत्य'[3] अयनं चेति णत्वम् । अन्तर उप-सर्गत्वात् कृत्यच इति णत्वे सिद्धे वचनमिदं देशप्रतिषेधार्थम् । नीयतेऽनेनेति न्यायः । अध्यायन्यायेति घञ् निपात्यते, पुंसि संज्ञायां घापवादः । न्यायादनपेतं न्याय्यम्, धर्मपथ्यर्थन्यायादनपेत इति यत्, न्याये भवमपि न्याय्यम्, दिगादित्वाद्यत् । न्याये भवस्तस्य व्याख्यानं वा नैयायम् । ऋगयनादिपाठादणि न य्वाभ्यामित्यैजागमः । न्यायमधीते वेद वा नैयायिकः । उक्थादित्वाट्ठक् न य्वाभ्यामित्यैजागमः । आत्ययिकः । औपयिकः । अत्ययोपायशब्दाभ्याम्[4] 'विनयादिभ्यष्ठगि'ति स्वार्थे ठक् । उपायशब्दस्य 'उपायाद्ध्रस्वत्वं चे'ति ह्रस्वत्वमपि । औपयिकशब्दः स्वभावादौचित्ये वर्तते, यथाकथञ्चिदिव व्युत्पत्तिरित्यात्रेयः । शिवमौ-पयिकं गरीयसीमित्यपायत्वेऽपि प्रयोगो दृश्यते । प्रातरित्वा । 'अन्ये-भ्योऽपि दृश्यत'इति क्वनिप् । स्त्रियां प्रातरित्वरी वनो र चेति ङीब्रेफौ । कान्तारमतीतः कान्तारातीतः । द्वितीयाश्रितेति तत्पुरुषः । दुःखादपेतः दुःखापेतः । अपेतापोढेति पञ्चमीतत्पुरुषः । एवम् । 'इण्शीभ्यां वन्'इति वन्प्रत्ययः । चादित्वादसत्त्ववचनत्वाद्विपा-

१ अपीत्यधिकं ३ । ४ । पु० ।   २ चेति २ पु पा ।
३ इत्यधिकृत्येति नास्ति २ पु ।   ४ एरजन्ताभ्यामिति २ पु अधिकम् ।

तोऽव्ययम् । क्वेव भोक्ष्यसे । एवशब्दोऽसम्भावने, न क्वापि भोक्ष्यसइत्यर्थः । 'एवे चानियोगे पररूपं वक्तव्यम्' इति पररूपम्[1] । नियोगोऽवधारणम्, अनियोगस्ततोऽन्यः । समियोऽग्निः सङ्ग्रामश्च । 'समीणः' इति यक् । आयुः, आयुषी । 'एतेर्णिच्च' इत्युसिप्रत्ययः, णित्त्वाद्वृद्धिः । पुरुषायुषम्, द्व्यायुषम्, त्र्यायुषम् । 'अचतुरे'त्यादिना आद्यस्य षष्ठीतत्पुरुषे, इतरयोः समाहारद्वन्द्वेऽच् निपात्यते । तेन समासान्तरे न भवति । पुरुषश्च आयुश्च पुरुषायुषी, द्वयोरायुः, त्रयाणामायुः, द्व्यायुस्त्र्यायुरिति । आगः । 'इण आगोऽपराधे' इत्यसुन्यागादेशोऽपराधे । एतशः, चन्द्रादिः, एतशा ब्राह्मणाः । 'इणस्तशन्तशसुनौ' इति तशन्तशसुनौ । इभः । 'इणः कित्' इति भन्प्रत्ययः । कित्त्वान्न गुणः । इभमर्हति इभ्यः । दण्डादित्वाद्यत् । एकः । 'इणभी' इत्यादिना कन् । सङ्ख्यायामेकवचनान्त । मुख्यादौ त्वभिधेयवचनः, अयं सर्वनामा[2] । तत्कार्याणि जसि विभाषां वर्जयित्वा पूर्वशब्दवदिहाप्युह्येयानि, त्यदाद्यवत्यदादिकार्याणि च । 'भवन्त्यनेके जलधेरिवोर्मय' इत्यत्र तत्पुरुषस्योत्तरपदार्थप्रधानत्वाद् उत्तरपदस्य च तत्सङ्ख्यावाचित्वेन एकवचनान्तत्वाद्बहुवचनमनुपपन्नमिति 'सेव्यतेनेकया सचतापाङ्गया' इतिवदेकवचनेन भाव्यम् । अथैकशब्दस्य 'द्व्येकयो'रित्यादिवद् वृत्तौ भावप्रधानत्वाद् न विद्यते एकत्वं येषामिति बहुव्रीहिणा 'उद्यतै[3]र्निभृतमेकमनेकै' रितिवद्बहुवचनोपपत्तिः । सिद्ध्यति बहुवचनम्, 'न बहुव्रीहौ' इति निषेधात्सर्वनामकार्यं शीभावो न सिद्ध्यति । अथ वा एव समर्थनीयः, एकशब्दो ऽसहायवचनः, अनेके सहाया इत्यर्थः । तथा च योगपातञ्जले । 'एकं चित्तमनेकेषाम्' इति प्रयुज्यते । ऐक्यम् । ब्राह्मणादिपाठात् ष्यञ् । एकतरः, एकतमः, सर्वनामनी, 'एकाच्च प्राचाम्' इति द्वयोर्बहूनां च एकस्य निर्धारणे क्रमेण डतरज्डतमचौ विकल्पेन । नपुंसके स्वमोः 'अद्ड्डतरादिभ्यः पञ्चभ्य' इत्यदडादेशे अमोपवादे डित्त्वाट्टिलोपे एकतमदिति भवति ।

---

१ पररूपत्वमिति ३ पु॰ पा॰ ।  २ सर्वनामत्वादिति ३ पु॰ पा॰ ।
३ उद्धते इति ३ पु॰ पा ।

'एकतरशब्दात्त्वदड्डादेशो नेष्यते' इति भाष्यरतम् । एकाकी, एककः, एकः । 'एकादाकिनिच्चासहाये' इत्यसहायार्थादेकशब्दात् स्वार्थे कनाकिनिचौ आकिनिचश्च[1] पक्षे लुक् । सकृद्भुङ्क्ते । 'एकस्य सकृच्च' इति क्रियागणने सकृदादेशः सुच्प्रत्ययश्च, चकारस्स्वरार्थः, उकार उच्चारणार्थः, सकारस्य संयोगान्तलोपः । स्वरादित्वादव्ययत्वात्सुपो लुक् । एकधा भुङ्क्ते । सङ्ख्याया विधार्थे धा प्रत्ययः । विधा प्रकारः, सामान्यस्य भेदको विशेषः । अनिर्धारितसङ्ख्यस्य भोजनादेः एकत्वादिलक्षणे प्रकारे वर्तमानादेकादेश्शब्दात्स्वार्थे धेति सूत्रार्थः । अनेकमेकधा करोति । 'अधिकरणविचाले च' इति धा स्वार्थे । अधिकरणं द्रव्य, तस्य सङ्ख्यान्तरापादनमधिकरणविचालः, स चैकस्यानेकीकरणम्, अनेकस्यैकीकरणम् । ऐकध्यं भुङ्क्ते करोति वा । 'एकाद्धो ध्यमुञन्यतरस्याम्' इति ध्यमुञादेशः । एकशो ददाति, एकैकं एकैकस्मै वा ददातीत्यर्थः । 'सङ्ख्यैकवचनाच्च वीप्सायाम्' इति शस् । अत्रैकवचनग्रहणं नियतपरिमाणानां प्रस्थादीनां ग्रहणार्थम् । कारकरूपार्थाभिधायिनः सङ्ख्यैकवचनाद् वीप्सायां गम्यमानायां वा शसिति सूत्रार्थः । कारकग्रहणाद् एकैकस्य स्वामिनि विवक्षायां शस् न भवति । 'नित्यवीप्सयो'रिति द्विर्वचनं शसि न भवति, वीप्सायाः शसैवोक्तत्वादिति 'सर्वस्य द्वे' इत्यत्र भाष्यादौ स्थितम् । ऐकश्यम्[2] । शसन्ताद् ब्राह्मणादित्वात् ष्यञ् । 'अव्ययानां भमात्रे' इति टिलोपः । 'एकैकशः पितृसंयुक्तानि' इत्यत्र शसः प्रायश इत्यादिवद् अत्यन्तस्वार्थिकत्वाद् वीप्साया अनभिधानाद् द्विर्वचनम् । तथा च 'सर्वस्य द्वे' इत्यत्र भाष्यम् । 'यत्र च तद्धितेनानुक्ता वीप्सा भवति तत्र द्विर्वचनम्, तद्यथा एकैकशो ददाति' इति । इदमेव भाष्यमत्यन्तस्य स्वार्थिकस्य शसो मूलम् । यत्र द्विर्वचनं तत्र 'एकम्बहुव्रीहिवत्' इति बहुव्रीहिवद्भावात्सुपो लुक् । एकान्नविंशतिः । एकेन न विंशतिरिति 'तृतीये'ति योगविभागात्समासः । 'एकादिश्चैकस्य चादुक्' इत्येकशब्दात्परस्य नञः प्रकृतिभावः, एकस्य

१ आकिनच्चेति ३ पु पा ।  २ ऐकैकश्यमिति २ पु पा ।

तोऽव्ययम् । क्वेव भोक्ष्यसे । एवशब्दोऽसम्भावने, न क्वापि भोक्ष्यस इत्यर्थः । 'एवे चानियोगे पररूपं वक्तव्यम्' इति पररूपम्[1] । नियोगोऽवधारणम्, अनियोगस्ततोऽन्यः । समियोऽग्निः सङ्ग्रामश्च । 'समीणः' इति यक् । आयुः, आयुषी । 'एतेर्णिच्च' इत्युसिप्रत्ययः, णित्त्वाद्वृद्धिः । पुरुषायुषम्, द्व्यायुषम्, त्र्यायुषम् । 'अचतुर' इत्यादिना आद्यस्य षष्ठीतत्पुरुषे, इतरयोः समाहारद्वन्द्वे च निपात्यते । तेन समासान्तरे न भवति । पुरुषश्च आयुश्च पुरुषायुषी, द्वयोरायुः, त्रयाणामायुः, द्व्यायुस्त्र्यायुरिति । आगः । 'इण आगोऽपराधे' इत्यसुन्यागादेशोऽपराधे । एतशः, चन्द्रादिः, एतशा ब्राह्मणा । 'इणस्तशन्तशसुनौ' इति तशन्तशसुनौ । इभः । 'इणः कित्' इति भन्प्रत्ययः । कित्त्वान्न गुणः । इभमर्हति इभ्यः । दण्डादित्वाद्यत् । एकः । 'इणभी' इत्यादिना कन् । सङ्ख्यायामेकवचनान्तः । मुख्यादौ त्वभिधेयवचनः, अयं सर्वनामा[2] । तत्कार्याणि जसि विभाषां वर्जयित्वा पूर्वशब्दवदिहाप्यूह्यानि, त्यच्छब्दवत्त्यदादिकार्याणि च । 'भवन्त्यनेके जलधेरिवोर्मय' इत्यत्र तत्पुरुषस्योत्तरपदार्थप्रधानत्वाद् उत्तरपदस्य च तत्सङ्ख्यावाचित्वेन एकवचनान्तत्वाद्बहुवचनमनुपपन्नमिति 'सेव्यतेऽनेकया सचतापाङ्ग्या' इतिवदेकवचनेन भाव्यम् । अथैकशब्दस्य 'द्व्येकयो'रित्यादिवद् वृत्तौ भावप्रधानत्वाद् न विद्यते एकत्वं येषामिति बहुव्रीहिणा 'उद्यतै[3]र्निभृतमेकमनेकै'रितिवद्बहुवचनोपपत्तिः । सिद्ध्यति बहुवचनम्, 'न बहुव्रीहौ' इति निषेधात्सर्वनामकार्यं शीभावो न सिद्ध्यति । अथ वा एवं समर्थनीयः, एकशब्दोऽसहायवचनः, अनेके सहाया इत्यर्थः । तथा च योगपातञ्जले । 'एकं चित्तमनेकेषाम्' इति प्रयुज्यते । ऐक्यम् । ब्राह्मणादिपाठात् ष्यञ् । एकतरः, एकतमः, सर्वनामनी, 'एकाच्च प्राचाम्' इति द्वयोर्बहूनां च एकस्य निर्धारणे क्रमेण डतरज्डतमचौ विकल्पेन । नपुंसके स्वमोः 'अद्ड्डतरादिभ्यः पञ्चभ्य' इत्यदडादेशे अमोऽपवादे डित्वाट्टिलोपे एकतमदिति भवति ।

---

१ पररूपत्वमिति ३ पु पा० ।   २ सर्वनामत्वादिति ३ पु० पा ।
३ उद्धते इति ३ पु० पा ।

'एकतरशब्दात्स्वदड़ादेशो नेष्यते' इति भाष्यदत्तम् । एकाकी, एककः एकः । 'एकादाकिनिच्चासहाये' इत्यसहायार्थादेकशब्दात् स्वार्थे कनाकिनिचौ 'आकिनिदश्च' पक्षे लुक् । सकृद्भुङ्क्ते । 'एकस्य सकृच्च' इति क्रियागणने सकृदादेशः, सुच्प्रत्ययश्च, चकारस्स्वरार्थः, उकार उच्चारणार्थः, सकारस्य संयोगान्तलोपः । स्वरादित्वादव्ययत्वात्सुपो लुक् । एकधा भुङ्क्ते । 'संख्याया विधार्थे धा' प्रत्ययः । विधा प्रकारः, सामान्यस्य भेदको विशेषः । अनिर्धारितसंख्यस्य भोजनादेः एकत्वादिलक्षणे प्रकारे वर्त्तमानादेकादेशशब्दात्स्वार्थे धेति सूत्रार्थः । अनेकमेकधा करोति । 'अधिकरणविचाले च' इति धा स्वार्थे । अधिकरणं द्रव्यं, तस्य संख्यान्तरापादनमधिकरणविचालः स चैकस्यानेकीकरणम्, अनेकस्यैकीकरणम् । ऐकध्यं भुङ्क्ते करोति वा । 'एकाद्धो ध्यमुञन्यतरस्याम्' इति ध्यमुञादेशः । एकशो ददाति, एकैकं एकैकस्मै वा ददातीत्यर्थः । 'संख्यैकवचनाच्च वीप्सायाम्' इति शस् । अत्रैकवचनग्रहणं नियतपरिमाणानां प्रस्थादीनां ग्रहणार्थम् । कारकरूपार्थाभिधायिनः संख्यैकवचनाद् वीप्सायां गम्यमानायां वा शसिति सूत्रार्थः । कारकग्रहणाद् एकैकस्य स्वमिति विवक्षायां शस् न भवति । 'नित्यवीप्सयो'रिति द्विर्वचनं शसि न भवति, वीप्सायाः शसैवोक्तत्वादिति 'सर्वस्य द्वे' इत्यत्र भाष्यादौ स्थितम् । ऐकश्यम्[2] । शसन्ताद् ब्राह्मणादित्वात् ष्यञ् । 'अव्ययानां भमात्रे' इति टिलोपः । 'एकैकशः पितृमयुक्तानि' इत्यत्र शसः प्रायश इत्यादिवद् अत्यन्तस्वार्थिकत्वाद् वीप्साया अनभिधानाद् द्विर्वचनम् । तथा च 'सर्वस्य द्वे' इत्यत्र भाष्यम् । 'यत्र च नद्विर्वचनेनानुक्ता वीप्सा भवति तत्र द्विर्वचनम्, तद्यथा एकैकशो ददाति' इति । इदमेव भाष्यमत्यन्तस्य स्वार्थिकस्य शसो मूलम् । यत्र द्विर्वचनं तत्र 'एकं बहुव्रीहिवत्' इति बहुव्रीहिवद्भावात्सुपो लुक् । एकान्नविंशतिः । एकेन न विंशतिरिति 'तृतीये'ति योगविभागात्समासः । 'एकादिश्चैकस्य चादुक्' इत्येकशब्दात्परस्य नञः प्रकृतिभावः, एकस्य

१ आकिनश्चेति ३ पु पा ।   २ ऐकैकश्यमिति २ पु पा ।

चादुगागमः । एकस्या भावः एकत्वम्, एकस्याः क्षीरं एकक्षीरम् । 'एक तद्धिते च' इति तद्धिते उत्तरपदे च परे ह्रस्वः स्त्रीप्रत्ययस्य । 'लिङ्गविशिष्टग्रहणमेकशब्दस्य ह्रस्वत्वं प्रयोजयति' इति वृत्तिः । एकैकं भोजयति । 'नित्यवीप्सयो'रिति द्विर्वचने 'एकं बहुव्रीहिवत्' इति बहुव्रीहिवद्भावात्सुपो लुकि चित्रगुरित्यादिवत् पुनस्समासात्सुबुत्पत्तिः । 'न बहुव्रीहौ' इति सर्वनामसञ्ज्ञानिषेधोऽस्य न भवति, तत्र बहुव्रीहाविति वर्तमाने पुनर्बहुव्रीहिग्रहणं मुख्यबहुव्रीहिपरिग्रहार्थमित्युक्तत्वात्, अयं चातिदेशिको गौणो बहुव्रीहिः । बहुव्रीहिवद्भावाद् 'एकैकामाहुतिं जुहोति' इत्यत्र 'स्त्रियाः पुंवद्' इत्युत्तरपदनिबन्धनः पुंवद्भावो भवति । ननु सत्यसति वा पुंवद्भावे को विशेषः, यस्मादुभयथापि वृद्धिर्भविष्यति । सत्यम्, स्वरग्रहे त्वस्ति विशेषः । एकदा । 'सर्वैके'ति दाप्रत्ययः । एकपुरुषः । 'पूर्वकालेति समासः । पञ्चाम्राः, पूर्वेषुकामशमी, इत्यादौ 'विशेषणं विशेष्येण' इति समासे सिद्धे 'दिक्सङ्ख्ये सञ्ज्ञायाम्' इति पुनर्विधानात् सञ्ज्ञाया अन्यत्र दिक्सङ्ख्ययोः विशेषणसमासाभावाद् एकशब्दस्य समासवचनम् । अत एव एकवीर इत्यत्र पूर्वकालेत्यस्मात्परत्वात् पूर्वापरप्रथमेत्यनेन समासेन भाव्यम्, ततश्च वीरशब्दस्य प्रथमानिर्दिष्टत्वादुपसर्जनत्वात्पूर्वनिपातस्स्यादिति चोद्यमपि निराकृतम् । तस्य त्ववकाशो वीरपुरुषादिः । एतत् । 'एतेस्तुट् च'त्यदिप्रत्ययस्तुडागमश्च । एष करोतीति, 'त्यदादीनाम' इति विभक्तावत्वे 'तदोस्सस्सौ' इति सौ तकारस्य सत्वे तस्य च षत्वे सो. 'एतत्तदोस्सु लोपो ऽकोरनञ्समासे हलि' इति लोपः । अकोरिति वचनाद् एषकः करोतीति साकच्के सुलोपो न भवति । अनञिति वचनाद् अनेषः करोतीत्यत्रापि न सुलोपः । अत्र अनञ्समासे इति प्रतिषेधादेव तदन्तस्यापि ग्रह इति परमैष करोतीत्यत्रापि सुलोपः । त्यदाद्यत्वे 'तदोस्सस्सावनन्त्ययो'रिति सत्वे च, त्यदादिप्राधान्ये तदन्तेऽपीष्येते, यदा त्वप्राधान्यं तदा न भवतः, अत्येतद्भवदत्त इति । नपुंसके सोर्लुका लुप्तत्वादपि न भवतः । अमो

लुका लुप्तत्वादपि नात्वम् । एषेत्यादौ विभक्तिनैरन्तर्येण भवदप्यत्व 'भस्त्रैषे'त्यादिनिर्देशान्न'दुष्यतस्य टापो निमित्तं भवति । एषका, एषिका । अकच्पक्षे 'भस्त्रैषाजाज्ञाद्वास्वानञ्पूर्वाणामपी'ति कात्पूर्वस्याकारस्य प्रत्ययस्थाद् इति प्राप्तमित्त्वं पक्षे निषिध्यते । यद्यप्यत्र नञ्पूर्वाणामपीत्यपिशब्देन केवलानामन्यपूर्वाणां चायं निषेध उक्तः । तथाप्येतद्ग्रे समस्ते न प्रवर्तते, यतस्तत्समासार्थायाम्[1] विभक्तौ न त्यदाद्यत्वम्, 'अन्तरङ्गानपि विधीन्बहिरङ्गो लुग्बाधते' इति । तेन समासाद्विभक्त्यावत्त्वे टापा भाव्यम् । स चान्तर्वर्तिन्या विभक्त्या प्रत्ययलक्षणेन सुबन्तात्पर इति प्रत्ययस्य'त्विनीत्स्यासुप' इति निषेधादप्रसङ्गात् किं तन्निषेधेन । शेषं त्यदादिकार्यं त्यच्छब्दवत् । एतत्परिमाणमस्य एतावान्, 'यत्तदेतेभ्यः परिमाणे वतुप्' इति परिमाणिनि' वतुप् । 'आ सर्वनाम्नः' इत्यात्त्वम् । 'अत्वसन्तस्ये'त्यसम्बुद्धौ सावुपधादीर्घत्वे नुमि हल्ङ्यादिसंयोगान्तलोपौ । अतः, अत्र । 'एतदोऽश्' इति प्रागिदर्शीये ऽशादेशः । अत्र एतद इति योगविभागः, तत्र 'एतेतौ रथोः' इत्यनुवृत्त्या रेफथकाराद्योः प्रत्यययोः यथासङ्ख्येन इत इत्येतावादेशौ भवतः, एतर्हि इत्थमिति । तत्र र्हिल् 'अनद्यतने र्हिलन्यतरस्याम्' इति सिद्धम्यादिस्तूपसङ्ख्येयः । अत्र भुङ्क्ष्व, अथोऽत्राधीष्व, इत्यादौ अन्वादेशेऽपि 'एतदोऽश्' इति सामान्येनैवाशादेशे सिद्धे 'एतदस्त्रतसोस्त्रतसौ चानुदात्तौ' इति वच त्रतसोरनुदात्तत्वार्थम् । एनम्, एनौ, एनान्, एनेन, एनयोः । 'द्वितीयाटौस्स्वेनः' इतीदमेतदोरन्वादेशविषययोरेनादेशः । नपुंसकैकवचने त्वेनदितीष्यते । एतः वर्णः । 'हसिमृग्रिण्वामि' इति तन्प्रत्ययः । एनी । 'वर्णादनुदात्तात्तोपधात्तो नः' इत्यनुदात्तान्तोपधवर्णवाचित्वात् स्त्रियां ङीप्, तकारस्य च नः । इनः । 'इणसी'त्यादिना नक् । दूर, 'दुरीणो लोपश्च' इति दुरुपपदे रक्, इणश्च लोपे, 'रो रि' लोपे ढ्रलोपे इति दीर्घः । दविष्ठः, दवीयान्, दवयति, 'स्थूलदूरे'त्यादिना णाविष्ठवदिति च यणादि-

१ समर्थायामित्यधिकम् २ पु ।

परस्य लोपो गुणश्च । 'दूरयत्यवनते विवस्वती'ति प्रयोगस्तु चिन्त्यः ॥ ३५ ॥

इङ् अध्ययने ॥ नित्यमधिपूर्वः । अधीते, अधीयाते, अधीयते, अधीषे, अधीये, । अधीवहे, क्ङित्यजादावियङ् । 'रामादधीतसंदेश' इति भट्टिप्रयोगे पञ्चमी चिन्त्या, 'आख्यातोपयोगे' इत्याख्यातुः प्रतिपादयितुरपादानत्वं यस्मादुपयोगश्च, उपयोगश्च नियमपूर्वकं विद्याग्रहणम्, तच्च उपाध्यायादधीते इत्यादावेव सम्भवति । अधिजगे, अधिजगाते, अधिजगिषे, अधिजगे, अधिजगिवहे, 'गाङ् लिटि' इति गाङादेशः । क्रादिनियमादिट् । 'आतो लोप इटि च' इत्याल्लोपः । तस्य स्थानिवद्भावाद् द्विर्वचनम् । गाशब्दस्य तु न स्थानिवत्त्वम्, 'गाङ् लिटि' इति द्विलकारकनिर्देशाद् लावस्थायामेव तद्विधानाद् द्विर्वचननिमित्ताच्निमित्तत्वाभावात् । अध्येता । अध्येष्यते । अधीताम्, अधीयाताम्, अधीष्व, अध्ययै, अध्यावहै । आटि गुणाययोरुपसर्गस्य यणादेशः । पूर्वं धातोरुपसर्गेण योगेऽपि गुणात्पूर्वमन्तरङ्गत्वेन सवर्णदीर्घो न भवति, 'वार्णादाङ्गं बलीय' इति गुणस्य बलीयस्त्वात् । अथ वा 'प्रत्ययः' 'णेरध्ययने वृत्तम्' इत्यादिनिर्देशान्न भविष्यति । अध्यैत, अध्यैयाताम्, अध्यैयत । झस्यादादेशः । अध्यैथाः, अध्यैयि, अध्यैवहि, अजादौ परत्वादियङि पश्चादाटि वृद्धौ उपसर्गस्य यणादेशः । ज्ञापितं च 'घुमास्थे'त्यत्र हल्ग्रहणेन विप्रतिषेधे प्राप्ते 'असिद्धवदत्रे'त्यसिद्धत्वं नेति । अधीयीत, अधीयाताम्, अधीयीथाः, अधीयीध्वम्, अधीयीय, अधीयावहि, 'धातोरियङ्युपसर्गेण सवर्णदीर्घः । आशिषि अध्येषीष्ट, अध्येषीयास्ताम्, अध्येषीष्ठाः, अध्येषीढ्वम्, इणः परत्वान्मूर्धन्यः । अध्येषीय, धातोर्गुणः, उपसर्गस्य यण् । अध्यगीष्ट, अध्यगीषाताम्, अध्यगीष्ठाः, अध्यगीढ्वम्, अध्यगीषि, 'विभाषा लुङ्लृङो'रिति पक्षे गाङादेशः । 'गाङ्कुटादिभ्योऽञ्णिन्ङित्' इत्यञ्णितः प्रत्ययस्य ङित्त्वातिदेशाद् 'घुमास्थे'तीत्वम् । गाङभावे, अध्यैष्ट, अध्यैषाताम्, अध्यैष्ठाः, अध्यैढ्वम्, अध्यैषि, अध्यैष्वहि, आटि वृद्धौ उपसर्गस्य यणादेशः ।

अध्यगीष्यत अध्यगीष्येताम्, अध्यगीष्यन्त अध्यगीष्यथाः, अध्यगीष्यध्वम् अध्यगीष्ये अध्यगीष्यावहि । पूर्ववद्गाङ्विकल्पः । गाङभावे अध्यैष्यत इत्यादयः । अधिजिगांसते । 'इङश्च' इति सनि गमिरादेशः । 'अज्झनगमां सनि' इति दीर्घः । 'पूर्ववत्सनः' इति तङ् । नायमादिष्टो गमिः सनः प्रकृतिः पृथगात्मनेपदी दृष्टः इति कथं 'पूर्ववत्' इत्यतिदेशेन तङिति न भ्रमितव्यम्, यस्मात्प्रत्ययविशेषोपादाने 'आर्धधातुके' तीव परसप्तमी युक्तम् । तेनेङ् सनि परे पश्चाद्गमिरादेश इतीङेव सनः प्रकृतिः, स च पृथगात्मनेपदी दृष्टः स एव तन्निमित्तमिति तङ्सिद्धिः । 'गमेरिट् परस्मैपदेषु' इतीण्णिषेधः । अत्र च निषेध आत्मनेपदेन समानपदस्थस्येति इति चेड्भवत्येव अधिजिगमिषाचक्रे, अधिजिगमिषिता, अधिजिगमिषा, इति । अध्यापयति । 'क्रीङ्जीनां णौ' इत्यात्वे पुक् । 'बुधयुध' इत्यादिना क्रियाफलस्य कर्तृगामित्वेऽपि परस्मैपदम् । अध्यजीगपत् । 'णौ च सश्चङो'रिति सन्परे चङ्परे णौ गाङादेशविकल्पः । पुकि णौ चङि ह्रस्वे द्वित्वे ऽभ्यासस्य सन्वदित्वे 'दीर्घो लघो'रिति दीर्घः, आदेशाभावे, अध्यापिपत् । पूर्ववदात्वपुकोश्चङि ह्रस्वे णिलोपे 'द्विर्वचनेऽचि' इति तस्य स्थानिवत्त्वात् 'अजादेर्द्वितीयस्य' इति पिशब्दस्य द्विर्वचनम् । एवं सन्परेऽपि अधिजिगापयिषति, अध्यापिपयिषति । सनस्सेट्त्वान् न णिलोप इति गुणायौ । अध्याप्य इत्यत्र 'विभाषाऽऽपः' इत्याप परस्य णेर्ल्यपि विधीयमानो ऽयादेशो न भवति । अस्यात्रूपस्य लाक्षणिकत्वात् । अधीत्य । सवर्णदीर्घस्य पत्वतुकोरसिद्धत्वाद् ह्रस्वनिबन्धनस्तुक् । अधीतमनेन अधीती व्याकरणे, व्याकरणमधीतवानित्यर्थः । 'इष्टादिभ्यश्च' इति प्रथमासमर्थात् अनेनेति कर्त्रर्थे इनिः । 'क्तस्येन्विषयस्य कर्मण्युपसङ्ख्यानम्' इति कर्मणि सप्तमी । रात्रिरधीता अहरधीतमित्यत्र 'कालाध्वनोः कर्मवत्त्वाद्ध्यर्थमिति काले कर्मणि निष्ठा' इति 'कालाध्वनो'रित्यत्र भाष्यम् । अधीयन् पारायणम् । अक्लेशेनाधीयान इत्यर्थः । 'इङ्धार्योश्शत्रकृच्छ्रिणि' इति कर्तरि शता । 'न लोकाव्यये'त्यत्र तृन् इति

प्रत्याहारग्रहणात् कर्मणि कृद्योगलक्षणा षष्ठी न भवति । उगित्त्वात् स्त्रियामधीयती । अधीयान इत्यत्र लट्स्थानिकस्य शानचो ऽक्रक्रविषये-णानेन शत्रा भिन्नविषयत्वान्न बाधः । अध्यायः । 'इङश्च' इत्यकर्तरि कारके भावे च घञ् । उपेत्यास्मादधीयत इत्युपाध्यायः, 'पूर्ववद्गृञ् । उपाध्याया, उपाध्यायी । अत्र स्त्रिया क्तिनाऽस्य घञो न बाधः, 'अपादाने स्त्रियामुपसङ्ख्यानं तदन्ताच्च वा ङीष्' इति वचनात् । पुंयोग-ङीषि तु 'उपाध्यायमातुलाभ्यां वा' इति पक्षे आनुगपि भवति, उपाध्यायी उपाध्यायानीति । अधीयते ऽत्रेत्यध्यायः । पुंसि सञ्ज्ञायां घ बाधित्वा 'अध्यायन्याये'ति घञ् निपात्यते । सौवाध्यायिकः । 'प्रयोजनम्' इति ठक् । 'नय्वाभ्याम्' इत्यैच्, वृद्ध्यभावश्च । केचिदत्र ऐजागमार्थं द्वारादौ स्वाध्यायशब्दं पठन्ति, तदनर्थकम् । यद्यत्र शोभनो ऽध्यायः स्वाध्याय इति व्युत्पत्तिस्तदा 'नय्वाभ्याम्' इत्यैच् सिद्धः, अथ स्वशब्देन समासः, तदापि द्वारादिषु स्वशब्दस्य पाठात् तदादेरपि तत्र ग्रहणात् सौवग्रामिकादिवदैच्सिद्धिः । कठश्चासावध्यापकश्च कठाध्यापकः, 'पोटायुवती'त्यादिना समासः ॥

आकृतिग्रहणा जातिर्लिङ्गानां च न सर्वभाक् ।
सकृदाख्यातनिर्ग्राह्या गोत्रं च चरणैस्सह ॥

इति चरणस्य जातित्वम् । चरणशब्दश्च शाखाध्यायिषु रूढः । ब्राह्मणस्याध्यापको ब्राह्मणाध्यापकः । ण्यन्ताद् ण्वुल्, याजकादित्वाद् अकेनापि षष्ठीसमासः । 'एतिस्तु' इति क्यब्विधौ नित्यमधिपूर्वत्वादस्यैतिग्रहणेन न ग्रहः । तथा च भाष्ये अध्येयं व्याकरणम् इति यदन्तो निर्दिश्यते ॥ ३६ ॥

इक् स्मरणे ॥ अयमप्यधिपूर्वः । मातुरध्येति मातरमध्येति, 'अधीगर्थ' इति कर्मणश्शेषत्वेन षष्ठी । धातोः ककारो ऽत्रैवेगिति विशेषणार्थः । अधीतः, अधीयन्ति, इत्यादि सर्वमिणवत् । 'इणवदिक' इति वचनाद् 'इणो यण्' 'इणो गा लुङि' इत्यस्यापि भवति । आत्रेयस्तु

यणनुक्त्वा केचित्तु 'इणो गा लुङि' इत्यतिदेशकार्यार्थमेव 'इणवदिक' इत्यतिदेशमिच्छन्ति तन्मते इयङि अर्धपर्यन्तमिति पदान्तरमाह । 'इणो यण्' इत्यत्र न्यासे च पतद्द्वय दर्शितम् । लकारोच्चारणम् इडिकोर्निवृत्त्यर्थम् । ये तु इणवदिक इति सामान्येनातिदेशमिच्छन्ति तेषामिड एव निवृत्त्यर्थम् । इकस्तु भवितव्यमेव यणा' इति । मैत्रेयस्तु इयङमेवोदाहृत्य, 'केचित् यणादेशमिच्छन्ति' इत्याह । हरदत्तस्तु इयङादेशं न सहते । 'इणवदिक' इत्युपादाय यदाह । 'यद्यप्येवाय प्रकरणस्य शेषस्स्यात्, 'इणिकोर्गा लुङि' इति सूत्रन्यासः कर्तव्य इत्येवा- वक्ष्यत् । यतश्च स्वतु पृथगिणवदिक इत्याह, ततो मन्यामहे सर्वशास्त्रस्य शेषोयम्' इति । एवं च 'समीनयो राघवयोरधीयन्' इति भट्टिप्रयोगश्चिन्त्यः । 'णौ गमिरबोधने' 'सनि च' इत्यत्र बोधने विधीयमानो गम्यादेशोस्यापि भवति, यतस्तत्र बोधनशब्देनानुभवरूपं ज्ञानं गृह्यते, न च स्मृतिरनुभवः, अत एव वृत्तौ अधिगमयति, अधिजिगमिषति इति गम्यादेश उदाहृतः ॥ ३० ॥

वी गतिप्रजनकान्त्यसनखादनेषु ॥ जनो जन्म[1], प्रजनो जन्मन उपक्रमो गर्भग्रहणम्[2] । वेति, वीतः, वियन्ति, वेषि, वेमि, वीवः, अजादावगुणवृद्धिविषये इयङ् । विवाय, विव्यतुः, विव्युः, विवयिथ, विवेथ, विव्यथुः, विव्य, विवाय, विवय, णिद्वचनेषु वृद्धिगुणायाना स्था निवत्त्वे वीशब्दस्य द्विर्वचनम् आययोरेव वा स्थानिवत्त्वे वैशब्दस्य वेशब्दस्य वा । अपिद्वचनेषु इयङः स्थानिवत्त्वात् विशब्दस्य द्विर्वचने पुनरुच्चरवयङस्य प्रवर्तमानमियङं बाधित्वा ऽनेकाच्त्वाद् यणादेशः । 'कटि गतौ' इत्यत्रायमर्थः प्रपञ्चितः । वेता । वेष्यति । वेतु, वीतात्, वियन्तु, वीहि, हेरपित्त्वात् ङित्त्वाच्च गुणः । वयानि, वयाव, इयङं बाधित्वा परत्वाद्गुणः । अवेत्, अवीताम्, अवियन्, अवेः, अवयम्,

१ अधिकारकार्यार्थमिति ३ । ४ पु पा ।
२ जनन जन इति पा ३ । ४ पु ।
३ असन क्षेपणमित्यधिक ३ पु ।

अवीव, अडागमात्प्रागपि वर्तमानं प्रकृत्यनेकाच्त्वमाश्रित्य अजादौ क्निति ‘एरनेकाच’ इति यणादेश इत्यात्रेयः । अन्ये तु परत्वादियङमेवाहुः । ‘असिद्धवदत्रे’त्यसिद्धत्वं विप्रतिषेधविषये नेति ‘घुमास्थे’त्यत्र हल्ग्रहणेन ज्ञापितम् । वीयात्, वीयाता, वीयुः । आशिषि वीयात्, वीयास्ताम् । अवैषीत् । अवैष्टाम्, अवैषीः, अवैषम् । विवीषति । ‘इको झल्’ इति कित्त्वान्न गुणः । वेवीयते, वेवेति, वेवयीति, वेवीतः, वेव्यति । णिचि वाययति, अवीवयत् । प्रजनार्थत्वे तु ‘प्रजने वीयते’रिति णौ विभाषया आत्वे पुकि, पुरोवातो गाः प्रवापयतीति । पुरोवातो गर्भं ग्राहयतीत्यर्थः । कर्मणि वीयते इत्यादि । वीत्वा । वीतः । वेत्रम् । ‘गुधृवी’त्यादिना त्रप्रत्ययः । वेत्रकीयम् । ‘नडादीनां कुक्च’ इति चातुरर्थिकश्छः कुगागमश्च । अत्र प्रश्लिष्टनिर्देशाद् ‘ई’ इत्यपि धातुमाहु,[1] एति ईतः, इयन्ति । ईयात्, ईयाताम् । ऐषिदित्यादिसिद्ध्यर्थम् ॥ ३८ ॥

या प्रापणे ॥ प्रापणमिह गतिः । याति । प्रणियाति । ‘नेर्गदे’ति णत्वम् । यातः, यान्ति, यासि, यामि । ययौ, ययतुः, ययुः, ययाथ-ययिथ, यय, ययौ, ययिव, क्रादिनियमादिट् । थलि भारद्वाजनियमाद्विकल्पः । याता । यास्यति । यातु, यातात्, याता, यान्तु, याहि, यानि, ‘लङः शाकटायनस्यैव’ इत्याकारान्ताल्लङः शाकटायनमतेन विधीयमानो जुस्भावो लोटो लङ्वद्भावेन न भवति, तत्रानुवर्तमानेन ङित इत्यनेनैव आकारान्तात्परस्य लङोऽन्यस्य झेरसम्भवाद् लङ्विषयत्वे सिद्धे पुनर्लङ्ग्रहणस्य मुख्यलङ्ग्रहणार्थत्वात् । अयात्, अयाताम्, अयुः, अयान्, अयाः, अयातम्, अयाम्, ‘लङः शाकटानस्यैव’ इति वा झेर्जुस्भावः । यायात्, यायातामित्यादि । यायुरित्यस्यानभिधानादप्रयोग इति केचिदित्यात्रेयः । आशिषि, यायात्, यायास्तां, यायासुः । अयासीत्, अयासीः, अयासिषम्, । ‘यमरमनमाताम्’ इति सगिटौ । यान्ती । याती, शत्रन्तात् शीनद्योः परयोः ‘आच्छीनद्योर्नुम्’ इति नुम्विकल्पः ।

---

1 ई[illegible] [illegible] तु वर्तत इत्यर्थ इत्यधिक ३ पु ।

यियासति । 'नित्यं कौटिल्ये गतौ' इति यङ्, यायेति, यायाति, यायीतः, यायति । हलादौ ङिति सार्वधातुके 'ई हल्यघोः' रितीत्वम् । अजादौ 'श्नाभ्यस्तयोरात' इत्याल्लोपः । यायतीति । अयायात् । यायाचरः । 'यश्च यङः' इति यङन्ताच्चाप्निर्वर्त्यं । अत्र चकारः पुनर्वर्त्यविधानार्थं इत्यकौटिल्येपि यङनुर्मायते । एव हि पुनर्विधानमनुपपन्नं स्यात् । अत्र चरत्यनो लोपे यलोपे च 'अचः परस्मिन्पूर्वविधौ' इत्यल्लोपस्य स्थानिवत्त्वम् 'न पदान्ते'त्यादिना निषिध्यत इति 'आतो लोप इटि च' इत्याल्लोपो न भवति । शुभं यातीति शुभया । क्विप् । शुभयौ । 'नादिचि' 'दीर्घाज्जसि च' इति पूर्वसवर्णदीर्घनिषेधाद 'वृद्धिरेचि' इति वृद्धिः । शुभयाः । शसादौ अचि 'आतो धातो'रित्याल्लोपे शुभय इत्यादि । नपुंसके तु[2] ह्रस्वत्वे शुभयमित्यादि । चतुर्थ्येकवचने तु 'ङेर्य' इति यकारे 'सुपि च' इति दीर्घे तस्य च धात्वाकारत्वाद् 'आतो धातो'रित्याल्लोपे 'हलो यमाम्' इति पूर्वयकारस्य वा लोपे शुभंय इति भवति । न चाल्लोपस्य स्थानिवत्त्वम् पूर्वत्रासिद्धीयत्वात्, यलोपविधित्वाद्वा । यदा तु 'हलो यमाम्' इति लोपो न भवति तदा द्वियकारक उच्चार्यः । शुभयिका । कप्रत्यये 'केऽणः' इति ह्रस्वे 'प्रत्ययस्थात्' इतीत्वम् । 'उदीचामातः स्थाने यकपूर्वायाः' इति यकारककारपूर्वस्याकारस्थानिकस्याकारस्य विधीयमानः पाक्षिक इत्त्वनिषेधोऽत्र न भवति । यकपूर्वाया इति स्त्रीलिङ्गनिर्देशेन स्त्रीप्रत्ययस्यातस्तत्र ग्रहणात् । ययातिः । क्तिनि बाहुलकाद् द्विर्वचनमित्यात्रेयः । 'ई हल्यघो'रितीत्वमपि बहुलवचनादेव नेति तदभिप्रायः । यङ्लुगन्ताद्वा क्तिचि 'सञ्ज्ञापूर्वको विधिरनित्य' इति 'दीर्घोऽकित' इत्यभ्यासस्य दीर्घत्वम् 'ई हल्यघो'रित्यभ्यस्तेत्त्वं च न भवति । यात्रा, 'हुयामाश्रुभसिभ्यस्त्रन्' इति त्रन् स्वभावात्स्त्रीविषयः । 'ष्ट्रन्' इति ष्ट्रनैव सिद्धे त्रन्विधानं ङीब्निवृत्त्यर्थम् । यातुः । 'यो द्वे च'

१ वर्त्यविधानमिति ३ पु पा । २ नपुंसके इतीति २ पु पा ।
३ दीर्घेति २ पु पा ।

इन्युप्रत्ययो द्वित्वं च [illegible] । मृगयुः व्याधः, देवयुः धार्मिकः, केवलयुः मानी, ग्रहयुः ग्रहपतिः, मित्रयुः मित्रवत्सलः, ऋषिश्च, मन्त्रयुः मन्त्री, अध्वर्युः, ऋत्विग्विशेषः। 'मृगय्वादयश्च' इति मृगादिषूपपदेषु कुप्रत्यये निपात्यन्ते। अध्वरशब्दस्य अन्तलोपश्च। अध्वर्योर्भावकर्मणी आध्वर्यवम्। उद्गात्रादित्वादञ्। यातुः। रक्षःपर्यायः तुनि पारायणे व्युत्पादितः। यामः। 'अर्तिस्तु' इत्यादिना मन् ॥ ३९ ॥

वा गतिगन्धनयोः ॥ वातीत्यादि यातिवत्। वाजयति। 'वो विधूनने जुक्' इति णौ जुक्। विधूननं कम्पनम्, अन्यत्र पुगेव, वापयतीति। निर्वाणः। 'निर्वाणोऽवाते' इति धात्वर्थस्य अवाताधिकरणत्वे निष्ठानत्वं निपात्यते। वाते तु निर्वातो वातः, निर्वातं वातेन इति नत्वं न भवति। आद्युदात्तो वातशब्दो 'हसिमृग्रिण्वामि'ति तनि द्रष्टव्यः। वातानां समूहो वात्या। 'पाशादिभ्यो य' इति यः। वातूलः। 'वातात्समूहे च' इत्यूलच्। चशब्दाद् अयं न सहत इत्यर्थेऽपि। वातवान्, वातूलः, सिध्मादिषु 'वातदन्तबलललाटानामूङ् च' इति पाठाल्लचि ऊङ् चागमः। 'यस्ये'ति लोपः। वातरोगी, वातकी। 'वातातिसाराभ्यां कुक्च' इति मत्वर्थे इनिः, कुगागमश्च। वातस्य शमनं कोपनं वा वातिकं, तस्य निमित्तप्रकरणे 'वातपित्तश्लेष्मभ्यः शमनकोपनयोरुपसङ्ख्यानम्' इति ठक्। वायुः। 'कृपावाजी'त्युणि युगागमः। वायुर्देवता ऽस्य वायव्यम्। 'वाय्वृतुपित्रुषसो यत्' इति यत्। ओर्गुणे 'वान्तो यी'त्यवादेशः। 'ह्वावामश्च' इत्यत्र अकर्मकत्वात् अस्याग्रह इति न्यासे, तत्पाशादौ 'वाता वान्ति दिशो दश' इति भाष्ये सकर्मकस्य दर्शनादयुक्तम्। तथा च भट्टभास्करोऽपि 'असम्मृष्टो जायसे मातृवो'[1]रित्यत्र मातृवोः मातापितृभावं वान्त्योरिति सकर्मकत्वमाह। एवं च 'ह्वावामश्च' इत्यत्र 'ह्वयतिना सानुबन्धकेन साहचर्याद् अकर्मकत्वाच्च वागतिगन्धनयोः

१ असमृष्टो जायसे मात्रोरित्यत्रेति ३ पु पाठ उपलभ्यते। ४ पुस्तके तु असं मृष्ट इति पाठः।

मा माने इत्येतयोरग्रहणम्' इति हरदत्तेन अकर्मकत्वस्य हेतोः कथनमन्यमताभिप्रायं द्रष्टव्यम् । शोषणे वायति । तन्तुसन्ताने वयतीति शपि गतम् ॥ ४० ॥

भा दीप्तौ ॥ भातीत्यादि यातिवत् । अतिभाते । त्रिष्वपि वचनेषु समानं रूपम्, झस्यादादेशः । अतिभासे, अतिभे । इट एत्वे वृद्धिः । केचित्तु 'आतो लोप इटि च' इत्यत्राप्यापीटो ग्रहणमिति आल्लोपमिच्छन्ति । तत्र, तत्रार्धधातुकाधिकारादागमस्यैवेटो ग्रहणमिति स्थितिः । आगमश्च इडार्धधातुकभक्तत्वादार्धधातुकः । भा । 'डोऽन्यत्रापि दृश्यते' इति[1] डः । भाः । 'सम्पदादि' इत्यादिना क्विप् । भसंज्ञायाम् 'आतो धातो'रित्याल्लोपे भः इत्यादि । 'कास्कमनैः पुनस्करस्कभाभि'रिति प्रयोगः सान्तस्य भासशब्दस्य रुत्वे 'भोभगो' इति यत्वे 'हलि सर्वेषाम्' इति लोपे द्रष्टव्यः । प्रतिभा, प्रभा । 'आतश्चोपसर्गे' इत्यङ् स्त्रियां भावे । प्रतिभैव प्रातिभम् । प्रज्ञादित्वात्स्वार्थेऽण् । निभस्तुल्यः । 'आतश्चोपसर्गे' इति कर्तरि कः । प्रभानम्, प्रभापनम् । 'न भाभूपूकमिगमि'त्यादिना 'ण्यन्तानां च भादीनामुपसङ्ख्यानम्' इति च णत्वनिषेधः । अयं च निषेधः 'कृत्यचः' इति प्राप्तस्येति लोटि प्रभाणि प्रभावयाणि इत्यत्र 'आनि लोट्' इति णत्वं भवत्येव । भानुः । 'दाभाभ्यां नु'रिति नुः ॥ ४१ ॥

ष्णा शौचे ॥ स्नाति । सस्नौ, सस्नाथ, सस्निथ, सस्निव । स्नाता । स्नास्यति । स्नातु स्नाहि, स्नानि । अस्नात्, अस्नाताम् अस्नुः, अस्नाः । स्नायात्, स्नायाताम् । आशिषि, स्नायात्, स्नेयात्, 'वान्यस्य संयोगादे'रित्येत्वविकल्पः । अस्नासीत् । सिष्णासति । सास्नायते । सास्नाति । स्नापयति, स्नपयति, प्रस्नापयति । 'ग्लास्नावनुवमां च' इत्यनुपसृष्टस्य वा मित्त्वम् । प्रतिष्णातम् । 'सूत्रं प्रतिष्णातम्' इति सूत्रे षत्वम् । सूत्रादन्यत्र प्रतिस्नातः । निष्णातः, नदीष्णाः । 'सुपि स्थः' इत्यत्र

१ भाष्ये तु 'अन्येभ्योऽपि दृश्यत इति वक्तव्यम्' इत्येव दृश्यते ।

सुपीति योगविभागात्कः, 'निनदीभ्यां स्नातेः कौशले' इति षत्वम् । कौशलादन्यत्र निस्नातः नदीस्नातः । सुस्नातं पृच्छति सौस्नातिकः । 'पृच्छतौ सुस्नातादिभ्य उपसङ्ख्यानम्' इति ठक् । प्रस्नः । 'घञर्थे कविधानम्' इति कः । स्नानीयं चूर्णम् । बाहुलकात्करणेऽनीयर् । स्नात्वाकालिकः । मयूरव्यंसकादित्वात्तत्पुरुषः । 'समासे नञ्पूर्वे' इति क्त्वो ल्यप् भवति । अनञ् इत्यस्य पर्युदासत्वाद् नञ्सदृशेनाव्ययेन क्त्वान्तस्य समासे स विधिरिति । मयूरव्यंसकादिषु पाठादेव वात्र ल्यपो नैव प्रसङ्गः । ब्राह्मणस्नापकः । ण्यन्तात्ण्वुल् । याजकादित्वात् षष्ठीसमासः । स्नायतीति भौवादिकस्य ॥ ४२ ॥

श्रा पाके ॥ इह पाको विक्लित्तिरिति कैयटादौ । श्रातीत्यादि स्नातिवत् । पाके घटादिपाठात् श्रपयति । अन्यत्र श्रापयति स्वेदयतीत्यर्थः । शृतं क्षीरं हविर्वा । ण्यन्तस्य चाण्यन्तस्य च क्ते 'शृतं पाके' इति शृभावो निपातितः । क्षीरहविषोरन्यत्र श्राणा यवागूः, श्रपिता यवागूरिति । 'संयोगादेरातः' इति निष्ठानत्वम् । अण्यन्तत्वे पाके इति वचनाद् यदा स्वेदनवचनो वा ण्यन्तादण्यन्तात्वे पाचनवचनो वा तदापि न शृभावः । सर्वमेतत् 'श्रै पाके' इत्यत्र प्रपञ्चितम् ॥ ४३ ॥

द्रा कुत्सायां गतौ ॥ कुत्सितगतिः पलायनं स्वापश्चेति स्वामी । तत्र प्रायो निपूर्वाय स्वापवचनः । द्राति, निद्राति, प्रणिद्राति, इत्यादि यातिवत् । निद्रालुः, तन्द्रालुः । 'स्पृहिगृहिपतिदयिनिद्रातन्द्रे'ति निपूर्वात्तत्पूर्वाच्चालुच् । अस्मादेव निर्देशात् तदो दकारस्य च नकारः । निद्रः । 'आतश्चोपसर्गे' इति कः । निद्रा । स्त्रियाम् 'आतश्चोपसर्गे' इत्यङ् । तन्द्रा । 'घञर्थे कविधानम्' इति कप्रत्यये टाप् । तन्द्रिः । 'अच इः' रितीप्रत्ययः, बाहुलकात्कित्त्वादाल्लोपः । तन्द्री । 'कृदिकारादक्तिन' इति वा ङीष् । सर्वत्रात्र तदो दकारस्य नकारः, 'निद्रातन्द्रे'ति निपातनस्य सामान्यापेक्षत्वाद् द्रष्टव्यः । द्राणः, द्राणवान् । 'संयोगादेरातः' इति निष्ठानत्वम् । निद्रित इति निद्राशब्दात् तारकादित्वादितच् । द्रायतीति स्वप्ने शपि ॥ ४४ ॥

प्सा भक्षणे ॥ प्साति, प्रणिप्साति इत्यादि स्नातिवत् । द्रवणेन प्सानीयो द्रप्सः । घञर्थे कः । पृषोदरादित्वाद् द्रादेशः । विश्वप्सा । 'श्वन्नुक्षन्' इत्यादिना कनिन् ॥ ४५ ॥

पा रक्षणे ॥ पातीत्यादि यातिवत् । पायते अपासीत् । ईत्वे सिचो लुकि च लुग्विकरणत्वादस्य ग्रहः । पालयति । 'पातेर्लुग्वक्तव्य' इति णिचि लुगागमः । गोपालक । 'नित्यं क्रीडाजीविकयो' रिति अकेन समासः । गोपालकस्य स्त्री गोपालिका । 'गोपालिकादीनां प्रतिषेध' इति पुंयोगलक्षणस्य ङीषोऽभावः । न पातीति नपात्, नप्तेत्यर्थः । 'नभ्राण्नपाद्' इति निपातनाद् नञः प्रकृतिभावः क्विपि तुक्च । शत्रन्त इति वृत्तिः । तत्र हरदत्तः । 'अपांनपातमित्यादावनपुंसके नुमदर्शनाद् 'उभे वनस्पत्यादिषु' इत्यत्र पातेः क्विपि पाद्'[1] इत्यभिधानाच्च अपपाठोयम् इति । त[2]नूनपाद् अग्निः, इन्धनं विना तनूं न पातीति व्युत्पत्तिः । अपोनप्त्रियम् । अपांनप्त्रियम् । अपोनप्त्रीयम् । अपांनप्त्रीयम् । 'अपोनप्त्रपांनप्तृभ्यां घः' 'छ च' इत्यपोनपादपांनपाच्छब्दाभ्यां घच्छौ । 'सास्य देवते' त्यस्मिन्विषये प्रत्ययसन्नियोगेन अपोनप्त्रपांनप्तृभावश्च । उभे अपि देवतानामनी । पतिः । 'पातेर्डतिः' 'पतिस्समास एव' इति घिसंज्ञानियमात् पत्येत्यत्र 'आङो नास्त्रियाम्' इति नादेशो न भवति । पत्ये इत्यादौ ङिद्वचने 'घेर्ङिति' इति गुणश्च न भवति । पत्युः, ङसिङसोरकारस्य 'ख्यत्यात्परस्य' इत्युकारे[3] यणादेशः । 'ख्यत्ये'ति खिशब्दतीशब्दयोः[4] कृतयणोर्निर्देशः । तथा पत्यावित्यत्र 'अच्च घे' रित्यत्वं न भवति । ङेरौकारस्तु 'औत्' इति भवति । समासे तु घिसंज्ञायां वनस्पतिनेत्यादौ नाभावादीनि घिकार्याणि भवन्ति । 'पारस्करप्रभृतीनि च' इति सुट् । बृहस्पतिः । 'तद्बृहतोः करपत्योश्चोरदेवतयोः सुट् तलोपश्च' इति सुट्तलोपौ । वाचस्पतिः, दिवस्पतिः । एतावपि

१ पातेः क्विपि निपातनार्थस्तुगिति २ पु पा ।
२ तन्वानपादित्यधिकं ३ । ४ पु.
३ उकारादेशे इति ३ । ४ पु पा ।
४ तिशब्दतीशब्दयोरित्यधिकं ३ । ४ । पु ।

पारस्करप्रभृती। बृहस्पतेरपत्यादि बार्हस्पत्यम्। 'दित्यदित्यादित्यपत्युत्तरपदाण्ण्य' इति प्राग्दीव्यतीयेष्वर्थेषु ण्यः। वनस्पतीनां समूहो वानस्पत्यमित्यत्र 'अनिदम्यणपवादे च' इत्यचित्तलक्षणं प्राग्दीव्यतीयं परमपि ठक् 'ण्यादयोर्थविशेषलक्षणादपवादात्पूर्वविप्रतिषेधेन' इति बाधित्वा ण्य एव भवति। अर्थविशेषलक्षणादित्यभिधानाद्, उष्ट्रपतिर्नाम पत्रम् औष्ट्रपतमित्यत्र 'तस्येदम्' इत्यर्थसामान्ये विधीयमानं 'पत्राध्वर्युपरिषदश्च' इत्यञ् परत्वाण्ण्यं बाधते। पत्रं वाहनमुच्यते, अश्वपतेरपत्यादि आश्वपतम्। 'अश्वपत्यादिभ्यश्च' इति ण्यापवादोऽण् प्राग्दीव्यतीयः। एवं धनपत्यादयो गणपठिता उदाहार्याः। वास्तोष्पतिर्देवतास्य वास्तोष्पत्यं वास्तोष्पतीयम्। 'द्यावापृथिवीशुनासीरे'त्यादिना यच्छौ। अत्रैव निपातनात् षष्ठ्या अलुक्षत्वे। गृहपतिना संयुक्तोऽग्निर्गार्हपत्यः। 'गृहपतिना संयुक्ते ञ्य' इति संज्ञायां ञ्यः, निर्देशादेव तृतीया समर्थविभक्तिः। गृहपतेः भावः कर्म वा गार्हपत्यम्। 'पत्यन्तपुरोहितादिभ्यो यक्' इति यक्। अधिपतिगणपत्योस्तु ब्राह्मणादि[1]त्वात् ष्यञ्। आधिपत्यं, गाणपत्यम्। यक्ष्यञोस्स्वरे विशेषः। स्वपतौ साधुस्स्वापतेयम्। 'पथ्यतिथी'त्यादिना ढञ्। कौमुदगन्ध्यायाः पतिः कौमुदगन्धीपतिः। 'ष्यङस्सम्प्रसारणम्' इति सम्प्रसारणे परपूर्वत्वे च 'हल[2]' इति दीर्घः। दुहितुः पतिः दुहितृपतिः। 'विभाषा स्वसृपत्योः' इति विद्यायोनिसम्बन्धवाचिनः पूर्वपदस्य षष्ठ्या विभाषा अलुक्। अहर्पतिः। 'अहरादीनां पत्यादिषूपसङ्ख्यानम्' इति रेफस्य वा रेफो विसर्जनीयापवादः। विसर्जनीयपक्षे 'कुप्वो'रिति पक्षे उपध्मानीयोऽपि। उभयत्राप्यादिशब्दः प्रकारे इति हरदत्तः। जाया च पतिश्च जायापती, दम्पती, जम्पती, राजदन्तादित्वाद् घ्यन्त[3]स्यापि परनिपातः। जायाशब्दस्य वा दम्भावज-

१ पाठादित्यधिकं ३। पु०।

२ तद्भावितपक्षे हलः परं यत्सम्प्रसारणं तदन्ताङ्गस्य दीर्घ इत्यर्थेनोपपत्तौ 'संप्रसारणस्ये'ति सूत्रं न कार्यम्, तृतीय इत्यत्र ढ्लोप इत्यतो अणग्रहणानुवृत्त्या दीर्घाभावः सिद्ध इत्याशयेन माधवेन हल इति दीर्घ इत्युक्तम्।

३ घ्यन्तत्वेऽपीति ३ पु पा।

नित्य ङीप्प्रकारौ[1] अस्मादेव निर्देशात्समासस्य सभावः । आदिशब्देन गणपठितैकादिपूर्वपदादपि । सपत्न्या अपत्यं सापत्नः । 'शिवादिभ्योऽण्' इत्यण् । सपत्न्या भावः कर्म वा सापत्न्यं, निर्दिष्टविशिष्टपरिभाषया 'पत्यन्ते'ति यक् । 'भस्याढे तद्धिते' इति पुंवद्भावस्तु न भवति, सपत्नीशब्दस्याभाषितपुंस्कत्वात् । सपत्नीव सपत्नः । 'त्यप् सपत्ने' इत्यनुवादादिवार्थे ऽकारः । पतिवत्नी । 'अन्तर्वत्पतिवतोर्नुक्' इति जीवपत्यां ङीब् नुगागमश्च तत्सन्नियोगेन मतुपो वत्वं च । अन्यत्र पतिमान् पतिमतीति । पितापितरौ । 'नप्तृनेष्टृ'-इत्यादिना तृचि इत्वं गुणाभावश्च निपात्यते । अप्तृन् इति सर्वनामस्थानदीर्घस्य न भवति, तृन्नन्तानां नप्त्रादीनां पुनरुपादानस्य सञ्ज्ञाशब्दानामौणादिकानामेषामेवेति नियमार्थत्वात् । सौ 'ऋदुशनस्' इत्यनङि नान्तत्वात् 'सर्वनामस्थाने' इति दीर्घः । माता च पिता च पितरौ । 'पिता मात्रा' इति पितुर्वा शेषः, अन्यथा मातापितरौ । 'आनङ् ऋतो द्वन्द्वे' इति विद्यायोनिसम्बन्धवाचिनो द्वन्द्वे[3] पूर्वपदस्य आनङादेशः । अयमनृकारान्ते पुत्रशब्देऽपि भवतीति वृत्तिः पितापुत्राविति 'मातरपितरावुदीचाम्' इत्यनङ्निपातनात् मातरपितरावित्यपि भवति । पितरो देवताऽस्य पित्र्यम् । 'वाय्वृतुपित्रुषसो यत्' इति यत् । 'रीङृतः' इति ऋदन्तस्याङ्गस्य कृत्सार्वधातुकादन्यस्मिन् यकारादौ च्वौ च रीङ् 'यस्येति च' इतीकारलोपः । पितृव्यः पितामहः । 'पितृव्यमातुलमातामहपितामहाः' इति पितृभ्रातरि व्यत्प्रत्ययः, पितुः पितरि मातरि च डामहच्

१ भवत इत्यधिकः १ । ३ । ४ । पु ।

२ नामधातुस्थलत्वान्यविरुद्धमेतत् तत्र हि महता प्रबन्धेन स्वातन्त्र्यप्रत्याभावस्य भाष्यानभिप्रेतत्वमुपपाद्य 'सव सति समानपतिलक्षणात्सपत्नीशब्दा' न्निर्दिष्टविशिष्टपरिभाषया पत्यन्तलक्षणे यकि सापत्न्य इति, तथा भावकर्मणोरपि पत्यन्तलक्षणे यकि सापत्न्यमिति सिद्धान्तितमिति केचित् । तत्त्व तु विवक्षानिबन्धनपतिशब्दमाश्रित्य नित्यस्त्रीलिङ्गो य सपत्नीशब्दस्तद्विषयकोऽय ग्रन्थः । स्वामिपर्यायपतिशब्देन भाषितपुंस्कं सपत्नीशब्दमाश्रित्य नामधातुस्थो ग्रन्थ इति न पूर्वापरवृत्तिग्रन्थविरोधनेशोऽपीति सुधियो विभावयन्तु ।

३ द्वन्द्वे इति १ । ३ । ४ । पु पाठः ।

पक्षः । अत्रोत्वात्परत्वात् 'जुसि च' इति गुणः । अपिपः, अपिपूर्तम् अपिपरम् अपिपूर्व । गुणे हलङ्यादिना सिप्तिपोर्लोपः । पिपूर्यात्, पिपूर्याता, पिपूर्याः, पिपूर्याम् । आशिषि, पूर्यात्, पूर्यास्ता यासुटः कित्त्वाद्गुणाभावः । उत्वम् । अपारीत्, अपारिष्टाम्, अपारीः, अपारिष, सिचि वृद्धिः । 'वृतो वा' इतीटो दीर्घस्य 'सिचि परस्मैपदेषु' इति निषेधः । पिपूर्षति । 'इट् सनि वा' इति पक्षे इडागमः । इडभावे 'इको झल्' इति सनः कित्त्वे उत्वम् । इटि तु तस्य पूर्ववद्दीर्घविकल्पे प्रकृतेश्च गुणे पिपरिषति पिपरीषतीति । पोपूर्यते । पापर्ति, पापरीति, पापूर्त इत्यादि । अभ्यासस्योरदत्त्वहलादिशेषयोः 'दीर्घोऽकितः' इति दीर्घः । रुग्रिकामभावस्तरतिवत् । पिपुरत्, पिपुरतौ, शता । पारयति । अपीपरत् । निपूर्तः, निपूर्तवान् । 'न ध्याख्यापॄमूर्छिमदाम्' इति निष्ठानत्वनिषेधः । पूर्त्वा । 'श्र्युकः किति' इत्यनिट्त्वम् । पूः, पुरौ, पुरः 'भ्राजभास' इति क्विप् । 'उदोष्ठ्यपूर्वस्य' इत्युत्वम् । 'र्वो' रित्यादिना उपधादीर्घः । अत्र वक्तव्यं पूर्वत्राप्युक्तम् । पुरुषः । 'पुरः कुषन्' इति कुषन् । पौरुषेयः । वधो विकारस्समूहः कृते ग्रन्थादिर्वा । 'सर्वपुरुषाभ्यां णढञौ' इति ढञ् । तथा च तत्र वार्तिकम् । 'पुरुषाद्वधविकारसमूहतेनकृतेषु' इति कृते तृतीया समर्थविभक्तिः, अन्यत्र तु षष्ठी । पुरुषः प्रमाणमस्य पौरुषम्, पुरुषद्वयसम् पुरुषदघ्नम्, पुरुषमात्रम्, 'पुरुषहस्तिभ्यामण् च' इत्यण्, द्वयसजादयश्च चशब्दात् । द्वौ पुरुषौ प्रमाणमस्याः द्विपुरुषी द्विपुरुषा । अत्र प्रमाणे विहितस्य द्वयसजादेः 'प्रमाणे लः' 'द्विगोर्नित्यम्' इति लुक् । 'तद्धितार्थ' इति द्विगुः 'पुरुषात्प्रमाणेऽन्यतरस्याम्' इति प्रमाणवाचिपुरुषशब्दान्तात् द्विगोस्तद्धितलुकि पक्षे ङीन्निषेधात् टाप् । राजपुरुषस्य भावकर्मणी राजपौरुष्यम् । राजपुरुषात् ष्यञ्, अनुशतिकादित्वादुभयपदवृद्धिः । पुरुषान् गच्छति पुरुषेषु वसति वा पुरुषत्रा । 'देवमनुष्यपुरुषपुरुमर्त्येभ्यो द्वितीयासप्तम्योर्बहुलम्' इति द्वितीयान्तात् सप्तम्यन्ताच्च स्वार्थे त्राप्रत्ययः । पुरुः । 'पॄभिदिव्यधिगृधिधृषिहृषिभ्यश्च' इति कुप्रत्ययः ।

'उदोष्ठ्यपूर्वस्य' इत्युत्वम् । पुरुत्रा । पूर्ववत् त्राप्रत्ययः । पूर्णम् । 'धापॄवशी' त्यादिना नप्रत्ययः । पुरीषः । 'शॄपॄभ्यां किच्च' इति षन्प्रत्ययः । पर्व ग्रन्थिः । 'स्नामदी' त्यादिना वनिन् । परुः, परुषी । 'अर्तिपॄवपी' त्यादिना उसिः । परुषः । 'नहिकलिहनिपॄवस्यर्तिभ्य उषच्' इत्युषच् । ह्रस्वान्तोयं धातुरिति वर्धमानकाश्यपाभरणपुरुषकाराः । स्वामी तु दीर्घान्तं पठित्वा ह्रस्वान्तः केचिदिति[1] । आत्रेयमैत्रेयौ तु ह्रस्वान्तं पठित्वा दीर्घान्तमेके इति । अत्रोदाहरणानि । पपर्ति, पिपृतः, पिप्रति, पिपर्षि, पिपर्मि । पपार, पप्रतुः, पपर्थ, 'ऋतो भारद्वाजस्य' इति नेट्[2] । पिप्रिव । क्रादिनियमादिट् । पर्ता । परिष्यति । 'ऋद्धनोः स्ये' इतीट् । पिपर्तु, पिपृहि, पिपराणि । अपिपः, अपिपृताम्, अपिपरुः । जुसि गुणः। अपिपः, अपिपरम्, अपिपृव । पिप्रियात्, पिप्रियाताम् । आशिषि, प्रियात्, प्रियास्ताम्, 'रिङ् शयग्लिङ्क्षु' इति रिङादेशः । अपार्षीत्, अपार्ष्टाम् इत्यादि ॥ वृत्तिकारस्य तु दीर्घान्त एवेष्टः । यदाह । "शॄदॄप्रां ह्रस्वो वा' इत्यत्र केचिदेतत्सूत्रं प्रत्याचक्षते । श्रा पाके, द्रा कुत्सायां गतौ, प्रा पूरणे, इत्येवमनेकार्था धातव इति शॄदॄप्रामर्थे वर्तमानाना विशश्रतुरित्यादीनि रूपाणि साधयन्ति । तथा सति विशुश्रुवात् इति कसावेतद्रूपं न स्यात्" इति । यदि ह्रस्वान्तस्स्यात्प्रतिना प्रत्याख्यान पिपृवानिति प्रयोजनकथनं चानुपपन्नं स्यात् । तथा वृत्तिन्यासपदमञ्जरीप्रदीपकारादयोपि । किञ्च अपाणिनीयश्च ह्रस्वान्तः, यदि हि स्यात् किं ह्रस्वविकल्पनेन, यत्क्रे य्यादिकाद्दीर्घान्तरूपाणि अस्माच्च ह्रस्वान्तरूपाणि भविष्यन्ति । एवं च 'तं पिपृतं रोदसी' 'पाहि माग्ने पिपृहि' इत्यादयश्छान्दसा द्रष्टव्याः । अ[3]दन्तमृदन्तमिति सेडय्यं दीर्घान्तः परस्मैपद्यनुरोधेन पठितः । अयं क्र्यादावपि । पृगताविति स्वामी । 'पृञ् व्यायामे' तुदादौ । पॄपूरणे इति चुरादौ ॥ ४ ॥

---

१ ह्रस्वान्त इति नन्दीति १ । २ । पु पा० ।
२ अनिट्त्वमिति २ । ३ । पु० पा० । ३ ऊदृन्तदन्तामिति १ पु० पा

डुभृञ् धारणपोषणयोः ॥ अनुदात्त उभयतोभाषः । बिभर्ति, बिभृतः, बिभ्रति, बिभर्षि, बिभर्मि, 'भृञामित्' इति श्लावभ्यामस्येत्त्वम् । बभार, बभ्रतुः, बभ्रुः, बभर्थ, क्रादिनियमादनिट्त्वम् । बभृव । बिभरांचकार, 'भीह्रीभृहुवाम्' इत्याम्प्रत्ययः, श्लुवद्भावाद् द्विर्वचनमित्त्व च । भर्ता, भरिष्यति, बिभर्तु, बिभृतात् बिभृता, बिभ्रतु, बिभृहि, बिभराणि । अबिभः, अबिभृताम्, अबिभरुः । 'जुसि च' इति गुणः । अबिभः, अबिभृतम्, अबिभरम् । बिभृयात्, बिभृयाताम् । आशिषि भ्रियात्, भ्रियास्ता, भ्रियासुः । अभार्षीत्, अभार्ष्टाम्, अभार्षीः, अभार्षम्, अभार्ष्व । बिभृते, बिभ्राते, बिभ्रते । बिभृषे, बिभृध्वे, बिभ्रे, बिभृवहे । बिभरांचक्रे । भर्ता । भरिष्यते । बिभृता, बिभृष्व, बिभरै । अबिभृत, अबिभ्राताम्, अबिभ्रत । अबिभृथाः, अबिभ्रि, अबिभृवहि । बिभ्रीत, बिभ्रीयाताम्, बिभ्रीथाः, बिभ्रीय । बिभ्रिवहि । आशिषि भृषीष्ट, भृषीयास्ताम् । 'उश्च' इत्यात्मनेपदे लिङ्सिचोर्झलादोः कित्त्वादगुणत्वम् । अभृत, अभृषाताम्, अभृथाः, अभृड्ढम्, अभृषि, 'ह्रस्वादङ्गात्' इति झलि सिचो लोपः । बिभ्रत् । बिभ्राणः । बुभूर्षति, बुभूर्षते, 'इको झल्' इति सनः कित्त्वात् 'अज्झने' ति दीर्घः, 'उदोष्ठ्य' त्युत्वम् । 'सनीवन्त' नीड्विकल्पोऽस्य न भवति, तत्र भरति शपा निर्देशात् । भृत्रिमम्, 'ड्वितः क्त्रिः,' 'क्त्रेर्मम्नित्यम्,' द्रौविडास्तु ड्वित पटित्वा 'ड्वितोऽथुच्' इति अथुचमुदाहरन्ति भरथु रिति । शेष भरतिवत् ॥ ५ ॥

माङ् माने शब्दे च ॥ अनुदात्त आत्मनेपदी, मिमीते, मिमाते, मिमते, मिमीषे, मिमाथे, मिमीध्वे, मिमे, मिमीवहे । भृञादित्त्वाच्छ्लावभ्यासस्येत्त्वम् । हलादौ क्ङिति सार्वधातुके 'ई हल्यघो' रितीत्वमभ्यस्तस्य । अजादौ तु 'श्नाभ्यस्तयो' रित्याल्लोपः । प्रणिमिमीते 'नेर्गद' त्यादिना णत्वम् । ममे, ममाते, ममिरे, ममिषे, ममाथे, ममिध्वे, ममे, ममिवहे, क्रादिनियमादिट् । 'आतो लोप इटि च' इत्या-

१ चन्द्राविन्त्यत्ति १ पु० पा० ।
२ भृञामित्ति १ पु० पा० ।

कारलोपः । माता । मास्यते । मिमीताम्, मिमाताम्, मिमताम्, मिमीष्व, मिमै । अमिमीत, अमिमाताम्, अमिमत, अमिमीथाः, अमिमाथाम्, अमिमीध्वम्, अमिमि, अमिमीवहि । मिमीत, मिमीयाता, मिमीथाः, मिमीय । आशिषि, मासीष्ट, मासीयास्ताम्, अमास्त, अमासाताम् अमासत, अमास्थाः, अमाध्वम्, अमासि, अमास्वहि । मित्सते । 'सनिमीमे' त्यच इस् । 'सस्यार्धधातुके' इति तत्वम् । 'अत्र लोप' इत्यभ्यासलोपः । मेमीयते । 'घुमास्थे' तीत्वे द्विर्वचनेभ्यासस्य गुणः । मामाति, मामेति, मामीतः, मामति । मापयति । अमोमपत् । मित्वा । मितः । मितवान् । मितिः । 'द्यतिस्यतिमेतीत्वम् । प्रमाय । 'न ल्यपि' इति 'घुमास्थे' तीत्वस्य निषेधः । मेयम् । 'अचो यत्,' 'ईद्यति' इतीत्वे गुणः । मीयतेनेनेति पाय्यम् । 'पाय्यसान्नाय्ये'त्यादिना मानेभिधेये ण्यदादिपत्व च निपात्यते । 'आतो युक्' इति युक् । मिमीतइति मायः । 'श्याद्व्यधे' त्यादिना णे युक् । माया टाप् । मायी, मायिकः, मायावी, मातौ मत्वर्थे व्युत्पादितम् । धान्यमायः । 'ह्वावामश्च' इति [1]कर्मण्यण् कस्यापवादः । प्रमिमीतइति प्रमः । 'आतश्चोपसर्गे' इति कः । प्रमा । स्त्रियाम् 'आतश्चोपसर्गे' इत्यङ् । प्रमितिः । बाहुलकात् क्तिन्. । वातप्रमीर्वातमृगः । 'वातप्रमी' रिति वातोपपदात्प्रपूर्वादस्मादीकारप्रत्ययआल्लोपे च निपात्यते । अजादौ यणादेशे वातप्रम्यावित्यादि । सप्तम्येकवचने तु यणः परत्वात्सवर्णदीर्घे वातप्रमी इति भवति । अन्ये तु 'अन्येभ्योपि दृश्यते' इति क्विपि 'घुमास्थे' तीत्वे व्युत्पादयन्ति । 'ईत्वमवकारादौ' इति च भाष्ये न स्थितम् । तन्मते अजादौ 'एरनेकाच' इति यण् । तत्र त्वय विशेषः, सप्तम्येकवचने यण् परत्वात्सवर्णदीर्घे बाधतइति वातप्रम्यीति भवति । उणादिवृत्तौ तु मिनोतेरीकारप्रत्यये व्युत्पाद्यते । मेरु, 'मापोरुरी च' इति रुप्रत्यये ईकारे चान्तादेशे गुणः ॥ ६ ॥

[1] कर्मण्युपपदेऽण् प्रत्यय इति ३ पु पा० ।

ओहाङ् गतौ ॥ अनुदात्त आत्मनेभाषः । जिहीते, जिहाते, जिहते, जिहीषे, जिहीध्वे, जिहे, जिहिवहे । जहे । हाता । हास्यते । जिहीता, जिहाताम् । अजिहीत, अजिहाताम्, अजिहत । जिहीत, जिहीयाताम् । आशिषि हासीष्ट, हासीयास्ताम् । अहास्त, अहासाता-मित्यादि माङ्वत् । जिहासते, जाहायते । 'घुमास्थेतीत्वे जहातीति ति[1]पा निर्देशादस्याग्रहः । अत एव 'जहातेश्च क्त्वि' इति हिभावेपि नेति हात्वेति भवति । हापयति । अजीहपत् । हानः, हानवान् । 'ओदितश्च' इति निष्ठानत्वम् । जिहीते भावानिति हायनः संवत्सरः, 'हश्च व्रीहिकालयो' रिति ण्युट् । एको हायनोऽस्या एकहायनी त्रिहायणी, चतुर्हायणी । 'दामहायनान्ताच्च' इति सङ्ख्यादेर्दाम[2]हाय-नान्ताच्च बहुव्रीहेः स्त्रियां ङीप्, 'त्रिचतुर्भ्यां हायनस्य' इति णत्वम् । असञ्ज्ञात्वाद् न 'पूर्वपदात्सञ्ज्ञायामि' ति णत्वप्राप्तिः । एते च ङीब्-णत्वे वयस्येव स्मर्येते । तेनेह न भवतः, एकहायना शाला त्रिहायना चतुर्हायना इति । हानिः । 'ग्लाम्लाज्याहाभ्यो नि' रिति [3]निप्र-त्ययः । भृञादयस्त्रयो गताः ॥ ६ ॥

ओहाक् त्यागे ॥ अनुदात्तः परस्मैपदी । ककारो 'हश्च व्रीही'-त्यत्र पूर्वस्यास्य च सामान्यग्रहणार्थः । अन्यथा एकानुबन्धकत्वाद् अस्यैव ग्रहस्स्यात् । जहाति, जहितः, जहीतः, जहति, जहासि, जहिथः, जहीथः जहिथ, जहीथ, जहामि, जहिवः, जहीवः, जहिमः, जहीमः, 'जहातेश्च' इति हलादौ क्ङिति सार्वधातुके इत्वमीत्वं च । अ[4]ज्ञादौ 'श्नाभ्यस्तयो' रित्याल्लोपः । जहौ, जहतुः, जहुः, जहाथ, जहिथ, जह, जहौ, जहिव, क्रादिनियमादिट् । थलि भारद्वाजनियमाद्विकल्पः । 'आत औणलः' 'आतो लोप इटि च' । हाता । हास्यति, जहातु, जहितात्, जहिताम्, जहीताम्, जहतु, जहिहि, जहीहि, जहाहि, जहानि, जहाव । पूर्ववदित्वमीत्वं च । अज्ञादावाल्लोपश्च । हौ 'आ च हौ'

१ तिपेति नास्ति ३ । ४ पु । २ दामान्ताद्धायनान्ताच्चेति ४ पु पा । ३ स्त्रियां निरिति २ पु० पा । ४ अहलादाविति ४ पु पा ।

इत्यात्वं च । अजहात्, अजहिताम्, अजहीताम्, अजहुः, अजहाः, अजहाम् 'सिजभ्यस्ते' ति नित्यं झेर्जुस् । 'लङश्शाकटायनस्य' इत्याकारान्तलक्षणो जुस्विकल्पस्तु न भवति, परत्वात् 'श्नाभ्यस्तयो- रात' इत्याल्लोपे आकारान्तत्वस्यैवाभावात्. 'ई हल्यघो' रितीत्वं तु जुस्भावे कृते हलादित्वं पर्यवप[1]त्स्यतइति न भवति । एवमदरिद्रुरि- त्यत्रापि । जह्यात्, जह्याताम्, जह्युः, जह्याः, जह्याम्, जह्याव, 'लोपो यि' इति यकारादौ सार्वधातुके जहातेराल्लोपः । आशिषि हेयात्, हेयास्ताम् । 'एर्लिङि' इत्येकारो घु[2]मास्थेतीत्वापवादः । अहा- सीत्, अहासिष्टाम्, अहासीः, अहासिष्टम्, अहासिषम् । सेगिटौ । जिहा- सति । जेहीयते । परत्वात् 'घुमास्थे' तीत्वे द्विर्वचनम् । जाहाति, जाहेति, जाहीतः, 'ई हल्यघो' रिति नित्यमीत्वम् । 'जहातेश्च' इति श्तिपा निर्देशाद् इत्वं तु न भवति । अत एव 'आ च हौ' इत्यात्वमीत्वम् 'लोपो यि' इत्यालोपश्च न भवन्ति । तेन 'ई हल्यघो' रितीत्वे जाहीहि जाहीयादिति भवतः । आशीर्लिङस्तु आर्धधातुकत्वादपि 'जहातेश्च' इतीत्वमीत्वं च न भवति । अत एव 'ई हल्यघो' रिति नित्यमीत्वं, 'लोपो यि' इत्याल्लोपश्च न भवति । 'घुमास्थे' तीत्वम्, 'एर्लिङि' इत्येवं च श्तिपा निर्देशान्न भवति, तेन जाहायादिति भवति । अत्र धातोः कित्त्वमाश्रित्य 'दीर्घोकित' इत्यभ्यासस्य दीर्घनिषेधो न भवति तत्राकित इत्यनेनाभ्यासस्य विशेषणात् । स्पष्ट चैतद्वृत्तिन्यासपदमञ्जर्यादिषु । हापयति । अजी- हपत् । हित्वा । 'जहातेश्च क्त्वि' इति हिभावः । हीनः, हीनवान् । ओदित्वान्निष्ठानत्त्वम् । विहाय । 'न ल्यपि' इतीत्वनिषेधः । जहा- त्युदकमिति कृत्वा हायनाः व्रीहयः । 'हश्च व्रीहिकालयो' रिति ण्युट् । हानिः । 'ग्ला[3]ज्ये' त्यादिना स्त्रियां पूर्ववत्क्तिः । शर्धजहा माषाः । शर्धोपानशब्दः । 'वातशुनीतिलशर्धेष्वजधेट्तुद[4]जहातिभ्य

[1] पर्युदस्तमिति ४ पु· पा· । [2] घुमास्थेति नास्ति ४ पु ।
[3] हानि· पूर्ववत्क्तिरिति ४ पु· पा । [4] हनित्यधिकं ३ । ४ पु· ।

उपसङ्ख्यानम्' इति श्वशि शपि श्लौ द्विर्वचने 'श्नाभ्यस्तयो' रित्याल्लोप उपपदस्य मुमागमः। पूर्वापहाणा अ[1]परापहाणा। पूर्वानपरांश्च जहातीत्यर्थः। नन्द्यादिपाठात्ल्युः कर्तरि ल्युट्, णत्वं च। सम्प्रहाणेत्यपि क्वचित्पठन्तीत्यात्रेयः। जहकः। कालपुरुषत्यागी च. 'जहातेर्द्वे च' इति क्वुनि द्वित्वम्। अहश्च। 'नञि जहाते' रिति[2] कनिन्याकारलोपः, अहन्नित्यधिकृत्य 'रोऽसुपि' इति नकारस्य रेफादेशः। अत्र 'स्वमोर्नपुंसकात्' इति सोर्लुका लुप्तत्वात् प्रत्ययलक्षणेन न सुप्परत्वम्। अहोभ्यामित्यत्रौ 'अहन्' इत्यह्नः परस्य रुत्वे तस्य 'हशि च' इत्युत्वम्। रत्वस्य 'असुपि' इति निषेधात्, 'अहन्' इत्येतदर्थोऽन्सुप्परविषयं भवति। ननु रत्वरुत्वयोः पूर्वत्रासिद्धत्वाद् नलोपस्स्यात्। न चानयोरनवकाशत्वम्, कृतेपि नलोपे एकदेशविकृतन्यायेन अवशिष्टस्यावकाशत्वात्। किञ्च हे अहरित्यत्र 'वा नपुंसकानाम्' इति नलोपाभावपक्षे रत्वं सावकाशम् तथा रुत्वमपि हे दीर्घाहो निदाघेत्यत्र, अत्र हि पुल्लिङ्गत्वाद्धल्ङ्यादिना सोर्लोपे प्रत्ययलक्षणेन अस्ति सुप्परत्वम्। 'न ङिसम्बुद्ध्यो' रिति नलोपश्च निषिध्यते। सत्यम्। रुविधौ षष्ठ्या निर्देष्टव्ये प्रथमान्तस्य निर्देशाद् अहन्नित्यावर्तने तत्रैकं नलोपाभावार्थं तदेव रूपमन्वाख्यायते, अपरेण तु रुरिति वृत्तौ समाधिरुक्तः। अह्नां समूहः क्रतुरहीनः। अत्राहश्शब्दोऽहर्गिनकर्मवचनः 'अह्नः खः क्रतौ' इति खः। 'अह्नष्टखोरेव' इति टिलोपः। अक्रतावाह्न इति सामान्योऽणेव। द्वाभ्यामहोभ्यां निर्वृत्तः द्व्यहीनः, द्वैयह्निकः। 'रात्र्यहस्संवत्सराच्च' इति द्विगोर्वा खः, अन्यदा प्राग्वती[3]यष्ठञ्। 'अह्नष्टखोरेव' इति नियमाट्टिलोपाभावे 'अल्लोपो न' इत्यल्लोपः। अहर्पतिः। 'अहरादीनां पत्यादिषु' इति रेफस्य वा रेफः। अन्यदा विसर्जनीयोपध्मानीयौ। अह्नो रूपमहोरूपम्, अहश्च रात्रिश्च

१ परापहाणा इति ४ पुस्तके, उत्तरत्रापि पूर्वान् परांश्चेति पाठः।

२ नञि उपपदे, इत्यधिकम ३। ४ पु०।

३ प्राग्वतीयेति ४ पु पा।

अहोरात्रम्, अहोरथन्तरम् । 'अह्नो रुविधौ रूपरात्रिरथन्तरेषूपसङ्ख्यानम्' इति रेफापवादो रुः । 'हशि च' इत्युत्वम् । इद च समासे चासमासे चेति हरदत्तः । एवं हि रात्रीतीकारान्तपाठोऽर्थवान् । तेन 'गतमहोरूपं पश्य रात्रिरागता रथन्तरं गाय' इति वाक्येपि रुर्भवति । परमाह, 'सन्महत्' इति समासः । 'राजाह' इति टचि टिलोपः । द्वयोरह्नोर्भवो द्व्यह्नः । 'तद्धितार्थे' इति द्विगुः, 'कालात्' इति विहितस्य ठञो 'द्विगोर्लुगनपत्ये' इति लुक् । द्वे अह्नी जातस्य द्व्यह्नजातः । 'कालाः परिमाणिना' इति समासः । स च त्रिपदस्यापीष्यते । तथा च 'तद्धितार्थे' इत्यत्र वार्तिकम् । 'उत्तरपदेन परिमाणिना द्विगोस्समासवचनम्' इति । द्विगोर्निष्पत्तयइत्यर्थः । त्रयाणां समासे हि 'तद्धितार्थे' इत्युत्तरपदे पूर्वयोस्समासे 'सङ्ख्यापूर्वे' इति द्विगुत्वे 'द्विगुश्च' इति तत्पुरुषो भवति । अह्नो निर्गतः निरह्नः । प्रादिसमासः. अह्नः पूर्वभागः पूर्वाह्णः । 'पूर्वापरे' त्येकदेशिसमासः । सङ्ख्याताह्नः । विशेषणसमासः, 'अह्नोह्न एतेभ्य' इति टचि परभूतेह्नोह्नादेशः । एतेभ्य इति सङ्ख्याव्ययाहरादिसूत्रोपात्ताः परामृश्यन्ते । तत्राहशब्दात्परोहशब्दो न सम्भवति । एकपुण्याभ्यां त्वह्न 'उत्तमैकाभ्याम्' इत्यह्नादेशनिषेधाद् एकाहः पुण्याहमिति टजेव । उत्तमशब्दोऽहरादिसूत्रोपात्तान्त्यवचनः । तत्र पुण्यशब्दएवोच्चार्यउत्तमशब्दोच्चारणमुपोत्तमस्यापि ग्रहणार्थमिति सङ्ख्यातशब्दात्परस्य अहश्शब्दस्याह्नादेशो नेति केचिद्वर्णयन्तीति वृत्तावुक्तम् । द्वयोरह्नोस्समाहारो द्व्यह इत्यत्र 'न सङ्ख्यादेस्समाहारे' इत्यह्नादेशाभावः । एवं च द्व्यहो जातस्येति व्युत्पत्त्या द्व्यहजात इत्यपि भवति । अयमह्नादेशष्टचि परभूतइति वृत्तावुक्तत्वाद् यत्र बहुव्रीह्यादौ स नास्ति तत्राह्नादेशोपि नास्ति सङ्ख्यातमहोस्य सङ्ख्याताहः पुरुष इति । कथं सायाह्न इति, यतः पूर्वादिषु सायशब्दस्यापाठाद् एकदेशिसमास एव नास्ति । नैष दोषः 'सङ्ख्याविसायपूर्वस्याह्नस्याहन्नन्यतरस्यां ङौ' इत्येभ्यः परस्याह्नस्य सप्तम्येकवचने ऽहनादेशविकल्पविधानात् सर्वेणैकदेशेनाह्नः समासविज्ञानात् ।

एवं च मध्याह्न इत्यपि भवति । इदं च ज्ञापकं रात्र्युपलक्षणमिति व्याख्यातारः । 'अह्नोऽदन्तात्' इत्यकारान्तपूर्वपदस्थान्निमित्तात्परस्येऽह्नो नकारस्य णत्वम् । अह्नान्ता 'रात्राह्नाहाः पुंसि' इति पुंल्लिङ्गाः । पुण्याहं सुदिनाहमित्यत्र तु 'पुण्यसुदिनाभ्यामह्नः' इति नपुंसकत्वम् । सुदिनशब्दः प्रशस्तवचनः । प्राह्णः । अह्नः णत्वम् । 'तिष्ठद्गुप्रभृतीनि च' इत्यव्ययीभावत्वादव्ययत्वं नपुंसकत्वं च । अत्रैव पाठादह्नादेशोऽपि । दीर्घमहो यस्यां शरदि दीर्घाह्नी शरत् । 'बह्वादिभ्यश्च' इति ङीप् । युवादित्वात् 'प्रातिपदिकान्ते' ति णत्वनिषेधः, यद्यपि बह्वादिष्वहन्निति पठ्यते, तथापि केवलस्य स्त्रीत्वायोगात्तदन्तस्य ग्रहणम् । ङीपभावे 'अनो बहुव्रीहेः' 'डाबुभाभ्यामन्यतरस्याम्' इति डाप्ङीपौ नलोपनिषेधश्च भवति । दीर्घाह्णा, दीर्घाह्नी, दीर्घाहा, इति । ङीप्ङीषोः स्वरे विशेषः । सार्थाद्धीनः । 'अपादाने चाहीयरुहोः' इति तसिनिषेधः । हीयेति विकृतनिर्देशो जहातेर्निवृत्त्यर्थः, न तु हीयेतिरूपस्य विवक्षणार्थः । 'मन्त्रो हीनः स्वरतो वर्णतो वा' इत्यत्र तु 'हीयमानपापयोगाच्च' इति हीयमानेन पापेन च युक्तादकर्तृतृतीयान्ताद्वा तसिविधानात्तसिः । अत्र विवक्षितार्थाद्धीयमानेन मन्त्रेण स्वरवर्णौ हेतुतया युज्येते । कैयटे तु पस्पशायां[1] 'आद्यादित्वात्तसि' रिति । सार्थाद्धीयते देवदत्तः, हीन इत्यादौ लकाराद्यौ विवदन्ते । तत्र 'अपादाने चाहीयरुहो'रित्यत्र न्यासे देवदत्तस्य कर्तुरीप्सिततमत्वाभावेऽपि कर्मसंज्ञाया कर्तृग्रहणस्य स्वातन्त्र्योपलक्षणार्थत्वाद् हानक्रियायां स्वतन्त्रस्य अपादानस्येप्सिततमत्वात् कर्मणि लकारादय इति प्रपञ्चेन समर्थितम् । सम्प्रदानसूत्रे कैयटेऽप्येवमुक्तम् । इन्दुरपि स्वयमेव हीयत इति प्रतीतेः कर्मकर्तरि लकारोऽस्त्वित्याशङ्क्य जहातेः कर्तृस्थक्रियत्वात् कर्मण्येव लकार इति । हरदत्तस्तु न्यासमननुसृत्य 'यद्येव माषेष्वश्वं बध्नातीत्यत्र कर्मणोऽप्यश्वस्य वस्तुतो यद्भक्षणे स्वातन्त्र्यं तदाश्रया कर्मसंज्ञा प्राप्नोति तस्मात्कर्मकर्तर्येव लकारः' इति । उपपादितं च 'इह जहा-

१ पस्पशायामिति क पु नास्ति ।

तिरपगमनार्थः, सा च तुदुपघातादिना देवदत्तस्यापगमे तत्समर्थाचरणम् । यदा तु तुधादिना स्वयमेवापगच्छति तदा कर्मकर्तृत्वम् 'इति । 'पुनः कृतइत्यपेक्षाया पश्चात्सार्थेन सम्बन्ध' इति चोक्तम् ॥ ८ ॥

डुदाञ् दाने ॥ उभयतोभाषोऽनुदात्तः ॥ प्रणि[1]ददाति, दत्तः, ददति, ददासि, दत्थः, दत्थ, ददामि, दद्वः, 'श्नाभ्यस्तयो' रित्याल्लोपः । क्ङिति सार्वधातुके 'ई हल्यघो' रित्यभ्यस्ताकारस्य विधीयमानमीत्वं तत्रैव अघोरिति प्रतिषेधान्न प्रसजति । [2]'नेर्गदे' ति णत्वम् । ददौ, ददतुः, ददुः, ददाथ, ददिथ, दद, ददौ, ददिव । क्रादिनियमादिट् । थलि भाद्वाजनियमाद्विकल्पः । 'आत औ णलः' । 'आतो लोप इटि च,' दाता । दास्यति । ददातु, दत्तात्, दत्ता, ददतु, देहि, ददानि, दत्तात्त्वमित्यत्र 'घ्वसोरेद्धौ' इत्यस्मात्परत्वात् तातङि पुनर्न तस्य प्रवृत्तिः सकृद्गतपरिभाषया । अददात्, अदत्ताम् अददुः । 'सिजभ्यस्ते' ति नित्य जुस् । अददाः, अददाम्, अदद्व । दद्यात्, दद्यातां, दद्याः, दद्यां, दद्याव । आशिषि देयात्, देयास्ताम् । घुत्वाद् 'एर्लिङि' इत्येत्वम् । अदात्, अदाताम्, अदुः 'आत' इति झेर्जुसि पररूपम् । अदाः, अदाम्, अदाव । 'गातिस्थे' ति सिचो लुक् । दत्ते, ददाते, ददते, दत्से, दध्वे, ददे, दद्वहे । ददे, ददाते, ददिषे । दाता । दास्यते । दत्तां, ददातां, दत्स्व, दध्वम्, ददै, ददावहै । अदत्त, अददाताम्, अददत, अदत्थाः, अददि, अदद्वहि । ददीत, ददीयाता, ददीयाः, ददीय । आशिषि दासीष्ट । आर्धधातुकत्वेपि अकित्त्वादेत्वं न भवति । 'श्नाभ्यस्तयो' रित्याल्लोपस्तु अनभ्यस्तत्वादपि न भवति । अदित, अदिषाताम्, अदिथाः, अदिषि 'स्थाघ्वोरिच्च' इत्यात्मनेपदपरस्य सिचः कित्त्व धातोश्चेत्वम् । झलि 'ह्रस्वादङ्गात्' इति सिज्लोपः । सन्निपातपरिभाषाभावः प्रागेवोक्तः । आदत्ते । 'आङो दोनास्यविहरणे' इत्यकर्त्रभिप्रायेपि तङ् । 'आङ' इति निर्देशाद् अङितो वाक्यस्मरणविषयात्परस्य न तङिति केचित् । 'अनास्यवि-

१ प्रणीति नास्ति ४ पु । २ प्रणिददातीत्यधिक ४ पु· ।

हरणे' इति पर्युदासः 'स्वाङ्गकर्मकाच्च' इति वक्तव्यात्स्वाङ्गकर्मकविषय
इति 'व्याददते पिपीलिकाः पतङ्गस्य मुखम्' इत्यत्रापि तङेव ।
स्वाङ्गकर्मकत्वे तु स्वमुखं व्याददाति व्याददत्ते इत्युभयमपि यथायोगं
भवति । सुधाकरस्तु 'आङो दः' इति योगविभागादनास्यविहरण-
इत्यनेन व्यवहितेनापि प्राप्तिः पराणुद्यते । एवमेव चान्द्राः प्रतिपेदिरे
इति ङित्त्वनिमित्तमपि तङमत्र नेच्छति । आत्रेयस्तु कर्त्रभिप्राये तङे-
वेति । अयं च योगविभागो भाष्ये न दृश्यते । किञ्च 'आङो दोऽनास्य'-
इत्येवास्य धातोर्वृत्त्यसम्भवात् तत्समवायिन्या विहरणक्रियाया वर्तमा-
नात्तङ्निषेधे सिद्धे पुनर्विहरणग्रहणं विपादिका[1] व्याददातीत्यादावास्य-
विहरणसमानक्रियादपि प्रतिषेधार्थं इति भाष्यउक्तम् । तत्रैव कैयट-
पदमञ्जर्योरास्यइत्युच्यमाने तत्समवायिक्रियामात्रं लभ्यते न विहर-
णमेवेति स्वं मुखमादत्तइत्यत्रापि ग्रहणस्य मुखसमवायित्वात् प्रति-
षेधस्स्यादिति दोषमुद्भाव्य 'अनास्य' इत्यास्यपर्युदासत्वाद्ग्रहणस्य च
ग्राह्यकर्तृविषयत्वादनास्यक्रियत्वाच्च दोष इति परिहृतम् । प्रसज्य-
प्रतिषेधे ह्यास्यसमवायित्वाश्रयेण प्रतिषेधेन भाव्यत्वाद्दोष एव
स्यादिति भाष्यकृतोऽप्ययमनभिमतः प्रतीयते । किञ्च स्वं मुखमादत्त-
इति तङ्स्यादिति दोषापादानमप्ययुक्तं स्यात् । दित्सति, दित्सते,
'सनि मीमे' तीस्भावे 'अत्र लोपः' इत्यभ्यासलोपः । 'सस्यार्ध-
धातुके' इति तत्वम् । देदीयते, ईत्वे द्विर्वचनम् । दादेति, दादाति,
दात्तः, क्ङिति 'श्नाभ्यस्तयो' रित्याल्लोपः । दापयति । अदीदपत् ।
ददः । 'ददातिदधात्योर्विभाषा' इति कर्तरि शे शपः श्लुः । शाभावे
'श्याद्व्यधे' ति णे युकि दायः । 'तदर्हम्' इति निर्देशात् क्वचित्कृ-
द्योगे द्वितीया भवतीति 'दायै रामोऽदमुन्नमम्' इति भट्टिप्रयोगं
निर्वहन्ति । दीयतइति दायः, घञ्, तमादत्तइति दायादः ।
मूलविभुजादित्वात् कः । गवां दायादः गोषु दायादः । 'स्वामीश्वर'-

१ कुल व्याददातीत्यधिकं ३ । ४ । पु०
२ अनिष्टापादनमिति ३ । ४ । पु पा

ति षष्ठीसप्तम्यौ । दायादेनादीयमानं दायाद्यम् । ब्राह्मणादित्वात् ष्यञ् । तत्र हि कर्मग्रहणेन साधनकर्मापि गृह्यते । आदिः । 'उपसर्गे घोः कि' रिति किः । आदौ भवमादिमम् । 'आदेश्च' इत्युपसङ्ख्यानाद् मप्रत्ययः । आद्यः । दिगादित्वाद्यत् । आदितः । 'आद्यादिभ्य उपसङ्ख्यानम्' इति सार्वविभक्तिकस्तसिः । दत्रिमम् । 'ड्वितः क्त्रिः' । 'क्त्रेर्मम्नित्यम्' । अन्येषु साधारणेषु कृत्सु दाण इव रूपं नेयम् । तथा घुसंज्ञाकार्यमपि । दाण् दाने, देङ् रक्षणे, दैप् शोधने, त्रयं भ्वादौ । दाप् लवने इत्यदादौ ॥ ९ ॥

डुधाञ् धारणपोषणयोः ॥ अनुदात्त उभयपदी । दानेप्येके । दधाति, धत्तः दधति, दधासि, धत्थः, दधामि, दध्वः । 'श्नाभ्यस्तयो' रित्याल्लोपे 'दधस्तथोश्च' इति तकारथकारसकारेषु ध्वे च परेषु बशःस्थाने भष्विधानाद् दकारस्य धकारः। अत एव भष्भावववचनसामर्थ्याद् आल्लोपस्य न स्थानिवत्त्वम् । परस्य 'खरि च' इति चर्त्वम् । अत्रापि 'पूर्वत्रासिद्धीयमद्विर्वचने' इति वा 'चर्त्वविधिं प्रति' इति वाल्लोपस्य न स्थानिवत्त्वम् । 'सम्पद्विनिमयेनोभौ दधतुर्भुवनद्वयम्' इत्यत्र 'प्रतिषेधे हसादीनाम्' इति कर्मव्यतीहारनिमित्तः तङ्नेति केचित् । तदयुक्तम् । तत्रादिशब्देन शब्दनक्रियाणामेव ग्रहणात् । इह तु सम्पदो विनिमयो न धात्वर्थस्येति तस्य व्यतीहाराभावात्तङो नैव प्रसङ्गः । दधातु, धत्तात्, धत्तां, धेहि, दधानि । अदधात्, अधत्ताम्, अदधुः, अदधाः, अदधाम्, अदध्म । दध्यात्, दध्याः, दध्याम्, आशिषि धेयात्, धेयास्ताम् । 'एर्लिङि' इत्येत्वम् । अधात्, अधाः, अधां, 'गातिस्थे'ति, सिचो लुक् ।। धत्ते, दधाते, दधते, धत्से, धध्वे, दधे, दध्वहे, । दधे, दधाते, दधिषे, द धे । धाता । धास्यते । धत्ता, धत्स्व, दध्वम् । एकदेशविकृतत्वाद्, रमपि ध्वेशब्दः । दधै, दधावहै, । अधत्त, अधत्थाः, अदधि, अद ध्वहि । दधीत । आशिषि धासीष्ट, अधित, अधिषाताम्, अधिषत, अधिथा', अधिषि, 'स्थाघ्वोरिच्च' इति सिचः कित्त्वमित्वं च । धित्सति, धित्सते । देधीयते । दाधेति, दाधाति, धात्तः, ददा-

तिवत्प्रक्रिया । धापयते, धापयति । प्रणिदधाति, 'नेर्गदे' ति णत्वम् । धीयतइति धाय्या । 'पाय्यसान्नाय्ये' त्यादिना ण्यति सामिधेन्या निपात्यते । अन्यत्र यतीत्वे धेयम् । प्रधः । 'आतश्चोपसर्गे' इति कः । दधातीति दधः । 'ददातिदधात्योर्विभाषा' इति शे शप्[1] । अन्यदा 'श्याद्व्यधे' ति णः, धायः । हित्वा, हितः, हितवान्, हित्रिमम्, । 'ड्वितः क्त्रिः' क्त्रेर्मम्नित्यम्' 'दधातेर्हि' रिति तकारादौ किति ह्यादेशः । प्रधायेत्यत्र अन्तरङ्गानपि विधीन् बहिरङ्गो ल्यब्बाधते, इति पूर्वमेव ल्यपि पश्चात्तादिकितोभावाद् न हिरादेशः । 'न ल्यपि' इतीत्व निषिध्यते । दधातेरिति तिपा निर्देशाद् दाधीत्वेत्यत्र ह्यादेशो न भवति । यद्वा तकारादिकित्परत्वाभावान्नैव हेः प्रसङ्गः । क्विकि दधातीति क्विष्किन्धा । 'आतोनुपसर्गे क' इति कः, पारस्करादित्वात्सुट् किमो मलोपश्चत्व च । धीयते धार्यते शिरसीति धात्री आमलकी । 'धः कर्मणि ष्ट्रन्' । षित्वान्ङीष् । भूतधात्रीत्यत्र भूतानि धत्तइत्यौणादिकः कर्तरि ष्ट्रन् । उपधिः, अन्तर्धिः, 'उपसर्गे घोः कि'-रिति किः । अन्तश्शब्दस्याङ्किविधिणत्वेषूपसर्गसञ्ज्ञोक्ता । उपधिरेव औपधेयम्, 'छदिरुपधिबलेर्ढञ्' इति स्वार्थे ढञ् । सुषन्धिः, दुष्षन्धिः, सुषामादित्वात् षत्वमिति धञ्तावेव वोचाम । विधिः । बाहुलकात्कर्तरि किः । उदकं धीयतेस्मिन्नित्युदधिः । 'कर्मण्यधिकरणे च' इति कर्मण्युपपदे ऽधिकरणार्थे किः । 'पेषवासवाहनधिषु च' इत्युदकस्योदभावः । असञ्ज्ञार्थमिदं वचनम् । सञ्ज्ञाया तु 'उदकस्योदस्सञ्ज्ञायाम्' इत्येव सिद्धम् । शिरो धत्तइति शिरोधिः ग्रीवा । बाहुलकात्कर्तरि किः । एव 'विधाता विश्वसृड्विधि' रित्यादावपि । यद्वा शिरोधिशब्दे शिरो धीयतेस्यामिति 'कर्मण्यधिकरणे च' इति किप्रत्ययेऽस्तु व्युत्पत्तिः । अन्तर्धा, श्रद्धा । अन्तश्शब्दस्याङ्किविधिणत्वेषूपसर्गसञ्ज्ञोक्ता । श्रच्छब्दस्यापि 'श्रच्छब्दस्योपसङ्ख्यानम्' इति । श्रद्धालुः । 'स्पृहिगृही' त्यादिना आलुच् । दधि 'भाषाया धाञ्कृसृगमिजनिन-

[1] शप. प्लुरिति ३ । ४ । पु पा·

मिभ्य'इति क्तिक्तिनोरन्यतरस्मिन् लिड्वद्भावाद् द्विर्वचनम् । धीवा । 'अन्येभ्योपि दृश्यते' इति क्वनिपि 'घुमास्थे' तीत्वम् । धीवरी । 'वनो र च' इति ङीब्रेफौ । बहवो धीवानोऽस्यां बहुधीवरी, बहुधीवा। बहुधीवे, बहुधीवानौ । 'डाबुभाभ्यामन्यतरस्याम्' इति पक्षे ङीब्रेफौ डाप्च, 'अनो बहुव्रीहे'रिति निषेधाद् ङीपोऽभावश्च । धीवरः । 'छित्वरछत्वरे' त्यादिना ष्वरचि निपात्यते । धातुः । 'सितनिगमी'-त्यादिना तुन् । धानाः । 'धापॄवस्यज्यतिभ्यो न' इति नः । धामा, मनिन् । कर्कन्धूः । 'अन्दूदृम्भूजम्बूकफेलूकर्कन्धूदिधिषू'रिति निपातनात् कर्कशब्दउपपदे कूप्रत्ययः, अल्लोप उपपदस्य मुमागमश्च । दिधिषूः । पूर्वेण सूत्रेणैव निपातनात्कूप्रत्यय आकारस्येकारो द्विर्वचनं षुगागमश्च । निधानम् । 'कॄपॄवृजिमन्दिनिधाञ्भ्य' इति क्युन्, अयं बाहुलकात्के-वलादपीति धनमित्यपि भवति । धनायति धनं गृध्यतीत्यर्थः । 'अशनायोदन्यधनाया बुभुक्षापिपासागर्धेषु' इति क्यचि धनशब्दस्य यथा-सङ्ख्याद्गर्धे आकारः । सर्वधनमस्यास्तीति सर्वधनी । कर्मधारयान्मत्व-र्थीयस्सर्वधनाद्यर्थे' इतीनिः 'न कर्मधारयान्मत्वर्थीय' इत्यस्याप वादः । अपिदधाति, पिदधाति । 'वष्टि भागुरिरल्लोपमवाप्योरुपस-र्गयो'रिति पक्षे ऽल्लोपः ॥ धयतीति पाने शपि । अत्रानुक्तं साधारणं तत्र द्रष्टव्यम् ॥ १० ॥

णिजिर् शौचपोषणयोः ॥ एतदादयो विष्लृपर्यन्तास्त्रयोऽनुदात्ता स्स्वरितेतः । नेनेक्ति, नेनिक्तः, नेनिजति, नेनेक्षि, नेनेज्मि, नेनिज्वः, 'निजां त्रयाणां गुणश्श्लौ' इत्यभ्यासस्य गुणः । झलि पदान्ते च 'चोः कु'रिति कुत्वे 'खरि च' इति चर्त्वम् । निनेज, निनिजतुः, निने-जिथ, निनिज, निनिजिव । क्रादिनियमादिट्, नेक्ता । नेक्ष्यति, नेनेक्तु, नेनिक्तात्, नेनिक्ताम्, नेनिग्धि, हेरपित्त्वान्ङित्त्वान्न गुणः । नेनि-जानि, 'नाभ्यस्तस्य' इति गुणनिषेधः । अनेनेक्, अनेनिक्ताम्, अने-निजुः, अनेनेक्, अनेनिजम्, अन्तरङ्गत्वान्मिपोमि 'नाभ्यस्तस्याचि पिति' इति गुणनिषेधः । नेनिज्यात्, नेनिज्याताम्, नेनिज्युः, नेनिज्याम्, ।

आशिषि निज्यात् । अनिजन्, अनिजनाम्, अनिजन् अनिजः, 'इरितो वा' इति इनेर्वाङ् परस्मैपदे । अन्यदा अनैक्षीत्, अनैक्ताम्, अनैक्षुः, अनैक्षोः, अनैक्तम्, अनैक्त, 'वदव्रजे' ति वृद्धिः । झलि मिज्लोपः । नेनिक्ते, नेनिजाते, नेनिजते, नेनिक्षे, नेनिज्ञे, नेनिज्वहे, निनिजे, निनिजिवहे । नेक्ता । नेक्ष्यते । नेनिक्ताम्, नेनिक्ष्व, नेनिजै । अनेनिक्त, अनेनिक्थाः, अनेनिजि । नेनिजीत, नेनिजीयाताम् । आशिषि निक्षीष्ट । अनिक्त, अनिक्षातां 'लिङ्सिचावात्मनेपदेषु' इति लिङ्सिचोः कित्त्वाच्च गुणः । निनिक्षति, निनिक्षते, 'हलन्ताच्च' इति सनः कित्त्वम् । नेनिज्यते, नेनिजीति, नेनेक्ति । नेजयति, अनीनिजत् । निक्त्वा, निक्तः, निक्तवान् । निजः । इगुपधलक्षणः कः । निर्णेजकः । ण्वुल् । प्रणेनेक्ति । 'उपसर्गादसमासेऽपि' इति णत्वम् 'उभौ साभ्यासस्य' इति लिङ्गात् कृते द्विर्वचने प्रवर्तते ॥ ११ ॥

विजिर् पृथग्भावे ॥ वेवेक्तीत्यादि निजिवत् । 'विज इट्' इति इडादेः प्रत्ययस्य ङित्त्वे 'ओ विजी' इत्यस्यैव ग्रहणं नास्य यदसौ 'सृजिविजि विद्यनिट्स्वरात्' इत्यनिट् । अत्र च कारिकाया इरित्व[1]-सामर्थ्यात् स न गृह्यते । अनयैव कारिकया विचिरिति[2]स्वामिनः प्रथमान्तस्य पाठः प्रत्युक्तः ॥ निजिविजी द्वौ रुधादौ च । ओ विजी भयचलनयोरिति तुदादौ ॥ १२ ॥

विष्लृ व्याप्तौ ॥ वेवेष्टि, वेविष्ट इत्यादि निजिवत् । 'ष्टुना ष्टुः' । वेक्ष्यति 'षढोः कः सि' । वेविड्ढि । ष्टुत्वे[3] जश्त्वे डकारः । अवेवेट् । 'झलां जशोऽन्ते' इति जश्त्वे चर्त्वे । अविषत् इत्यादावतङि ऌदित्वा[4]च्चिलत्यमङ् । तङि तु 'शल इगुपधादनिटः क्सः,' अजादौ 'क्सस्याचि' इत्यल्लोपः, अविक्षत, अविक्षाताम् अविक्षन इत्यादि । विष्यन्ते व्याप्यन्तेनेन प्रेक्षकाणां मनांसीति वेषः । 'हलश्च' इति सञ्ज्ञायां घञ् । वेषेण

---

१ इदित्त्वेति ३ पु पा० ।   २ सम्या इतीत्यधिक ३ । ४ पु ।
३ 'झलां जश झशि' तीत्यधिक ३ । ४ । पु ।   ४ त्स्नेरित्यधिक ४ पु० ।

सम्पादी वेष्यो नटः, वेष्या वेश्या । 'कर्मवेषाद्यत्' इति सम्पादिनि यत्[1] । सम्पत्तिश्शोभातिशयः । परिवेषः परिधिः । वेषवद्धृञ् । वेवेष्टीति विषम्, इगुपधलक्षणः कः, विषमर्हतीति विष्यः । दण्डादित्वाद्यत् । विष्णुः । 'विषेः किच्च' इति णुप्रत्ययः ॥ १३ ॥

वृत् ॥ वृत्ता निजादयः । अत्र वृत्करणं प्रपञ्चार्थं त्रयाणामित्येव तत्फलस्य सिद्धत्वात् ॥ निजादयस्स्वरितेतोनुदात्ताः । 'विषिरुदिदित्येके' इति स्वामी । धनपालोपि[2] 'आर्याणामुदित्, द्रविडानां लृदित्' इति । एवमेव पुषादिसूत्रे सुधाकरोपि ॥

घृ क्षरणदीप्त्योः ॥ गणान्ते छन्दसीति वक्ष्यते । तदेतदादीनां सर्वेषां शेषः । यदाह न्यासकारः । 'ये निजादिभ्यः परे पठ्यन्ते ते सर्वे छान्दसाः, तथा हि तान्पठित्वा छन्दसीत्युक्तम्' इति । स्वामिकाश्यपाभ्यामपि छान्दसत्वमेवोक्तम् । अर्ते[illegible]त्यादौ 'बहुलं छन्दसि' इतीत्वे सिद्धे पुनः 'अर्तिपिपर्त्योश्च' इति इत्वविधानं भाषायामप्यस्य प्रयोगोस्तीति ज्ञापनार्थमिति वदता भाष्यकारेणाप्ययमर्थः स्फो[3]रितः । अत एव भाष्यविरोधात्कातन्त्रोक्तमेषां भाषाविषयत्वमुपेक्ष्यम् । अत एव पुरुषकारे 'घृप्रभृतयोपि छान्दसा इति केचिदिति मैत्रेयग्रन्थमुपादाय केचिच्छन्दोभाष्यानुसारिण इति व्याख्येयमित्युक्तम् । जिघर्ति । 'जिघर्म्यग्निं [4]मनसा घृतेन' इत्यादि भृञ्वत् । '[5]बहुलं छन्दसि' इतीत्वम् ॥ [6]घरतीति सेचने शपि ॥ १४ ॥

हृ प्रसह्यकरणे ॥ 'अय स्रुवो अभिजिहर्ति होमान्' इत्यादि । हरतीति शपि ॥ १५ ॥

ऋ सृ गतौ ॥ इयर्ति, इयृतः, इय्रति, इयर्षि, इयर्मि, इयृवः, 'अर्तिपिपर्त्योश्च' इति श्लावभ्यासस्येत्वे 'अभ्यासस्यासवर्णे' इती-

१ प्रत्यय इत्यधिक ३ पु । २ धनपालाद्याचार्याणामिति १ । ४ पु· पा· ।
३ स्मारितइति पा· ३ । ४ । पु । ४ हविषेति पा· ४ पु· ।
५ 'भजामिदि' त्यधिकम् ४ । पु· ।
६ घृष्वि वराहः 'कविघृष्विजविस्थविक्रिविदिवि' रिति क्विन्प्रत्यये निपात्यते इत्यधिकं ४ पुस्तके ।

यङि पिति गुणः । अन्यत्राजादौ यणादेशः । आर, आरतुः, अरिथ, आरिव, णिति वृद्धिः, रन्यत्र 'ऋच्छत्यॄताम्' इति गुणः । उभयोः स्थानिवत्त्वात् ऋशब्दस्य द्विर्वचनेऽरदत्त्वहलादिशेषेषु 'अत आदेः' इत्यभ्यासस्य दीर्घे सवर्णदीर्घः । थलि 'इड् यर्तिव्ययतीनाम्' इति भारद्वाजनियमं बाधित्वा नित्यमिट्.[1] इयर्तु इयृतात्, इयृताम्, इय्रतु, इयृहि, इयृतात् इयराणि । ऐयः, ऐयृताम्, ऐयरुः, ऐयः ऐयरम्, ऐयृव, पूर्ववदाभ्यामस्येत्वेयङोराटि वृद्धिः । हल्ङ्यादिना तिस्योर्लोपः । जुसि गुणः । इयृयात्, इयृयाताम्, इयृयुः, इयृयाः, इयृयाम् । आशिषि अर्यात्, अर्यास्ताम्, 'गुणोऽर्तिसंयोगाद्योः' रिति गुणः । आरत्, आरताम्, । आरः, आरम्, आराव, 'सर्तिशास्त्यर्तिभ्यश्च' इत्यङ् । 'ऋदृशोऽङि' इति गुणः । समियृते, समिय्राते, समियृषे, समिय्रे । समारे, समारिषे, समारिवहे । समर्ता । समरिष्यते । समियृता समिय्राता, समियृध्व, समियरै, आटि गुणः । समैयृत, समैय्राता, समैयृथाः, समैय्रि, समैयृवहि । समिय्रीत, समिय्रीयाता, समिय्रीथा, समिय्रीय । आशिषि समृषीष्ट, समृषीयास्ताम् । समारत समारेता, समारन्त, समारथाः समारे, समारावहि । 'समिगार्ती' त्यत्र परस्मैपदानुवृत्तिरुत्तरार्थेत्यात्मनेपदेऽपि वृत्ताविहोक्तः । तथा च भट्टिः । 'समरन्त मार्भाष्टा' इति । 'समो गम्यृच्छी' त्यादिना ऽकर्मकत्वेऽत्र तङ् । यत्त्वत्र भाष्ये मासमृत माममृषातामिति मित्रः प्रयोगः स भौवादिकस्य । अङ्विधौ तस्य ग्रहणं नेति तत्रैवोक्तम् । इयर्तीत्यादौ 'अचः परस्मिन्' इति यणः स्थानिवत्त्वान्न वलि लोपः । 'न पदान्तद्विर्वचने' ति न स्थानिवत् इत्येतत्तु लोपाजादेशविषयम् । शेषं भौवादिकवत् । ससर्तीत्यादि यथा दर्शनं छन्दसि ॥ ऋच्छति सरतीति शपि ॥ घृप्रभृतय उदात्ता अनुदात्ताः ॥ १६–१७ ॥

भस भर्त्सनदीप्त्योः ॥[3] 'कपिर्बभस्ति ते जनम्' । बब्धः । 'घसि-

१ अर्ता, अरिष्यति, ऋच्छतेः स्वे इतीद्, इत्यधिकं ३ । ४ । पु ।
२ र्लेरित्यधिकं । ३ । ४ पु ।　　३ उदात्त उदात्तेदित्यधिकं ४ पु ।

भसोर्हलि च' इत्युपधालोपे[1] 'झषस्तथोर्धोऽधः' । 'झलां जश् झशि' इति जश्त्वम् । बप्सति । उपधालोपे 'खरि च' इति चर्त्वम् । 'न पदान्ते'त्यादिना जश्त्वचर्त्वयोरुपधालोपस्य न स्थानिवत्त्वम् । अन्यदपि यथादर्शनम् । भस्म । 'अन्येभ्योऽपि दृश्यते' इति भाषायामपि मनिन् । भस्त्रा । 'हुयामा' इत्यादिना त्रन् । स्वभावात् स्त्रियाम् । भस्त्रिका, भस्त्रका, अभस्त्रिका, अभस्त्रका, परमभस्त्रिका, परमभस्त्रा । 'भस्त्रैषा' इत्यादिना केवलस्य नञ्पूर्वस्य अन्यपूर्वस्य चास्य ककारात्पूर्वस्यात्स्थानिकस्याकारस्य वेत्वम् । भस्त्रया हरति भस्त्रिकः, भस्त्रिकी । 'भस्त्रादिभ्यष्ठन्' इति हरत्यर्थे ष्ठन् । षित्वान्ङीष् स्त्रियाम् । न बभस्तीति नभः । क्विबित्यात्रेयः ॥ १८ ॥

कि ज्ञाने ॥ अनुदात्तः । चिकेति, चिकितः, चिक्यतीत्यादि । 'एरनेकाच' इति यण् ॥ १९ ॥

तुर त्वरणे ॥ तुतोर्ति, तुतूर्तः, तुतुरतीत्यादि । तसि 'हलि च' इति दीर्घः । तुरः । इगुपधात्कः ॥ २० ॥

धिष शब्दे ॥ दिधेष्टि, दिधिष्टः, इत्यादि ॥ २१ ॥

धन धान्ये ॥ दधन्ति, दधन्तः, दधनति, इत्यादि ॥ २२ ॥

जन जनने ॥ जजन्तीत्यादि । [2]क्यादय उदात्ता उदात्तेतः ॥ २३ ॥

गा स्तुतौ ॥ अनुदात्त उदात्तेत् । देवान् जिगाति, जिगीतः, जिगतीत्यादि । हलादौ क्ङिति सार्वधातुके 'ई हल्यघो'रितीत्वम् । अजादौ तु 'श्नाभ्यस्तयो'रित्याल्लोपः । गायति गाते इति द्वयं शपि । इह छन्दसीति पठ्यते । तच्च घृप्रभृतीना शेष इति प्रागेवोक्तम् ॥ २४ ॥

वृत् ॥ जुहोत्यादयो वृत्ता इत्यर्थः ॥

इति[3] श्रीसायणाचार्यविरचितायां माधवीयाया
धातुवृत्तौ जुहोत्यादयः[4] ॥

---

१ झलो झलीति स लोपइत्यधिकं ३ । ४ पु॰ ।

२ चिकेत्यादय इति ३ पु कित्यादय इति १ । ४ पु॰ पा॰ ।

३ पूर्वदक्षिणपश्चिमसमुद्राधीश्वरकम्पराजसुतसङ्गमहाराजमहामन्त्रिणा मायणसुतेन माधवसहोदरेण सायणार्येणेत्यधिकं ३ । ४ पु श्रीपूर्वेत्यादिसायणाचार्येणेत्यन्त॰ १ पु॰ पा॰

४ संपूर्णा इत्यधिकं ३ । ४ पु॰ समाप्तिमगमदित्यधिकं १ पु ।

## अथ दिवादिः ।

दिवु क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्नकान्तिगतिषु ॥ एतदादयो दीङ्पर्यन्ता[1] उदात्ता उदात्तेतः । [illegible] । अतो दीव्यति, अत्र तु [illegible] दीव्यतः, दीव्यन्ति । दीव्यसि, दीव्यामि । 'दिवादिभ्यः श्यन्' इति श्यन् शपोऽपवादः । 'हलि च' इतीको दीर्घः । 'दिवः कर्म च' इति दिवस्साधकतमस्य करणस्य सतः कर्मसंज्ञाविधानाद् अक्षशब्दात् तृतीयाद्वितीये पर्यायेण भवतः । संज्ञासमावेशस्य प्रयोजनं मनसा दीव्यति मनसादेवो नाम कश्चिदित्यत्र मनसः कर्मत्वात् [illegible] अण्प्रत्ययः, करणत्वात्तृतीया च । अत्र तृतीयायाः 'मनसः संज्ञायाम्' इत्यलुक् । तथाक्षैर्देवयते देवदत्तेनेत्यत्र संज्ञासमावेशेन करणत्वेनाश्रयणात् कर्मत्वाद् 'अणावकर्मकात्' इति परस्मैपदनियमो न भवति । किञ्च 'गतिबुद्धी' ति प्रयोज्यस्य कर्मत्वमपि न भवति । दिदेव, दिदिवतुः, दिदिवुः, दिदिविथ, दिदिविव, दिदिविम । देविता । देविष्यति । दीव्यतु दीव्यता[त्] दीव्य, दीव्यानि, 'अतो हे' रिति हेर्लुक् । अदीव्यत्, अदीव्यताम्, अदीव्यः, अदीव्यम् । दीव्येत्, दीव्येताम्, दीव्येयुः, दीव्येः, दीव्येयम् यासुटि 'अतो येयः' । आद्गुणः । यलोपो वलि, आशिषि, दीव्यात् दीव्यास्ताम् अदेवीत् अदेविष्टाम् अदेवीः, अदेविषम्, 'नेटि' इति न वृद्धिः । दीव्यन् । दीव्यन्ती कुले । दीव्यन्ती ब्राह्मणी । 'नपुंसकाच्च' इत्यौङः शीभावः । ङीप् । उभयत्र 'शप्श्यनोर्नित्यम्' इति शीनद्योः[3] परतो नित्यं नुम् । दिदेविषति । 'सनीवन्त' ेति वेट्[4] । अन्यदा 'हलन्ताच्च' इति सनः कित्त्वे[5] 'च्छ्वोः शूठ्' इत्यूठि यणादेशे दुद्यूषति । देदीव्यते । ऊठा विना वकारान्तानां यङ्लुङ्नास्तीति भ्वादौ प्रतिपादितम् । देव-

---

१ दीङ्पर्यन्ता इति नास्ति ३ पु० ।   २ [illegible] । ४ । पा ।
३ शीनद्योः परत्वादिति २ । ४ । पु० पा० ।
४ आगम इत्यधिकम् ३ । ४ पु ।   ५ कित्वादिति ३ । ४ पु पा ।

यति । अदीदिवत् । देव, देवी । पचादिषु देवडिति पाठाद् इगुपधलक्षणं कं बाधित्वाऽचि टित्वान्ङीप् । देवस्या"त्यादि दैव्य, दैव, 'दित्यदित्यादित्ये' त्यत्र 'देवस्य यञञौ' इति प्राग्दीव्यतीयेष्वर्थेषु यञञौ । देवस्येद देवकीयम् । 'गहादिभ्यश्च' इत्यत्र 'देवस्य चेति वक्तव्यम्' इति कुगागमश्छप्रत्ययश्च शैषिकः । 'नूनमस्य दैवानुग्रह' इति भाष्यप्रयोगादञपि भवति । देव एव देवता । 'देवात्तल्' इति स्वार्थे तल् । स्वभावात्स्त्रीत्वम् । देवतैव दैवतम् । प्रज्ञादित्वाद् अण् । 'स्वार्थिकाः प्रकृतितो लिङ्गवचनान्यतिवर्तन्ते' इति पुनपुंसकत्वम्[1] । पितृदेवताये इदं पितृदैवत्यम् । 'देवतान्तात्तादर्थ्ये यत्' इति यत् । दैविकम् । अध्यात्मादित्वाट्ठञ् । आधिदैविक, पूर्ववट्ठञ् । 'अनुशतिकादीनां च' इत्युभयपदवृद्धिः । देवेषु वसति देवान् गच्छति देवत्रा, 'देवमनुष्ये' त्यादिना त्राप्रत्ययः । देविका । देवशब्दात्संज्ञाया कनि 'केऽण' इति ह्रस्वः । देविकाया भव दाविकम् । देविकाकूले भवाश्शालय दाविकाकूलाः । पूर्वदेविका नाम प्राच्या ग्रामः । तत्र भवः पूर्वदाविकः । 'देविकाशिंशपे' त्यादिना देविका[2]या आचामादेरच आकारः । अयं चाकार अन्योरुदाहरणयोः 'तद्धितेष्वचामादे' रिति वृद्धिप्रसङ्गे, इतरस्य तु 'प्राचां ग्रामनगराणा' मित्युत्तरपदवृद्धिप्रसङ्गे । सुदेविकायां भवं सौदेविकमित्यत्र देविकाया अनङ्गादि[3]त्वात् समुदायस्याप्राग्ग्रामवाचित्वाच्च नास्ति देविकाया वृद्धेः प्राप्तिरिति वृद्धिप्रसङ्गे विधीयमानोऽयमाकारोऽपि नैव प्रसजति । यस्तु ण्वुलन्तः क्रियाशब्दो देविकाशब्दो न तस्येह ग्रहः, रूढ्या योगस्यापहारात् । तेन तत्र दैविकमिति वृद्धिरेव भवति । आत्रात्रेयः । "देवको नाम क्षत्रिय', संज्ञाया ण्वुल् । तस्यापत्य दैवकिः । अत इञि आदिवृद्धि. । 'इतो मनुष्यजाते' रिति ङीष्, दैवकीनन्दनः शौरिः । अवृद्धस्त्वयमसाधु" रिति । आदेवकः । 'देविक्रुशो' रिति ण्यन्तात् ताच्छील्यादौ वुञ् । देवित्वा, द्यूत्वा, ।

1 नपुंसकत्वमिति ३ । पु पा ।
2 देविकादेरिति ३ । पु पा ।
3 आदीति नास्ति ४ पु ।

'उदितो वा' इतीड्विकल्पः । इटि 'न क्त्वा सेट्' इत्यकित्त्वाद्गुणः । अन्यदा 'च्छ्वोश्शूट्' इत्यूठि यणादेशः । न च वर्णमात्राश्रयत्वेनान्तर्भूताश्रयत्वेन वा ऽन्तरङ्गे कृति बाह्यप्रकृतिनिमित्तापेक्षस्य बहिरङ्गस्योठः 'असिद्धं बहिरङ्गमन्तरङ्गे' इत्यसिद्धत्वात् 'नाजानन्तर्ये बहिष्ट्वप्रकॢप्ति'रिति निषेधात्, अजोरानन्तर्यं यत्रान्तरङ्गे बहिरङ्गे वा विधातव्ये भवति न तत्र 'असिद्धं बहिरङ्गमन्तरङ्गे' इति परिभाषा प्रवर्तत इत्यर्थः । आद्यूनः । 'दिवोऽविजिगीषायाम्' इति निष्ठानत्वम्, विजिगीषायां तु द्यूतम् । 'यस्य विभाषा' इत्यनिट्त्वात् । अद्यूनेन निर्वृत्तमाद्यूनिकः । 'निर्वृत्तेऽक्षद्यूतादिभ्यः' इति ठक् । शतस्य दीव्यति 'दिवस्तदर्थस्य' इति कर्मणि षष्ठी । तच्छब्देन व्यवहृपणौ परामृश्येते । तदर्थस्य च द्यूते क्रयविक्रयपणोस्त्व । शतस्य प्रतिदीव्यति, शतं प्रतिदीव्यति । 'विभाषोपसर्गे' इति पूर्वेण नित्यं प्राप्तायां षष्ठ्यां तद्विकल्पः । क्रिकीति दीव्यतीति किकीदिविः, चाषः, दीर्घद्वितीयः । तथा च निघण्टुः । 'अथ चाषः किकीदिविः' इति । 'कृविघृष्विच्छविस्थविकिकीदिवि' इति किकीशब्दउपपदे क्विन् निपात्यते । रत्नकोशानुसारिणस्तु । दीर्घतृतीयं पठन्ति । तैर्न्तरोऽपि दृश्यते । श्येनेन किकिदीविना 'हंसन्द कन्याथं किकिदीविम्' इति दीर्घतृतीयान्त एव । द्यौः । 'दिवेर्डिवि'रिति व्यासकृतसूत्रेण व्युत्पादितम् 'दिव औत्' इति सौ औत् यणादेशः । द्युभ्यामित्यादौ 'दिव उत्' इति दिवः पदस्योत्वम् । शुद्धियौ कृदित्त्वग्रहणानन्तवृत्तिवादिनः परोप्य्वट् इहापि तेनलहु इत्यत्र मावकाशिनामुत्वेन तपरकरणसामर्थ्याद्वाध्यत इति परिहरन्ति । दिवग्रहणे च धातोस्सानुबन्धकत्वेन न ग्रह इति अवङ्, अक्षद्युभ्य'मित्यत्र क्विबन्ते औत्वोत्वयोर्नैव प्रसङ्गः । दिव्यम् । 'द्युप्रागू' इति यत् शैषिकः, 'न भकुर्छुराम्' इति दीर्घ-

१ गच्छत्यमिति ३ पु पा ।

२ वकारस्य धात्वन्तत्वाभावात्र दीर्घ इति ४ पु पा । ३ पुस्तके विवय इत्यधिकम् ।

निषेधः । द्यावाभूमी । 'दिवो द्यावा' इत्युत्तरपदे द्यावादेशः ॥ द्यावापृथिव्यौ, दिवस्पृथिव्यौ । 'दिवसश्च पृथिव्याम्' इत्युत्तरपदे दिवसभावो द्यावादेशश्च । द्यावापृथिव्यौ देवता अस्य द्यावापृथिव्यम्, द्यावापृथिवीयम् । 'द्यावापृथिवीशुनासीरे'त्यादिना यच्छौ । णयन्तात् द्वयतेः क्वौ णिलोपे 'क्वौ लुप्त न स्थानिवत्' इति स्थानिवत्त्वनिषेधाद् ऊठयादेशे द्यूरिति भवति । द्य्वावित्यादौ 'ओस्सुपि' इति यणादेशः । द्यौरोको येषा ते दिवौकसः । अत्र विवदन्ते । 'दिव उत्' इत्यत्र रक्षित । 'उत्त्वे कृते शब्दपरविप्रतिषेधात्तस्य यणि दिवोकस इत्यवृद्धिरिति । चान्द्रास्तु पूर्वपदस्य ओकःस्य पृषोदरादित्वाद्वृद्धिमाहुः । अन्ये तु दीव्यन्त्यस्मिन्निति दिवम्' 'घञर्थे कविधानम्' इति कः, तत्र 'वृद्धिरेचि, इति वृद्धिरिति । अस्य वृद्धिविषय एव प्रयोग इति केचित् । अपरे तु सर्वत्रेति । तथा च सुभूति[1] चन्द्राभ्यां प्रयोगो दर्शितः । 'मरुत्वता वृत्रवधे ययादिवम्' इति । त्रिदशा दीव्यन्त्यत्रेति त्रिदिव । पृषोदरादित्वाद् दशशब्दस्य लोप, पूर्ववत्कः । यद्वा ब्रह्मविष्णुमहेश्वरास्त्रयो दीव्यन्त्यत्रेति व्युत्पत्तिः । देवते इति देवने शपि गतम् ॥ १ ॥

षिवु तन्तुसन्ताने ॥ परिषीव्यति, निषीव्यति, विषीव्यति, 'परिनिविभ्य' इत्यादिना षत्वम्, 'सात्पदाद्यो'रिति निषेधापवादः । परिषिषेवेत्यादौ 'स्थादिष्वभ्यासेन चाभ्यासस्य' इत्यत्राभ्यासस्येति योगविभागेन स्थादीनामेवाभ्यासस्य 'उपसर्गात्' इत्यादिना षत्वमिति क्रियमाणो नियमस्तत्र प्राक्सितादित्यनुवर्तनाद् इहाप्राक्सितीयेनेत्यभ्यासस्य षत्व भवत्येव । परस्यापि 'इणकोः' 'आदेशप्रत्यययो'रिति षत्वम् । उपपादित चैतदेव सहतौ । स्थादिसूत्रार्थः सेधतौ व्यक्तमुक्तः । अत्रात्रेयोऽभ्यासस्य षत्वं नेत्याह । तत्सहतावेव दूषितम् । सेविता सेविष्यति । सीव्यतु । पर्यषीव्यत्, पर्यसीव्यत्,

१ ओकारे तस्येति ४ पु पाठ ।
२ आत्रेयसुभूतीति ४ पु॰ पा ।

स्युवौ, क्त्वा पूर्ववदूठ्, अजादावुवङ् । 'ओस्सुपि' इति यण् संयोगपूर्वत्वाच्च भवति ॥ ३ ॥

ष्ठिवु निरसने ॥ ष्ठीव्यतीत्यादि सीव्यतिवत् ॥ तिष्ठेवेत्यादौ अभ्यासे खयश्शेषः । अत्र वक्तव्यं भूवादौ ष्ठेवतावुक्तम् । 'सुब्धातुष्ठिवुष्वष्कतीनाम्' इति षः सकारनिषेधः । अमुं धातुमात्रेयादयः पठन्ति । अन्ये तु न पठन्ति । यदाह 'धात्वादेष्षस्सः' इत्यत्र न्यासकारः । 'ष्ठिवुं दिवादिष्वपि[1] केचिदधीयते' इति ॥ ४ ॥

ष्णुसु अदने ॥ आदानइत्येके । अदर्शनइत्यपरे । 'धात्वादेष्षस्सः', स्नुस्यति । सुष्णोस, सुष्णुसतुः, सुष्णोसिथ, सुष्णुस, सुष्णोस, सुष्णुसिव, 'आदेशप्रत्यययोः' रित्यभ्यासात्परस्य षत्वे ष्टुत्वं, 'रषाभ्याम्' इति णत्वं वा । स्नोसिता । स्नोसिष्यति । स्नुस्यतु । अस्नुस्यत् । अस्नुस्यः । स्नुस्येत् । आशिषि, स्नुस्यात् । अस्नोसीत्, अस्नोसिष्टाम्, अस्नोसीः, अस्नोसिट्, 'नेटि' इति सिचि वृद्धेरभावः । सुस्नुसिषति, सुस्नोसिषति, स्नुसित्वा स्नोसित्वा । 'रलो व्युपधात्' इति वा कित्त्वम् । 'स्तौतिण्यो'-रित्यभ्यासात्परस्य न षत्वम् । सोष्णुस्यते । सोष्णुसीति, सोष्णोस्ति, सोष्णुस्तः । स्नोसयति । असुष्णुसत् । स्नुषा । इगुपधलक्षणे के टाप्, सुषामादित्वात् षत्वम् । औणादिक इत्यात्रेयः । ष्णुस निरसनइत्येके । मित्त्वमन्यात्रेयमैत्रेयौ उदुपधं चाहतुः । स्वामिकाश्यपौ तु अदुपधममुमेव पठित्वा ष्णस[3] अदर्शनइति द्रमिडा इत्युक्तवोपधं पक्षान्तरमाहतुः । तत्र मित्त्वं 'जनीजृष्ण[4]सु' इति पाठाश्रयेण । स्नस्यति, सस्नास इत्यादि, षोपदेशस्य प्रयोजनं णौ स्नसयति असिष्णसत् सिष्णासयिषति इति ॥ ६ ॥

क्नसु ह्वरणदीप्त्योः ॥ ह्वरणं कौटिल्यम्, क्नस्यति, चक्नास, क्नसिता, क्नसिष्यति । क्नस्यतु । अक्नस्यत् । क्नस्येत् । आशिषि, क्नस्यात् । अक्नसीत्, अक्नासीत्, 'अतो हलादे' रिति वा वृद्धिः । चिक्नसिषति । चाक्नस्यते,

१ पुनरित्यधिकं ३ । ४ पु० ।
२ त्वासनो. कित्त्वविकल्प इति ३ । ४ । पु० ।
३ ष्णुसु इति ३ । ४ । पु पा ।
४ जृष्णोति ४ पु पा ।

चाक्रन्ति । क्रमयति । अचिक्रमत् । 'जनीजॄष्क्नसु' इति मित्त्वम् । क्रमित्वा क्रन्त्वा 'उदितो वा' इतीड्विकल्पः । क्रान्तः । 'यस्य विभाषा' इतीण्णिषेधः[1] । चक्रमः । घञर्थे कः । 'क्रमादीनां के द्वे भवतः' इति द्वित्वम् ॥ ६ ॥

व्युष दाहे ॥ दन्त्योष्ठ्यादिः मूर्धन्यान्तश्च । तथा च वैद्यके त्रिकटुकपर्याये व्योषशब्दः पठ्यते । अयमेव पुषादौ विभागे पठिष्यते, तत्फलं तत्रैवाङ्सिद्धिः । क्वचिदुभयत्र विभागयोः दन्त्यान्त ओष्ठ्यादिश्च[2] पठ्यते । तत्र पुनः पाठे फलमेकत्रैवार्थे रूपद्वयसिद्धिः । व्युष्यति । वुव्योष, वुव्योषिथ, वुव्युषिव । व्योषिता । व्योषिष्यति । व्युष्यतु । अव्युष्यत् । व्युष्येत् । आशिषि, व्युष्यात् । अव्योषीत्, अव्योषिष्टाम् । वुव्युषिषति वुव्योषिषति । व्युषित्वा, व्योषित्वा पू[3]र्ववत्क्त्वाविकल्पः । वेव्युष्यते । वोव्युषीति, वेव्योष्टि । व्योषयति । अवुव्युषत् । व्युषितः ॥ ७ ॥

प्लुष च ॥ प्लुष्यतीत्यादि पूर्ववत् । अयं पुषादावपि पठ्यते । फलमङोऽपि सिद्धिरिति स्वामी ॥ ८ ॥

नृती गात्रविक्षेपे ॥ नृत्यति । ननर्त ननृततुः ननर्तिथ, ननृतिव । नर्तिता । नर्तिष्यति, नर्त्स्यति 'सेऽसिचि' इति सिज्वर्जस्य सकारादेरिड्विकल्पः । नृत्यतु । अनृत्यत् । नृत्येत् । आशिषि, नृत्यात् । अनर्तीत्, अनर्तिष्टाम् । निनर्तिषति, निनृत्सति, 'हलन्ताच्च' इत्यनिटि कित्त्वम् ॥ नरीनृत्यते । क्षुभ्नादिषु 'नृत्यतेर्यङि' इति पाठाण्णत्वनिषेधः । नर्नर्ति, नरिनर्ति, नरीनर्तीत्यादि । रुग्रिकौ । नर्तयति, नर्तयते । अनीनृतत् अननर्तत्, उक्तं द्वा । अस्य चलनार्थत्वाद् अणावकर्मकत्वाच्च 'निगरणचलने' त्यादिना योगद्वयेन कर्त्रभिप्राये क्रियाफले यत्र परस्मैपदं प्राप्तं तत्र 'न पादमि' त्यादिना निषिध्यते । नृत्यम् । 'ऋदुपधात्' इति क्यप् । नर्तकः, नर्तकी । 'शिल्पिनि ष्वुन्' इति ष्वुन्, तत्र नृतिखनिरञ्जिभ्य. परिगणनम् । नृत्तः, नृत्तवान्, ईदित्करणम् 'यस्य विभाषा' इत्यस्यानि-

१ अनिटत्वमिति ३ । पु पा ।
२ व्यसइति ४ पाठः ।
३ रलो व्युपधादिति क्त्व सनोरिति ३ । ४ । ना ।

त्यत्वज्ञापनार्थम् । तेन धावित इत्यादि सिद्ध्यतीति आत्रेयमैत्रेयौ । स्वामिकाश्यपौ तु "अवयवैश्वरितार्थत्वाद् यङ्लुङ्नि[1]वृत्त्यर्थम्" इति। अत्र 'यस्य विभाषा' नास्ति, 'सेऽसिचि' इत्यत्र एकाच इत्यनुवृत्तेरिङ्निरन्यस्यैवाभावादिति तयोरभिप्रायः । नृतू । दीर्घाकृतिः । 'नृतिशृध्योः कूरिति कूप्रत्ययः ॥ ९ ॥

त्रसी उद्वेगे ॥ त्रस्यति, त्रसति, 'वा भ्राश' इति श्यन्विषये पक्षे शप् । तत्रास, तत्रसतु:, त्रेसतुः, तत्रसिथ, 'वा जॄभ्रमुत्रसाम्' इति किति लिटि थलि च सेटि एत्वाभ्यासलोपविकल्पः । त्रसिता । त्रसिष्यति । त्रस्यतु, त्रसतु, । अत्रस्यत् अत्रसत् । त्रस्येत्, त्रसेत् । आशिषि त्रस्यात् । अत्रासीत्, अत्रसीत् । तित्रसिषति । तात्रस्यते । तात्रस्ति । तात्रसीति । त्रासयति । अतित्रसत् । त्रस्नुः । 'त्रसिगृधी' त्यादिना क्नुः । त्रस्तः, त्रस्तवान् । ईदित्त्वादनिट्त्वम् । तरङ्गापत्रस्तः । 'अपेतापोढे'-ति पञ्चमीसमासः । त्रासः । घञ् । एवदोषो भयं च । त्रस धारणे चुरादौ ॥ १० ॥

कुथ पूतीभावे ॥ पूतीभावो दुर्गन्धः । कुथ्यति । चुकोथ, चुकोथिथ । कोथिता । कोथिष्यति । कुथ्यतु । अकुथ्यत् । कुथ्येत् । आशिषि, कुथ्यात् । अकोथीत् । चुकुथिषति, चुकोथिषति, 'रलो व्युपधात्' इति कित्त्वविकल्पः । अयं क्त्वाया न, 'नोपधात्थफान्ताद्वा' इत्यत्र नोपधग्रहणसामर्थ्यात् । तेन 'न क्त्वा सेट्' इत्यकित्त्वात् कोथित्वा इति भवति । तत्र हि नोपधग्रहणस्य एवमादिरनोपधः प्रत्युदाहरणम् । यद्यत्र 'रल' इति विकल्पस्यात्कि नोपधग्रहणेन, न च ऋफ ऋफि हिंसायामित्यनोपध फान्त ऋफतिः प्रत्युदाहरणम् अर्फित्वा इति । अत्र हि 'न क्त्वा सेट्' इति नित्यं कित्त्वनिषेधः । नैतदस्ति, त्रैशब्द्यं हि नस्साध्यम्, अर्फित्वा ऋफित्वा ऋम्फित्वा इति, तच्च असत्यपि नोपधग्रहणे सामान्येन विकल्पप्रवृत्तावपि भविष्यति । चोकुथ्यते । चोकोत्ति । कोथयति । अचूकुथत् । कुथः । इगुपधलक्षणः कः । कुथितमनेन, प्रकु-

१ यङ्लुकीषिषेधार्थम् । इति १ । ३ । ४ । पु० पा० ।

षितः । 'उदुपधात्' इति क्त्वविकल्पोऽत्र न भवति तत्र अन्यतरस्याग्रहणस्य व्यवस्थितविकल्पत्वात् शब्विकरणानामेव ग्रह इति । तथा च भाष्ये 'उदुपधाच्छप' इति । कुथ्यतीति हिंसायां शपि गतम् ॥ ११ ॥

पुथ हिंसायाम् । पुथ्यतीत्यादि कुथ्यतिवत् । पोथतीति शपि गतम् ॥ १२ ॥

गुध परिवेष्टने । अयं चतुर्थान्तः । गुध्यतीत्यादि । गुधित्वा । 'मृडमृद' इत्यादिना सेटः क्त्वः कित्त्वम् । गोधा । भिदादिपाठादङ् अङि गुणः । गोधिका । गोधायाः कनि 'केऽणः' इति ह्रस्वे 'प्रत्ययस्थात्' इतीत्वम् । गोधाया अपत्यं गौधेरः । 'गोधाया ढ्रक्' इति ढ्रक् । गौधारः । 'आरगुदीचाम्' इत्यारक् । उदीचामग्रहणात्पक्षे 'स्त्रीभ्यो ढक्' इति ढकि गौधेयः । गोधूमः । 'गुधेरूमः' इत्यूमः । गुधोऽयं क्र्यादिः ॥ १३ ॥

क्षिप प्रेरणे । क्षिप्यति । चिक्षेप । क्षेप्ता । क्षेप्स्यति । क्षिप्यतु । अक्षिप्यत् । क्षिप्येत् । आशिषि, क्षिप्यात् । अक्षैप्सीत्, अक्षैप्ताम् । चिक्षिप्सति । चेक्षिप्यते । चेक्षेप्ति । क्षेपयति । अचिक्षिपत् । क्षिप्त्वा । क्षिप्तः । क्षिपः । 'इगुपधज्ञाप्रीकिरः कः' । क्षिपका । 'अज्ञातादौ कः' । 'प्रत्ययस्थात्' इतीत्वस्य 'क्षिपकादीनां चोपसंख्यानम्' इति निषेधः । क्षिप्नुः । 'त्रसिगृधिधृषिक्षिपेः' इत्यादिना क्नुः । परिक्षेपी । सम्पृचादिना घिनुण् । परिक्षेपकः । 'निन्दहिंस' इत्यादिना वुञ् । क्षिपा । भिदादिपाठादङ् । क्षिप्रम् । 'स्फायितञ्चि' इत्यादिना रक् । क्षेपिष्ठः क्षेपीयान् । क्षेपयति । 'स्थूलदूर' इत्यादिना 'यणादिपरं पूर्वस्य च गुणः' इति यणादेर्लोपः पूर्वस्य च गुणः । सम्पृचादिसूत्रे वृत्तिकारेण 'क्षिपिर्दिवादिस्तुदादिश्च गृह्यते' इत्युक्तत्वात् । 'दुर्विमरववम्सि क्षिप्य गते वत्सा महाशिनाम्' इति, 'संक्षिप्य सरम्भमसह्यपदम्' इति भारते भट्टिकाव्ये च दर्शनात्, पारायणिकैः क्षिपेरिह पाठोऽयुक्त इति भूसूत्रे सुधाकरेण प्रतिपादितम् । ज्ञनस्त्वादादिकस्यापि समानाः । 'स्वरेण नीचेन शपि क्षुपि वर्धिम्' इति पाठा द्वयमनिट् । अयं तुदादावदन्त इत्यात्रेयः ॥ १४ ॥

पुष्प विकसने ॥ पुष्प्यति । पुपुष्प, पुपुष्पिथ, पुपुष्पिव । पुष्पित
पुष्पिष्यति । पुष्प्यतु । अपुष्प्यत् । पुष्प्येत् । पुष्प्यात् । अपुष्पीत् । पुपु
षति । पोपुष्प्यते । पोपुष्पि । पुष्पयति । अपुपुष्पत् । पुष्पम् । अ
पुष्पकम् । संज्ञायां कन् । शणपुष्पी । 'पाककर्णपर्णपुष्प' त्यादि
ङीष् । सत्पुष्पा, प्राक्पुष्पा, प्रत्यक्पुष्पा, काण्डपुष्पा, प्रान्तपुष्पा, श
पुष्पा, एकपुष्पा । 'सदक्काण्डप्रान्तशतैकेभ्यः पुष्पात्' इत्यजादिपाठ
पुष्पोत्तरपदलक्षणं ङीषं बाधित्वा टाप् । अगिति क्विदन्तोऽर्वातिलक्ष
पुष्पित्वा । पुष्पितः । निष्ठा, तारकादित्वादितच्वा ॥ १५ ॥

तिम स्तिम ष्टीम आर्द्रीभावे ॥ तिम्यति । तितेम । तेमित
तेमिष्यति । तिम्यतु । अतिम्यत् । तिम्येत् । आशिषि, तिम्यात्
अतेमीत् । तितेमिषति, तितिमिषति । तेतिम्यते । तेतेन्ति । तेमयति
अतीतिमत् । स्तिम्यति । तिष्टेम, इत्यादि । अभ्यासे खयश्शेषः । स्त
म्यतीत्यादि । अत्र केचिदसंयोगादि तीम इति दीर्घान्तं चतुर्थमपि धा
पठन्तीत्यात्रेयः । तिमिः, 'इगुपधात् कित्' इतीन्प्रत्ययः । तिमिरम्
'इषिमदी' त्यादिना किरच् ॥ १६ ॥ १७ ॥ १८ ॥

व्रीड चोदने ॥ चोदनं लज्जेति स्वामी । लज्जायामप्यधीय
इति मैत्रेयः । आत्रेयस्तु व्रीड चोदने लज्जायामिति । व्रीड्यति । वि
व्रीड, विव्रीडिथ विव्रीडिव । व्रीडिता । व्रीडिष्यति । व्रीड्यतु । अव्रीड्यत्
व्रीड्येत् । व्रीड्यात् । अव्रीडीत् । विव्रीडिषति । वेव्रीड्यते । वेव्रीडि
व्रीडयति । अविव्रीडत् । व्रीडित्वा । व्रीडितः । व्रीडः । घञ् । व्रीडा
'गुरोश्च' इत्यकारः ॥ १९ ॥

इष गतौ ॥ इष्यति । 'इषुगमियमाम्' इत्यत्र 'कृत्याचि
इत्यतोऽचीत्यनुवर्तते, 'ष्ठिवुक्लमु' इत्यतः शितीति च, तत्र शिताऽचं
विशेषणादित्संज्ञकशकारादावचि छत्वविधिरितीह न भवति । ये
तौदादिकमुदितं पठित्वा छत्वविधावपि तथा पठन्ति तेषां न कश्चि
त्क्लेशः । इयेष, ईषतुः, इयेषिथ, ईषिव, षित्सु गणे द्विर्वचनम् । 'अ

गुणे 'वृद्धिरेचि' इति वृद्धिं बाधित्वा, 'एङि पररूपम्'। इष्यतु। इष्य। इष्याणि। ऐष्यत्। इष्येत्। आशिषि, इष्यात्। ऐषीत्। इषिषिषति। एषयति। मा भवानिषिषत्। ओणेरुदित्करणाद् द्विर्वचनात्पूर्वं ह्रस्व इत्युक्तम्। एषित्वा। एषितः। 'तीषसहे'ति तादौ विधीयमान इड्विकल्प 'इषेस्तकारे श्यन्प्रत्ययात्प्रतिषेध' इत्युक्तत्वादिह न भवति। प्रैषः, प्रैष्यः। घञ् ण्यतौ। 'प्रादूहोढोढ्येषैष्येषु वृद्धिर्वक्तव्या' इति एङि पररूपापवादो वृद्धिः। अन्वेषणा। 'इषेरनिच्छार्थस्य युज्वक्तव्य' इति युच्। पर्येषणा, परीष्टिः। 'परेर्वा' इति युच्क्तिनौ। एषणी। 'एषणी करणे' इति गौरादिपाठान्ङीष्। इषीका। 'इषेः किच्च'[1] इतीकन्प्रत्ययः। इष्टका। 'इष्यशिभ्यां तकन्' इति तकन्। किदित्यनुवर्तनान्न गुणः। इषीकतूलम्, इष्टकचितम्। 'इष्टकेषीके'ति चिततूलयोरुत्तरपदयोर्ह्रस्वः। अत एवेष्टकेति निर्देशात् 'प्रत्ययस्थात्' इतीत्वं न भवति। तदन्तविधिना पक्वेष्टकचितमित्यपि भवति। अयं तुदादावपीति स्वामी। इषु इच्छायां तुदादिः। इष आभीक्ष्ण्ये क्र्यादिः ॥ २० ॥

षुह चक्यर्थे ॥ चक्यर्थस्तृप्तिरिति स्वामिधनपालशाकटायनाः। आत्रेयमैत्रेयदुर्गा[2] षह षुह इति द्वौ धातू पेठुः। मतैरिह पाठो न्यासकारहरदत्तादेवादीनामयमभिमत, यतस्तत्र सहि ग्रहणे भौवादिकमेवाहुः, नायम्, न चास्याग्रहणे कारणम्। 'दाश्वान्साह्वान्' इत्यत्र "साह्वानिति 'षह मर्षणे' इत्यस्मात्परस्मैपदं निपात्यते" इति वृत्तिमुपादाय "षह मर्षणे इत्यस्यात्मनेपदित्वात् चौरादिकस्य तु 'आधृषाद्वा' इति णिजभावस्तु दीर्घत्वमुपधाह्रस्वत्वमनिट्त्वं च निपात्यत इत्यन्ये" इति वदता च हरदत्तेनेह मतेऽयं पाठ स्फोरितः। "साह्वानिति निपातनं आधृषीयाद्विभाषितणिच" इति वदन् कैयटरोऽप्यत्रैवानु

१ उणादाविदं सूत्रं न दृश्यते। यत्तु 'ईषेः किच्च' इति सूत्रं तत्तु दीर्घादेरीष धातोरुप्रत्ययेन इषुशब्दनिष्पादनपरम्। इषीकाशब्दस्तु 'ईषेः किद्ध्रस्वश्च' इति सूत्रेणैव साध्यते॥ २ आत्रेयदेवमैत्रेयदुर्गा इति ३ । पु पा ।

३ रभाव इति ३ । ४ । पु॰ पा ।

कृत. । सहि पठतां सह्यतीत्याद्युदाहार्यम् । षत्वादि सहतिवच्चेयम् । अत्र परिषह्यतीत्याद्युदाहृत्य 'परिनिषिह्य' इति षत्वमिति वदता आत्रेयेण यदुक्तं 'यत्तु तत्र षह मर्षणइत्यस्य ग्रहणं न्यासे प्रतिपादितं नैतस्यापीति तदनागममिति नादरणीयम्' इति अस्यैव धातोरभावाद् न तस्याय दोषः । स्वग्राधातक चात्रेयवचन यदुक्ष्यति "'तीषसहे' तीड्विकल्प सहेति शबन्तस्य सूत्रे निर्देशात् नास्य" इति । तच्च यस्मात् षत्वविधावपि तुल्यम् । सुह्यति । सुषोह । सोहिता । सोहिष्यति । सुह्यतु । असुह्यत् । सुह्येत् सुह्यात् लिङि । असोहीत् । सुसुहिषति । सुसोहिषति । सुहित्वा सोहित्वा, । सोसुह्यते । सोसुहीति सोसोढि । सोहयति । असूषुहत् । फलानां सुहितः । 'पूरणगुणे' ति षष्ठीसमासनिषेधः ॥ २१ ॥

सेट्परस्मैपदप्रसङ्गात् अजन्तावपि तादृशावाह ।

जृष् झृष् वयोहानौ ॥ जीर्यति, जीर्यतः, 'ऋत इद्धातो' रितीत्वे रपरत्वे 'हलि च' इति दीर्घः । जजार, जजरतुः, जजरुः, जजरिथ, जजरथुः, जजर, जजार, जजर, जजरिव, 'ऋच्छत्यृताम्' इति किति गुणः । अकिति तु यथायोगं पूर्वविप्रतिषेधेन गुणवृद्धी । अस्तु वा तत्रापि 'ऋच्छति' इति गुणः । कृते तस्मिन् वृद्धिस्तु 'अत उपधाया' इति भविष्यति । गुणे तु तेन वा सत्यनेन वापि न विशेषः । 'वा जॄभ्रमुत्रसाम्' इत्येत्वाभ्यासलोपपक्षे जेरतुः, जेरुः, जेरिथ, जेरथुः, जेर, जेरिव ॥ जरिता, जरीता । जरिष्यति, जरीष्यति । 'वृतो वा' इत्यलिटो वा दीर्घः । जीर्यतु । अजीर्यत् ' जीर्येत्, जीर्यात् लिङि । अजारीत्, अजारिष्टां, 'वृत' इत्यस्य 'सिचि परस्मैपदेषु' इति निषेधः । अजरत्, अजरतां, 'जृस्तम्भ्व' ति पक्षे च्लेर्वाऽङ् । 'ऋदृशोऽङि' इति गुण. । जिजीर्षति, जिजरिषति, जिजरीषति, 'इट् सनि वा' इति वेट् । तस्य 'वृत' इति वा दीर्घः । अनिटि सनः किन्त्वादित्वदीर्घयोर्द्विर्वचनम्, अन्यथा नहि जेजीर्यत इति न स्यात् । जरयति, अजीजरत्, 'जनिजृष्' इति मित्त्वाद् ह्रस्व । जीर्यन् । जीर्यन्ती, 'शप्श्यनो' रिति नित्यं नुम् ।

जरन् जरती इत्यत्र 'जीर्यतेरतृन्' इति 'जीर्यतेरतृनि'। जरद्गवः। 'पूर्वकाले'ति समासः। 'गोरतद्धितलुकि' इति टच् युवजरती। 'युवाखलती'त्यत्र लिङ्गविशिष्टग्रहणाद् युवतिशब्देन समासे पुंवद्भावः॥ अजर्यम्। 'अजर्यं सङ्गतम्' इति कर्तरि सङ्गते यत् निपात्यते, असङ्गते तु अजरिता कम्बलः। जरा। षित्वादङि 'ऋदृशोऽङि' इति गुणः। जरे, जरसौ, 'जराया जरसन्यतरस्याम्' इत्यजादौ सुपि वा जरसादेशः। जरामतिक्रान्तं ब्राह्मणकुलं अतिक्रान्तं कुलैरिति विग्रहे 'अत्यादयः क्रान्ताद्यर्थे द्वितीयया' इति समस्य नपुंसकह्रस्वत्वे सोरम्भावे भिन्नस्थैसि सन्निपातपरिभाषाया अनित्यत्वज्ञापनेन [illegible] जरसादेशे ऽतिजरसमतिजरसैरिति भाष्यम्। तथा टाङस्योरपि जरसादेशात्पूर्वं इनादादेशयोः पश्चाज्जरसादेशे ऽतिजरसिना ऽतिजरसादिति केचित्। तेषामतिजरसं ब्राह्मणकुलं पश्येत्यत्र 'अमि' लुकं बाधित्वा ऽम्भावे प्राप्ते ततः परत्वाज्जरसादेशे तदाश्रयस्य लुको न प्रवृत्तिः, सन्निपातपरिभाषाया अनित्यत्वादिति वाच्यम्। एतदर्थमस्तु सर्वत्र परिभाषाप्रवृत्तिस्त्वेऽपि भिन्नस्थैसि टाङस्योरिनादादेशयोरेव जरसादेशाभावाद् अतिजरमतिजरैः, अतिजरेण अतिजराद् इत्यादि। अतिजरांसि इत्यत्र जरशसोरर्थाभावे नुमः परत्वाज्जरसादेशे पश्चात्कृतत्वादेशाश्रयो नुम् अन्यथा ऽङ्गभक्तो नुम् तदवयवस्य जरशब्दस्य विभक्त्या आनन्तर्यं व्यवदध्यात्। अनुजीर्णा वृषलीं देवदत्तः, अनुजीर्णा वृषली देवदत्तेन। 'गत्यर्थाकर्मके'त्यादिना कर्तृकर्मणोः क्तः। 'श्र्युकः किति' इति 'यस्य विभाषा' इति वा ऽनिट्त्वम्। जरयतीति जारः। 'दारजारौ कर्तरि णिलुक्च' इति कर्तरि घञि णिलुक्। यद्यत्र णिघञि 'णेरनिटि' इति लोपः स्यात् तर्हि तस्य स्थानिवत्त्वात् अनुपधात्वादकारस्य घञाश्रया वृद्धिर्न स्यात्। मित्त्वाणिजपेक्षायान्तु ह्रस्वः स्यात्। लुकि तु लुका लुप्तत्वात् 'लुका लुप्ते न स्थानिवत्' इति स्थानिवत्त्वनिषेधः।

१ भूतवत्यधिकम्।
२ अत्यादय इत्यादि समस्येत्यन्तं ३। ४। पु नास्ति।

अयमपित् क्र्यादौ युजादौ चेति मैत्रेयादयः । अत्रात्रेयः किञ्चदाह । 'जॄव्रश्च्योः क्त्वि' इतीड्विधौ सानुबन्धकत्वादस्याग्रहणात् 'श्र्युकः किति' इति निषेधे जीर्त्वेति भवितव्यमिति स्वयमेव सानुबन्धकत्वेपि 'जॄस्तम्भु' इत्यङि ग्रहणं चाह । एवं नियमे कारणं स प्रष्टव्यः । योसौ निरनुबन्धकस्य वृत्तितद्व्याख्यानकृतामनभिमतः । यदि हि स्यादङादिविधौ निरनुबन्धकमेवोपाददीरन् अग्रहणे कारणं वा ब्रूयुः । किञ्च 'दारजारौ कर्तरि णिलुक्च' इति णिलुग्वचनं चानर्थकं स्यात् । यतः पित्त्वेनामितोऽस्माण्णौ कर्तरि घञि णेश्च लोपे प्रत्ययलक्षणेन वृद्धिर्भविष्यति । तथा च क्र्यादौ मैत्रेयः वक्ष्यति जृणाति पठित्वा 'ध्रॄ इत्येके' इति । जरन्तः । 'जॄविशिभ्यां झच्' इति झच् । 'झोन्तः' । झीर्यतीत्यादि जीर्यतिवत् । 'त्रसिरडेत्वाभ्यासलोपमित्त्वादस्य न भवति । झरः, निर्झरः । अप्, झर्झरः । औणादिक इत्यात्रेयः । वाद्यविशेषः । झर्झरवादनं शिल्पमस्य झार्झरः, झार्झरिकः । 'मड्डुकझर्झरादणन्यतरस्याम्' इत्यण्ठकौ । दिवादयः परस्मैभाषा उदात्ताः क्षिपिवर्ज्यम् ॥ २२ ॥ २३ ॥

षूङ् प्राणिप्रसवे ॥ सूयते, सूयेते, सूयसे, सूये, सूयावहे । सुषुवे, सुषुविषे, सुषुविवहे । सोता, सविता । सोष्यते, सविष्यते, 'स्वरतिसूतिसूयती' ति वलादाविड्विकल्पः । लिट्यस्तु विकल्पं बाधित्वा पुरस्तात्प्रतिषेधकाण्डारम्भसामर्थ्यात् 'श्र्युकः किति' इति प्रतिषेधे प्राप्ते क्रादिनियमान्नित्यमिट् । सूयताम्, सूयेताम्, सूयस्व, सूयै । असूयत, असूयेताम्, असूयथाः, असूये, असूयावहि । सूयेत, सूयेयाताम्, सूयेथाः सूयेय, सूयेवहि । आशिषि, सोषीष्ट, सविषीष्ट, सोषीयास्ताम्, सविषीयास्ताम् । असोष्ट, असोषाताम्, असोष्ठाः, असोषि । असविष्टेत्यादि, पूर्ववदिड्विकल्पः । सुसूषते । 'सनि ग्रहगुहोश्च' इति निषेधे कित्त्वादगुणत्वम्, अयमपि निषेधः पुरस्तादारम्भात् स्वरत्यादिविकल्पं बाधते । 'स्नौतिसुनोतिसुवत्योरेव' इत्यषत्वम् । सूत्वा, सूनः, सूनवान् । 'स्वादय ओदितः' इत्योदित्त्वात् 'ओदितश्च' इति निष्ठानत्वम् । अयमसूयार्थोपि । तेन देवदत्ताय सूयत इति 'क्रुधद्रुह' इति चतुर्थी भवतीत्यात्रेयः । अत्र प्राणि

ग्रहणमनन्तरम् । तेन प्रसूतान्तरत्वे इति भवति । अन्ये तु सर्वे भावा-स्सचेतना इत्यत्र प्राणित्वमाहुः । तदा च 'प्रसूत कुसुम समम्' इत्यत्र सुभूतिचन्द्र 'षूङ् प्राणिप्रसवे उपलक्षणत्वेन वृक्षस्यापि प्राणित्वमि-ति । अनुक्तः सूतिवत् । २४ ॥

दूङ् परितापे ॥ परितापः खेदः । दूयत इत्यादि सूयतिवत् । इट्त्वस्य नित्यः । आत्मनेभाष दूदान्तौ ॥ २५ ॥

दीङ् क्षये ॥ गता दूयत्यनुदात्ता आत्मनेपदिन पीङ्पर्यन्ताः । दीङ् तु सेट् । दीयते दीयेते । दिदीये, दिदीयाते, दिदीयिरे, दिदी-यिषे, दिदीयिढ्वे दिदीढ्वे दिदीयिढ्वे । क्रादिनियमादिट् । 'दीङो युडचि क्ङिति' इत्यजादावार्धधातुके क्ङिति युडागमः । स च 'एर-नेकाच' इति यणि कर्तव्ये 'असिद्धवदत्र' इति नासिद्धः 'वुग्युटावुव-ङ्यणोस्सिद्धौ वक्तव्यौ' इत्युक्तत्वादत्र ध्वमि 'विभाषेटः' इति मूर्धन्य-विकल्पो न भवति । कृते युटि प्रत्ययस्यैकत्वेनानेन इणन्तादङ्गात्परत्वमिटे-र्विहन्यत इति ढत्वाभावम् इति नित्यमेव भवतीत्येके । अपरे तु अङ्गा-दिति नानुवर्तते इति युट एव यणः परत्वं मूर्धन्यविकल्पमाहुः । इदं चैतन्यमनुभूय वृत्तौ : दाता दास्यते । 'मीनातिमिनोतिदीङां ल्यपि च' इति एज्विषये ल्यपि च आत्वम् । दीयता, दायिता दीयस्व दीयै । अदीयत, अदीयेताम् अदीयिथाः अदीये । दीयेत, दीयेयाः दीयेय : अदिषि, दासीष्ट इत्यादि । एज्विषयत्वादात्वम् । अदास्त, अदासाताम् अदास्थाः, अदासि अत्रात्वे कृते दाप्रत्ययेऽपि 'दीङः प्रतिषेधः स्थाघ्वोरित्त्वे' इति इत्वकित्त्वयोर्घुसंज्ञा निषिध्यते । अत एव विषयविशेषे घुत्वनिषेधादन्यत्र कृतात्वस्य घुसंज्ञायां प्रणिदातेत्यादि भव-तीत्येके । अन्ये तु यावतामुपदेशस्थानामनुकरणं दाधाध्वप् भवति तेषामेव घुत्वम् । दोदेङ्धेटामप्यनुकरणं वृत्तिन्यायेन दीङस्तु नेति नैवैतस्य क्वापि घुसंज्ञाप्रसङ्ग इति । उक्तमिदं सर्वं कैयटपदमञ्जर्योर्व्याख्यानयोः

१ व्याहृतमिति ३ पु पा ।
२ च नवर्णेत्यधिकम् ३ । ४ पु पा ।

दिष्वपि । उपदिदीषते । 'इको झल्' इति सनः कित्त्वादेज्विषयत्वाभावान्नात्वम् । कातन्त्रे दिदासते इत्यात्वमुक्तम् । अत्र शाकटायनः, आत्वप्रकरणे 'अम्यपगुरो वा दीङस्सनि' इत्यात्वविकल्पमाह । अमिति णमुलुच्यते । स्वामी तु उपदिदीषते उपदिदासते इत्यपीष्यते इति । काश्यपस्तु आत्वपक्षे दिदासते इत्येकइत्युक्त्वा सग्रहइत्वव्यतिरिक्तस्य घुकार्यस्योक्तत्वाद् इस्भावे उपदित्सतइत्याह । इदमात्व सूत्रवार्तिकभाष्येषु न दृश्यते । देदीयते, देदेति, देदीतः, देद्यति । दापयति । एज्विषयत्वभावादात्वे पुक् । दीत्वा, दीनः, दीनवान्, 'स्वादय ओदित' इति निष्ठानत्वम् । उपदाय । मीनातिमिनोतिदीङां ल्यपि च' इत्यात्वम् ॥ २६ ॥

डीङ् विहायसा गतौ ॥ डीयते । डिड्ये, डिड्यिषे, एरनेकाच' इति यण् । डयिता । डयिष्यते । डीयताम् । अडीयत । डीयेत, डयिषीष्ट, लिङौ । अडेष्ट । डिडयिषते । डेडयते । डेडेति । डाययति । अडीडपत् । डयित्वा, डीनः, डीनवान् । स्वादिषु पाठसामर्थ्यादनिट्त्वम्, निष्ठायाम् इटि हि व्यवधानम् 'ओदितश्च' इति नत्वस्याप्रसङ्गः । डयितशब्दस्तु भौवादिकस्य । तत्र 'निष्ठाशीङ्' इत्यत्र निष्ठेति योगविभागादकित्त्वमिति सीरदेवादयः ॥ २७ ॥

धीङ् आ[1]दाने ॥ धीयते । दिध्ये । धेता । धेष्यते । धीयताम् । अधीयत । धीयेत । धेषीष्ट । अधेष्ट । दिधीषते । धीत्वा, धीनः, धीनवान् । न धीनः, अधीनः । यस्तु 'अस्मास्वधीन किमु निस्पृहाणाम्' इत्यादावधीनशब्दः सोऽव्युत्पन्न. परतन्त्रवचनः । यथाह कैयटः । 'वाक्य वक्त्रधीन हि' इत्युपादाय 'अधुनास्पदार्थाभिधानाद् अव्युत्पन्न आयत्तार्थवृत्तिरधीनशब्द इति ॥ २८ ॥

मीङ हिंसायाम् । अत्र हिंसाशब्देन हिंसाफलं प्राणविश्लेषोऽभिधीयते । मीयतइत्यादि धीङ्वत् । मिमीषतइत्यत्र 'सनिमीमे' इति

१ आधारे इति ४ । ३ । पु॰ पा ।

पूर्ववदात्वविकल्पः । तत्रात्वपक्षे 'लीलोर्नुग्लुकावन्यतरस्यां स्नेहविपातने' इति वा लुगागमः । तदभावे पुक् । तत्र हि ला इति लाक्षणिकमपि गृह्यते । अनात्वे तु नुक् । तदभावे वृद्ध्यायौ । एकदेशविकृतन्यायेन कृतात्वस्य नुङ् भवति, ली ई इति ईकारप्रश्लेषेण ईकारान्तस्य तद्विधानात् । स्नेहविपातनादन्यत्र नुग्लुकौ न भवत इत्यात्वे पुक्, अन्यदा वृद्ध्यायौ विलापयति विलाययतीति । स्यादिषु चिण्वदिटि आत्वपक्षे णेर्लोपे विलालिष्यते विलापिष्यते इत्यादि । अनात्वे विलीनिष्यते विलायिष्यते इत्यादीति । शुद्धेटि तु विलालयिष्यते विलापयिष्यते विलीनयिष्यते विलाययिष्यते इत्यादि । तदेवमष्ट रूपाणि । लुङेकवचने तु 'चिण्भावकर्मणो' रिति चिण्यात्वे लुक्पुकोरनात्वे नुकि तदभावे च वृद्धौ अलालि अलापि अलीनि अलायि इति चातूरूप्यम् । द्विवचनादौ सिचि पूर्ववदष्ट रूपाणि । कर्मकर्तरि 'णिश्रन्थिग्रन्थी' ति चिणो निषेधाच्च्लेः चङि द्विर्वचनादावात्वपक्षे अलीललत, अलीलपत । अन्यदा अलीलनत, अलीलयत इति चातूरूप्यम् । एवं द्विवचनादावपि । जटाभिरालापयते आलाययते इति वा, पूजामधिगच्छतीत्यर्थः । श्येनो वर्तिकामुल्लापयते न्यक्करोतीत्यर्थः । 'लियः सम्माननशालिनीकरणयोश्च' इत्यनयोश्चकारात् प्रलम्भने चाकर्त्रभिप्रायेपि तङ् । तत्र सम्माननं पूजनम् । तच्च धात्वर्थस्य कर्मतया विषयः । तस्य चात्मनेपदसहितेन धातुनोपात्तत्वाद् अस्मिन्विषये ऽकर्मकोयं पुत्रीयतिवदित्याहुः । शालिनीकरणं न्यक्करणम् । प्रलम्भनं निष्फलनाख्यानमित्युक्तम् । 'विभाषा लीयते' रित्यात्वं व्यवस्थितविभाषाविज्ञानात्सम्माननें विकल्पितम्, अन्यत्र नित्यम् । विलाय, विलीय, 'विभाषा लीयते' रिति वाऽऽत्वम् । विलयः, अच् । ईषद्विलयः, खल् । 'निमिमील्या खलचोरात्वप्रतिषेध' इति वा व्यवस्थितविभाषात्वेन वाऽऽत्वाभावः । लीनः । ली श्लेषण इति क्र्यादौ । ली द्रवीकरणे इति चुरादौ ॥ ३१ ॥

व्रीङ् वृणोत्यर्थे ॥ दन्त्योष्ठ्यादिः । व्रीयते विव्रीये । संयोगपूर्वत्वाद्यण् न भवति । व्रेतेत्यादि रीवत् । 'स्वादय ओदितः,' पूङ् प्राणि

प्रसवइत्यारभ्य एतदन्ता ओदितः । तदुक्तम् 'ओदितश्च' इति निष्ठानत्वम् । श्री वरणे इति क्र्यादौ ॥ ३२ ॥

पीङ् पाने ॥ पीयते, पिप्ये इत्यादि शीङ्वत् । पाययति । निगरणे' ति नित्य परस्मैपदम् । पाययते इति पिबतेः न पीङ इति । परस्मैपदनिषेधात्तङ् । पीत्वा, पीतः, पीतवान् । [illegible] विङतः ॥ ३३ ॥

माङ् माने ॥ अयं कैश्चिदेव पठ्यते । यदाह स्वामी । 'माङ् मान्ति दुर्गः' इति । तथा घुमास्थादिसूत्रे न्यासेऽपि "मा इति कस्येदं ग्रहणम् किं मेङ् प्रणिदान इति भौवादिकस्य, उत माङ् माने इति जौहोत्यादिकस्य, आहोस्विद् मा माने इत्यादादिकस्य । 'गामादाग्रहणेष्वविशेषः' इति त्रयाणामपि ग्रहणम्' इति । तथा 'अनिस्पर्धा' त्यत्र 'मति मीमे' त्यत्राप्युक्तानामेव त्रयाणां ग्रहणमित्युच्यते । [illegible] । मायते । ममे । माता । मास्यते । मायताम् । अमायत । मायेत मासीष्ट लिङि । अमास्तेत्यादि । अन्यस्मिन् मानिवत् ॥ ३४ ॥

ईङ् गतौ ॥ ईयते । अयाञ्चक्रे व्यपदेशिवद्भावाद् इजादित्वाद् गुरुमत्त्वयोराम् । एता । एष्यते । ईयताम् । ऐयत । ईयेत एषीष्ट लिङि । ऐष्ट । ईयिषते । आययति । आयियत । प्रेय, प्रतीय, ल्यप् । उपेयम्, 'अचो यत्' । अयक्विधावेनीति निर्देशान्नास्य ग्रहः ॥ अयते इति शपि । एति अध्येति अधीयत इति लुकि ॥ ३५ ॥

प्रीङ् प्रीतौ ॥ अकर्मकः । प्रीयते, पिप्रिये, इत्यादि शीङ्वत् । प्राययति । 'धूञ्प्रीञोर्नुग्वक्तव्यः' इति नुग्विधौ ञित उपादानादस्य स न भवतीति धातुवृत्तिकारः । हरदत्तस्तु 'श्नान्तानुकरणे दैवादिकस्य न भवति' इति । 'दैवादिकस्य ग्रहणेन च चौरादिकोऽप्युपलक्षयितव्यः' इति पुरुषकारे । कौमारास्तु व्यक्तमेव धूञ्प्रीणात्योरिति पठन्ति । प्रियः । 'इगुपधज्ञाप्रीकिरः कः' इत्यात्रेयः । वृत्तौ तु प्रीणा

तीति प्रिय इति क्र्यादिक एव उदाह्रियते । प्रेष्ठः, प्रेयान्, प्रेमा । 'प्रियस्थिरे'त्यादिना प्रादेशः । प्रियमाचष्टे प्रापयति । 'णाविष्ठवत्' इति प्रादेशे वृद्धिपुकौ । प्रीञ् तर्पण इति क्र्यादौ चुरादौ च । डीङ् इव आत्मनेपदिनो डीङ्वर्जमनुदात्ताः । स तु 'श्विडीङिवर्णेषु' इति वचनात्सेट् ॥ ३६ ॥

अथ अजन्तानिट्प्रकरणात्पुरुषः परस्मैपदिः पठति ॥

शो तनूकरणे ॥ एतदादयो छ्यतिपर्यन्ता अनुदात्ता उदात्तेतः ॥ श्यति, श्यतः, श्यन्ति, श्यसि, श्यामि, 'ओतश्श्यनि' इत्योकारलोपः । शशौ, शशतुः, शशाथ, शशिथ, शश, शशिव, आत्वे द्विर्वचनम् । 'आत औ णलः' । क्रादिनियमादिट् । भारद्वाजनियमात्थलीड्विकल्पः । इडादावजादावार्धधातुके च क्ङिति 'आतो लोप इटि च' इत्याकारलोपः । शाता । शास्यति । श्यतु, श्यतात्, श्यता, श्यन्तु, श्यानि । अश्यत्, अश्यः, अश्यम् । श्येत्, श्येता, श्येः, श्येयम् । आशिषि, शायात्, शायास्ताम् । अशात्, अशाताम्, अशुः, अशाः, 'विभाषा घ्राधेट्शाच्छासः' इति सिचः परस्मैपदे परे वा लुक् । 'आतः' इति झेर्जुस् । 'उस्यपदान्तात्' इति पररूपम् । लुगभावे अशासीत्, अशासिष्टाम्, इत्यादि । 'यमरमनमातां' मिति सगिटौ । शिशासति । शाशायते । शाशेति । शाययति । आत्वे 'शाच्छासे'ति युक् । शात्वा, शीत्वा, निशात, निशित, 'शाच्छोरन्यतरस्याम्' इति तादौ किति वेत्वम् । व्यवस्थितविभाषाविज्ञानाद्व्रते नित्यमित्वम् । तथा च वार्तिकम् । 'श्यतेरित्वं व्रते नित्यमिति वक्तव्यम्' इति । संशितव्रतः[1] । शाकः । बहुलवचनादौणादिकः कन्, मत्वर्थाकं नानाजातीय शाकसमाहारो वा । शाकी । गौरादित्वान्ङीष् । शाकिनः । 'शाकीपलालीदद्रुवां ह्रस्वत्वं च' इति मत्वर्थे नप्रत्ययो ह्रस्वत्वं च । अत एव वा निर्देशात् ङीप् । शादम् । 'शाशपिभ्यां दन्'[2] इति दन् । शाद्वलम् । 'नडशादाड्ड्वलच्' इति वलच् चातुरर्थिकः । डित्वाट्टिलोपः ॥ ३७ ॥

---

1 व्रत इति नास्ति कुत्र चित् । 2 उणादौ तु 'शाशपिभ्यां ददनौ' इत्येव दृश्यते ।

न्यत्र सिनशब्दस्य षत्वाभावात् प्रतिसितमित्यत्र न षत्वमित्येके । अन्ये तु सयसाहचर्याद् अलाक्षणिकत्वाद् विधिसम्भवे नियमायोगाद् विधिवैयर्थ्यप्रसङ्गाच्च सिनोतेरेव सितशब्दस्य ग्रहणमित्यस्य 'उपसर्गात्' इति षत्वं सर्वत्र भवत्येवेत्याहुः । अवस्यतीत्यवसायः । 'श्याद्व्यधे'त्यादिना णो युक्, सायः । घञ् । साये भवः, सायतनः । 'सायचिरम्' इत्यादिना ट्युट्युलोरन्यतर प्रत्ययः, तुडागमः, मान्तत्वं च सायशब्दस्य । यस्तु मान्तोऽव्यय सायशब्दस्तस्याव्ययत्वादेव प्रत्ययस्सिद्धः । सातिः । 'ऊतियूती'त्यादौ निपातनात् क्तिनीत्वाभावः ॥ ३९ ॥

दो अवखण्डने ॥ द्यति । ददौ इत्यादि श्यतिवत् । प्रणिद्यति । घुत्वात् । 'नेर्गदे'त्यादिना णत्वम् । देयात् । 'एर्लिङि' इत्येत्वम्, अदात् । 'गातिस्थे' त्यादिना नित्यं सिचो लुक् । देदीयते । 'घुमास्थे' तीत्वम् । दित्सति । 'सनि मीमे'त्यादिना इस् । अभ्यासलोपः, 'सस्सी'ति तत्वम् । दापयति । पुक् । दित्वा, दितः । 'द्यतिस्यती'तीत्वम् । अवदाय । 'न ल्यपि' इतीत्वनिषेधः । इत्वस्य तु नैव प्रसङ्गः । 'अन्तरङ्गानपि विधीन् बहिरङ्गो ल्यब्बाधते' इति पूर्वमेव ल्यप्प्रवृत्तेः तादिकित्त्वाभावात् अवत्तमित्यादौ दत्वात्परत्वात् 'अच उपसर्गात्त' इत्येतद्भवति । अन्यदपीह घुकार्यं ददातिवज्ज्ञेयम् । श्यतिप्रभृतयोऽनुदात्ताः परस्मैभाषाः ॥ ४० ॥

अथ हलन्तानात्मनेपदिनः सेटः परामृशति ॥

जनी प्रादुर्भावे ॥ इतः प्रभृति वाश्यन्ता उदात्ता अनुदात्तेतः । प्रादुर्भाव उत्पत्तिरभिव्यक्तिर्वा । अत्रायमकर्मकः । यदा त्वन्तर्भावितण्यर्थे उत्पादनायामभिव्यञ्जनायां वा वर्तते तदा सकर्मकः । दृश्यते दाशतये 'अत्रा ह्यग्नेरजनिष्ट गर्भम्' । तथा 'अचः कर्तृयकि' इत्यत्र भाष्यमपि 'जायते स्वयमेव' इति । अत्र ह्यन्तर्भावितण्यर्थत्वेन कर्मस्वभावकत्वात् कर्मकर्तृत्वम् । तथा ऽनुपूर्वाय यदाऽऽत्मजन्मपूर्वके प्रापणे वर्तते तदापि सकर्मकः, 'असौ कुमारस्तमजोऽनुजात' इति । जननेन त प्राप्त इत्यर्थः । शङ्खाङ्कुरो जायते 'ज्ञाजनोर्जा' इति जादेश

हन्मनककारादौ प्रत्यये । 'जनिकर्तुः प्रकृतिः' इति जायमानस्य कारणं प्रकृतम् अपादानम् । जज्ञे जज्ञाते जज्ञिरे जज्ञिषे 'गमहन' इत्युपधालोपः । तस्य स्थानिवत्त्वाद् द्विर्वचनम् । 'स्तोश्चु' रिति श्चुत्वम् । जनिता । जनिष्यते । जायताम्, जायस्व, जायै । अजायत । जायेत, जनिषीष्ट, लिङि । अजनि, अजनिष्ट, अजनिषाताम् 'दीपजने' ति कर्तरि तशब्दे च्लेश्चिण् । 'जनिवध्योश्च' इति वृद्धिनिषेधः । अन्तर्भावितण्यर्थादस्मात् कर्मकर्तरि कर्मवद्भावाद् नित्यं च्लेश्चिण् अजनि स्वयमेवेति । जिजनिषते । 'जनसनखनां सञ्झलो' रित्यात्वं सन इति झलादित्वाभावान्न भवति । झलन्तविशेषणं सन् सनोतेरेव सम्बध्यतीति तदर्थमेव सन्ग्रहणम् । जाजायते जञ्जन्यते, । 'ये विभाषा' इति जनादीनां वा यकारादौ क्ङित्यात्वम् । जञ्जनीति जञ्जन्ति । जनयति, 'बुधयुधनशजने' ति कर्त्रभिप्रायेऽपि क्रियाफले परस्मैपदम् । 'जनीजॄष्' इति मित्त्वाद् ह्रस्वत्वम् । ण्यन्तात्कर्मणि 'चिण्णमुलोर्दीर्घोऽन्यतरस्याम्' इति वा ह्रस्वत्वे अजनि अजानि इति । जन्यो घटः, जन्यं घटेन, 'तकिशसिचतियतिजनीनाम्' इति यत् । स च 'भव्यगेये' त्यादिना कर्तृभावयोः । 'ये विभाषा' इति नात्वमकित्त्वात् । जनः पचाद्यच् । घञपि 'जनिवध्योश्च' इति वृद्धिनिषेधात् जनः । जनानां समूहो जनता । 'ग्रामजनबन्धुसहायेभ्यस्तल्' इति तल् । जनस्य जन्यो जन्यः । 'मतजनहलात् करणजल्पकर्षेषु' इति जल्पे यत्प्रत्ययः । जनेषु साधुः जनं जनं प्रति वा प्रतिजनम्, सप्तम्यर्थे वीप्सायां वाऽव्ययीभावः । प्रातिजनीनः । 'प्रतिजनादिभ्यः खञ्' इति तत्र साधुरिति विषये खञ् । विश्वजनाय हितं विश्वजनीनम् । 'आत्मन्विश्वजने' ति खः । पञ्चजनीनम् । 'पञ्चजनादुपसङ्ख्यानम्' इति खः । सार्वजनिकः, सर्वजनीनः, 'सर्वजनाट्ठञ्खौ' इति ठञ्खौ तत्र एते कर्मधारयादेवेष्यन्ते । षष्ठीतत्पुरुषे बहुव्रीहौ च 'तस्मै हितम्' इति छो भवति, विश्वजनीयः पञ्चजनीयः सर्वजनीय इति । महाजनाय हितं माहाजनिकम्, 'महाजनाट्ठञ्वक्तव्य' इति ठञ् । अथ तत्पुरुषा

द्वेष्यते। बहुव्रीहौ तु छो भवति महाजनीय इति। पञ्चजनेषु भव पाञ्चजन्यम्, 'बहिर्देवपञ्चजनेभ्यश्च' इति ञ्यः । प्रावृषिज. । सप्तम्यां जनेर्डः' इति डः। 'प्रावृट्शरत्कालदिवां जे' इति सप्तम्या अलुक्। एवं शरदिज इत्यादि। वर्षेजः, वर्षजः। क्षरेजः क्षरजः। शरेजः शरजः। वरेजः वरजः। 'विभाषा वर्षक्षरशरवरात्' इति जे परे सप्तम्या वा ऽलुक्। बुद्धेर्जातो बुद्धिजः। 'पञ्चम्यामजातौ' इति डः। अनुजः, प्रजा। 'उपसर्गे च संज्ञायम्' इति डः । अप्रजाः, दुष्प्रजा', सुप्रजाः । 'नित्यमसिच्प्रजामेधयो' रिति नञ्दुस्सुभ्यः परस्य प्रजाशब्दस्यासिच्प्रत्ययो बहुव्रीहौ । स्त्रियमनुजातः स्त्र्यनुजः. 'अनौ कर्मणि' इति डः । आत्मनो जननेनाग्रजां स्त्रियमवरत्वेन प्राप्त इत्यर्थः । अपरे त्वनुना रुधिराक्षिप्यते, तदपेक्ष स्त्रियाः कर्मत्वमिति स्त्रियमनुरुध्य जात इत्यर्थ इति विवृणवते । न जायतइत्यजः । द्विर्जायतइति द्विजः, । द्वितीयजननमुपनयनम्। ब्राह्मणजो धर्मः। क्षत्रियज युद्धम् । अभिजाः केशाः । 'अन्येष्वपि दृश्यते' इति डः । बीजम्, पूर्ववत् डः । बीजं करोति बीजेन सह कर्षतीत्यर्थः। बीजशब्दो बीजावापसहिते विलेखने वर्तत इति हरदत्तः। 'कृञो द्वितीयतृतीयशम्बबीजात्कृषौ' इति कृञो योगे कृषावभिधेयाया द्वितीयादिभ्यो डाच् । 'ऊर्यादिच्विडाचश्च' इति निपातो 'गतिश्च' इत्यव्ययत्वं पूर्वप्रयोगश्च । बीजादिति निर्देशात् दीर्घो वत्वं चोपसर्गस्य। प्रजनिष्णुः, 'जल कृञ्' इत्यादिना इष्णुच्। अनुजातो माणवको माणविकाम्, अनुजाता माणविका माणवकेन । 'गत्यर्थाकर्मके' ति कर्तृकर्मणोः क्तः । जज्ञिः 'भाषाया धाञ्' इत्यादिना किकिनोरन्यतरः। लिड्वद्भावाद् द्वित्वं च । जनुः। 'जनेरुसि'रित्युसिप्रत्ययः। पुंसानुजः। जनुषान्धः। 'पुंसानुजो जनुषान्ध उपसङ्ख्यानम्' इति तृतीयाया अलुक् । 'तृतीया' इति योगविभागात्समासः। पुंसा जन्मना च हेतुना ऽनुजो ऽन्धश्चेत्यर्थः। जन्म। मनिन्। जन्मी व्रीह्यादित्वादिनिः । जन्तुः । 'कमिमनी' त्यादिना तुप्रत्ययः । जानुः । 'दृसनी' त्यादिना ञुण् । अनुबन्धद्वयसामर्थ्यात्

मूलविभुजादित्वात् कः । चर्मपूरं स्तृणोति, उदरपूरं भुङ्क्ते । 'चर्मोदरयोः पूरे' रित्यनयोः कर्मणोरुपपदयो णमुल्प्रत्ययः । पूरयतेर्धातुसम्बन्धे विधानाद् धात्वन्तरस्य¹ प्रयोगः । गोष्पदपूरं वृष्टो देवः, गोष्पदप्रं वा । 'वर्षप्रमाण ऊलोपश्चास्यान्यतरस्याम्' इति कर्मण्युपपदे वर्षस्य इयत्तायां गम्यमानायां पूरयतेर्णमुल् ऊकारलोपश्चास्य विकल्पेन । पूर्णः । 'वा दान्तशान्तपूर्ण' ति क्ते णिलुगिडभावौ पक्षे निपात्येते । अन्यदा 'निष्ठायां सेटि' इति णिलोपे पूरितः । पूरयतीति पूरणः । बाहुलकात्कर्तरि ल्युट् । पूरुः । बहुलवचनादुप्रत्यय ॥ ४३ ॥

तूरी गतित्वरणहिंसनयोः ॥ तूर्यते । तुतूरे । तूरिता । तूरिष्यते । तूर्यताम् । अतूर्यत । तूर्येत, तूरिषीष्ट । अतूरिष्ट । तुतूरिषते । तोतूर्यते । तोतूर्ति । तूरयति । अतूतुरत् । तूर्णः । तूर्णवान् । तूर्तिः । तूर्णिः । औणादिकः । तूर्यं, ण्यत् ॥ ४४ ॥

धूरी गूरी हिंसागत्योः ॥ ४५-४६ ॥

घूरी जूरी हिंसावयोहान्योः ॥ ४७-४८ ॥

शूरी हिंसास्तम्भनयोः ॥ ४९ ॥

चूरी दाहे ॥ धूर्यते । दुधूरे । गूर्यते । जुगूरे । घूर्यते । जुघूरे । जूर्यते । जुजूरे । शूर्यते । शुशूरे । चूर्यते । चुचूरे । गूरी उद्यमे इत्याकुस्मीयः । गुरी इति लघूपधस्तुदादौ । जन्यादय ईदित्त्वान्निष्ठायामनिटः ॥ ५० ॥

तप ऐश्वर्ये वा ॥ अयं धातुरैश्वर्ये वा सङ्ख्यनो उत्पादयतीत्यर्थे । अन्यदा न्यास्यविकरणः परस्मैपदी च, तपतीति । केचिदिह वावृतु वक्ष्यमाणस्य वृतु वरणइत्यस्य आद्यावयवमिच्छन्ति 'वावृतु वरणे' इति । तथा च भट्टिः । 'ततो वावृत्यमाना सा रामशाला न्यविक्षत' इति । 'तपि तिपिम्' इत्यनिट्कारिकान्यासे तु 'तप सन्तापे, तप ऐश्वर्ये वा' इत्येव पठतोस्यापि वाशब्दः तप्यतेश्शेषेभिमतः ।

१ अनु-इत्यधिकम् ३ पु ।

वावाश्यते । वावाष्टि । वाशयति । अववाशत् । ऋदित्त्वाण्णौ चङि ह्रस्वाभावः । वाश्रः पुरुषः । 'स्फायितञ्चि'त्यादिना रक् । वाशिरा । 'मन्दिवाशी' त्यादिना किरच्[1] । जन्यादय उदात्ता अनुदात्तेतः । तपिरेकोनिट्, 'तपिं तिपिम्' इत्यनिट्कारिकापाठात् ॥ ५५ ॥

स्वरितेतौ सेटावाह ॥

मृष तितिक्षायाम् ॥ तितिक्षा क्षमा । मृष्यते । ममृषे, ममृषिषे । मर्षिता । मर्षिष्यते । मृष्यताम् । अमृष्यत । मृष्येत मर्षिषीष्ट । अमर्षिष्ट । अमर्षिष्यत । मृष्यति । ममर्ष । मर्षिता । मर्षिष्यति । मृष्यतु । अमृष्यत् । मृष्येत्, मृष्यात् । अमर्षत् । अमर्षिष्यत् । परिमृष्यति । 'परेर्मृष' इति क्रियाफलस्य कर्तृगामित्वेपि परस्मैपदम् । मिमर्षिषते, मिमर्षिषति । मरीमृषीति । मर्मृषीति, मर्मर्ष्टि, मरिमर्ष्टि, मरीमर्ष्टि । मर्षयति । अममर्षत् । अमीमृषत्, उदित्त्वा । मर्षितः, मर्षितवान्, 'मृषस्तितिक्षायाम्' इति सेटो निष्ठाया अकित्त्वम् । तितिक्षाया अन्यत्र अपमृषित वाक्यमाह, अविस्पष्टमित्यर्थः । दुर्मर्षणः । 'भाषाया शासियुधी'-त्यादिना युच् खलोपवादः । अयमाधृषीयोपि ॥ ५६ ॥

ईशुचिर् पूतीभावे ॥ शुच्यते । शुशुचे । शोचिता । शोचिष्यते । शुच्यताम् । अशुच्यत । शुच्येत, शोचिषीष्ट, लिङौ । अशोचिष्ट । शुच्यतीत्यादि पूर्ववत् । इरित्त्वाल्लुङ्यङ्विकल्पादशुचत् अशोचीद् इति । शुशुचिषते, शुशोचिषते । शुशुचिषति, शुशोचिषति । शोशुच्यते । शोशोक्ति । शोचयति । अशूशुचत् । शुचित्वा । 'रलो व्युपधात्' इति क्त्वासनोः कित्त्वविकल्पः । शुक्तम् । ईदित्त्वा[2]दनिट्त्वम् । रसान्तरं गतमित्यर्थः । शुक्तिः । 'तितुत्र' तीण्निषेधः । शुक्तिका । संज्ञायां कन् । उदात्तौ स्वरितेतौ । शोके शोचतीति शपि गतम् ॥ ५७ ॥

अथानिटस्स्वरितेत आह ॥

---

१ उणादौ तु 'मन्दिवाशी'त्यादि सूत्रे उरजेव पठ्यते । वृत्त्यादावपि मन्दुरा वाशुरा इत्याद्येवोदाह्रियते ।

२ निष्ठायामित्यधिकं ३ पु ।

अथात्मनेपदिनोऽनिटः परामृशति ॥

पद गतौ ॥ लिश्यन्ता अनुदात्ता अनुदात्तेत । पद्यते। पेदे, पेदिषे, पत्ता । पत्स्यते । पद्यताम् । अपद्यत । पद्येत, पत्सीष्ट लिङि । अपादि, अपत्साताम् । 'चिण् ते पद' इति कर्तरि ते चिण् । पित्सते, 'सनि मीमे त्यादिना अच इसि 'स्को'रिति सलोपे दकारस्य चर्त्वम् । 'अत्र लोपोऽभ्यासस्य' । पनीपद्यते । पनीपत्ति । 'नीग्वञ्चु'इत्यादिना नीक् । पादयति । अपीपदत् । उत्पदिष्णुः, 'अल ङ्कृञ्' इत्यादिना उत्पूर्वादिष्णुच् । केचित्तु 'उत्पत' इति पठन्ति पठन्ति । पदनः, 'जुचङ्क्रम्ये'त्यादिना युच् । पादुकः, 'लषपते'त्यादिना उकञ् । पद्यतइति पादः । 'पदरुजे'ति कर्तरि घञ् । पादाभ्यां चरति पदिकः । 'पर्पादिभ्यष्ठन्' इत्यत्र 'पादः पच्च' इति पाठात् ष्ठनि पद्भावः । पदिकी । षित्त्वात्स्त्रियां ङीष् । पादार्थमुदकं पाद्यम् । 'पादार्घाभ्यां च' इति यत् । पादाय हितम्, तत्र भवं वा पद्यम् । 'शरीरावयवाद्यत्' 'शरीरावयवाच्च' इति योगाभ्यां यत् । 'पद्यत्यतदर्थे' इति पादस्य पद्भावः । द्वाभ्यां पादाभ्यां क्रीतं द्विपाद्यम् । 'पणपादमाषशताद्यत्' इति पणाद्यन्ताद् द्विगोः प्राग्वतीयेष्वर्थेषु यत् । 'पद्यत्यतदर्थे' इत्यत्र शरीरावयववाचिनो ग्रहणादिह पद्भावः । पच्छः । 'सङ्ख्यैकवचनात्' इति वीप्सायां शस् । 'ऋचश्शे' इति ऋक्सम्बन्धिनः पादशब्दस्य पद्भावः । द्वौद्वौ पादौ लभते द्विपदिकां लभते, 'पादशतस्य सङ्ख्यादेर्वीप्सायां वुन् लोपश्च' इति पादशतयोरन्यतरस्यां सङ्ख्यादेस्समासाद् वीप्सायां वुन्, अन्तस्य च लोपः । 'यस्य' इति लोपेनैव सिद्धेस्तल्लोपवचनमनैमित्तिकत्वार्थम् । तेनाल्लोपस्य स्थानिवत्त्वाभावात् 'पादः पत्' इति भसञ्ज्ञानिमित्तः पद्भावस्सङ्गच्छते । 'यस्य' इति लोपे हि तस्य पूर्वविधौ स्थानिवत्त्वात् पाच्छब्दान्तमङ्गं भसञ्ज्ञं न स्यात् । प्रकृत्युपाधिरपि वीप्सा तद्धितेन द्योत्यतइति 'तद्धितार्थे'इति समासः । अत एव 'नित्यवीप्सयो'रिति द्विर्वचनं न भवति । द्वौ पादौ दण्डयति ददाति वा द्विपदिकां

दण्डयति ददाति । 'दण्डव्यवसर्गयोश्च' इति चुन् । व्यवसर्गो दानम् अथोस्मायीयमारभ्य । व्याघ्रस्येव पादावस्य व्याघ्रपात्, श्येनपात्, 'पादस्य लोपोऽहस्त्यादिभ्यः' इति हस्त्यादिव्यतिरिक्तेभ्य उपमानपूर्वपदस्य पादान्तस्यान्तस्य लोपः समासान्तः । व्याघ्रपदोऽपत्यं वैयाघ्रपद्यः, गर्गादित्वाद्यञ्, पूर्ववत्पद्भावः स च 'निर्दिश्यमानस्यादेशा भवन्ति' इति पाच्छब्दस्यैव भवति, न तु तदन्तस्य । 'न य्वाभ्याम्' इत्यैजागमो वृद्धिनिषेधश्च । कुम्भपदी, घृतपदी । 'कुम्भपदीषु च' इति पादान्त्यलोपस्समासान्तः । कुम्भपद्यादिषु साध्येषु पादान्त्यलोप इत्यक्षरार्थः । अत्र बहुवचननिर्देश आद्यर्थावगतये । कुम्भपद्यादयश्च गणपाठएव द्रष्टव्याः । कुम्भादिभ्यः पादस्य लोप इति वक्तव्ये समुदायपाठो विषयनियमार्थः । तत्र ये उपमानपूर्वाः कुम्भपद्यादयो, ये च शतपद्यादयः सङ्ख्यापूर्वास्तेषां यथाक्रमं 'पादस्य लोपः' 'सङ्ख्यासुपूर्वस्य' इति सिद्धे लोपे पुनः पाठात् स्त्रियां नित्यं ङीबेव भवति न तु व्याघ्रपात् व्याघ्रपदी द्विपात् द्विपदी इत्यादिवत् 'पादोऽन्यतरस्याम्' इति पाच्छब्दान्तस्य विधीयमानो ङीब्विकल्पः । ये त्वनुपमानसङ्ख्यापूर्वा घृतपद्यादयस्तेषामपि सर्वान्तविशिष्टानां पाठात् स्त्रियामेव पद्भावो नित्यश्च ङीप् । अष्टापदीशब्दस्यात्र पाठात् 'अष्टनस्संज्ञायाम्' इति वा पूर्वपदस्य दीर्घः । अत्र सुधाकरः । 'सङ्ख्यासुपूर्वस्ये'ति पाद[1]स्यान्त्यलोपे 'पादोऽन्यतरस्याम्' इति ङीपि सुपदीशब्दे सिद्धे कुम्भपदीषु पाठः स्त्रियां सङ्ख्योपमानपूर्वपादस्य नित्यं ङीबर्थः । तेन सुपाद्द्विरदनासोरूरिति भट्टिप्रयोगश्चिन्त्य इत्याह । द्विपात् द्विपदी । सुपात्, 'सङ्ख्यासुपूर्वस्य' इति पादान्त्यलोपस्समासान्तः । 'पादोऽन्यतरस्याम्' इति वा ङीपि भस्य पद्भावः । स्त्रियां[3] ङीबेव सुपाच्छब्दस्येदानीमेवोक्तम् । द्विपदा ऋक्, 'टाबृचि' पादान्तस्य ऋच्यभिधेयायां टापि पद्भावः पूर्ववत् । पदाजिः, पदातिः, पदगः, पदोपहतः, 'पादस्य

१ पादान्तस्य लोप इति ४ पु॰ पा॰ पादोन्त्यलोप इति ३ पु॰ पा॰ ।
२ पूर्वपदवदिति ३ । पु॰ पा॰ । ३ स्त्रियामिति २ पु॰ नास्ति ।

पदाज्यातिगोपहतेषु' इति पादशब्दाद् आज्यादिषूत्तरपदेषु पदादेशः । पद्धिमम्, पत्काषी, पद्धतिः । 'हिमकाषिहतिषु च' इति हिमादिषू त्तरपदेषु पद्भावः । चकारादिष्के च, पदिष्कः । पादघोषः, पद्घोषः । पादमिश्रः, पन्मिश्रः । पादशब्दः, पच्छब्दः, 'वा घोषमिश्रशब्देषु' इति वा पद्भावः । सम्पत्, सम्पदादित्वात्क्विप् । क्तिन्नपीष्यते, सम्पत्तिरिति । पदम्, 'खनो घ च' इति चकारात्करणादौ घः । पदान्यधीते वेद वा पदकः, 'क्रमादिभ्यो वुन्' इति वुन् । पद्याः पांसवः, 'पदमस्मिन्दृश्यम्' इति प्रथमान्ताद् दृश्यत्वोपाधिकादस्मिन्निति सप्तम्यर्थे यत् । 'पद्यत्यतदर्थे' इति पद्भावः । पूर्वपदिकः । 'इकन् बहुलं पदोत्तरपदात्' इत्यध्येतृवेदित्रोरिकन् । अनुपदं धावति आनुपदिकः, 'माथोत्तरपदपदव्यनुपदं धावति' इति द्वितीयासमर्थाट्ठक् । पूर्वपदं गृह्णातीति पौर्वपदिकः, 'पदोत्तरपदं गृह्णाति' इति पदोत्तरपदाट्ठक् । आप्रपदं प्राप्नोतीत्याप्रपदीनः पटः,'आप्रपदं प्राप्नोति' इति द्वितीयान्तात्खः । शरीरेणासम्बद्धस्यापि पटादेः प्रमाणमाख्यायते पादस्याग्रं प्रपदम् । अत एव निर्देशात्समासः, पूर्वनिपातश्च । आप्रपदात्, 'आङ्मर्यादाभिविध्योः'-रित्यव्ययीभावः । अनुपदीना उपानत्, 'अनुपदसर्वान्ने'ति बद्धेत्यर्थे खः । 'यस्य चायाम' इत्यव्ययीभावसमासः । अनुर्यस्यायामवाची तेन लक्षणभूतेनानुस्समस्यते इति सूत्रार्थः । इहि च पदायाम उपानदायामस्य लक्षणम् । सप्तभिः पदैरवाप्यते साप्तपदीनं सख्यम्,'साप्तपदीनं सख्यम्' इति निपात्यते । अनुपदमन्वेष्टा अनुपदी गवाम्, 'अनुपद्यन्वेष्टा' इतीनन्तो निपात्यते । अनोः पश्चादर्थेऽव्ययीभावः । गवामिति पदापेक्षया षष्ठी । नित्यसापेक्षत्वात्समासः । एण्या इव पादावस्य, अजस्येव पादावस्य, प्रोष्ठो गौः, तस्येव पादावस्य, एणीपदः अजपदः, प्रोष्ठपदः, 'सुप्राते' त्यादिनाच्प्रत्ययः पद्भावश्च निपात्यते । एणीपदाजपदयोः पद्भाव इति निपातनफलं वदतो हरदत्तस्य प्रोष्ठपदेति पाठो नाभिमतः प्रतीयते । पूर्वे प्रोष्ठपदे, पूर्वाः प्रोष्ठपदाः, 'फल्गुनीप्रोष्ठपदानां

१ व्याप्नोतीति ४ पु पा । २ पदस्येति ३ । ४ पु पा ।

च नक्षत्रे' इति नक्षत्रे वर्तमानयोर्द्वित्वे वा बहुवचनम्। प्रोष्ठपदाभिर्युक्तः कालः, प्रोष्ठपदः, प्रोष्ठपदाशब्दस्तत्सहचरिते चन्द्रमसि वर्तते। 'तत्र नक्षत्रेण युक्तः काल' इत्यणि तस्य 'लुबविशेषे' इति लुप्। 'लुपि युक्तवद्व्यक्तिवचने' इति कालस्य स्त्रीत्वबहुत्वे, तासु जातः प्रोष्ठपादः। 'सन्धिवेले'त्यादिना ऽण्। 'जे प्रोष्ठपदानाम्' इति जातार्थे वृद्धिनिमित्ते तद्धिते परत उत्तरपदस्य वृद्धिः। गेहानुप्रपादमास्ते गेहगेहमनुप्रपादमास्ते, गेहमनुप्रपादमनुप्रपादमास्ते। 'विशिपतिपदी'त्यादिना णमुल्। 'तृतीयाप्रभृतीनि' इति समासविकल्पः। समासे 'नित्यवीप्सयो'रिति द्विर्वचनं न भवति, तयोस्तेनैवोक्तत्वात्। आभीक्ष्ण्ये क्त्वापीष्यते, गेहमनुप्रपद्यानुप्रपद्यास्त इति। सूत्रार्थौ तुदादावुदाहृतः। सम्पादी। णिनिः। साम्पाद्यम्। ब्राह्मणादित्वाद्भावकर्मणोः ष्यञ्। जीविकामापन्नः जीविकापन्नः, आपन्नो जीविकाम् आपन्नजीविकः, 'द्वितीयाश्रिते'ति 'प्राप्तापन्ने च द्वितीयया' इति च तत्पुरुषः। 'प्राप्तापन्ने च' इत्यत्र लिङ्गविशिष्टपरिभाषया ऽऽपन्नाशब्दस्य समासेऽपि आपन्नजीविक इत्येव। तत्र हि प्राप्तापन्ने अ च इत्यकारः प्रश्लिष्यते, स चान्यादेशः। सौत्रत्वाच्च न प्रकृतिभावः। सम्पद्यतइति सम्पदः, 'अनुनन्द्व वे'[1]इति सूत्रे निपातनात् शः। ततश्श्यन्। पादुः। 'णित्कमिदर्शने' रित्युकारप्रत्यये णित्वाद्वृद्धिः। पादुका। संज्ञायां कनि 'केऽणः' इति ह्रस्वः। पद्मम्। 'अर्तिस्तु' इत्यादिना मन्। पद्मिनी। 'पुष्करादिभ्यो देशे' इति मत्वर्थीय इनिः। पद्मवती पद्मा। 'अर्श आदिभ्योऽच्' इति मत्वर्थेऽच्, टाप्। अयं क्रयादावपि ॥ ६१ ॥

खिद दैन्ये ॥ खिद्यते। चिखिदे। खेत्ता। खेत्स्य। खिद्यताम्। अखिद्यत। खिद्येत, खित्सीष्ट। अखित्त। 'लिङ्सिचौ' इति लिङ्सिचोः कित्त्वान्न गुणः। चिखित्सते। 'हलन्ताच्च' इति सनः कित्त्वम्। चेखिद्यते। [3]खेदयति। अचीखिदत्। खित्त्वा। खिन्नः। खिदिरम्, 'इषिमदी'-

१ अभूततद्भावादीति २। ३ पु पा। २ कित्त्वान्न गुण इति ३। पु. पा।
३ चेखिदीति, चेखेत्तीति ३। पु. अधिकम्।

त्यादिना किरच्[1] । खिद्यते इति कर्मकर्तरीति वामन इति स्वामिसुधाकरौ । तस्यान्तर्भावितण्यर्थत्वेन रौधादिकस्य सकर्मकस्य खिन्दतीति परिघातार्थस्य स्वतः सकर्मकस्य वा कर्मकर्तरीदं रूपमित्यभिप्रायः । एव वदतोस्य श्यनि पाठो नाभिमतः प्रतीयते । धातुपाठकोशेषु व्याख्यानेषु च अविगीतः पठ्यते ॥ अथ रुधादावपि । परिघाते तुदादिः ॥ ६२ ॥

विद सत्तायाम् ॥ विद्यत इत्यादि खिदिवत् ॥ वेत्तीति ज्ञाने गतम् ॥ ६३ ॥

बुध अवगमने ॥ बुध्यते । बुबुधे । बोद्धा । भोत्स्यते । 'एकाच' इति बशो भष् । बुध्यताम् । अबुध्यत । बुध्येत, भुत्सीष्ट । अबोधि, अबुद्ध, अभुत्साताम्, 'दीपजने' ति कर्तरि तशब्दे वा चिण् । 'लिङ्सिचा' विति कित्त्वम् । बुभुत्सते । बोबुध्यते । बोबोद्धि । बोधयति पद्मम्, 'बुधयुधे' ति क्रियाफलस्य कर्तृगामित्वेऽपि परस्मैपदम् । अत्र बुधादीनां चतुर्णाम् 'अणावकर्मकात्' इत्येव सिद्धे, वचनमिदमचित्तवत्कर्तृकार्थमिति वृत्तौ । 'तत्त्व बुध्यते' इति धर्मकीर्तिप्रयोगे सकर्मकत्वमन्तर्भावितण्यर्थत्वेन नेयम् । 'क्रमादमुं नारद इत्यबोधि सः' इति माघे सकर्मकत्वं वृत्तिकारादीनामनभिमतमेव । यद्वा ऽयमर्थभेदेन सकर्मकोऽकर्मकश्च । बुद्ध्वा । बुद्धः । बुबुधानः, 'मुचिबुधिभ्यां सन्वच्च' इत्यानचि सन्वद्भावाद् द्वित्वम् । बोद्धुमिच्छुरित्यर्थः । सन्वद्भावाद् 'हलन्ताच्च' इति कित्त्वादगुणत्वम् । बुधान आचार्यादिः, 'युजिबुधिदृशः किच्च' इत्यानच् । बोधयतीति ज्वलादौ । बोधति बोधत इति हि भ्वादौ ॥ ६४ ॥

युध सम्प्रहारे ॥ युध्यत इत्यादि बुधिवत् । ते तु अयुद्ध इति सिचेव । राजयुध्वा, राजानं योधितवानित्यर्थः । 'राजनि युधि कृञः' इति राजनि कर्मण्युपपदे भूते क्वनिप् । इहान्तर्भावितण्यर्थत्वेन

१ खिद्रम्, इषिमदीत्यादिना रक् इति २ पु पाठ उपलभ्ये, स च वृत्त्यादिविरोधादुपेक्ष्य वृत्त्यादिषु च इषिरोऽग्निरित्यादिकमुदाहृयते । खिद्रमित्यादिकन्तु 'स्फायितञ्चि'-इत्यादिसूत्रेण रका संपादितम् ।

सकर्मकत्वम् । महद्युध्वा, 'महे च' इति भूते क्वनिप् । राजयुध्वा ब्राह्मणी, महद्युध्वा ब्राह्मणी । 'वनो न हशः' इति ङीब्रेफयोर्निषेधः । योधः, यौधः, प्रज्ञादिपाठात्स्वार्थे अण् । अत एव पाठादिगुपधलक्षणं क बाधित्वाच् । आङाय युध्यन्तेनेनेत्यायुधम्, 'घञर्थे कविधानम्' इति कः । आयुधेन जीवति आयुधीयः, आयुधिकः 'आयुधाच्छ च' इति जीवतीत्यर्थे ठञ्छौ । युयुधान, बाहुलकादानचि द्वित्वम् । युध्मः आहवो योद्धा च, 'इषियुधी न्धादिना मक् । दुर्योधनः, सुयोधनः, 'भाषायां शासियुधि' इति खलर्थे युच् । युध्यतीति युद्धमिच्छतीति क्यचि ॥ ६५ ॥

अनो रुध कामे ॥ रुधिरनुपूर्वस्य कामे वृत्तस्य दिवादित्वमात्मनेपदित्वं च । अनुरुध्यत इत्यादि पूर्ववत् । रुणद्धीत्यावरणे रुधादौ ॥ ६६ ॥

अण प्राणने ॥ अण्यते । आणे । अणिता । अणिष्यते । अण्यताम् । आण्यत । अण्येत । अणिषीष्ट । आणिष्ट । अणिणिषते । आणयति । मा भवानणिणत् ॥

यमिर्यमन्तेष्वनिडेक इष्यते रमिश्च यश्च श्यनि पठ्यते मनिः ।
नमिश्चतुर्थो हनिरेव पञ्चमो गमिस्तु षष्ठः प्रतिषेधवाचिनाम् ॥

इति व्याघ्रभूतिवचनादयं सेट् । केचिदनिटां मध्ये पाठस्य प्रयोजनादर्शनाद् अमुं धातुं नाधीयते । शाकटायनस्तु 'अन' इत्याह । एवं च तवर्गीयान्तं रूपमप्युक्तं भवतीति ॥ अणतीति शब्दे शपि । अनितीति प्राणने लुकि ॥ ६७ ॥

मन ज्ञाने ॥ न त्वा तृणाय मन्ये, न त्वा तृणं मन्ये, 'मन्यकर्मण्यनादरे विभाषाऽप्राणिषु' इति कर्मणि वा चतुर्थी । इह चानुवाक्ये कर्मणि व्यवस्थितविभाषाविज्ञानात् चतुर्थी न भवति । अप्राणिष्वित्यपास्य अनावादिष्विति वार्तिके पठितम् । तेन न त्वां नावं मन्ये यावत्तीर्णं न नाव्यम्, न त्वामन्नं मन्ये यावन्न भुक्तं श्राद्धम् इत्यत्राप्राणित्वेऽपि द्वितीयैव भवति । तथा प्राणित्वेऽपि न त्वा श्वानं मन्ये, न त्वा शुने

मन्ये इत्यत्र उभयं भवति। मेने। मन्ता। मंस्यते। मन्यताम्। अमन्यत। मन्येत, मंसीष्ट। अमंस्त, अमंसाताम्। एहि मन्ये ओदनं भोक्ष्यसे इति नहि[1] भोक्ष्यसे भुक्तस्सोऽतिथिभिः, अत्र 'प्रहासे च मन्योपपदे मन्यतेरुत्तम एकवच्च' इति प्रहासे परिहासे गम्यमाने मन्योपपदे धातावुत्तमविषये मध्यमः, मन्यतेश्च मध्यमविषये उत्तमः। एकवच्च इति वचनाद् द्विबहुो-रप्येकवचनमेव। दर्शनीयमानी भार्यायाः, 'मन' इति कर्मण्युपपदे मन्यतेर्णिनिः। भार्याया इति कर्मणि षष्ठी। तत्सापेक्षस्यापि दर्शनी-यशब्दस्य गमकत्वात्समासः। 'क्यङ्मानिनोश्च' इति क्यङन्ते मानिन्शब्दे चोत्तरपदे पुंवद्भावः। पण्डितमात्मानं मन्यते देवदत्तः पण्डितमानी पण्डितम्मन्यः 'आत्ममाने खश्च' इति कर्मण्युपपदे आत्ममाने वर्तमा-नान्मन्यतेर्णिनिः खश्च। आत्मनो मान आत्ममानः, कर्मणि षष्ठीसमासः। आत्मा च स्वः, स च सन्निधानान्मन्तैव, तस्य चात्मस्वरूपेण कर्तृत्वम्। पण्डितत्वादिस्वरूपेण कर्मत्वमित्येवं न विरोधः। खशश्शि-त्वात् श्यन्, खित्वान्मुम्। मन्या, पश्चाद्ग्रीवाशिरा 'संज्ञायां समजनि-षद' इत्यादिना क्यप्। अन्यत्र क्तिनि मतिः, 'मन्त्रे वृषे' इति क्तिनो वचनमुदात्तमात्रार्थं, न तु भाषायां तन्निवृत्त्यर्थम्। वैमत्य, विमतिमा। साम्मत्य, सम्मतिमा, दृढादिषु 'वेयातलाभमतिमनश्शारदाना समो मतिमनसो'रिति पाठात् ष्यञिमनिचौ। 'इगन्ताच्च लघुपूर्वात्' इत्यणपि भवति, वैमत, साम्मतमिति। त्वतलौ तु सर्वत्रैवेष्येते इत्युदा-हार्यौ। राज्ञां मतः, 'मतिबुद्धी'ति वर्तमाने क्तः। 'क्तस्य च वर्तमाने' इति कर्तरि षष्ठी। मतस्य करण मत्यम्, तच्च भावः, साधन वा 'मतजनहलात्' इति यत्। मनः, असुन्। मन एव मानसम्, प्रज्ञादि-त्वात् स्वार्थे ऽण्। अगुमनाम्भुत्वना भवति सुमनायते इत्यादौ भृशा-दित्वात् क्यङ्सलोपौ। तत्र हि सूद्दुरभिभ्यः परो मनश्शब्दः पठ्यते। वैमनस्य विमनसिमा। साम्मनस्य सम्मनसिमा, 'वेयातलाभमतिमन-श्शारदानां समो मतिमनसो' रिति ष्यञिमनिचौ। त्वतलौ चोदाहार्यौ

१ कुतो हि इति ३। पु पा०।

विमनीकरोति, 'अरुर्मनश्चक्षु' रित्यादिना च्विः सलोपश्च । मनसादेवो नाम कश्चित्, 'मनसस्संज्ञायाम्' इत्युत्तरपदे तृतीयाया अलुक् । 'दिवः कर्म च' इति करणत्वात्तृतीया । मज्ञामसात्रेण कर्मत्वमर्पयति दीव्यतेः कर्मण्यणभवतीति दीव्यतावुक्तम् । मनसाज्ञायी, 'आज्ञायिनि च' इत्य लुक् । लुकि तु मनआज्ञायीति स्यात् । वाङ्मनसम्, 'अचतुरे' त्यादिना द्वन्द्वे ऽजन्तो निपातितः । मधु, 'फलिपाटिनमी' त्यादिना उप्रत्ययो धकारश्चान्त्यादेशः । मधुरः, 'ऊषसुषी' त्यादिना मत्वर्थे रः । इह मधुशब्दो रसवाचकस्य माधुर्यमात्रे वर्तते । तेन मधुरं मध्वित्यपि भवति । इह च न भवति, मध्वस्मिन् घटे ऽस्ति मधुनो घट इति । इह च 'तदस्यास्त्यस्मिन्' इति विवक्षानियमार्थस्य इतिशब्दस्यानुवर्तनाल्लभ्यते । मनुः, 'शॄस्वृस्निही' त्यादिना उप्रत्ययः । मनोस्त्री मनायी, मनावी, मनुः । 'मनोरौ वा' इति ङीप्यैकार औकारो वान्तादेशः । मनुष्यो मानुषः, 'मनोर्जातावञ्यतौ षुक्च' इति अञ्यतौ षुगागमः । जाताविति वचनाद् इह अपत्यग्रहणं व्युत्पत्तिमात्रार्थम् । तेन मानुषा इत्यत्र यञञोश्च इत्यपत्यस्याञो विधीयमानो बहुषु लुङ्न भवति । मानुषी, गौरादित्वान्ङीप् । 'हलस्तद्धितस्य' इति ईति परतस्तद्धितयकारस्य लोपः । मानुष्यकम्, 'गोत्रोक्षे' त्यादिना समूहे वुञ् । अपत्ये त्वणि मानवा इति । मनुष्या अप्यपत्यत्वारोपेण मानवा इत्युच्यन्ते । यदा मानवस्य कुत्सादि विवक्ष्यते तदा ॥

अपत्ये कुत्सिते मूढे मनोरौत्सर्गिकः स्मृतः ।
नकारस्य च मूर्धन्यस्तेन सिद्ध्यति माणवः ॥

इति नकारस्य णत्वम् । अणं तु सामान्येनैव सिद्धः । माणव एव माणवकः, संज्ञायां कन् । माणव्यम् 'ब्राह्मणमाणवे' ति समूहे यत् । माणवीनम्, 'माणवचरके' ति हितार्थे खञ् । माणव्यम् ब्राह्मणादित्वात् ष्यञ् । मुनिः, 'मनेरुच्चोपधायाः' इतीन्प्रत्ययः, उपधायाश्चोकारः । मौनम्, 'इगन्ताच्च' इति भावेऽण् । मनु अवबोधन इति तनादौ ॥ ६८ ॥

युज समाधौ ॥ समाधिश्चित्तनिरोधः, तेनायमकर्मकः । युज्यत-स्नत् इति प्रयोगस्तु युजेः कर्मणि यकि तङि । युज्यते ब्रह्मचारी योगमित्येतदपि 'सृजियुज्योः श्यंस्तु' इति सकर्मकस्य कर्तुः कर्मवद्भाव-श्यनोर्विधानाद्युज्यते। युज्यतिसृज्यत्योरकर्मकत्वमेव वार्त्तिकं चोपपद्यते। युज्यत इत्यादि पूर्ववत् । प्रयुक्, 'सत्सूद्विषे'त्यादिना सोपपदात्क्विप्। युजमापन्ना महर्षय इत्यत्र निरुपपदत्वेऽपि सम्पदादित्वाद्भावे क्विप् । 'युजेरसमासे' इति सर्वनामस्थाने नुमस्य न भवति, इकारवतो रौधा-धिकस्यैव तत्र निर्देशात् । योगी, सम्पृचादिना घिनुण् । 'युग्यं च पत्रे' इति निपातनं नास्य, अर्थस्वभावात् । 'दाम्नीशसयुजे'ति ष्ट्रन्विधावपि नास्य ग्रहः, अनभिधानात् ॥ ६९ ॥

सृज विसर्गे ॥ अयमकर्मकः । प्रयुज्यते च 'वृन्तश्लथं हरति पुष्पम-नोकहानां, संसृज्यते सरसिजैररुणांशुभिन्नैः'। इति। कर्मणि प्रयोगे तु प्रक्रमभङ्गः स्यात्। 'स्वाभाविकं परगुणेन विभातवायुस्सौरभ्यमीप्सुरिव ते मुख-मारुतस्य'। इति च न सङ्गच्छते। पाणिभ्यां सृज्यते पाणिरर्येत्यादयस्तु सृजतेः कर्मणि । सृज्यते मालामिति कर्तरि । सृज्यते। ससृजे, ससृजिसे, क्रादिनियमान्नित्यमिट् । 'विभाषा सृजिदृशो'रिति विकल्पोऽस्य न भवति, थलोऽभावात् । स्रष्टा। स्रक्ष्यते । सृज्यताम् । असृज्यत । सृज्येत, सृक्षीष्ट, लिङौ । असृष्ट, असृक्षाताम् । सिसृक्षते, झलादौ व्रश्चादिना षत्वे 'षढोः कः सि' इति कत्वम् । अकिति झलादौ 'सृजिदृशो'-रित्यादिना अमागमः । 'हलन्ताच्च' इति 'लिङ्सिचावात्मनेपदेषु' इति सनो लिङ्सिचोश्च कित्त्वात् नानागमो नापि गुणः । सरीसृज्यते । सरीसर्ष्टि । सर्जयति । असीसृजत् । अससर्जत्, उर्ऋत् ॥ ७० ॥

लिश अल्पीभावे ॥ लिश्यते । लिलिशे । लेष्टा । लेक्ष्यते । व्रश्चा-दिना षत्वे कत्वम् । लिश्यताम् । अलिश्यत । लिश्येत, लिक्षीष्ट । अलिक्षत, अलिक्षाताम् ।'शल इगुपधात्' इति क्सः। अजादौ 'क्सस्याचि' इत्यकारलोप । लिलिक्षते । लेलिश्यते । लेलेष्टि । लेशयति । अलीलि-

सारणम् । अव्यात्सीत्, अव्याद्धाम् । विव्यत्सति, हलादिशेषे इत्वम् । वेविध्यते । वाव्यद्धि । व्याधयति । अविव्यधत् । व्याधः, 'श्याद्व्यधेति' णः । व्यधः, 'व्यधजपो' रित्यप् । मृगावित्, 'क्विप् च' इति क्विप्, 'नहिवृती' त्यादिना पूर्वपदस्य दीर्घः । विधुः, 'पृभिदिव्यधी' ति कुप्रत्ययः ॥ ७३ ॥

पुष पुष्टौ ॥ पुष्यति । पुपोष, पुपोषिथ, क्रादिनियमान्नित्यमिट् । भारद्वाजनियमस्तु उपदेशेऽजन्तानामत्वता चेतीह न भवति । पोष्टा । पोक्ष्यति । पुष्यतु । अपुष्यत् । पुष्येत्, पुष्यात्, लिङौ । अपुषत् 'पुषादी' त्यादिनाङ्परस्मैपदे । तङि तु व्यत्यपुक्षतेति क्सो भवति । कर्मणि तु अपोषि, अपुक्षाताम्, अपुक्षत इति चिण्क्सौ भवतः । पुपुक्षति । पोपुष्यते । पोपोष्टि । पोषयति, अपूपुषत् । पुष्यन्त्यस्मिन्नारब्धानि कार्याणीति पुष्यः, 'पुष्यसिद्ध्यौ नक्षत्रे' इति क्यप् निपात्यते । पुष्येण युक्तः पौषः, 'नक्षत्रेण युक्तः कालः' इत्यण् । पौषमहः, 'तिष्यपुष्ययोर्नक्षत्राणि' इति यलोपः । स्वपोषं पुष्यतीत्यादि पोषतिवज्ञेयम् । 'स्वे पुषः' इति णमुल् । पुंषति, पोषति, इति द्वयं शपि । पुष्णातीति श्नादौ । पोषयतीति चुरादौ ॥ ७४ ॥

शुष शोषणे ॥ शुष्यतीत्यादि पुषिवत् । शुष्कः, शुष्कवान्, 'शुषः कः' इति निष्ठातस्य ककारः । शुष्केव शुष्किका, शुष्का जङ्घा ऽस्याः शुष्कजङ्घा । कत्वस्य पूर्वत्रासिद्धत्वाद् 'उदीचामातस्स्थाने' इति ककारपूर्वत्वेन वैकल्पिक इत्वनिषेधो 'न कोपधायाः' इति पुंवद्भावनिषेधश्च न भवति । आतपशुष्कः, 'सिद्धशुष्कपक्वबन्धैश्च' इति सप्तमीसमासः । ऊर्ध्वशोषं शुष्यति, 'ऊर्ध्वे शुषिपूरो' रित्यूर्ध्वे कर्तरि णमुल् । कषादित्वाद्यथाविध्यनुप्रयोगः ॥ ७५ ॥

तुष प्रीतौ ॥ प्रीतिस्तृप्तिः । तुष्यतीत्यादि ॥ ७६ ॥

दुष वैकृत्ये ॥ वैकृत्यं विकृतिः । दुष्यतीत्यादि । दोषणं दूषणमिति णौ 'दोषो णौ' इत्यूत्वमुपधायाः । दूषयति चित्तं दोषयति वा,

'वा चित्तविरागे' इत्यूकारविकल्प उपधायाः, विरागश्चित्तस्याप्रीतिता। दोषी, सम्पूर्वादिना घिनुण्। दूषीका, 'कॄपदूषिभ्यामीकन्' इतीकन् ॥ ८७॥

श्लिष आलिङ्गने ॥ श्लिष्यति । शिश्लेष । श्लेष्टा । श्लेक्ष्यति । श्लिष्यतु । अश्लिष्यत् । श्लिष्येत्, श्लिष्यात्, लिङौ । अश्लिक्षत् कन्यां देवदत्तः, 'श्लिष आलिङ्गने' इति अङपवादः क्सः । आलिङ्गनं परिष्वङ्गः । अन्यत्र पुषादित्वादङ्, समश्लिषज्जतु काष्ठम्[1] इति । अथात्मनेपदेषु कथं भवितव्यम्, समाश्लेषि कन्या देवदत्तेन समाश्लिक्षातां समाश्लिक्षन्त इति । 'शल इगुपधात्' इति क्सो भविष्यति । एकवचने तु परत्वाच्चिण् । यद्येवमनालिङ्गनेऽपि क्सः प्राप्नोति, इष्यते च सिच समश्लिक्षन्त जतूनि काष्ठैरिति । एवं तर्हि 'श्लिषः क्स' इति योगविभागः । अयं च पुरस्तादपवादन्यायेन अङं बाधते, न चिणम् । तत 'आलिङ्गने' इति द्वितीयः । नियमार्थमिदं वचनम् । अनेन च योगविभागसामर्थ्यात् 'श्लिषः' इति वा 'शल इगुपधात्' इति वा क्सस्य या प्राप्तिः सा सर्वा नियम्यते आलिङ्गन एवेति । तेन आलिङ्गने परस्मैपदात्मनेपदयोः यथायोगमङ्सिचावेव भवतः । श्लेष्मा, मनिन् । श्लेषयतीति, शपि ॥ ८८ ॥

शक विभाषितो मर्षणे ॥ अयं मर्षणे दिवादिः । विभाषित इत्युभयपदी तन्त्रान्तरप्रसिद्ध्योच्यते । क्षीरस्वामी तु महतेयं शकिधातुर्विभाषितः, विकल्पितः, पक्षे दिवादिः पक्षे स्वादिरित्यर्थः । शक्यते, शक्नोतीति । शाकटायनस्त्वमुमेव विभाषितार्थमङ्गीकृत्य अस्य चोभयत्र पाठमात्रादेव सिद्धत्वाद्वैयर्थ्यमेव नूनं मत्वा, 'शक मर्षणे' इत्येव पपाठ । अतस्तस्याप्युक्तमनेनैव प्रत्युक्तम् । शाकटायनोक्तमपि विभाषितपदस्य मैत्रेयादिभिस्तन्त्रान्तरप्रसिद्धार्थस्याभिधानात् सार्थकत्वादयुक्तिकं त्विति । तथा स्वामिशाकटायनपक्षावुक्त्वोक्तं च पुरुषकारे, 'तदेतदुभयमपि बहु सम्मते यथोक्तार्थं सम्भवत्ययुक्तमेव' इति । शक्यति । शशाक, शेकतुः, शशक्थ, शेकिथ । भारद्वाजनियमादिड्विकल्पः । शक्ता । शक्ष्यति । शक्यतु,

१ वैयाधिक ३ । ४ । पु ।

अशक्यत् । शक्येत्, शक्यात् लिङौ । अशकत् । शक्यते । शेके । इत्यादि ह्युदाहार्यम् । शिशक्षति । शिशक्षते । 'सनिमीमे'त्यादिना ऽच इस्, अभ्यासलोपः । 'स्को'रिति सलोपः । शाशक्यते । शाशक्ति । शाकयति । अशीशकत् । शक्त्वा, शक्तः । शक्तो घटः कर्तुं, शङ्कितो घटः कर्तुं, 'सोऽनागाः कर्मणि निष्ठायां शकेरिटमिच्छन्ति विकल्पेन' इति वृत्तिः ॥ ७९ ॥

ञिष्विदा गात्रप्रक्षरणे ॥ गात्रप्रक्षरणं धर्मच्युतिः । ञिष्विदेति मैत्रेयादयः । तथा 'निष्ठाशीङ्' इत्यत्र न्यासेऽप्ययं ञिद्वेवोक्तः । अस्य ञित्त्वं हरदत्तस्यानभिमतम्, यदाह । 'निष्ठा शीङ्' इत्यत्र "ञिष्विदा स्नेहनमोचनयो' रिति ञितो ग्रहणं न तु ष्विदा गात्रप्रक्षरणइति दैवादिकस्य, ञिद्भिस्साहचर्यात्, अस्य चाञित्वात्" इति । इदमेवानुसृत्य 'ञित्त्वं तस्यापपाठ' इति पुरुषकारेऽप्युक्तम् । तथा च अनिष्टकारिकावृत्तौ 'स्विद्यतीति श्यना निर्देशो ञिष्विदेत्यस्य निवृत्त्यर्थ' इति । यद्ययमपि ञित्स्यात्, अनेन किं व्यावर्तितं स्यात् । यद्येव 'निष्ठा शीङ्' इत्यत्र 'ञितां ग्रह' इति हरदत्तोक्तिरस्यानिट्त्वादेवाग्रहणसिद्धेरयुक्तेति चेन्न, भावादिकर्मणोः प्रस्वेदितमित्यादौ सेट्त्वसम्भवात् । स्विद्यति । सिष्वेद, सिष्वेदिथ, सिष्विदिव, क्रादिनियमादिट् । स्वेत्ता । स्वेत्स्यति । स्विद्यतु, अस्विद्यत् । स्विद्येत्, स्विद्यात्, लिङौ । अस्विदत् । सिष्वित्सति । सेष्विद्यते । सेष्वेत्ति । स्वेदयति । असिष्विदत् । सिस्वेदयिषति । 'सस्विदी'त्यादिना ऽभ्यासेणः परस्य सकारस्य 'स्तौतिण्योरेव' इति नियमापवादस्सकारः । स्विन्नः । 'ञिष्विदा स्नेहनमोचनयो' रिति द्युतादिकाद् 'द्युद्भ्यो लुङि' इति परस्मैपदे अस्विदद् इति सिद्धावपि पुषादावस्य पाठोऽभेदात् ॥ ८० ॥

क्रुध कोपे ॥ देवदत्ताय क्रुध्यति, 'क्रुधद्रुहे'ति कोपविषये सम्प्रदानत्वम् । तस्यैव 'क्रुधद्रुहोरुपसृष्टयोः कर्म' इति कर्मत्वे, देवदत्तमभिक्रुध्यतीति । चुक्रोध, चुक्रोधिथ, चुक्रुधिव । क्रोद्धेत्यादि । क्रोधनः, 'क्रुधमण्डार्थेभ्यश्च' इति युच् ॥ ८१ ॥

इति क्त्वात्पूर्वं परत्वादिट्, तत्रापि क्त्वाचित्यत्वान्नुमि सतीदानीं सयोगान्तत्वेन वस्नसोः कित्त्वाभावात् 'अनिदिताम्' इति नलोपाभावः। हरदत्तस्तु इटः परत्वमाश्रित्य 'नेट्यलिटि' इत्यत्राह। इटि सत्यजादित्वाद् नुमा भवितव्यम्, प्रागेव कित्त्व प्राप्नोति । न चालिटीत्यस्य वैयर्थ्यं, थल्यर्थवत्त्वात् । एव तर्हि धातोरित्यनुवृत्तेरुपदेश एव नुम्भवति, अचीत्येषा विषयसप्तमीत्याह । रधिता रद्धा, अनिट्पक्षे थलीव धत्वजश्त्वे 'नेट्यलिटि रधे' रिति लिड्वर्जितेडादौ नुमो निषेधः । रधिष्यति, रत्स्यति । रध्यतु । अर[illegible]त् । रध्येत् रध्यात् लिङौ। अरधत् अङि 'रधिजभो'रिति नुमि 'अनि[illegible]त' मिति नलोपः । रिरधिषति । रिरत्सति । रारध्यते। रारन्धीति, रारद्धि । धयति, नित्यत्वात्पूर्वन्नुमि सति अनुपधात्वान्न वृद्धिः । अररन्धत्, 'अनिदिता' मिति नलोपो णिलोपस्य स्थानिवत्त्वात् चङो व्यवधानान्न भवति । रन्धन, रन्धकः। 'रधिजभोरचि' इति नुम् । क्वसौ तु द्विर्वचनैत्वाभ्यासलोपेषु 'वस्वेकाचात्' इतीटि नुमि, तस्य सयोगान्तत्वेन 'असयोगाल्लिट्कित्' इत्यातिदेशिककित्त्वाभावेप्यौपदेशिककित्त्वाश्रयणे नलोपे रेधिवानिति ॥ ८५ ॥

णश अदर्शने ॥ नश्यति । ननाश, नेशतु', नेशिथ, ननष्ठ, नेशतुः नेशिव, नेश्व, नेशिम, नेश्म । एत्वाभ्यासलोपौ, पूर्ववदिड्विकल्पः । अनिट्पक्षे 'मस्जिनशोर्झलि' इति थलि नुमि । एवमन्यस्मिन्नपि झलादौ । नशिता, नष्टा। नश्यति नङ्क्ष्यति। नश्यतु । अनश्यत् । नश्येत्, नश्यात्, लिङौ । अनशत्, अनशः, अनशम् । 'अत एकहल्' इत्यत्र भाष्यम् ॥

नशिमन्योरलिट्येत्व छन्दस्यमिपचोरपि ।
अनेश मेनकेत्येतद् व्येमानं लिङि पेचिरन् ॥

इति । अत्र कैयटः । "अनेशमिति मिपोम्भाव । पुषादित्वादङादेशः । 'छन्दसि' इति पूर्वेणापि सम्बन्धाद् भाषायामेत्वाभावः । एवं तु मेनकेत्यपि भाषायां न प्राप्नोति । यदि त्विष्यते पृषोदरादित्वा द्भविष्यति" इति। हरदत्तोपि। "'अलिटि' इति पादपूरणार्थोनुवाद । अनेशन्निति झेरन्तादेशः । 'अनेशन्नस्यैव' । अनेशमिति तु प्रायेण

पाठः तत्र सिपोऽभावः। 'छन्दसि' इति वचनाद् मेनकेति च भाषायां न प्राप्नोति। यदीष्यते पृषोदरादिषु द्रष्टव्यम्'' इति। वृत्तौ तु ''नशिमन्योरलिट्येत्वं वक्तव्यम्। अनेशद् मेनकाम्। अनेशत् इति नशेर्लुङि पुषादित्वादङ्। मेनकेति 'मनेरागिषि च' इति वुन्। क्षिपकादिषु प्रक्षेपाद् इत्त्वं न क्रियते। 'छन्दस्यमिपचोरलिट्येत्वं वक्तव्यम्'' इति वाक्यभेदेन छन्दोग्रहणममि पचिशेषतया व्याख्यातम्। दुर्गोऽपि सामान्येन 'नश एत्' इत्यङि परत एत्वमाह। प्रणश्यति। 'उपसर्गादसमासेऽपि' इति णत्वम्। प्रनष्टेत्यादौ 'नशेः षान्तस्य' इति णत्वनिषेधः। अत्रान्तग्रहणस्य [illegible] षान्तत्वाश्रयणार्थत्वात् प्रनङ्क्ष्यतीत्यादावपि न णत्वम्। निर्नाशयति, निनङ्क्षति। नानश्यते। नानष्टि। नाशयति, अनीनशत्। 'बुधयुधनशे'ति नित्यं परस्मैपदम्। नश्वरः, नश्वरी। 'इणनशजी'ति क्वरप्। स्त्रियाम् 'टिड्ढाणञ्' इत्यादिना ङीप्। प्रणश्यतीति प्रनट् प्रनक्, 'नशेर्वा' इति पदान्तस्य वा कुत्वम्। 'नशेः षान्तस्य' इति णत्वनिषेधः। भूतपूर्वगत्या षान्तत्वम्। सर्वान्तग्रहणात् तत्राश्रिता। नष्टः। 'यस्य विभाषा' इत्यनिट्त्वे 'मस्जिनशो'रिति नुम्। 'अनिदिताम्' इति नलोपः। दुःखेन नाशयितव्यो दूणाशः, 'ईषद्' इत्यादिना खल्। 'दुरो दाशनाशदभध्येषु' इति पृषोदरादिपाठाद् दुर उत्वम्, उत्तरपदादेष्टुत्वं च। नशुकः। रोगश्चन्द्रमाश्च, 'पचिनशोर्नुक्न्कनुमौ च' इति नुक्न्कन्प्रत्ययो नुमागमश्च ॥ ८६ ॥

तृप प्रीणने ॥ इह प्रीणनं तृप्तिस्तर्पणं च। दृश्यते चोभयथा। 'तृप्यन्तु भवन्तः' 'नाग्निस्तृप्यति काष्ठानाम्'। 'पितॄनतार्प्सीत्समदन्त बन्धून्' इति। तृप्यति। ततर्प, ततृपतुः, ततर्पिथ, ततर्प्थ, तत्रप्थ, ततृपथुः, ततृप, ततर्प, ततृपिव, 'अनुदात्तस्य चर्दुपधस्य' इति यस्य निट्पक्षे ऽमागमविकल्पः। कृते च तस्मिन् यणादेशः। तर्पिता, तर्प्ता, त्रप्ता। तर्पिष्यति, तर्प्स्यति, त्रप्स्यति। तृप्यतु, अतृप्यत्। तृप्येत्, तृप्यात्, लिङौ। अतृपत्, अतृपताम्, पुषादित्वादङ्। 'स्पृशमृशकृषतृपदृपां सिज्वा वक्तव्यः' इति सिच्पक्षे अतर्प्सीत् अतर्प्सिष्टामिति। 'नेटि' इति

वृद्धिनिषेधः । अनिट्पक्षे त्वमागमे अत्राप्सीत् । अथवा अतार्प्सीत् । उभयत्र 'वदव्रजे'ति वृद्धिः । तितर्पिषति, तितृप्सति, 'हलन्ताच्च' इति सनः कित्त्वात् नामागमो नापि गुणः । तरीतृप्यते । तरीतृपीति, तरीतर्प्तीत्यादि ङ्यन्तेऽपि नेयम् । तर्पयति । अततर्पत् । अतीतृपत् इत्युक्ता । तर्पित्वा, तृप्त्वा । फलानां तृप्तः । 'पूरणगुणसुहितार्थ'ति षष्ठीसमासनिषेधः । सुहितार्थास्तृप्त्यर्थाः । तृप्रः पुरोडाशः । 'स्फायितञ्ची'-त्यादिना रक् । त्रपिष्ठः, त्रपीयान् । तृप्तमाचष्टे त्रापयति । 'प्रियस्थिरे'-त्यादिना 'णाविष्ठवत्' इति च त्रपादेशः । पृथ्वादिष्वपाठाद् इम-निजस्य नास्तीति वृत्तावुक्तम् । तृपला लता । 'कल तृपश्च' इति कल-प्रत्ययः । अयं स्वादावपि मैत्रेयात्रेयादयः पठन्ति । तद्वृत्तिन्यासपदम-ञ्जर्यादिकृतामनभिमतम् । नान्वैयेयपपादविपश्ने । अथ युजादौ तुदादौ च । तत्र तुदादौ द्वितीयान्त इत्येके ॥ ८७ ॥

दृप हर्षमोहनयोः ॥ मोहनं गर्व इति स्वामी । हर्षविमोचन-योरित्येके । दृप्यतीत्यादि पूर्ववत् । दर्पणः । नन्द्यादिः । अयमुक्तो शे तुदादिः । तृपिदृप्योरनुदात्तेत्वमनर्थम् । इट् तु रधादित्वाद्विकल्पित इति न तन्निवृत्त्यर्थम् ॥ ८८ ॥

द्रुह जिघांसायाम् ॥ देवदत्ताय द्रुह्यति । 'क्रुधद्रुहे'ति कोप-विषयस्सम्प्रदानम् । देवदत्तमभिद्रुह्यति । 'क्रुधद्रुहोरुपसृष्टयोः कर्म' इत्युपसृष्टत्वे कर्मत्वम् । दुद्रोह, दुद्रुहतुः, दुद्रोहिथ, अनिट्पक्षे 'वा द्रुहमुहष्णुहष्णिहाम्' इति झलि पदान्ते च हकारस्य वा घत्वे 'झष-स्तथो'रिति थकारस्य धत्वे 'झलां जश् झशि' इति घकारस्य गत्वे, दुद्रोग्ध । घत्वाभावे 'हो ढः' इति ढत्वे धकारस्य धत्वष्टुत्वयोः ढो ढे लोपे, ढ्रलोपदीर्घत्वस्याऽसिद्धत्वाद्गुणे, दुद्रोढ, दुद्रुहथुः, दुद्रुहिव, दुद्रुह्व । द्रोहिता, द्रोग्धा, घत्वादि पूर्ववत् । द्रोढा ढत्वादि । द्रोहिष्यति ध्रोक्ष्यति कृते घत्वे सकारपरत्वेन 'एकाच' इति भष्भावे 'खरि च' इति चर्त्वे ककारः । ढत्वपक्षेऽपि कृते ढत्वे भष्भावे च 'षढोः कः सि' इति कत्वम्; इदमेव रूपम् । द्रुह्यतु । अद्रुह्यत् । द्रुह्येत्, द्रुह्यात् । अद्रुहत् ।

सिस्नेहिषति, सिस्निक्षति । सेष्णिह्यते । सेष्णेढि, सेस्नेढि । स्नेहयति । असिष्णिहत् । स्निहित्वा, स्नेहित्वा, स्निग्ध्वा, स्नीढ्वा । स्निग्धः, स्नीढः, उष्णिक् । 'ऋत्विक्' इत्यादिना उत्पूर्वात्स्निह्यतेः क्विन् । उदोऽन्त्यलोपः सस्य च षत्वं निपात्यते । 'क्विन्प्रत्ययस्य' इति हकारस्य घत्वे जश्त्वे चर्त्वम् । उष्णिहा । अजादिपाठात् टाप् ॥ ९२ ॥

वृत् ॥ विभाषेट[1]: परस्मैपदिनो रधादयो वृत्ता इत्यर्थः । अत्र वृत्करणं रधादिपरिसमाप्त्यर्थम्, पुषादयस्त्वा गणान्तात् । यदुक्तं तरङ्गिण्यां, रधादीन् परिसमाप्य 'एतदन्तः पुषादिरित्येके । अतोऽये शमादी'ति, तद्भाष्यवार्तिकविरोधादुपेक्ष्यम् । तथाहि । 'अस्यतिवक्तिख्यातिभ्योऽङ्' इत्यत्र 'अस्यतिग्रहणमात्मनेपदार्थं द्रष्टव्यम् । किमुच्यते आत्मनेपदार्थमिति न पुनः परस्मैपदार्थमपि स्यात्, पुषादित्वात्, पुषादिपाठात्परस्मैपदेषु अङ् भविष्यती'ति । अत्र कैयटः । 'पुषादय आ गणान्तात्, अन्तरा तु वृत्करणं रधादिपरिसमाप्त्यर्थम्, न तु पुषादिपरिसमाप्त्यर्थमिति प्रतिपादनाय सुहृद्भूत आचार्य आह, अस्यतिग्रहणमिति' । पुषादिसूत्रे न्यासपदमञ्जर्योरप्येवमुक्तम् । अत्र 'वा द्रुहादीनाम्' इति लाघवेन घत्वे विधातव्ये प्रतिपदपाठो यङ्लुगर्थः । गणनिर्देशे हि 'निर्दिष्ट यद्गणेन च' इति वचनाद्घत्वं न स्यात् ॥

अथ पुषादीनेव नित्येटः परस्मैपदिन आह ॥

शमु उपशमने ॥ शाम्यति । शशाम, शेमतुः, शेमिथ, शेमिव । शमिता । शमिष्यति । शाम्यतु । अशाम्यत्, शाम्येत् । आशिषि, शम्यात् । अशमत् । 'शमामष्टानां दीर्घश्श्यनि' इति दीर्घः । शिशमिषति । शंशम्यते । शंशमीति, शंशन्ति, शंशान्तः । निशमयति वचः, अमन्तत्वान्मित्त्वम् । अशामि, अशमि । 'चिण्णमुलोर्दीर्घोऽन्यतरस्याम्' इति णौ चिण्णि पक्षे दीर्घः । निशामयति रूपम्, 'शमोऽदर्शने' इति दर्शने मित्त्वनिषेधः । शमी । 'शमित्यष्टाभ्यो घिनुण्' इति घिनुण् । 'नोदात्तोपदेशस्य मान्तस्य' इति वृद्धिनिषेधः । शमयतीति शमनः । बाहुलकात्कर्तरि

[1] षितेटइति ३ पु॰ पा॰ ।

ल्युः । शमित्वा, शान्त्वा । 'उदितो वा' इतीड्विकल्पः । शान्तः । 'यस्य विभाषा' इतीण्निषेधः । प्रशाम्यतीति प्रशान् । 'अनुनासिकस्य क्विझलोः क्ङिति' इति क्विपि दीर्घः । 'मो नो धातो'रिति नकारः पदान्ते । स्वरादिष्वपाठादव्ययत्वम् । शान्तिः । 'तितुत्रे'तीण्निषेधः । शान्तः । ण्यन्तात् 'वा दान्तशान्ते'ति णिलुगनिट्त्वं च पक्षे निपात्यते । अन्यदा शमितः । 'निष्ठायां सेटि' इति णिलोपः । शमलम् । 'शकिशम्योर्नित्' इति कलप्रत्ययः । शम्बः । 'शमेर्बन्' इति बन्प्रत्ययः । शम्बाकरोति । 'कृञो द्वितीयतृतीयशम्बे'ति डाच् । अनुलोमकृष्टं प्रतिलोमं कृषतीत्यर्थः । शम्बशब्दस्यात्र प्रातिलोम्ये वृत्तिः । 'कृञश्च करणे' इति हरदत्तः । शम्बुः । 'शमेर्बुन्' इति बुन् प्रत्ययः । शाम्बव्यम् । गर्गादित्वाद्यञ् । शमी । शमशब्दाद्गौरा-दित्वान्ङीष् । शम्या विकारोऽवयवो वा शामीलम् 'शम्याष्ट्लञ्' टित्त्वात् स्त्रियां शामीली ॥ ९३ ॥

तमु काङ्क्षायाम् ॥ ताम्यतीत्यादि शमिवत् । ताम्बूलम्, ताम्बूरम् । 'तमेर्वुक् च' इत्यूरचूलचौ प्रत्ययौ । णिद्वद्भावाद्वृद्धिः, वुगागमश्च । ताम्रम् । 'अमितम्योर्दीर्घश्च' इति रकि दीर्घः । तमसा नदी । 'अत्यविचमितमी'त्यसच् । तनः, अमुत् । अवतमसम्, सन्तमसम्, अन्धतमसम् । 'अवसमन्धेभ्यस्तमसः' इत्यच् समासान्तः । तमिस्रा । 'ज्योत्स्नातमिस्रे'ति संज्ञायां मत्वर्थीयो रः, उपधायाश्चेकारः । स्त्रीत्वमतन्त्रम् अन्यत्रापि दृश्यते तमिस्रं नभ इति वृत्तौ । तमसाकृतम् । 'ओजःसहोऽम्भस्तमसस्तृतीयायाः' इत्यलुक् । तमी । इन्नन्तात् ङीप् ॥ ९४ ॥

दमु उपशमने ॥ दाम्यतीत्यादि । दमयतीति दमनः । नन्द्यादिः । अरिन्दमः । 'संज्ञायां भृतॄवृजी'त्यादिना खच् । दमयति, दमयते । 'अणावकर्मकात्' इति परस्मैपदस्य 'न पादमि'ति निषेधः । दान्तः,

१ कप इति ४ पु· घ· । २ इन्प्रत्ययान्तत्वात्कृदिकारादिति ङीषिति भावः ।

दमितः, 'वा दान्ते'ति ण्यन्तान्निष्ठायामनिट्त्वम्, णिलुक्च पक्षे । दमुनाः । 'दमेरुनसिः' । दण्डः । 'जमन्ताड्डः' । द्विदण्डि प्रहरति । द्विदण्ड्यादिभ्यश्च' इति बहुव्रीहाविच्प्रत्ययान्तो निपात्यते । द्वौ दण्डावस्मिन्प्रहरणइति विग्रहः । समुदायनिपातनस्य रूढ्यर्थत्वाद् द्विदण्डा शालेत्यत्र न भवति । तिष्ठद्गुप्रभृतिषु इच् इति पाठाद् इजन्तस्याव्ययीभावाद् अव्ययत्वम् । दण्डिनोपत्य दण्डिनायनः । इन्न न्तात् 'नडादिभ्यः फक्' इति फक्रि 'दाण्डिनायने'ति निपातना-ट्टिलोपाभाव । शमिना सहास्यापाठः सकर्मकत्वात् । उपशमन इति ण्यन्ते द्रष्टव्यः ॥ ९५ ॥

श्रमु तपसि खेदे च ॥ श्राम्यतीत्यादि । अत्र वर्धमानो 'नोदा-त्तोपदेशे'ति वृद्धिनिषेधे प्राप्ते प्रयोगदर्शनाद् वा श्रमेर्वृद्धिमाह । तत् 'आचमिकमिवमीनामिति वक्तव्यम्' इति चम्यादीनामेव भाष्यवार्तिकयोः वृद्ध्यङ्गीकारात्, "कथ 'सूर्यविश्रामभू' रिति, एवमादिकं प्रयोगं अन्यायमेव मन्यन्ते" इति वृत्तावुक्तत्वाच्चायुक्तम्, कुमारी चासौ श्रमणा च कुमारश्रमणा, 'कुमारः श्रमणादिभि'रिति कर्मधारयः । श्रमणाशब्देन कुमारशब्दस्य सामानाधिकरण्याभावत् लिङ्गविशिष्ट-परिभाषया कुमारीशब्दस्य समासे 'पुंवत्कर्मधारये'ति पूंवद्भावः, अत एव निर्देशाल्ल्युः, युज्वा ॥ ९६ ॥

भ्रमु अनवस्थाने ॥ भ्राम्यतीत्यादि । 'वा भ्राशे'ति श्यनो विक-ल्पनाद् यदा शप् तदा भ्रमतीत्यादि । शेष भैावादिकवत् । 'शमाम-ष्टानाम्' इति श्यनि दीर्घः, ल्युङ्ङ् च विशेषः । भ्रमी । शमादित्वा-द्विनुण् । अत्रात्रेयः । अभिधानवशाद् अकर्मकादेव अयमिष्यते । तेन भ्रमिता वनमिति तृत्रेवेति । एव चाय सकर्मकोकर्मकश्चेत्यनेना-सूचि ॥ ९७ ॥

क्षमू सहने ॥ क्षाम्यति । चक्षाम, चक्षमतुः, चक्षमिथ, चक्षन्थ, चक्ष-मिव, चक्षण्व,'म्वोश्च' इति नत्वे णत्वम् । क्षमिता, क्षन्ता । क्षमिष्यति क्षंस्यति । क्षाम्यतु । अक्षाम्यत् । क्षाम्येत्, क्षम्यात् । अक्षमत् । चिक्षमि-

यति, चिक्षमिषति । चङ्क्षम्यते । चङ्क्षन्ति । क्षमयति । अचिक्षमत् । क्षमी । क्षान्त्वा, क्षमित्वा, ऊदित्त्वादिड्विकल्पो वलादौ । क्षान्तः, क्षान्तिः, 'यस्य विभाषा' 'तितुत्रे'ति वेण्निषेधः । क्षमेति मितो भौवादिकस्य । अमुमपि केचित् मितं पठन्ति, तदसत् । तथा च स्वामी । 'केचिदत्रापि क्षमूषिति मितं पठन्ति, तदसत् । क्षमू सहनइति सभ्या' इति । दर्शनेऽपि । क्षमेर्दैवादिकस्याननुबन्धस्य क्षान्तिस्यादेव' इति । 'अपिनः क्षाम्यतेः क्षान्तिः, क्षमूषः क्षमते, क्षमा' । इति देवपुरुषकारयोरपि ॥ ९८ ॥

क्लमु ग्लानौ ॥ क्लाम्यति, क्लामति । चक्लाम । क्लमिता, इत्यादि । 'वा भ्राशे'त्यादिना श्यन्विकल्पः । शपि 'ष्ठिवुक्लमु'–इत्येव श्यन्यपि दीर्घे सिद्धे शमादिपाठो घिनुणर्थः[1] ॥ ९९ ॥

मदी हर्षे ॥ माद्यतीत्यादि । धर्मात्प्रमाद्यति । 'जुगुप्साविरामप्रमादार्थानामुपसङ्ख्यानम्' इति धर्मापादानम् । मदयति 'मदी हर्षग्लेपनयो'रिति घटादिपाठान्मित्त्वम् । अन्यत्र मादयति । माद्यत्यनेन मत इति मद्यम् । 'गदमदे'त्यनुपसर्गे यत् । 'कृत्यल्युटो बहुलम्' इति करणेऽपि भवति । मदयतीति मदनः । नन्द्यादित्वाण्ण्यन्ताल्ल्युस्संज्ञायाम् । इरा जलम्, तेन माद्यतीति इरम्मदः । 'उग्रम्पश्येरम्मदे'ति खशि श्यनभावो निपात्यते । उन्मदिष्णुः । 'अलङ्कृञ्' इत्यादिना इष्णुच् । उन्मादी । शमादित्वाद्घिनुण् । मदः । 'मदोऽनुपसर्गे' इत्यप् । 'व्यधजपोरनुपसर्गे' इत्यत्रैव मदिग्रहणेऽपि कर्तव्ये पृथक्सूत्रारम्भात् उन्माद इति घञपीति न्यासः । प्रमदः, सम्मदः 'प्रमदसम्मदौ हर्षे' इत्यप्निपात्यते । मदित्वा, मत्तः, मत्तवान् ईदित्त्वादनिट्त्वम् । 'न ध्याख्ये'त्यादिना नत्वनिषेधः । मदिरा । 'इषिमदी'त्यादिना किरच् । शमादयोऽष्टौ वृत्ताः ॥ मन्दते मदति इति म्नुत्यादौ शपि । मद तृप्तियोगइति चुरादावाधृषीयः ॥ १०० ॥

१ घिनुणर्थं इति ४ । पु पा ।

असु क्षेपणे ॥ अस्यति । आस आसिथ । असिता । असिष्यति । अस्यतु । आस्यत् । अस्येत् अस्यात् । आस्थत्, आस्थताम् 'अस्यतिवक्तिख्यातिभ्य' इति कर्तरि लुङ्यङि 'अस्यतेस्थुक्' इति थुगागमः । पुषादित्वादङि सिद्धे ऽस्यतिग्रहणमात्मनेपदार्थम् । तच्च कर्मकर्तरि 'उपसर्गादस्यत्यूह्योर्वा वचनम्' इति शुद्धेऽपि कर्तरि सोपसर्गत्वे पक्षे तङो विधानादस्ति । निरस्यते । निरासे । निरासिषे । निरसिता, निरसिष्यते । निरस्यताम् । निरास्यत । निरस्येत । निरसिषीष्ट । निरास्थत । निरास्थेताम् । 'अस्यती' त्यङ् । इदमेव कर्मकर्तर्यपि रूपम् । कर्मणि चिण्सिचावेव, निरासि, निरासिषाताम् । असिसिषति । निरसिसिषते निरसिसिषति । 'पूर्ववत्सन' इति वा तङ् । आसयति । आसिसत् । समस्यम्, सन्यस्यम्[1] । समस्या । 'ऋहलोर्ण्यत्,' 'संज्ञापूर्वको विधिरनित्य' इति वृद्ध्यभाव इत्यात्रेयः । प्रास्यन्त्येतमिति प्रासः । 'अकर्तरि च कारके' इति घञ् इति वृत्तौ । आत्रेयस्तु 'हलश्च' इति करणे घञमाह । प्रासनम् । करणे ल्युट् । द्व्यहात्यास गाः पयः पाययति, द्व्यहमत्यासमिति वा । 'अस्यतितृषोः क्रियान्तरे कालेषु' इति काले कर्मण्युपपदे क्रियान्तरे क्रियाया व्यवधायकेऽर्थे वर्तमानयोरस्यतितृषोः णमुल् । अद्य पाययित्वा द्व्यहमत्यस्य पाययतीत्यर्थः । अन्यसनक्रियया पानक्रिया व्यवधीयते । 'तृतीयाप्रभृतीनि' इति समासविकल्पः । असित्वा, अस्त्वा । उदित्त्वादिड्विकल्पः । अस्तः, अस्तवान् 'यस्य विभाषा' इतीण्णिषेधः । अस्तमनेनासितमनेन । "सौनागाः कर्मणि निष्ठायां शकेरिटमिच्छन्ति विकल्पेन, अस्यतेर्भावे" इति 'विभाषा भावादिकर्मणोरि' त्यत्र वृत्तौ । अस्तंगत्य, 'अस्तं च' इति क्रियायोगे गतित्वाद् अस्तशब्दस्य समासः । अत एव निर्देशादस्तशब्दस्य मान्तत्वमित्यात्रेयः । अव्युत्पन्नोऽयमिति वृत्तिन्यासपदमञ्जर्यादौ । तरङ्गात्यस्तः, 'द्वितीयाश्रिते' ति समासः । असुरः, 'असेरुरन्' इत्युरन् । प्रज्ञादित्वादासुरः । स्वसा । 'सावसेर्ऋन्' इति सावुपपदे ऋन्, अन-

[1] समस्यम् अत्यस्यम् । इति ३ । ४ पा ।

ङादि। 'न षट्स्वस्रादिभ्य' इति 'स्वस्रादिभ्य' इति ङीपो निषेधः। स्वसुरपत्यं स्वस्रीयः। 'स्वसुश्छ' इति छः। पितृष्वसुरपत्यं पैतृष्वस्रीयः, पैतृष्वसेयः। 'पितृष्वसुश्छण्' टकि तु 'टकि लोप' इत्यन्तलोपः। अत एवानुवादस्तु। मातृष्वस्रीयः, मातृष्वसेयः। 'मातृष्वसुश्च' इति छण्, ढकि लोपः। 'मातृपितृभ्यां स्वसा' इति षत्वम्। मातुस्स्वसा, मातुष्ष्वसा। 'विभाषा स्वसृपत्योः' इति पक्षे अलुक्। 'मातुःपितुर्भ्यामन्यतरस्याम्' इत्यलुकि षत्वविकल्पः, स्वसृपदादस्य विसर्जनीयस्य सत्वे ष्टुत्वेन षत्वम्। तत्र पितुस्स्वसा, पितुष्ष्वसा इति। असुः। 'शॄस्वृ'–इत्यादिना उप्रत्ययः। अत्र केचित् 'नेगदे' त्यादौ तन्त्रेणाकारप्रश्लेषेण अयमपि निर्दिष्ट इति। प्रण्यस्यतीत्यादौ णत्वमिच्छन्ति। अस्तीति लुकि। असते असतीति शपि॥ १०१॥

यसु प्रयत्ने॥ यस्यति। यसति। ययास। येसतुः। यसिता। यसिष्यति, यस्यतु, यसतु। अयस्यत्, अयसत्। यस्येत्, लिङि। अयसत्। 'यसोऽनुपसर्गात्' इति श्यनो विकल्पनात्तदभावे शपि। उपसृष्टात्तु प्रयस्यतीति श्यनेव। सम्पूर्वत्वे तु 'संयसश्च' इति विकल्पः, संयस्यति संयसतीत्यादि। यियसिषति। यायस्यते। यायस्ति। आयासयते 'अणावकर्मकाच्चित्तवत्कर्तृकात्' इति परस्मैपदस्य 'न पादमी'त्यादिना निषेधः। आयासी, सम्पृचादिना घिनुण्। यस्त्वा, यसित्वा। उदित्त्वादिड्विकल्पः। यस्तः, यस्तवान्॥ १०२॥

जसु मोक्षणे॥ जस्यतीत्यादि यस्यतिवत्। अजसम्, 'नमिकम्पिस्म्यजस' इति नञ्पूर्वाज्जसेरप्रत्ययः। स्वभावादयं क्रियासातत्ये। 'जासिनिप्रहण' इति कर्मणि षष्ठीविधौ हिंसार्थग्रहणात् अस्य ग्रहणं न– जासयतीति द्वितीयैव। जसि रक्षणे, जसु हिंसायाम्, जसु ताडने, इति त्रय चुरादौ॥ १०३॥

तसु उपक्षये॥ दसु च॥ तस्यति। दस्यति। इत्यादि॥ दासितः। दस्तः, 'वा दान्ते' त्यादिना पक्षे णिलुगिडभावश्च। दस्तौ। 'स्फायित-

२ चोरमिति ३। ४। पु॰ पा।

ष्वीत्यादिना रक् । पुष्यवदादिवदय नित्य द्विवचनान्तः । दाने दासति दासतइति शपि गतम् ॥ १०४ ॥ १०५ ॥

वसु स्तम्भे ॥ वस्यति, ववास, ववसतुः, 'न शसददवादी'त्येत्वाभ्यासलोपनिषेधः । वसितेत्यादि । अयं दन्तोष्ठ्यादि[1]रित्यात्रेयादयः । तथैव दैवपुरुषकारयोः । वस्यति स्तम्भने, वस्ते आच्छादने, वसते[2]र्वसेत्, इति । अपरे बकारादिमाहुः । 'घसिश्च सान्तेषु वसिः प्रसारणी' इत्यनिट्कारिकाव्याख्याने वृत्तौ प्रसारणीतिवचनात् वस आच्छादन इत्यस्य इडुवतीति वस्तेरेव प्रत्युदाहरणात् वृत्तिकृतोपि बशादित्वमभिमतं प्रतीयते । एवं हि बस्तशब्दोपि सिद्ध्यति । शमादय एतदन्ता उदितः, ताम्यतिमाद्यती वर्जयित्वा ॥ १०६ ॥

व्युष विभागे ॥ अयं दाहे पूर्वं पठितः, उदाहृतश्च, इह तु विभागे ऽव्युषदित्यइर्थः पाठः । केचिदमुमोष्ठ्यादि दन्त्यान्तमिच्छन्ति व्युसेति । अपरे त्वयकारं वुसेति ॥ १०७ ॥

प्लुष दाहे ॥ प्लुष्यतीत्यादि । इह पाठोऽप्लुषद् इत्यङर्थः । पूर्वत्र पाठस्तु अप्लोषीद् इति सिजर्थः ॥ १०८ ॥

बिस प्रेरणे ॥ ओष्ठ्यादिः । बिस्यतीत्यादि । बिसम् । इगुपधलक्षणः कः । बिस्तः । बाहुलकादौणादिकस्तन्, अगुणत्व च । 'तितुत्रे'तीण्निषेधः । द्वाभ्यां बिस्ताभ्यां क्रीता द्विबिस्ता, द्वैबिस्तिकी । 'बिस्ताच्च' 'बहुपूर्वाच्च वक्तव्यम्' इति द्वित्रिबहुपूर्वाद्बिस्तान्ताद् द्विगोः परस्यार्हीयस्य ठञो विभाषा लुक् । 'द्विगो' रिति ङीपः 'अपरिमाणबिस्ते' ति निषेधः । अत एव बिस्तेति निर्देशाद्वा निष्ठायामनिट्त्वम् । लुगभावे तु 'परिमाणान्तस्य' इत्युत्तरपदवृद्धिः । 'टिड्ढाणञ्' इत्यादिना ङीप् । एवं त्रिबहुपूर्वादपि द्रष्टव्यम् ॥ १०९ ॥

कुस श्लेषणे ॥ कुस्यतीत्यादि । कुसितायी । 'वृषाकप्यग्नी'त्यादिना क्तप्रत्ययान्तत्वात् ङीबुदात्तः, ऐकारोन्तादेशः । दुर्ग-

१ अय चोष्ठ्यादीति २ पु० उपरिलिखितः पाठः ।
२ वसयेद्वसेदिति । ३ । पु० वसने वसेत् इति ४ । पु पा० ।

स्तानत्यान्त पपाठ, कुशशब्दस्य दर्शनात् । स तु भैमादिकादपि सिद्धः ॥ ११० ॥

बुस उत्सर्गे ॥ बुस्यतीत्यादि । बुसम् । इगुपधज्ञा... कः । यस्मिन्काले बुस खले वर्तते स कालः खलेबुसम् । 'तिष्ठद्गुप्रभृतीनि च' इत्यव्ययीभावसमासः । अथ प्रथमान्तं पदं, विभक्त्यन्तरेण न सम्बध्यत इति वृत्तौ । बुस्तम् । पूर्ववत्तर्नीडभावः, अर्धर्चादिषु पाठाद्वा निष्ठाया मनिट्त्वम् ॥ १११ ॥

मुस खण्डने ॥ मुस्यतीत्यादि । दन्त्यान्त इति सर्वे । आत्रेयस्तु कातन्त्रे मूर्धन्यान्तोऽयम् । तथा च 'राघवस्याभुष्ट कान्तम्' इति भट्टिकाव्ये प्रयोगश्चेति पाठान्तरमप्याह । मुस्तमिति, अस्मादेव औणादिकः क्तप्रत्यय इति वदतोरात्रेयमैत्रेययोरन्येषामप्यमुं सान्तं पठतां 'अनि-मस्योरुच्चोपधायाः' इति ससेर्मुस्तमुद्भवतीति मतम् । सुसली गृहगोधिका । गौरादिः । सुसलेन वधमर्हतीति सुसल्यः । दण्डादित्वाद्यत् । मुस्ता । बाहुलकादौणादिके तनि 'तितुत्र' इति इण्निषेधः । मुस्तकम् । सञ्ज्ञायां कन्, अर्धर्चादिः ॥ ११२ ॥

मसी परिमाणे ॥ मस्यति । ममास, मेसतुः । मसिता । मसिष्यति । मस्यतु । अमस्यत् । मस्येत्, मस्यात् । अमसत् । मिमसिषति । मामस्यते । मामस्ति । मासयति । अमीमसत् । मस्तः, मस्तवान् । ईदित्वादनिट्त्वम् । मस्तकम् । सञ्ज्ञायां कन् । मस्तु । 'सितनी'ति तुन् । 'तितुत्रे'तीण्निषेधः । अस्यादयो मसिपर्यन्ता दन्त्यान्ताः । अत्र क्वचित् 'आद्यन्तव्यत्यासेन समीति पाठः' ॥ ११३ ॥

लुट विलोडने ॥ लुट्यति । अलुटत् इत्यादि । भूवादिपाठात् अलोटीत् इति सिजप्यस्ति । प्रनिघाते तु चुरादिपाठादण्यस्ति, अलुटत्, अलोटिष्ट इति । लोट्यतीति कण्ड्वादियगन्तः ॥ ११४ ॥

---

१ कण्ड्वत्यधिकम् ३।४।पु।  २ पपाठ इति ३।४।पु पा।

उच समवाये ॥ उच्यति । उवोच, ऊचतुः, उवोचिथ, पित्वचनेषु परत्वाद्गुणे, पश्चाद् द्विर्वचने 'अभ्यासस्यासवर्णे' इत्युवङ् । यद्यपि द्विर्वचने गुणस्य स्थानिवत्त्वम्, तथाप्युत्तरखण्डस्य 'वार्णादाङ्गं बलीय' इति सवर्णदीर्घात्पूर्वं गुणे ऽभ्यासस्योवङ् । ओचिता । ओचिष्यति । उच्यतु । औच्यत्, उच्येत्, उच्यात्, लिङि । मा भवानुचिचत् । ओचिचिषति इत्यादावपि द्विर्वचनात्पूर्वं गुणः । अत्र च ज्ञापक 'रलो व्युपधात्' इत्यत्र हलादिग्रहणेन अजादेर्गुणार्थः कित्त्वपर्युदासः । यदि च पूर्वं द्विर्वचन स्याद् अकित्त्वेप्यनुपधात्वाद् गुणो न भविष्यतीति किं तेन । ओचित्वा । 'न क्त्वा सेट्' इत्यकित्त्वम् । उचितः । औचित्यम् । ब्राह्मणादित्वात् ष्यञ् । औचिती । ष्यञन्तात् षित्वान्ङीषि 'हलस्त द्धितस्य' इति यलोपः । नियमेनोच्यतीति न्योकः शकुन्तः । इगुपधलक्षणः कः । नियमेनास्मिन् शकुन्ताः समवयन्तीति न्योको वृक्षः, घञर्थे कः । ओकः । अच्[1] । 'ओक उचः के' इति निपातनात्कुत्वम्, गुणश्च । ओकः, ओकसी । गृहम् । असुनि बाहुलकात्कुत्वम् । उल्बम् । 'उल्बादयश्च' इति बप्रत्ययः । चकारस्य च लकारो गुणाभावश्च निपात्यते ॥ ११५ ॥

भृशु भ्रशु अधः पतने ॥ भृश्यति । बभर्श, बभृशतुः, बभृशुः, बभर्शिथ, बभृश, बभृशिव । भर्शिता । भर्शिष्यति । भृश्यतु । अभृश्यत् । भृश्येत्, भृश्यात् । अभृशत् । बिभर्शिषति । बरीभृश्यते । बरीभर्ष्टि । इत्यादि । भर्शयति । अबीभृशत्, अबभर्शत्, उदृद्वा । भृशम् । इगुपधलक्षणः कः । अभृशो भृशो भवति भृशायते । 'भृशादिभ्यो भुवि' इति क्यङ् । भार्श्यम्, भ्रशिमा । दृढादित्वात् ष्यञिमनिचौ । भ्रशिष्ठः, भ्रशीयान्, 'र ऋतो हलादे' रितीष्ठेमेयस्सु ऋकारस्य रशब्दः । भ्रशयति, 'णाविष्ठवत्' इति रत्वम् । भर्शित्वा, भृष्ट्वा । उदित्वादिड्विकल्पः । भृष्टः, भृष्टवान्, भ्रश्यति, 'अनिदिताम्' इति नलोपः । बभ्रंश, बभ्रंशतुः, बभ्रंशिथ, बभ्रंशिव । भ्रंशिता । भ्रंशिष्यति । भ्रश्यतु ।

[1] अच इति नास्ति ३ । ४ पु ।

अभ्रश्यत् । भ्रश्येत् भ्रश्यात् । अभ्रशत् । बिभ्रंशिषति । बाभ्रश्यते । येपि भ्रंशि भ्वादावपि तानथ्योस्मान्न पठित्वा, नोक्रयेरि तथा पठन्ति. तेपि ध्वमन्य इमाहत्यादौगादिकस्यैव नोक कुर्वन्ति. न त्वस्य । येषा नु भ्वादौ नोक्सूत्रे च दन्त्यान्तपाठ, तेषामप्यस्य नोक्तो नैव प्रसङ्गः । बाभ्रंष्टि । भ्रंशयति । भ्रंशित्वा भ्रष्ट्वा, भ्रष्टः । त्रश्चादिना षत्वेऽनिट्त्व, सर्वत्र क्नियतुनामिदन्तोद ॥ ५५६–११८ ॥

वृश वरणे ॥ वृश्यतीत्यादि, भृश्यतिवत् । अनुदित्त्व विशेषः । वृशिष्ठः, वृशीयान् ॥ वृशयतीत्यत्र 'र ऋत इति रत्व न भवति ॥

पृथु मृदुं भृश चैव कृश च दृढमेव च ।
परिपूर्व वृढ चैव षडेतान् रविधौ स्मरेत् ॥

इति परिगणनात् ॥ ११८ ॥

कृश तनूकरणे ॥ कृश्यतीत्यादि भृंशिवत् । अस्याप्यनुदित्त्व विशेषः ॥ कृशः । 'अनुपसर्गात्फुल्लक्षीबकृशोल्लाघाः' इति निष्ठाया निपातितः । सोपसर्गत्वे तु प्रकृशितः परिकृशितः । प्रादिसमासः । कृशिमा कृशिष्ठः । कृशीयान् । कृशयति । भृंशिवद् रत्व इमनिच्च । कृशित्वा, कर्शित्वा । 'तृषिमृषिकृशेः काश्यपस्य' इति वा कित्त्वम् । कृशानुः । 'ऋतन्यञ्जि'–इत्यादिना नुक् ॥ ११९ ॥

ञितृष पिपासायाम् ॥ तृष्यतीत्यादि । तृषित्वा, तर्षित्वा । 'तृषिमृषि'–इत्यादिना वा कित्त्वम्, तृष्णक् । 'स्वपितृषोर्नजिङ्' इति नजिङ् । उष्टहतर्षं गाः पाययति उष्टहतर्षमिति वा । अत्र पाययित्वा, उष्टहमतिक्रम्य पाययतीत्यर्थः । 'अस्यतितृषो' रिति णमुल् । 'तृतीयाप्रभृतीनि' इति समासविकल्पः । तृट्, तृष्णा । 'तृषिशुषिरसिभ्यः क्तिन्' इति नप्रत्ययः । ञित्त्व वर्तमाने क्तार्थम् । तृषितमस्य सञ्जात तृषितः, अर्श आदिः ॥ १२० ॥

हृष तुष्टौ ॥ हृष्यतीत्यादि । श्यनडौ वर्जयित्वा भौवादिकवत् । अयमुदिदिति नन्दीति स्वामी । तद्वृत्त्यादिविरोधादुपेक्ष्यम् । यदाह 'हृषेर्लोमसु' इत्यत्र 'हृषु अलीकइत्यय निष्ठायामनिट्, हृष तुष्टावित्ययं सेट्, अनयोरुभयोरिदं ग्रहणमित्युभयत्र विभाषेयम्' इति । अत्रैव न्याये 'हृषु अलीकइत्ययमनिडिति । 'उदितो वा' इति क्त्वाप्रत्यय इड्विकल्पविधानात् 'यस्य विभाषा' इति निष्ठायामनिट्, हृष तुष्टावित्यय सेट्" इति । वर्धमानोऽप्येवमाह ॥ १२१ ॥

रुष रोषे ॥ देवदत्ताय रुष्यति । 'क्रुधद्रुहे' ति कोपविषयस्य सम्प्रदानम् ॥ रुरोष, रुरोषिथ, रुरुषिव । रोष्टा, रोषिता । रोषिष्यति । रुष्यतु । अरुष्यत् । रुष्येत्, रुष्यात् । अरुषत् । रुरुषिषति । रुरोषिषति । रुषित्वा, रोषित्वा, रुष्ट्वा, 'रलो व्युपधात्' इति सेटः क्त्वासनोः कित्त्वविकल्पः । 'तीषसहे' ति तादाविड्विकल्पः । रुषितः, रुष्टः, 'रुष्यमत्वरे' ति निष्ठायामिड्विकल्पः । भावादिकर्मणोर्निष्ठायास्सेटः 'उदुपधात्' इति कित्त्वविकल्पो भौवादिकानामेवेति प्रागेवोक्तत्वादस्य न भवति । इह के चित् रिष हिंसायां चेति पठन्ति । 'न रिष्यति न व्यथते' इत्यादयश्च प्रयोगा दृश्यन्ते । आत्रेयमैत्रेयादयस्तु न पेठुः ॥ १२२ ॥

डिप क्षेपे ॥ डिप्यति । डिडेप, डिडेपिथ, डिडिपिव । डेपिता । डेपिष्यति । डिप्यतु । अडिप्यत् । डिप्येत् डिप्यात् । अडिपत् । डिडेपिषति । डिडिपिषति । डिपित्वा, डेपित्वा । डेडिप्यते । डेडेप्ति । डेपयति । अडीडिपत् । अयं तुदादौ । चुरादौ तु सङ्घाते च । इह क्वचित् 'ष्टूप समुच्छ्राये' इति पठ्यते, तदनार्षम् । 'स्त्यः प्रसारणमुच्च' इति स्त्यायतेः पप्रत्यये यकारस्य उकारे सम्प्रसारणे दीर्घे स्तूपशब्दव्युत्पादनात् । अत एवात्रेयमैत्रेयादयोऽपि न पठन्ति ॥ १२३ ॥

कुप क्रोधे ॥ कुप्यतीत्यादि रुष्यतिवत् । इट् तु सर्वत्र नित्यः । देवदत्ताय कुप्यति । 'क्रुधद्रुहे' ति कोपविषयस्य सम्प्रदानत्वम् । कुप्यमरण्यम् । 'चक्रेन्द्रे' त्यादौ निपातितः ॥ अयं भाषार्थश्चुरादौ ॥ १२४ ॥

गुप व्याकुलत्वे ॥ गुप्यतीत्यादि । गोपयति । जुगुप्सतइत्यपि । गोपयतीति चुरादौ ॥ १२५ ॥

युप रुप लुप[1] विमोहने ॥ युप्यति । रुप्यति । लुप्यति. अनिट्कारिकायां तौदादिकेन लिपिना साहचर्यात्तौदादिकस्य लुपेश्छेदन इत्यस्यैव ग्रहणादयं सेडेव ॥ १२८ ॥

लुभ गार्ध्ये ॥ गार्ध्यमाकाङ्क्षा । लुभ्यति । लुलोभ, लुलोभिथ । लोभिता, लोब्धा । लोभिष्यति । लुभ्यतु । अलुभ्यत् । लुभ्येत्, लुभ्यात् । अलुभत् । लुलुभिषति । लुलोभिषति । लोलुभ्यते । लुलोब्धि । लोभयति । अलूलुभत् । लुभित्वा, लोभित्वा, लुब्ध्वा । लुब्धः । तादौ 'तीषसहे'ति वेट्त्वम् । सेटोः क्त्वासनोः 'रलो व्युपधात्' इति कित्त्वविकल्पः । 'यस्य विभाषा' इति निष्ठायां नेट् । 'लुभो विमोहने' इति क्त्वानिष्ठयोर्नित्यं सेट्त्वं विमोहनार्थस्य तौदादिकस्यैव । भ्वादेरनुक्तत्वाल्लोभत इति भवतीत्यात्रेयः ॥ १२९ ॥

क्षुभ सञ्चलने ॥ क्षुभ्यति । चुक्षोभ । क्षोभितेत्यादि । अर्थस्याविभक्तारात्तानुरोधादस्येह[2] पाठः । अङ् तु पुषादित्वादेव सिद्धः । न चाद्योर्भेदादिति सिद्धनिवृत्त्यर्थं उपपद्यते, क्रैयादिकेनाप्यस्य तस्य रूपस्य भावित्वात् ॥ १३० ॥

णभ तुभ हिंसायाम् ॥ नभ्यति, प्रणभ्यति । ननाभ, नेभतुः, नेभिथ, नेभिव । नभिता । तुभ्यति । तुतोभ । अनयोरपीह पाठः क्षुभेरिव । इमावपि द्युतादौ क्र्यादौ च पठ्येते ॥ १३१–१३२ ॥

क्लिदू आर्द्रीभावे ॥ क्लिद्यति, चिक्लेद, चिक्लेदिथ, चिक्लेत्थ, चिक्लिदिव, चिक्लिद्व । क्लेदिता, क्लेत्ता । क्लेदिष्यति, क्लेत्स्यति । क्लिद्यतु । अक्लिद्यत् । क्लिद्येत् । क्लिद्यात् । अक्लिदत् । चिक्लिदिषति । चिक्लित्सति । क्लेदित्वा, क्लिदित्वा । क्लिन्नः । चेक्लिद्यते । चेक्लेत्ति । क्लेदयति । अचिक्लिदत् । चिक्लिदम् । इगुपधलक्षणे के, 'कृशादीनां के द्वे

1 कौशिकस्वामिमते पठ्यन्ते ।
2 अर्थमात्रानुरोधादिति ३ । पु पा ।

# अथ स्वादयः ॥

षुञ् अभिषवे ॥ आ[1]वृञ एतदादयो ऽनुदात्ता उभयतोभाषाः ॥ अभिषवः स्नपनपीडनस्नानसुरासन्धानादिः । तत्र स्नानेयमकर्म्मकः । सुनोति । सुनुतः । सुन्वन्ति । सुनोषि । सुनोमि । सुन्वः । सुनुवः । 'स्वादिभ्यः श्नुः' । शपोपवादः । 'हुश्नुवोः सार्वधातुके' इत्यजादावगुणविषये श्नोरुकारस्य यण् । 'लोपश्चास्यान्यतरस्यां म्वोरि'ति वकारमकारादावसंयोगपूर्वत्वात्पक्षे उकारलोपः । सुनोमीत्यत्र परत्वाद्गुणे उकाराभावान्नाय लोपः । अभिषुणोति, 'उपसर्गात्सुनोती'ति षत्वं, सुषाव । सुषुवतुः । सुषोथ । सुषविथ । सुषुवथुः । सुषुव । सुषाव । सुषव । सुषुविव । क्रादिनियमादिट् । थलि तु भारद्वाजनियमाद्विकल्पः । उवङ् अगुणवृद्धिविषये । अभिसुषाव । 'स्थादिष्वभ्यासेने'ति नियमादभ्यासस्य न षत्वं, प्रकृतेस्त्वादेशप्रत्यययो'रिति षत्वं, सोता । सोष्यति । अभिसोष्यतीत्यत्र 'सुनोतेः स्यसनो'रित्यु'पसर्गादि'ति षत्वं निषिध्यते । सुनोतु । सुनुतात् । तातङो ङित्त्वान्न गुणः । सुनुतां, सुन्वन्तु । सुनु । 'उतश्च प्रत्ययादसंयोगपूर्वा'दि'ति हेर्लुक् । सुनुताम्, सुनुत । सुनवानि । आटि यणं बाधित्वा गुणः । असुनोत् । असुनुताम् । असुन्वन् । असुनोः । असुनवम् । असुन्व । असुनुव । पूर्ववदुकारलोपः, पक्षे अभ्यषुणोत् । 'प्राक्सितादड्व्यवायेपी'ति षत्वम् । सुनुयात् । सुनुयाताम् । सुनुयुः । 'जुसि चे'ति गुणः 'सार्वधातुकमपिदि'ति ङित्त्वाश्रय प्रतिषेध येन नाप्राप्तिन्यायेन बाधते, न तु यासुटो ङित्त्वाश्रयमपीति नात्र गुणः । सुनुयाः । सुनुयाम् । आशिषि । सूयात् । सूयास्ताम् । 'अकृत्सार्वधातुकयोरि'ति दीर्घः । असावीत् । असाविष्टाम् । असावीः । असाविषम् । 'स्तुसुधूञ्भ्यः'ति परस्मैपदेषु सिच इट् । सुनुते । सुन्वाते । सुन्वते । सुनुषे । सुन्वे । सुन्वहे । सुनुवहे । पूर्ववद्यणुकारलोपौ । सुषुवे । सुषुविषे । सुषुविढ्वे । सुषुविध्वे । 'विभाषेटः' । सुषुवे । सुषुविवहे । सुषुविमहे । सोता ।

---

१ आ वृञ इति ४ पु नास्ति।

सोष्यते । सुनुताम् । सुन्वाताम् । सुन्वता, सुनुष्व । सुनवै । सुनवावहै । असुनुत । असुन्वाताम् । असुन्वत । असुनुथाः । असुन्वि । असुन्वहि । असुनुवहि । सुन्वीत । सुन्वीयाताम् । आशिषि । सोषीष्ट । सोषीयास्ताम् । सोषीढ्वम् । 'इणः षीध्वमि'ति मूर्धन्यः । असोष्ट । असोषाताम् । असोष्ठाः । असोषि । सुसूषति, सुसूषते । 'स्तौतिण्योरेवे'ति नियमात् षत्वम्, अभिसुसूषतीत्य त्रोपसर्गादिति प्राप्तस्य षत्वं 'स्थादि नियमेन बाध्यते । एवं तर्हि 'सुनोतेः स्यसनोरि'ति सनि षत्वनिषेधस्य किमुदाहरणम् । इदं सुसूषतेरप्रत्यये, अतो लोपः, सुसूरिति । अत्र हि सनः षत्वस्यासिद्धत्वादिस्य रुत्वे विसर्जनीये कृतत्वस्य सनोऽभावात् 'स्तौतिण्योरेवे'ति न प्रवर्तते । एकदेशविकृतस्यानन्यत्वात्तु सन्परत्वमिति 'सुनोतेः स्यसनोरि'ति निषेधस्तु प्रवर्तते । सोषूयते । सोषुवीति । सोषोति । सोषुवः । 'उपसर्गादि'ति षत्वम् । 'सुनोतेः स्यसनोरि'ति निषेधस्तु शितपा निर्देशान्न प्रवर्तते । अभिसोषोति, सोषवीति[1] । 'यङ्लुगन्तात्सनीटि गुणावादेशयोरभावविरन्ध्ये अतोलोपे पूर्ववत् षत्वस्यासिद्धत्वाद्रुत्वे 'र्वोरुपधाया दीर्घ' इति दीर्घः । सावयति । असूषवत् । सुषावयिषति । 'ण्यन्तात्सनि स्तौतिण्यो'रिति षत्वम्. सुन्वन् सुन्वान. । लटः शतृशानचौ । राजसूयः । कर्मण्यधिकरणे वा 'राजसूये'ति क्यपि निपात्यते । आसाव्यम् । 'आसुयुवपी'ति ण्यति वृद्धौ धातोस्तन्निमित्तस्यैवे त्यावादेशः । सोमं सुतवान्सोमसुत् । 'सोमे सुञ' इति भूते क्विप् । सुत्वा । सुत्वानौ 'सुयजोर्ङ्वनिबि'ति भूते ङ्वनिप् । स्त्रियां सुत्वरी, 'वनो र चे'ति ङीब्रेफौ । सुन्वन्, सुन्वन्तौ । 'सुञो यज्ञसंयोगे' इति शता । अयमन्तादेशः, यज्ञमान उच्यते । सुत्या । 'संज्ञायां समजे'त्यादिना स्त्रियां क्यप् । आसुतीवलो यज्वा । शौण्डिकश्च । क्तिजन्ताद्रजःकृष्यासुती'ति मत्वर्थीये वलचि 'वले' इति दीर्घः । सुरा । 'सुसूधागृधिभ्यः क्रन्' इति क्रन् । सुरको ऽहिविशेषः । स्थूलादिषु 'सुराया अहा'विति पाठात्कनि 'केऽणः' इति ह्रस्वः ॥ १ ॥

षिञ् बन्धने ॥ सिनोति । सिनोषि । सिनोमि । सिन्वः । सिनुवः ।

---

१ सोषवी. । इतिरूपं ।

सिषाय । सिष्यतुः । सिषयिथ । सिषेथ । सिष्य । सिषाय । सिषय । सिष्यिव । अत्रागुणवृद्धिविषये अजादावेरनेकाच इति यण् । सेता । सेष्यति । सिनोतु । सिनु । सिनवानि । असिनोत् । सिनुयात् । आशिषि सीयात् । असैषीत् । असैष्टाम् । सिनुते । सिनुषे । सिन्वे । सिन्वहे । सिनुवहे, सिष्ये । सिष्यिषे । सिष्यिवहे । सेता । सेष्यते । सिनुताम्, सिनुष्व, सिनवै । असिनुत । असिनुथाः । असिन्वि । असिन्वहि । असिनुवहि । सिन्वीत । सेषीष्ट । असेष्ट । असेषाताम् । सिसीषति । सिसीषते । सेषीयते । सेषयीति । सेषेति । साययति । असीषयत् । सितः । सितवान् । सिनो ग्रासः स्वयमेव । 'सिनोतेर्ग्रासकर्मकर्त्तृकस्ये'ति वक्तव्येन निष्ठानत्वम् । यदा बध्यमानः पिण्डीक्रियमाणो ग्रासो दध्यादिवशेन तत्रानुकूल्यं प्रतिपद्यते तदा कर्मणः कर्तृत्वविवक्षायामयं प्रयोग इति न्यासपदमञ्जर्यादौ । अनेकार्थत्वाद्धातोर्भक्षणमर्थ इत्यात्रेयः । केशेषु प्रसितः केशैरिति वा, 'प्रसितोत्सुकाभ्यां तृतीया चे'ति तृतीयासप्तम्यौ । सयः । अच् । परिषितः । परिषयः । 'परिनिविभ्य' इत्यादिना सितसयशब्दयोः षत्वम् । एवं निविभ्यामपि । सेतुः । 'दाधेट्सी'ति रुः । सेत्रं, 'दाम्नी'त्यादिना ष्ट्रन् । सितो वर्णः । 'अञ्जिघृसिभ्यः क्त' इति सञ्ज्ञायां क्तः । सितिमा, सैत्य, 'वर्णदृढादिभ्यः ष्यञ्चे'ति ष्यञिमनिचौ भावकर्म्मणोः । सिता शर्करा । न सिता । असिता । असितेत्यत्र 'वर्णादनुदात्तादि'ति ङीब्नकारयो 'रसितपलितयोः प्रतिषेध' इति निषेधः । 'छन्दसि क्नमेके' भाषायामपीष्यतइत्यसिक्नीति क्नादेशङीपावपि पक्षे भवतः । सेतुः । 'सितनिगमिमसिसच्यविधाञ्क्रुशिभ्यस्तुनि'ति तुन् । सीरो लाङ्गलम् । 'शुषिचिमि दीर्घश्चे'ति क्रनि दीर्घः । सीरस्येदं तद्वहतीति वा सैरिकः । 'हलसीराट्ठगि'ति तस्येद विषये तद्वहति विषये च ठक् ॥ अयं क्र्यादावपि सिनाति सिनीतइति ॥ २ ॥

५ शिञ् निशाने ॥ तालव्यादिरयम् ॥ निशानं ती[१]क्ष्णीकरणम् । शिनोति । शिनुते । शिशाय । शिश्ये । शेता । शेष्यतीत्यादि पूर्ववत् ॥ ३ ॥

---

१ तद्वेति ३ । ४ । पु॰ पा॰ उपलभ्यते ।

डुमिञ् प्रक्षेपणे ॥ मिनोति । मिनुते । ममौ । मिम्यतुः । मिम्युः । ममाथ । ममिथ । मिम्यथुः । मिम्य । ममौ । मिम्यिव । मिम्यिम । मीनातिमिनोतिदीङां ल्यपि चे'त्यात्वविषये ल्यपि च प्रागेव प्रत्ययोत्पत्तेरात्वं तस्य चानैमित्तिकत्वात् 'द्विर्वचनेऽची'ति स्थानिवत्त्वं, अनन्तरपक्षे 'आतो लोप इटि चे'त्याल्लोपः । मिम्ये । मिम्यिषे । मिम्यिवहे । माता । मास्यति । मास्यते । मिनोतु । मिनु । मिनवानि । मिनुताम । मिनुष्व । मिनवै । अमिनोत् । अमिनुतम् । मिनुयात् । मिन्वीत । आशिषि मीयात् । मासीष्ट । यासुट क्नित्वान्नात्वम् । 'अकृत्सार्वधातुकयो'-रिति दीर्घः । अमासीत् । अमासिष्टाम् । आत्वे 'यमरमनमातां सक्चे'ति सगिटौ परस्मैपदे । अन्यत्र अमास्त । अमासाताम् । मित्सति । मित्सते । 'इको झलि'ति सनः कित्त्वात् 'इङ्झनगमां सनी'ति दीर्घे 'सनि मीमे'तीसादेशे 'सस्यार्द्धधातुके' इति सस्य तत्वे 'अत्र लोपोऽभ्यासस्ये'त्यभ्यासलोपः । मेमीयते । मेमेति । मेमयीति । मिनोतीति श्तिपा निर्द्देशान्नात्वम् । माययति । अमीमयत् । आत्वे पुक् । प्रमाय । 'ल्यपि चे'त्यात्वम् । प्रमयः । इयत्प्रमयः । 'निमिमीलियां खलचोः प्रतिषेध' इत्यात्वप्रतिषेधः । मित्रिमम् । 'ड्वितः क्त्रिः' । 'क्त्रेर्मम् नित्यं' मीरः 'शुषिचिमिञां दीर्घश्चे'ति क्रन्दीर्घौ । मयते इति शपि प्रणिदाने । मातीति लुकि माने । मिमीते इति च श्लौ माने शब्दे च । मीयतइति श्यनि ॥ ४ ॥

चिञ् चयने ॥ चिनोति । चिनुते । चिकाय । चिक्यतुः । चिकेथ । चिकयिथ । चिक्यिव । 'विभाषा चेरि'ति सन्लिटोः परयोरभ्यासात्परस्य वा कुत्वम् । अन्यदा चिचायेत्यादि । चिक्ये । चिच्ये इत्यादि । चेष्यति चेष्यते । चिनोतु । चिनुताम् । अचिनोत् । अचिनुत । चिनुयात् । चिन्वीत । आशिषि चीयात् । चेषीष्ट । अचैषीत् । अचेष्ट । चिचीषति । चिकीषति । लिटि च कुत्वविकल्पः । चेचेति । चाययति । चापयति । 'चिस्फुरोर्णौ'त्यात्वपक्षे पुक् । प्रणिचिनोति । 'नेर्गदे'ति णत्वम् । निकाय्यः । 'पाय्यसान्नाय्ये'त्यादिना निवासे ण्यदायादेशावादिकुत्वं च निपात्यते । संचाय्यः क्रतुः । परिचाय्योऽग्निः, उपचाय्यश्च । 'क्रतौ

कुण्डपाय्यसञ्चाय्यौ' 'अग्नौ परिचाय्योपचाय्यसमूह्या' इति ण्यदायादेशयोर्निपात्यते । निवासादिष्वोन्यत्र यति चेयमित्यादि । चित्याग्निः । अग्निचित्या वर्त्तते । 'चित्याग्निचित्ये चे'ति कर्मणि भावे च यथाक्रमं निपात्येते । तत्राद्यस्य यति तुक्, अन्यस्य ये तुक्, तेनात्रोदात्तत्वं भवति । अयं स्वभावात्स्त्रीलिङ्गः । अग्निचित् । 'अग्नौ चेरि'ति कर्मण्युपपदे भूते क्विप् । श्येनश्चीयते श्येनचित् । श्येनशब्दस्तत्सदृशेष्टकाचये उपचारेण वर्त्तते । 'कर्मण्यग्न्याख्यायामि'ति कर्मण्युपपदे तस्मिन्नेवार्थे ऽग्न्याख्यायां त्रैकालिकः क्विप् । आख्याग्रहणं रूढ्यर्थं, श्येनाग्न्यर्थं इष्टकाचयः श्येनचिच्छब्देनोच्यते । निश्चयः । 'ग्रहवृदृनिश्चिगमश्चे'ति निश्चेरप् । अचोपवादः । एकस्तन्दुलनिचाय इत्यत्र 'परिमाणाख्यायां सर्वेभ्य' इति घञ् । कथमेकोपि तत्र निश्चय इति, पदसंस्कारेणेति भागवृत्तिः । पुष्पप्रचायः । 'हस्तादाने चेरस्तेय' इति घञ् । हस्तादानग्रहणेन प्रत्यासत्तिर्लक्ष्यते । अन्यत्र वृक्षशिखरे फलप्रचयं करोतीति अजेव । अस्तेयइति [illegible]चौर्ये प्रत्यासत्तावप्यजेव चौर्येण पुष्पप्रचय इति । निचीयन्तेऽस्मिन्निति निकायः । ग्रामगृहादिः । आचीयन्तेऽस्मिन्निष्टका इति आकायोऽग्निः । चीयन्तेऽस्मिन्नस्थ्यादीनीति कायः शरीरम् । गोमयानामेकत्र राशीकरणं गोमयनिकायः । 'निवासचितिशरीरोपसमाधानेष्वादेश्च कः' इति घञादिकत्वं च । निवसन्त्यस्मिन्निति निवासः । चीयतेऽसौ चितिः शरीरं, पाण्यादिसमुदायः । उपसमाधानं राशीकरणम्, असौ धात्वर्थः, अन्यानि प्रत्ययार्थस्य कारकस्योपाधिभूतानि । इष्टकानिचय इत्यत्र च ग्रहण[1]मात्रं विवक्षितं नोपसमाधानमित्यजेव भवति । भिक्षुनिकायः, 'सङ्घे चानौत्तराधर्ये' इति घञ्, आदिकत्वं च, प्राणिनां समूहः सङ्घः, स च द्वेधा भवति एकधर्मसमावेशेन औत्तराधर्येण च, तत्रानौत्तराधर्यइति पर्युदासादितरो गृह्यतइत्यौत्तराधर्येऽजेव, सूकरनिचय इति सङ्घस्य प्राणिसमुदायलक्षणत्वात् । प्रमाणाप्रमाणसमुच्चय इत्यत्राप्यजेव । चितिः । क्तिन् । द्विचितीकः । 'शेषाद्वि-

१ वहुनमात्रमिति ४ पु॰ पा॰ ।

भावे' इति क्तप् । 'चितेः कपि' इति पूर्वपदस्य दीर्घः, आचितं सम्भवत्यवह-रति पचति वा आचितीनः । आचितिकः । 'आढकाचितपात्रात् खोऽन्य-तरस्या'मिति खठञौ । आचितिकः आचितः, आचितीनः । 'द्विगो-ष्ठंश्चे'ति सम्भवत्यादिषु ष्ठन् चकारात् खः । षकारो ङीबर्थः । अन्य-तरस्याग्रहणानुवृत्त्या च 'अध्यर्धपूर्वद्विगोर्लुगसंज्ञायाम्' इति ठस्य लुक् । 'द्विगो'रिति ङीपो 'परिमाणाचित' इति निषेधः । ष्ठन्स्वरोऽपि भावनमसर्वत्र लुक् । शाकटो भार आचितः । चिक्कस । औणादिकः कः । चित्रीयते । 'नमो-वरिवश्चित्रङः क्यच्' इति क्यच् । चित्रङ् आश्चर्य इति वृत्तिः । छित्वा-नड् ॥ ५ ॥

स्तृञ् आच्छादने ॥ स्तृणोति । स्तृणुतः । स्तृण्वन्ति । स्तृणोषि । स्तृणोमि । स्तृण्वः । स्तृणुवः । स्तृणुते । स्तृणुषे । स्तृण्वे । तस्तार । तस्तरतुः । तस्तरुः । तस्तर्थ । तस्तर । तस्तार । तस्तरिव । तस्तरे । तस्तराते । तस्तरिरे । तस्तरिषे । तस्तरिध्वे । तस्तरे । तस्तरिवहे । क्रादिनियमादिट् । 'थल्यचस्तास्वद्' इति निषेध ऋकारान्तत्वान्नित्यम् । 'ऋतश्च संयोगादेर्गुणः' इति लिटि गुणः । वृद्धिविषये तु पूर्वविप्रतिषेधेन वृद्धिरेव । कृते वा गुणे 'अत उपधायाः' इति वृद्धिः । स्तर्ता । स्तरिष्यति । स्तरिष्यते । 'ऋद्धनोः स्ये' इतीट्, स्तृणोतु । स्तृणु । स्तृणवानि । स्तृणु-ताम् । स्तृणुष्व । स्तृणवै । अस्तृणोत् । अस्तृणुत । स्तृणुयात् । स्तृण्वीत । आशिषि स्तर्यात् । संयोगादृकारान्तत्वात् 'गुणोऽर्तिसंयोगाद्योरि'ति यकारार्धधातुके लिङि च गुणः । णत्वमस्य न सम्भवति । स्तृषीष्ट । स्तरिषीष्ट । 'लिङ्सिचोरात्मनेपदेष्वि'त्यधिकृत्य 'ऋतश्च संयोगादेरि'तीड्विकल्पः । तदिडभावे 'उश्चे'ति लिङ्सिचोः कित्त्वान्न गुणः । अस्तार्षीत् । अस्तार्ष्टाम् । अस्तृत । अस्तृषाताम् । अस्तरिष्ट । अस्तरिषाताम् । लिङ्वन्नड्विकल्पः, झलादावगुणत्वं च । तिस्तीर्षति । 'इको झलि'ति सनः कित्त्वात् 'अज्झने'ति दीर्घः । 'ऋत इद्धातो'रितीत्त्वे रपरत्वे 'हलि च' इतीक उपधाया दीर्घः । तास्तर्यते । 'यङि चे'ति संयोगादृकारान्तत्वेन गुणः । तस्तर्ति । तस्तरीति । रिग्रीकावप्युदाहार्यौ ।

प्रोपसृष्टाद्वृञपौ, घञि 'उपसर्गस्ये'ति दीर्घः । आच्छादनादन्यत्रावेव । अत्रापि बाहुलकात् क्तिन्विषये ऽबेव भवतीति हरदत्तः । प्रवरा गौरिति । 'अवद्यपण्ये'त्यादौ वर्येति निपातन क्रैयादिकस्येति स्थितमिति इह नोदाहृतम् । वर्म । मनिन् । वर्मी । व्रीह्यादिः । वर्म्मणो ऽपत्य वार्म्मिकायणिः । वाकिनादिषु 'चर्मिवर्म्मिणोर्नलोपश्चे'-ति पाठात्फिञ् कुगागमो नलोपश्च, वर्मणा सनह्यति सवर्मयति । 'सत्यापपाशे'त्यादिना णिच् । अभिधानशक्तिस्वाभाव्यादय सनह्यतीत्यर्थे । अपहारवर्मणोपत्यमापहारवर्मणः । 'न मपूर्वो ऽपत्ये ऽवर्मण' इति प्रकृतिभावनिषेधस्तत्रैवावर्मण इति पर्युदासाच्च भवतीति 'अचि'ति प्रकृतिभाव एव भवति । वरूथो रथगुप्तिः । 'जॄवृञ्भ्यामूथ'न्नित्यूथन् । वर्षम् । 'वृतॄवदिहनिकमिकषिभ्यः स' इति सः । वर्णः । 'ऋज्येन्द्रे'ति सूत्रे वर्णशब्दस्य पाठोनार्षः, 'कृवृजॄसिद्रुपन्यनिस्वपिभ्यो निदि'ति नप्रत्ययेन सिद्धत्वादित्युज्ज्वलदत्तः । 'क्षुरभद्रोग्रभैरभैलशुक्लशुक्रतीव्रवर्णोरामाला'इति रन्प्रत्यये तद्रेफस्य णत्व निपात्यते । वर्णी ब्रह्मचारी । 'वर्णाद्ब्रह्मचारिणी'ति मत्वर्थीय इनिः । ब्राह्मणवर्णी । 'धर्मशीलवर्णान्ताच्चे'ति मत्वर्थीय इनिः, सिद्धे प्रत्यये पुनर्विधानं ठनादिनिवृत्त्यर्थम् । वरुणः । 'कॄवृदारिभ्य उनन्' । वरुणानी । 'इन्द्रवरुणे'ति ङीपानुकौ पुंयोगे । मित्रावरुणौ देवते अस्य मैत्रावरुणः । 'देवताद्वन्द्वे चे'त्यानङ् । पूर्वपदस्य 'सास्य देवते'त्यण् । 'देवताद्वन्द्वे चे'त्युभयपदवृद्धि'र्दीर्घाच्च वरुणस्ये'ति निषिध्यते । वरुणदत्तो नाम कश्चित् । अनुकम्पितोसौ वरुणिकः । वरुणिलः, वरुणदत्तकः । 'बह्वचो मनुष्यनाम्नष्ठज्वा' 'घनिलचौ चे'त्यनुकम्पाया ठच्घनिलकनो विधीयन्ते । 'शेवलसुपरिविशालवरुणार्यमादीनां तृतीयादि'ति ठजादौ प्रत्यये तृतीयादच ऊर्ध्व लुप्यते । वर्णुर्नदः । 'अजिवृरीभ्यो निदि'ति नुप्रत्ययो नित् । वरत्री । 'वृञश्चिदि'ति अत्रन् प्रत्ययश्चित् । वृङ् संभक्ताविति क्र्यादौ । तथा दीर्घान्तो ञिदञिच्च वरणार्थस्तत्र । वृञ् आवरणइति चुरादौ ॥ ८ ॥

धुञ् कम्पने ॥ अनुदात्तः । धुनोति । धुनुते । दुधाव । दुधोथ । दुधविथ । दुधुवे । दुधुविषे । धोतासि । धोतासे । धोष्यति । धोष्यते । धुनोतु । धुनुताम् । अधुनोत् । अधुनुताम् । धुनुयात् । धुन्वीत । आशिषि धूयात् । धोषीष्ट । अधौषीत् । अधोष्ट । दुधूषति । दुधूषते । दोधूयते । दोधोति । धावयति । अदूधवत् । धुत्वा । धुतः । धुतवान् । धुतिः । [illegible] । तथा च भोजोऽप्यसूत्रत् । धु[illegible] कि दिति । अत्र स्वामी तु ह्रस्वान्तमेनं पठित्वा [illegible] । शिवस्वामिकाश्यपौ तु दीर्घान्तमाहतुः । उभयमपीति चान्द्रा इति सुधाकरः । दीर्घान्तस्य तेनैव प्रयोगो दर्शितः । ऊर्ध्वं धूनोति [illegible] कौशिकुञ्जेष्विति । तत्र दीर्घान्तपाठे स्वरत्यादिसूत्रेणेड्विकल्पः । [illegible]स्तु पुरस्तात्प्रतिषेधकाण्डारम्भसामर्थ्याद्धूत्वा धूतः । दुधूषतीत्यादौ 'श्र्युकः किति' 'सनि ग्रहगुहोश्च' इतीण्निषेधो भवति । लिटि त्वमुं प्रतिषेधं बाधित्वा क्रादिनियमान्नित्यमिट् । न च क्रादिनियमस्य स्वरत्यादिविकल्पः परत्वाद्बाधक इति मन्तव्यम्, तस्य 'श्र्युकः किती'त्यनेन पुनरपि बाधप्रसङ्गात् । धूनोति । धूनुते । दुधुवे इत्यादि ह्रस्वान्तवत् । धोता । धविता । धोष्यति । धविष्यति । धोष्यते । धविष्यते । धूनोतु । धूनुतात् । अधूनोत् । धून्वीत । धूयात् । धोषीष्ट । धविषीष्ट । अधावीत् । अधाविष्टाम् । अधविष्ट, अधोष्ट । 'स्तुसुधूञ्भ्यः' इति परस्मैपदे सिचो नित्यमिट् । अन्यत्र सर्वत्र स्वरत्यादिनेड्विकल्पः । धूनयति । 'धूञ्प्रीञोर्नुग्वक्तव्यः' इति णौ नुक् । दीर्घान्तः क्र्यादौ चुरादौ च । धू विधूनन इत्यस्मिन् तुदादौ ॥ स्वादय उभयतो भाषाः वृञ्वर्जमनुदात्ताः ॥ तस्यानुदात्तमध्ये पाठ ऋकारान्तोभयतोभाषानुरोधेन ॥ ९ ॥

उभयतोभाषानिट्प्रकरणाद्वृञमुत्क्वा तदनुरोधेनाकारान्तमनिटं परस्मैपदिनमाह ॥

टुदु उपतापे ॥ दुनोतीत्यादि धुनोतिवत् । दावः । 'दुन्योरनुपसर्गे' इति कर्तरि णः । दव इति भौवादिकादचि । तस्य नात्र ग्रह

इति तत्रैवोक्तम् । 'समि युद्रुदुव' इति घञ्विधौ दुसाहचर्यान्निरनुबन्धकत्वाच्च दवतेरेव ग्रह इत्यस्यावेव भवति सन्दव इति । दवथुः । 'द्वितोथुच्' । दुत्वा । दुतः । दुतवान् । ल्वादौ 'दुग्वोर्दीर्घश्चे'त्यत्र यदुक्तं न्यासे टुदु उपतापे इति । तदसत्, यदाह हरदत्तः । दु द्रु गतावित्यस्य दीर्घग्रहणं न टुदु उपतापइत्यस्य सानुबन्धकत्वात् । तथा च माघः । मृदुतया दुतयेतीति ॥ १० ॥

हि गतौ वृद्धौ च ॥ प्रहिणोति । 'हिनुमिने' ति उपसर्गस्थान्निमित्तादुत्तरस्य हिनुनकारस्याड्व्यवायेपि णत्वं, तच्च प्रहिणु इत्यादौ हिनुशब्दे सावकाशमपि एकदेशविकृतस्यानन्यत्वाद्विकृतेपीह भवति । जिघाय । जिघ्यतुः । जिघ्युः । जिघयिथ । जिघेथ । जिघ्य । जिघ्यिव । 'कुहोश्चुरि'त्यभ्यासस्य चुत्वं झकारः, तस्याभ्यासे चर्चे'ति जकारः । परस्य 'हेरचङी'ति कुत्वं घकारः । हेता । हेष्यति । प्रहिणोतु । प्राहिणोत् । प्रहिणुयात् । हीयात् । अहैषीत् । जिघीषति । जेघीयते । जेघेति । हाययति । अजीहयत् । अचङीति वचनात्र कुत्वम् । इदमेवाचङीति वचनं चङोऽन्यत्र णयधिकस्यापि कुत्वज्ञापकम् । तेन प्रजिघाययिषतीत्यत्रापि कुत्वं भवति। संहित, सहितम् 'समो वा हितततयोरि'ति मलोपविकल्पः । व्यञ्जनस्य नित्यं मलोपस्येष्यमाणत्वात्साहित्यमित्येव भवतीत्यात्रेयः । देवदत्ताय हितं भूयाद् देवदत्तस्येति वा । 'चतुर्थी चाशिष्यायुष्ये'त्यादिना षष्ठीचतुर्थ्यौ । 'चतुर्थी तदर्थार्थबलिहिते'ति समासविधौ कैयटे'चतुर्थी चाशिषी'ति हितयोगे या चतुर्थी तदन्तस्य समासो न भवति, समासाद्ध्याशिषोऽनवगमादिति केचिदाहुरिति । अरोचकिने हितमरोचकिहितमिति हितयोगे चतुर्थी वक्तव्येति चतुर्थी, 'चतुर्थी तदर्थे' ति पक्षे समासः । सुधाकरस्तु चान्द्रानुसारेणानाशिष्यपि षष्ठीचतुर्थ्यौ द्वे भवत इत्याह । तद्वृत्तिकारस्य नेष्टम् । यदाह 'हितं भक्ता' इत्यत्र, 'ननु हितयोगे चतुर्थ्या भवितव्यं, तत्र कथं षष्ठ्यर्थे प्रत्ययो विधीयते, एवं तर्हि सामर्थ्याद्विभक्तिविपरिणामो भविष्यतीति । भाष्यमपि 'हितं भक्ता' इति चतुर्थी-

निर्देशः कर्तव्यः, इतरथा ह्यनिर्देशो भवति, हितशब्दयोगे चतुर्थी विधीयते सा प्राप्नोति, तर्हि चतुर्थीनिर्देशः कर्तव्यो न कर्तव्यः, गत्व वक्ष्यामि हित भक्ष्यन्तदस्मै ततो दीयते नियुक्तं तदस्मै इर्नाति । कैय- टोपीतरथा हीति, यदि चतुर्थी न निर्दिश्यते तदा प्रकृताया अस्येति षष्ठ्याः सम्बन्धयोगाद्विज्ञानुपस्थानात्मन्ययार्थो ऽनिर्दिष्ट स्यादित्यर्थ इति । महिनोक् । 'महिनक्फलनगणवामादेश्च' इत्युक्तत्वद्वात्महि- ताद्यादेङ्कप्रत्ययः स्त्रियाम् । महिनोक्ः । 'महितमहाभ्याञ्चेति वक्त- व्य'मित्युङ् । एकदेशविकृतस्यानन्यत्वात्पूर्वेणैव सिद्धे वचनमिद हितेन सह वर्तते महितमिति महितशब्दव्युत्पत्त्यर्थम्, प्राग्व्येनन्सर्वमुक्तम् । हयः । पचाद्यच् । हयी । गौरादित्वान्ङीष् । 'हतिः । 'ऊतियूती'त्या- दिना क्तिनि निपात्यते । हेतुः । 'कमिमनी'त्यादिना तुः । अन्नेन हेतुना वसति, अन्नाय हेतवे, अन्नाद्धेतोः, अन्नस्य हेतोः, अन्ने हेता- विति वा । 'निमित्तकारणहेतुषु सर्वासां प्रायदर्शन'मिति सर्वा विभक्तयः । प्रायग्रहणादसर्वनाम्नः प्रथमाद्वितीये न स्तः । सर्वनाम्नस्तु सार्वं इत्यङ्गत्ति'त्यत्र कैयटे स्थितम् । ११ ॥

पृ प्रीतौ ॥ पृणोति । पपार । पप्रतुः । पपर्थ । पप्र । पप्रिव । पर्ता । परिष्यति । पृणोतु । अपृणोत् । पृणुयात् । प्रियात् । अपार्षीत् । पुपूर्षति । पेप्रीयते । पारयति । अपीपरत् । प्रियतइति श्यनि गतम् । पिपर्तीति श्लौ ॥ १२ ॥

स्पृ प्रीतिपालनयोः ॥ प्रीतिचलनयोरित्यन्ये । चलनं जीवन- मिति स्वामी । स्पृणोति । पस्पार । पस्पर्थ । स्वयः शेष । 'ऋतश्च संयोगादे'रिति क्किति लिटि गुणः । स्पर्तेत्यादि ॥ स्मृ इत्येके । स्मृणो- तीत्यादि । 'अत्स्मृदृत्वर'त्यत्र वृत्तौ स्मृ चिन्तायामित्युपपादनादस्ये- त्वमेव न भवति, असिस्मरदिति । स्पृणोतिस्मृणोती इमौ छान्दसा- विति पारायणे । इमौ पृणोतिश्च त्रयश्छान्दसा इति स्वामिकाश्यपौ ॥१३॥

आप्ऌ व्याप्तौ ॥ आप्नोति । आप्नुतः । आप्नुवन्ति । आप्नोषि । आप्नोमि । आप्नुवः । 'लोपश्चास्ये'त्युकारलोपः संयोगपूर्वत्वान्न भवति ।

'हुश्नुवोः सार्वधातुके' इति यणाप्य संयोगपूर्वस्येत्यजादौ 'वचि श्नुधात्वि'-त्युवङ् । आप । आपतुः । आपिथ । आपिव । क्रादिनियमादिट् । 'उप-देशेऽत्वत' इत्यत्रात्वत इति तपरकरणाच्च थलीण्निषेधः । यत्राय निषेधस्तत्र भारद्वाजनियम इति विकल्पोपि न भवति । आप्ता । आप्स्यति । आप्नुहि । 'उतश्च प्रत्ययादि'ति हेर्लुक् संयोगपूर्वत्वान्न भवति । आप्नवानि । आप्नोत् । आप्नुयात् । आशिषि आप्यात् । आपत् । लृदित्वात् च्लेरङ् । ईप्सति । 'आप्ज्ञप्यृधामीदि'तीत्वम्, अभ्यासलोपः । आपयति । माभवानापिपत् । कृते णौ चङि ह्रस्वत्वे पश्चाद् द्वितीयस्यै-काचः पिशब्दस्य द्विर्वचनम् । प्रापय्य । प्राप्य । ण्यन्तात् त्कि क्त्वो ल्यपि 'विभाषा' इति पक्षे णेरयादेशः, अन्यदा लोपः । आप्यम् । ण्यत् । 'पोरदुपधादि'त्यत्र तपरकरणान्न यत् । आप्तिः । 'क्तिन्ना-बादिभ्य' इति क्तिन् । जीविका प्राप्तः प्राप्तजीविकः, जीविकाप्राप्त इति वा । 'द्वितीयाश्रिते'त्यादिना 'प्राप्तापन्ने च द्वितीयये'ति च समासः । प्राप्तापन्नेत्यत्र लिङ्गविशिष्टपरिभाषया प्राप्ताशब्दस्य समा-सेपि प्राप्तजीविक इति । तत्र ह्यकारः प्रश्लिष्यते । प्राप्तापन्ने अ चेति, सौत्रत्वान्न प्रकृतिभावः । एतत्पद[1]गतावप्युक्तम् । आपः, 'आप्नोतेर्ह्र-स्वश्चे'ति क्विप्, ह्रस्वः । 'अप्तृन्नि'त्यादिना सर्वनामस्थाने दीर्घः, अद्भिः 'अपो भी'ति भकारादौ तकारे जश्त्वम्, 'अङ्गाधिकारे तस्य च तदन्तस्य चे'ति दीर्घतत्वे तदन्तेपि भवतः, स्वापः, स्वाद्भिरि'ति । द्विधा गताः परितो गता अन्तर्गता आपो यस्मिन्द्वीपम्, परीपम्, अन्तरीपम् । 'द्व्यन्तरुपसर्गेभ्यो ऽप ईदि'त्यादेरीकारादेशः । 'ऋक्पूर-ब्धूरि'त्यकारः समासान्तः । ईत्वमनवर्णान्तादित्युक्तत्वात्प्रापमित्यादौ न भवति । समापो नाम देवयजनमित्यत्र 'समाप इत्वप्रतिषेध' इती-त्वाभावः । अत एव निर्देशा'दन्येषामपि दृश्यत'इति वा दीर्घः । 'अव्य-यं विभक्तिसमीपे'ति निर्देशात्समीपमित्यपि भवति । यद्वा समापशब्दः समा आपो यस्मिन्निति समशब्देन व्युत्पाद्यः । अनूपम् । 'ऊदनोर्देशे'

१ पद्यतौ इति ३ पु॰ पा॰ ।

इत्यप आदेशस्कार 'अदेशेऽन्वोर' समुद्रे यद् द्वीपं तत्र भवादि द्वैप्यम्। 'द्वीपादनुसमुद्रं यञि'ति शैषिको यञ्। अनुसमुद्रमिति सामीप्येऽव्ययीभावः। 'यञञोश्चे'त्यत्रापत्ययञो ग्रहणादस्य बहुषु लुगभावाद् द्वैप्या इति भवति। अनुसमुद्रमित्युक्तत्वादन्यत्राणि द्वैप इति भवति। द्वैपायनो व्यासः। नडादित्वात्फक्। द्वीपशब्देन द्वीपस्थो लक्ष्यते। अनन्तरापत्येऽप्यस्मिन् गोत्रत्वमारोप्यात्। त्रिषु द्वैप्यमनन्तरमित्यत्राप्यशब्दो मयडर्थे दृश्यते। तथाऽपां करणेऽप्याप्या परमाणव इति, अत्र प्रत्ययो न दृश्यते। तथा च स्वामी। आप्य नु लभ्यादिति। परिपूर्वोऽयं रक्षणेऽपि। तथा च भवभूतिः। पर्याप्नोतु सुजन महाभाग इति॥ अथ युजादौ च॥ १४॥

शक्लृ शक्तौ॥ शक्नोति। शक्नुवन्ति। शक्नुहि। अशक्नोत्। शक्नुयात्। शेषं शक्यतिवत्। लुङि लृदित्वादङ्, अशकदिति। विद्यासु शिक्षते। 'शिक्षेर्जिज्ञासायामि'ति तङ्, विद्याविषये ज्ञाने शक्तो भवितुमिच्छतीत्यर्थः। शक्तो घटः, कर्तुं शकित इति वा। मैत्रेयाः कर्मणि निष्ठायां शकेरिटमिच्छन्ति विकल्पेनेत्यादिकन्यः। 'विभाषा भावादिकर्मणोरि'त्यत्र हरदत्तः। यद्यपि शकिः केवलोऽकर्मकस्तथापि तुमुन्नन्तवाच्यक्रियाविषयत्वे सकर्मको भवति, तथा च कर्मणि लादयोऽपि दृश्यन्ते। अयं योगः शक्योऽवक्तुमितीति। शक्यम्। 'शकिसहोश्चे'ति यत्। शकलम्। 'शकिशम्योर्नित्'ति कलप्रत्ययः। शक्रः। 'स्फायितञ्चि'ति रः। शक्तः प्रियवदः॥ शक्यादिभ्यः क्त इत्यूहितः क्तः॥ १५॥

राध साध संसिद्धौ॥ राध्नोति। राध्नुवन्ति। राध्नुवः। राध्नोतु। राध्नुहि। अराध्नोत्। राध्नुयात्। शेषं राध्यतिवत्। हिंसार्थत्वे तु 'राधो हिंसायामि'ति किति लिटि थलि च सेटि एत्वाभ्यासलोपौ। अपरेधतुः। अपरेधुः। अपरेधिथेत्यादि। तथा सन्यपि राधो हिंसायां सन्यच्च इस्वक्तव्य' इति अच इस्भावेऽभ्यासलोपे 'स्कोरि'ति सलोपे च प्रतिरित्सतीति। साध्नोति। ससाध। ससाधतुः। ससाधिथ। ससाधिव। क्रादिनियमादिड्विकल्पो न भवति, तस्य त्वसन्तविषयत्वात्, साद्धा।

साध्नोतु । असाध्नोत् । साध्नुयात् । साध्यात् । असात्सीत् । असाद्धाम् । सिषात्सति । 'आदेशप्रत्यययोरि'ति षत्वम् । सासाध्यते । सासाद्धि । साधयति । असीषधत् । कालापास्त्वषोपदेशं पठन्ति । तत् षोपदेशलक्षणविरुद्धम् । साधनः । ण्यन्तान्नन्द्यादित्वात् ल्युः । साधुः । 'कृवापाजी'त्युण् । मातरि साधुः । 'साध्वसाधुप्रयोगे सप्तमी वक्तव्ये'ति सप्तमी, अनर्थार्थमिद वार्त्तिकमर्च्चायां तु 'साधुनिपुणाभ्यामर्च्चायामि'त्येव सिद्ध, त[1]स्मादेवात्रार्च्चाग्रहण निपुणार्थं सपद्यते । साधुर्भृत्यो राज्ञ इत्यत्र भृत्यापेक्षया षष्ठी न साध्वपेक्षयेति वाक्यार्थज्ञा आहुरिति कैयटादौ प्रतिपादितम् । अप्रतेरितिवचनात्साधुर्देवदत्तो मातरं प्रतीत्यत्र न भवति । 'अप्रत्यादिभिरिति वक्तव्य'मिति वार्तिकम्, तत्रादिग्रहणेन लक्षणेत्थंभूतेत्यत्र प्रतिना सहोपात्तयोः पर्यन्वोर्ग्रहः । टुनोत्यन्तभूतये नुदान्ताः परस्मैभाषाः ॥ १६ ॥ १७ ॥

अथ सेट आह ॥

अशू व्याप्तौ सघाते च ॥ अश्नुते । अश्नुवाते ॥ अश्नुवते । अश्नुषे । अश्नुध्वे । अश्नुवे । अश्नुवहे । 'शादि'ति तवर्गस्य श्चुत्वनिषेधः । आनशे । आनशाते । आनशिषे । आनक्षे । आनशिध्वे । आनड्ढ्वे । आनशिवहे । आनश्वहे । आनशिमहे । आनश्महे । ऊदित्त्वाद्विकल्पः । झलि'व्रश्चा'दिना षत्व, 'षढोः क सि', 'ष्टुना ष्टुरि'ति कत्वषत्वे यथायोगम् । 'अत आदेरि'त्यभ्यासस्य दीर्घत्वे ततः परस्या'श्नोतेश्चे'ति नुडागमः । अष्टा । अशिता । अक्ष्यते । अशिष्यते । अश्नुताम् । अश्नुष्व । आश्नुत । आश्नुथाः । आश्नुवि । अश्नुवीत । अश्नुवीथाः । अश्नुवीयात् । आशिषि अशिषीष्ट । अक्षीष्ट । आशिष्ट । आष्ट । आशिषाताम् । आक्षाताम् । 'झलो झली'ति सिच्लोपे षत्वष्टुत्वे । अन्यत्र षत्वे कत्वम् । अशिशिषते । 'स्मिपूङ्रञ्ज्वशां सनी'ति नित्यमिट् । आशाश्यते । 'सूचिसूत्री'त्यादिना यङ् । तत्र ह्यश्नोतेरश्नातेश्च ग्रहणमुक्त पदमञ्जर्यादौ । एवं पारायणादौ आत्रेया[2]दावपि ।

---

१ तदर्थादिति ४ पु॰ पा॰ ।    २ आत्रेयमैत्रेयादाविति ३ पु॰ पा॰ ।

षड्लुकि आष्टीत्यादि, अटीत्येव प्रक्रिया । अष्ट्वा । अशित्वा । अष्टः । अष्टवान् । 'यस्य विभाषे'त्यनिट्त्वम् । रशना । 'अशे रश चे'ति युचि रशादेशः । आशुः । व्रीहिविशेषः । 'कृवापाजी'त्यादिनोण्प्रत्ययः । शीघ्रपर्यायस्त्वयमव्ययम् । श्वशुरः । 'शावशेराप्ता'विति शुशब्द उपपदे उरन् प्रत्ययः । आशुपर्यायः शुशब्दः । श्वशुर्यः । 'राजश्वशुराद्य' इति अपत्ये यत् । श्वश्रूः । 'श्वशुरस्योकाराकारयोर्लोपश्चे'त्युकाराकारयोर्लोप ऊङ्प्रत्ययश्च । श्वश्रूश्च श्वशुरश्च श्वशुरौ । 'श्वशुरः श्वश्र्वे'ति पक्षे श्वशुरस्य शेषः । अक्षरम् । 'अशेः सर'विति सरन् प्रत्ययः । अष्टन् । सप्यशूभ्यां तुट् चे'ति कनिन्, तस्य तुडागमः । अष्टौ, अष्टाभिः । अष्टाभ्यः । अष्टानाम् । अष्टासु । 'अष्टन आ विभक्ता'विति पक्षे आकारः । 'अष्टाभ्य औशि'ति जश्शसोरौभावः । अत्र लघ्वर्थमष्टन इति वक्तव्ये अष्टाभ्य इति निर्देशादष्टन आत्वपक्षे एवौशभावः । अयमेव निर्देश आत्वविकल्पे लिङ्गं, तेनाभावे जश्शसोः 'षड्भ्यो लुगि'ति लुक्यष्टे'ति भवति । 'अष्टाधिकारे तस्य तदुत्तरपदस्य चेति' परमाष्टेति भवति। आत्वमप्यादृमिति तत्रापि पूर्ववत्तदन्तविधिर्द्रष्टव्यः । अष्टावक्रः । 'अष्टनः संज्ञायामि'त्युत्तरपदे दीर्घः । अष्टाभिर्गोभिर्युक्तं शकटमष्टागवम् । 'गवि च युक्ते' भाषायामष्टनो दीर्घ इति दीर्घः । अष्टात्रिंशतिः । 'द्व्यष्टनः संख्यायामबहुव्रीह्यशीत्योरि'त्यशीतिवर्जिते संख्यायामुत्तरपदे दीर्घः । अबहुव्रीह्यशीतिवचनादष्टनवा इत्यत्र न भवति । 'प्राक् शतादि'ति वचनादष्टशतमित्यादावपि न भवति । अष्टमो भागः आष्टमः, अष्टमः । 'षष्ठाष्टमाभ्यां ञ चे'ति भागे विवक्षिते ञप्रत्ययश्चकारादन्‌श्च । अश्वः । 'अशूप्रुषी'ति क्वन् । अश्वानां समूहो ऽश्वीयम् । 'केशाश्वाभ्यां यञ्छावन्यतरस्यामि'ति छः । अन्यतरस्याङ्ग्रहणात्पक्षेऽण् । आश्वम् । अश्वस्य निमित्तं संयोग उत्पातो वा आश्विकः । 'आर्हादि'ति ठक् । गोद्व्यचलक्षणो यत्तन्नैव संख्यापरिमाणाश्वादीनां पर्युदासाद्भवति । अश्वेनैकाह्नेन गम्यते आश्वीनः । 'अश्वस्यैकाहगम' इति खञ् । अश्वस्यापत्यमाश्वायनः । 'अश्वादिभ्यः फञि'ति फञ् । गवाश्वम् । 'गवाश्वप्रभृतीनि चे'ति

नित्यमेकवद्भावः, पूर्वपदस्यावङ् च । अश्वस्यति वडवा । मैथुनमिच्छतीत्यर्थः । क्यचि परतो ‘ऽश्वक्षीरे’त्यसुक् । अत्र ‘ह्यश्ववृषयोर्मैथुनेच्छायामि’ति पठ्यते । अन्यत्राश्वीयति । अश्वतरः । गर्दभादश्वायामुत्पन्न उच्यते । ‘वत्सोक्षाश्वर्षभेभ्यश्च तनुत्वे’ इति ष्टरच् । अश्वशब्दार्थस्य व्यक्तेस्तनुत्वं प्रवृत्तिनिमित्तजातिद्वारकं, प्रवृत्तिनिमित्तं चेहाश्वादन्यस्मिंस्तत्सदृशे जात्यन्तरयोगिनि आरोप्यत इति गौणत्वं तनुत्वम् । ष्टरचः षित्त्वात्स्त्रियामश्वतरी । अक्षः । ‘अशेर्देवन’ इति सप्रत्ययः । अक्षपरि । अक्षेण न तथा पतितं यथा जय इत्यर्थः । ‘अक्षशलाकासंख्याः परिणे’ति तृतीयान्तस्याव्ययीभावः । ‘कितवव्यवहारे चायं समास इष्यते’ । अक्षि । अक्षिणी । ‘अशेर्नित्’ इति क्सिप्रत्ययः । अयमक्षतौ च व्युत्पादितः’ । वक्तव्यं चान्यत्तत्रैवोक्तम् ॥ १८ ॥

ष्टिघ आस्कन्दने ॥ कवर्गचतुर्थान्तः । स्तिघ्नुते । तिष्टिघे । स्तेघिता । स्तेघिष्यते । स्तिघ्नताम् । अस्तिघ्नत । स्तिघ्नेत । आशिषि स्तिघिषीष्ट । अस्तेघिष्ट । तिष्टिघिषते । तिष्टेघिषते । स्तिघित्वा । स्तेघित्वा । ‘रलो व्युपधादि’ति कित्त्वविकल्पः । तेष्टिघीति । तेष्टेग्धि । स्तेघयति । अतिष्टिघत् । खयः शेषः । स्तिघितः । स्तिघितवान् । उदात्तावनुदात्तेतौ ॥ १९ ॥

तिक तिग च ॥ चकारादास्कन्दने इत्यनुषज्यते । तिक्नोति । तितेक । तितेकिथ । तितिकिव । तेकिता । तेकिष्यति । तिक्नोतु । अतिक्नोत् । तिक्नुयात् । आशिषि तिक्यात् । अतेकीत् । तितेकिषति । तेतिक्यते । तेतिकीति । तेतेक्ति । तेकयति । अतीतिकत् । तिकः । इगुपधलक्षणः कः । तैकायनिः । ‘तिकादिभ्यः फिञि’त्यपत्ये फिञ् । तैकायनयश्च कैतवायनयश्च तिककितवाः । ‘तिककितवादिभ्यो द्वन्द्वे’ इति बहुषु लुक् । तिग्नोति । तितेग । तेगितेत्यादि तिक्नोतिवत् ॥ २० । २१ ॥

षघ हिंसायाम् ॥ सघ्नोति । ससाघ । सेघतुः । सेघिथ । सेघिव । सघिता । सघिष्यति । सघ्नोतु । असघ्नोत् । सघ्नुयात् । आशिषि सघ्यात् । असघीत् । असाघीत् । ‘अतो हलादेरि’ति वा वृद्धिः ।

यन्ति । तन्मते दम्भतुरित्याद्यपि भवति । दम्भिता, दम्भिष्यति, दभ्नोतु । अदभ्नोत् । दभ्नुयात् । दभ्यात् । अदम्भीत् । दिदम्भिषति । 'सनीवन्ते' तीड्विकल्पः । इडभावे धिप्सति । धीप्सति । 'दम्भ इच्चे' त्यकारस्येकार ईकारश्च । 'हलन्ताच्चे' ति सनः किन्त्वादनुनासिकलोपः । अत्र हल्शब्देन जातिराश्रीयते 'एकाच' इति भष्भावे दकारस्य धकारः, 'खरि चे' ति चर्त्वे भकारस्य पकारः । अत्रेकसमीपाद्धलः परः सन्भवति, हल्जातेराश्रयणात् । जातेः समीपत्वं सनः पूर्वत्वं च व्यक्तिद्वारेण । तथा च वार्तिकं, 'दम्भेर्हल्ग्रहणस्य जातिवाचकत्वात्सिद्ध'मिति । दादभ्यते । दादम्भि । दम्भयति । अददम्भत् । दम्भित्वा । दब्ध्वा । उदित्त्वादिड्विकल्पः । दब्धः । दब्धवान् । 'यस्य विभाषे' त्यनिट्त्वं, दब्धिः । 'तितुत्रेती' णिनषेधः, दभिरिति सौत्रो धातुस्तस्मा 'दासुयुवपी'-त्यादौ चकारस्यानुक्तसमुच्चयार्थत्वात् 'पोरदुपधादि' ति यतोऽपवादे ण्यति दाभ्यः ॥ २४ ॥

ऋधु वृद्धौ ॥ ऋध्नोति । ऋध्नोतु । आर्ध्नोत् । ऋध्नुयात् । शेषमृध्यतिवत् । अयमकर्मकः सकर्मकश्च । अत्र तृप प्रीणनइत्यात्रेयादयः पठन्ति । तृप्नोतीत्याद्युदाहरन्ति । अमु न्यामकारादयो नेच्छन्ति । यदाहुः । तुभ्नादिषु तृप्नोतीति व्यत्ययेन श्नुरिति । तृप्यतिदृप्यती सर्पिमित्यनिट्कारिकासु श्यना निर्देशस्य व्यावर्त्यत्वे तुदादीयौ तृपिदृपी, तावुदात्ताविति वृत्तिकारेणाभिधानात्सोप्यमुं नेच्छतीति प्रतीयते । पुरुषकारेण्येव प्रतिपादितम् ॥ २५ ॥

छन्दसि ॥ आ गणान्तात् छन्दसीत्यर्थः । अन्यस्तु छन्दस्यह व्याप्ताविति पठित्वा छन्दोग्रहणमह्नोतिविशेषणं मन्यते । तच्छाकटायनमैत्रेयादयो न सहन्ते ॥

अह व्याप्तौ ॥ अह्नोतीत्यादि ॥ २६ ॥

दघ घातने पालने च ॥ दघ्नोतीत्यादि । धाराधरा एव धराधराणां निदाघदाघौघविघातदक्षा इति । अत्र दघ घातने इति स्वादिः, ततो निदघ्यते ऽनेनेति कृत्वा निदाघशब्दः साधुरिति पारायणिका इति

सुधाकरस्तदपाणिनीयम् मत्तायामर्थमेघनिदाघ'वदाघा इति न्यङ्क्वादौ पठित्वा दहनेर्घत्रि अनुत्पादनात् । तथा च तत्र वृत्तिः, अपूर्वस्य निपूर्वस्य च दहेरिति ॥ २७ ॥

चमु भक्षणे ॥ चम्नोतीत्यादि ॥ २८ ॥

रि क्षि चिरि जिरि दाश दृ हिंसायाम् ॥ रिणोति । क्षिणोतीत्यादि । अयं भाषायामपीत्यात्रेयमैत्रेयादयः । प्रयुज्यते च । इमां हृदि व्यायनपातमक्षिणोत् । न तद्यशः शस्त्रभृता क्षिणोति । पञ्चबा[1]णः क्षिणोतीति । शाकटायनादयस्तु छान्दसत्वमेवाहुः । केचित्तु दुङमपि पठन्ति, दुनुते इति । यदाह दुर्ग. । तिक निग पघ रि क्षि चिरि जिरि दाश् दृ दुङ् हिंसाया, छान्दसाश्चामी [2]परस्मैभाषा उदात्ता इति ॥ ३४ ॥

वृत् ॥ स्वादयो वृत्ता इत्यर्थः ॥

इति पूर्वदक्षिणपश्चिमसमुद्राधीश्वरश्रीकम्पराजसुतसङ्गमसहाराजमहामन्त्रिणा सायणसुतेन माधवसहोदरेण सायणाचार्येण विरचितायां माधवीयाया धातुवृत्तौ स्वादयः सपूर्णा. ॥



१ पञ्चबाणैरिति ४ पु॰ पाठस्तत्र समासश्चिन्त्यः ।
२ परस्मैभाषा उदात्ता इति ४ पु॰ नास्ति ।

## अथ तुदादयः ॥

तुद व्यथने ॥ तुदति । तुदतः । तुदन्ति । तुदसि । तुदथः । तुदथ । तुदामि । तुदावः । तुदामः । 'तुदादिभ्यः श' इति शब्विषये शः । तुदती, तुदन्ती स्त्री । तुदती कुले । तुदन्ती कुले 'आच्छीनद्योर्नुम्' इति शत्रन्तस्य शीनद्योर्नुम्विकल्पः । तुदते । तुदन्ते । तुदसे । तुदेथे । तुदध्वे । तुदे । तुदावहे । तुदामहे । तुतोद । तुतुदतुः । तुतोदिथ । तुतुद । तुतोद । तुतुदिव । तुतुदे । तुतुदाते । तुतुदिरे । तुतुदाथे । तुतुदिध्वे । तुतुदे । तुतुदिवहे । क्रादिनियमादिट् । तोत्ता । तोत्स्यति । तोत्स्यते । तुदतु । तुदतात् । तुदताम् । तुदन्तु । तुद । तुदतात् । तुदतं, तुदत । तुदानि । तुदाव । तुदता, तुदेताम् । तुदन्ताम् । तुदस्व । तुदेथा, तुदध्व, तुदै । तुदावहै । अतुदत् । अतुदः । अतुदम् । अतुदत । अतुदथाः । अतुदे । तुदेत् । तुदेतां, तुदेयुः । तुदे । तुदेय, तुदेत । तुदेयाता, तुदेरन् । तुदेथाः । तुदेय । तुदेवहि । आशिषि तुद्यात्, तुद्यास्ताम् । तुत्सीष्ट । तुत्सीयास्तां, 'लिङ्सिचावात्मनेपदेष्वि' ति कित्त्वान्न गुणः । अतौत्सीत् । अतौत्ताम् । अतौत्सीः । अतौत्सम् । 'वदव्रजे' ति वृद्धिः । 'झलो झली' ति सिचो लोपः । अतुत्त । अतुत्सातां, तुतुत्सति । तुतुत्सते । 'हलन्ताच्चे' ति सनः कित्त्वम् । तोतुद्यते । तोतुदीति । 'नाभ्यस्तस्ये' ति गुणनिषेधः । तोतोत्ति । लघूपधगुणः । तोदयति । अतूतुदत् । तिलंतुदः । 'वातशुनी' त्यादिना खश् । विधुंतुदः । अरुंतुदः । 'विध्वरुषोस्तुद' इति खश् । 'अरुर्द्विषदजन्तस्ये' ति मुम् । 'संयोगान्तस्ये' त्यरुषः सकारस्य लोपः । तोत्त्रम् 'दाम्नी' त्यादिना करणे ष्ट्रन् । प्रतोदः । 'हलश्चे' ति संज्ञायां करणे घञ् । तुत्त्वा । तुन्नः, तुन्नवान् । 'रदाभ्यामि' ति निष्ठानत्वम् । तुद्यम् । 'पातृतुदिवचिरिचिसिचिभ्यस्थगि' ति थक् ॥ १ ॥

णुद प्रेरणे ॥ प्रणुदते । प्रणुदति इत्यादि तुदिवत् । 'उपसर्गादसमासेऽपी' ति णत्वम् । नुत्वा । नुत्तः । नुन्नः । नुत्तवान् । नुन्नवान् । 'नुदविदे' ति नत्वविकल्पः । काकुर्जिह्वा सास्मिन्नुद्यते इति काकुदं

तालु । 'घञर्थे कविधानमि'ति कः । पृषोदरादित्वान्नुगन्तस्येप. पर-रूपं च । शोकापनुदः । 'तुन्दशोकयोः परिमृजापनुदोरि'त्यनयोः कर्मणो रुपपदयोः परिमृजापनुदोः कप्रत्ययः । कर्मण्यणोऽपवादः । अयं च शोकमपनुद्य सुखस्याहर्त्तरि, 'आलस्यसुखाहरणयोरिति वक्तव्यमि'ति वचनात् । यस्तु दुःखमेव शोकमपनुदति सुखं नाहरति तत्राणि शोकापनोद इति भवति । अयं परस्मैपदिष्वपि पठ्यते । तेनायं भाषायां परस्मैपद्येवेति वर्द्धमानः । स्वाम्यपि तथा परस्मैपदिष्वेवामुं पपाठ । उभयमप्येतन्मैत्रेया-द्यनेकव्याख्यानविरुद्धम्, यदात्मनेपदिषु पठित्वास्य पुनः परस्मैपदिषु पाठः कर्त्रभिप्रायेऽपि परस्मैपदार्थ इति ॥ २ ॥

दिश अतिसर्जने ॥ दिशति । दिशते । दिदेश । दिदेशिथ । दिदिशिव । दिदिशे । दिदिशिरे । दिदिशिषे । दिदिशिवहे । देष्टा । देक्ष्यति । देक्ष्यते । 'व्रश्चा'दिना षत्वे 'षढोः कस्सि' इति कत्वे, दिशतु । दिशताम् । अदिशत । अदिशत । दिशेत् । दिशेत । आशिषि दिश्यात्, दिक्षीष्ट । अदिक्षत् । अदिक्षताम् । अदिक्षत् । अदिक्षत । अदिक्षत । अदिक्षाताम् । अदिक्षथाः । अदिक्षि । अदिक्षावहि । 'शल इगुपधादनिटः क्सः' इति क्सः, 'क्सस्याचि' इत्यन्त्यलोपः । दिदिक्षति । दिदिक्षते । 'हलन्ताच्चे'ति कित्त्वम् । देदिश्यते । देदिशीति । देदेष्टि । देशयति । अदीदिशत् । दिक् । दिशौ । दिशः । 'ऋत्विगि'त्यादिना क्विनि 'क्विन्प्रत्ययस्य कुरि'ति कुत्वे द्वितीयः, पदान्ते तस्य जश्त्वे गकारः, 'वावसाने' इति चर्त्वे ककारः । न च कुत्वे जश्त्वे पूर्वत्रासिद्धं, 'दिगादिभ्यो यदि'ति निर्देशात् । नापि कुत्वे व्रश्चादिषत्वे ऽसिद्धम् । षत्वापवादत्वात्तस्य । प्रतिदिशम् । वीप्सायामव्ययीभावः । 'अव्ययीभावे शरत्प्रभृतिभ्य' इति टच् समासान्तः । दिशा । आप चापि हलन्तानामिति भागुरिवचनात् टाप् । दिशि भवं दिश्यम् । 'दिगादिभ्यो यदि'ति यत्, नामादेशं युध्यते । 'नाम्न्यादिशिग्रहोरि'ति द्वितीयान्ते नाम्न्युपपदे आदिशेर्धातुसम्बन्धे णमुल् । वाक्यं समासो वा स्तु, 'तृतीयाप्रभृतीनी'ति समासो विकल्प्यते । नामादिश्य युध्यत इति तत्रापि

ओविजी भयचलनयोः ॥ प्रायेणायमुत्पूर्वः । उद्विजते । उद्विविजे । उद्विविजिषे । उद्विजिता । उद्विजिष्यते । 'विज इडि' ति इडादेरञ्गितः प्रत्ययस्य ङित्त्वान्न गुणः । उद्विजताम् । उदविजत । उद्विजेत । उद्विजिषीष्ट । उदविजिष्ट । उद्विविजिषते । उद्विजित्वा क्त्विसनो 'रलो व्युपधादि' ति कित्त्वस्य पाक्षिकत्वेप्यस्य 'विज इडि' ति ङित्त्वमिति न गुणः । उद्वेविज्यते । उद्वेविजीति । उद्वेवेक्ति । उद्वेजयति । उदवीविजत् । उद्विग्नः । उद्विग्नवान् । ईदित्त्वादनिट्त्वम् । चोः कुत्वम् । ओदित्त्वान्निष्ठानत्वम् । वेगितमिति घञन्ताद्वेगशब्दादितचि । उद्वेजितमिति ण्यन्तस्य निष्ठायामिटि । वेवेक्ति वेविक्ते इति जुहोत्यादौ पृथग्भावे ॥ ९ ॥

ओलजी ओलस्जी व्रीडायाम्[1] ॥ लजते । लेजे । लेजिषे । लजिता । लजिष्यते । लजताम् । अलजत । लजेत । लजिषीष्ट । लिङौ । अलजिष्ट । लिलजिषते । लालज्यते । लालजीति । लालक्ति । लाजयति । अलीलजत् । लजित्वा । लग्नः । लग्नवान् । ईदित्त्वादनिट्त्वम् । ओदित्त्वान्निष्ठानत्वम् । अयं तवर्गपञ्चमादिरिति चान्द्राः । तन्मतेन नग्ननग्निकाशब्दव्युत्पत्तौ तवर्गादिरयं स्वामिना पठितो न तु स्वमतेन, यदाह । ओलजी ओलस्जी व्रीड इति चान्द्रा इति । आत्रेयमैत्रेयस्वामिसमताकारशाकटायनादयः सर्वे यणादिमेवाहुः । नग्नशब्दस्तु पृषोदरादित्वाद्वर्णव्यत्ययेनेति मैत्रेयः । लज्जते । ललज्जे । लज्जिता । लज्जिष्यते । लज्जताम् । अलज्जत । लज्जेत । लज्जिषीष्ट । अलज्जिष्ट । अलज्जिषाताम् । अलज्जिषत । लिलज्जिषते । जश्त्वश्चुत्वे । लालज्ज्यते । लालज्जीति । लालक्ति । 'स्कोरि' ति सलोपः । लज्जयति । अललज्जत् । लज्जित्वा । लग्नः । लग्नवान् । निष्ठानत्वस्य सिद्धत्वात् 'स्कोरि' ति सलोपः । लज्जा । 'गुरोश्च हल' इत्यकारः । लज्जित इतीतचि । शप्यनयोरपाठः स्वरार्थः । शपि हि 'तास्यनुदा-

---

1 व्रीडे इति ३ पु॰ पाठः ।

तेन्ङिदि' त्यादिना लसार्वधातुकानुदात्तत्वे शपश्च पित्त्वादनुदात्तत्वे धातुस्वरेणाद्युदात्तं स्यात् । शे तु प्रत्ययस्वरेण मध्योदात्तं भवति । लजति लाजति लस्जति लाञ्जतीति चत्वारः शपि भर्त्सने । जुषादय उदात्ता अनुदात्तेतः ॥ १०–११ ॥

ओ[1]दिदुदात्तसोपधप्रसङ्गाद्व्रश्चमपि परस्मैपदिनमाह ॥

ओव्रश्चू छेदने ॥ वृश्चति । 'ग्रहिज्या' दिना सम्प्रसारणे पूर्वरूपत्वे 'स्तोः श्चुना श्चुरि' ति सकारस्य शकारः । वव्रश्च । वव्रश्चतुः । वव्रश्चिथ । वव्रष्ठ । वव्रश्चिव । असंयोगान्तत्वेन लिटः कित्त्वाभावाद् 'ग्रहिज्या' दिना सम्प्रसारणं न भवति । अभ्यासस्य 'लिट्यभ्यासस्ये' ति सम्प्रसारणे 'स्तोः श्चुना श्चुरि' ति सकारस्य शकारः । 'न सम्प्रसारणे सम्प्रसारणमि' ति पूर्वस्य निषेधाद्रेफस्यैव सम्प्रसारणप्रसङ्गः, उरदत्त्वस्याङ्गत्वादङ्गाक्षिप्तप्रत्ययेन परनिमित्तत्वा 'दचः परस्मिन्नि' ति स्थानिवत्त्वेन सम्प्रसारणपरत्वात् । ऊदित्त्वात्सर्वत्रेड्विकल्पः । क्रादिनियमप्रतिषिद्धविषये थल्यपि विकल्प एव भवति । तत्रेडभावे झल्परत्वात् 'स्कोरि' ति सलोपे व्रश्चादिना षत्वे ष्टुत्वम् । व्रष्टा, व्रश्चिता । व्रक्ष्यति । व्रश्चिष्यति । अनिटि सलोपषत्वयोः 'षढोः कः सी' ति कत्वं, वृश्चतु । अवृश्चत् । वृश्चेत् । आशिषि वृश्च्यात् । अव्रश्चीत् । अव्रश्चिष्टाम् । अव्रश्चिषुः । अव्रश्चीः । अव्रश्चिष्टम् । अव्रश्चिष्ट । अव्रश्चिषम् । 'नेटी' ति न वृद्धिः । अनिटि त्वव्राक्षीत् । पूर्ववत्सलोपषत्वयोः कुत्वम् । अव्राष्टाम् । 'झलो झली' ति सिचो लोपे प्रत्ययलक्षणेन 'षढोः कः सी' ति न भवति । तस्य वर्णाश्रयत्वाद्वर्णाश्रये च प्रत्ययलक्षणाभावात् । विव्रश्चिषति । विव्रक्षति । वरीवृश्च्यते । 'रीगृत्वत' इति रीक् । वाव्रष्टि । वाव्रष्टः । व्रश्चतीति श्तिपा निर्देशाद् ङिद्वचनेषु न सम्प्रसारणम् । व्रश्चयति । अवव्रश्चत् । व्रश्चित्वा । 'जॄव्रश्च्योः क्त्वी' ति नित्यमिट् । 'न क्त्वा सेडि' त्यकित्त्वान्न सम्प्रसारणम् । वृक्णः । वृक्णवान् । 'यस्य विभाषे' त्यनिट्त्वम् । ओदित्त्वान्निष्ठानत्वं तस्य पूर्वत्रा-

१ ओदिदुदात्तेति ४ पु नास्ति ।

सिद्धत्वात् झल्परत्वेन 'स्कोरि'ति सलोपः । 'चोः कुरि'ति कुत्वं च । 'निष्ठादेशः षत्वस्वरप्रत्ययेड्विधिषु सिद्धो वक्तव्य' इति व्रश्चादिषत्वे निष्ठादेशस्य सिद्धत्वात् झल्परत्वाभावान्न षत्वम् । व्रस्क्यः । व्रस्कः । यवद्वणौ । 'चजोः कुघिण्ण्यतोरि'ति कुत्वम् । अझल्परत्वात्सलोपो न भवति । वव्रश्चेत्यादौ वकारयोपदेशसामर्थ्याद्रेफे वलि परतो लोपो न भवति । न च वृश्चतीत्यादौ सम्प्रसारणे झल्परत्वाभावाद्वकारमुपदेशस्य प्रयोजनं, तत्रापि सम्प्रसारणस्य क्ङित्प्रत्ययापेक्षत्वेन बहिरङ्गत्वे नासिद्धत्वादस्ति वलोपप्रसङ्ग इति । वृक्णः । 'स्नुव्रश्चिकृत्यृषिभ्यः कि-दि'ति सप्रत्यये षत्वे कुत्वं, 'स्कोरि'ति सलोपश्च ॥ १२ ॥

व्यच व्याजीकरणे ॥ विचति । 'ग्रहिज्यादिना' क्ङिति संप्रसारणं, विव्याच । विविचतुः । विव्यचिथ । विविचथुः । विविच । विव्याच । विविचिव । अपितो लिटः कित्त्वात्संप्रसारणे द्विर्वचनं, पिति तु 'लिट्यभ्यासस्योभयेषामि'त्यभ्यासस्य । 'व्यचेः कुटादित्वमनसी'त्यडिणत्प्रत्यये विधीयमानं ङित्त्वमनसीतिपर्युदासेन तत्सदृशे कृतीति हरदत्तादयः । तेन यत्युत्तमे णलि च णित्त्वाभावपक्षे नास्ति ङित्त्वं नापि कित्त्वं, पित्लिट्त्वादिति न संप्रसारणम् । अन्ये तु प्रसज्यप्रतिषेधमाश्रयन्ते, तेनात्रापि ङित्त्वमस्तीति संप्रसारणं मन्यन्ते । प्रसज्यप्रतिषेधाश्रयणे प्रमाणं मृग्यं, वाक्यभेदप्रसङ्गात् । व्यचिता । व्यचिष्यति । विचतु । अविचत् । विचेत् । आशिषि विच्यात् । अव्याचीत् । अव्यचिष्टाम् । अव्यचीत् । अव्यचिष्टाम् । 'अतो हलादेरि'ति वा वृद्धिः । विव्यचिषति । तासिस्यसिचां सनश्चाकृत्त्वान्न ङित्त्वमिति न संप्रसारणं, प्रसज्यप्रतिषेधवादिनामत्रापि ङित्त्वात्संप्रसारणेन भाव्यम् । वेविच्यते । वाव्यचीति । वाव्यक्ति । श्तिपा निर्देशान्न सम्प्रसारणम् । व्याचयति । अविव्यचत् । विचित्वा । 'न क्त्वा सेडि'त्यकित्त्वेपि क्त्वः कृत्त्वाद्व्यचेः कुटादित्वमिति ङित्त्वेन सम्प्रसारणं गुणाभावश्च । विचितः । उरुव्यचाः । गतिकारकपूर्वस्यापीत्यसुन् । अनसीतिपर्युदासान्न ङित्त्वम् ॥ १३ ॥

उछि उञ्छे ॥ उछी विवासे ॥ उच्छति । उच्छतीत्यादि । भ्वादौ व्याख्यातौ ॥ १४–१५ ॥

ऋच्छ गतीन्द्रियप्रलयमूर्तिभावेषु ॥ ऋच्छति । 'छे च' इति तुक्. तुकि यद्वक्तव्यं तत्सर्वं भ्वादावृच्छतौ द्रष्टव्यम् । आनर्च्छ । आनर्च्छतुः । आनर्च्छुः । आनर्च्छिथ । आनर्च्छिव । 'ऋच्छत्यॄताम्' इति लिटि गुणः. 'तस्मान्नुड् द्विहलः' इत्यत्र द्विहल्ग्रहणमनेकहलुपलक्षणमिति नुडागम इति हरदत्तादयः । ऋच्छिता । ऋच्छिष्यति । ऋच्छतु । आर्च्छत् । ऋच्छेत् । आशिषि ऋच्छ्यात् । मा भवानृच्छीत् । आर्च्छिष्टाम् । आर्च्छिषम् । ऋचिच्छिषति । अभ्यासे रयः शेषः । ऋच्छयति । मा भवानृचिच्छत् । 'समो गम्यृच्छी' इति सम्पूर्वादस्मादात्मनेपदम्, समृच्छते । समानर्च्छे । समृच्छिता । समृच्छिष्यते । समृच्छताम् । समार्च्छत । समृच्छेत । आशिषि समृच्छिषीष्ट । समार्च्छिष्ट । ऋच्छित्वा । ऋच्छितः । ऋच्छितवान् । कृत्वा वकारे . प्रयोगो 'गुरोश्च हलः' इत्यकारप्रत्ययान्तादृच्छशब्दात्कर्मणि द्वितीयायां न स्यादिति । यतो ऽनृच्छ इत्यभिषिध्यते ॥ १६ ॥

मिच्छ उत्क्लेशे ॥ उत्क्लेशः पीडा । मिच्छति । मिमिच्छ । मिमिच्छतुः । मिच्छिता । मिच्छिष्यति । मिच्छतु । अमिच्छत् । मिच्छेत् । आशिषि मिच्छ्यात् । अन्तरङ्गत्वात्पूर्वं तुगिति न लघूपधगुणः । वृद्धिस्तु 'नेटीति' निषिध्यते । मिमिच्छिषति, मेमिच्छ्यते । मेमिच्छीति । मेमेष्टि । मिच्छयति । अमिमिच्छत् ॥ १७ ॥

जर्ज चर्च झर्झ परिभाषणभर्त्सनयोः ॥ जर्जति । जजर्ज । चर्चति । चर्चिका । संज्ञायां क्वुन्, ण्वुल्वा । झर्झति । जझर्झ । जर्जरः । झर्झरः । बाहुलकाद् रवन्तौ । आद्यन्तावपि चान्तावित्येके । चर्चतिझर्झत्योः शपि पाठः स्वरार्थ इत्युक्तम् ॥ १८–१९–२० ॥

त्वच संवरणे ॥ त्वचति । तत्वाच । त्वचिता, त्वचिष्यति । त्वचतु । अत्वचत् । त्वचेत् । त्वच्यात् । अत्वाचीत् । अत्वचीत् । 'अतो

लोभयति । अलूलुभत् । विलुभिताः केशाः । 'लुभो विमोहन' इति क्त्वा-निष्ठयोर्नित्यमिट् । गार्ध्ये तु लुभ्यतीति गतम् ॥ २५ ॥

रिफ कत्थनयुद्धनिन्दाहिंसादानेषु ॥ रिफति । रिरेफेत्यादि लुभिवत् । क्त्वायां 'रलो व्युपधादि'ति न कित्त्वविकल्पः । 'नोपधात्थफान्ते'त्यत्र नोपधग्रहणसामर्थ्यात् । यदि हि स्यात्किं नोपधग्रहणेन । न च ऋफ तृफ हिंसायामित्यृकारोपधो व्यावर्त्यः । त्रैशब्द्यं हि नः साध्यम्, रिफित्वा रिम्फित्वा अर्फित्वेति । एतच्च सत्यसति नोपधग्रहणे भवत्येव । सति च[1] नोपधस्य 'न क्त्वा सेडि'ति प्रतिषेधे सति अर्फित्वेति भवति । नोपधस्य त्वस्मिन्विकल्पे रिफित्वा रिम्फित्वेति । असत्यपि नोपधस्य ग्रहणे सर्वत्रास्मिन्विकल्पे प्रवृत्तेपीदमेव रूपत्रयं भवति । रिहीति द्रमिडा इति स्वामी । अनिट्कारिकासु वामनश्च रिहितुही धातुषु न पठ्येते कैश्चिदभ्युपगम्येते इति । अत्र न्यासे कैश्चिदित्यापिशलिप्रभृतिभिरिति । तस्मात्तावपि स्त एव । प्रयुज्यते च शिशुं न विप्रा मतिभी रिहन्तीति ॥ २६ ॥

तृप तृम्फ तृप्तौ ॥ आद्यः प्रथमान्त इति वामनः । यदाह तृप्यतिदृप्यती सृपमित्यनिट्कारिकायां श्यना निर्देशस्य व्यावर्त्यं दर्शयन् तुदादिषु यौ तृपिदृपी तावुदात्तावेवेति । आत्रेयमैत्रेयादयस्तु द्वितीयान्तं पठित्वा प्रथमान्तं वामनः पठतीत्याहुः । तृपति । ततर्प । तर्पिता । तर्पिष्यति । तृपतु । अतृपत् । तृपेत् । तृप्यात् । अतर्पीत् । 'स्पृशमृशकृषे'ति सिचो विकल्पनमङपवाद इति पौवादिकस्यैव । तितर्पिषति । तरीतृप्यते । तर्तर्प्ति । तर्पयति । अतीतृपत् । अततर्पत् । उत्तर्प्तुं । तर्पित्वा । तृपितः । तृप्त्वा तृप्त इति तृप्यतेः । तृम्फति । शस्य ङित्त्वा 'दनिदितामि'ति नलोपे 'शे तृम्फादीनामि'ति नुमागमः । येत्र सानुषङ्गाः पठ्यन्ते तृम्फादय इति, प्रकारवाच्यादिशब्दः, प्रकारश्च सादृश्य, तच्च नकारानुष[2]क्ततयेति हरदत्तः । ततृम्फ । तृम्फिता । तृम्फिष्यति । तृम्फतु । अतृम्फत् । तृम्फेत् । आशिषि तृफ्यात् । यासु-

---

१ तावदिति ४ पु० पाठः ।  २ षङ्गतयेति ४ पु० पा० ।

टः क्त्वायामस्य लोपः । अतृम्फीत् । तितृम्फिषति । तरीतृप्यते । 'रीगृत्वत' इति रीक् । तरीतृम्फीति । तृम्फयति । अततृम्फत । तृफित्वा । तृम्फित्वा । तृफितः । क्त्वायां 'नोपधात्थफान्ताद्वा' इति कित्त्वविकल्पनात्पक्षे नलोपः ॥ २७–२८ ॥

तुप तुम्प तुफ तुम्फ हिंसायाम् ॥ तुपति । तुम्पति । तुफति । तुम्फतीत्यादि पूर्ववत् ॥ गणा भूवादौ पाठः स्वरार्थ इति नन्वेवं क्रम ॥ २९–३०–३१–३२ ॥

दृफ दृम्फ उत्क्लेशे ॥ प्रथम प्रथमान्त इति वामनसूत्रनादुपपादितम् । अन्ये द्वितीयान्त इति । दृफति । दृम्फतीत्यादि ॥ ३३–३४ ॥

ऋफ ऋम्फ हिंसायाम् ॥ ऋफति । आनर्फ । आनृफतुः । ऋम्फति । ऋम्फाञ्चकार । अर्पिफिषति । सनि गुणे 'न न्द्राः' इति रेफवर्जितस्य द्विर्वचनम् । ऋम्फिफिषतीत्यत्राप्यनुस्वारपरसवर्णयोरसिद्धत्वात्ककारवर्जितस्य द्विर्वचनम् । अर्फित्वा । ऋम्फित्वेत्यादि पूर्ववत् ॥ ३५–३६ ॥

गुफ गुम्फ ग्रन्थे ॥ गुफति । जुगोफ । गुम्फति । जुगुम्फेत्यादि ॥ ३७–३८ ॥

उभ उम्भ पूरणे ॥ उभति । उवोभ । ऊभतुः । 'अभ्यासस्यासवर्णे' इति गुणविषये उवङ् । अन्यत्र सवर्णदीर्घः । उम्भति । उम्भाञ्चकारेत्यादि । उभौ । इगुपधात्कः । नित्यं द्विवचनान्तः । सर्वादित्वात्सर्वनामत्वं, तत्कार्याणि 'सर्वनाम्नस्तृतीया च' इत्यादीनि यथासम्भवं नेयानि । उभावयववावस्य उभयो मणिरित्यत्र 'सङ्ख्याया अवयवे तयप्' इति तयपि त 'उभादुदात्तो नित्यम्' इत्ययजादेश उदात्तः । उभाञ्जलि । उभयाञ्जलि । उभाहस्ति । उभयाहस्ति । उभाबाहु । उभयाबाहु । 'द्विदण्ड्यादिभ्यश्च' इति बहुव्रीहाविच्प्रत्ययान्तता निपात्यते । उभाबाहु उभयाबाहु इत्यत्रैव निर्देशादिचो लोप, प्रत्ययलक्षणेनेजन्तत्वादव्ययीभावत्वादव्ययत्वमिति न्यासे । द्विदण्ड्यादिगणपाठादेवैषां साधुत्वे सिद्धे 'द्विदण्ड्यादिभ्यश्च' इति सूत्रमिजन्तत्वविज्ञानार्थमिति,

तस्य च प्रयोजनमव्ययीभावसंज्ञेति हरदत्तादयः । तिष्ठद्गुप्रभृतिषु इजिति पठ्यते, एवं समुदायनिपातनाच्चार्थविशेषे एवावतिष्ठन्ते, तथा च वृत्तिः । द्विदण्डि प्रहरति । द्विमुसलि प्रहरति । एवमुभाञ्जलीत्यादीनामपि प्रहारो ऽन्यपदार्थः । केनोभ्यते इति कुम्भः । कर्मणि घञ् । अयस्कुम्भः 'अतः कृकमिकंसकुम्भेति' विसर्जनीयस्य सः । अत एव कुम्भेतिनिर्देशात्कशब्दाकारस्य लोपः पररूपता वा । कुम्भी । गौरादित्वा 'ज्जातेरस्त्री'ति वा ङीष् । अयस्कुम्भी । लिङ्गविशिष्टपरिभाषया सत्वम् । कुम्भीव नासिका ऽस्य कुम्भीनसः । 'अञ् नासिकायाः संज्ञायामि'त्यादिना नासिकाया नसादेशोच् प्रत्ययश्च ॥ ३९–४० ॥

शुभ शुम्भ शोभार्थे ॥ शुभति । शुम्भतीत्यादि ॥ ४१–४२ ॥

दृभी ग्रन्थे ॥ दृभतीत्यादि । ईदित्त्वान्निष्ठायामनिट्त्वम् । दृब्धः ॥ अयमनिटि चुरादौ ॥ ४३ ॥

चृती हिंसाग्रन्थनयोः ॥ चृतति । चचर्त । चचृततुः । चर्तिष्य । चर्तिता । चर्तिष्यति । चर्त्स्यति । चृततु । अचर्तीत् । चरीचृत्यते । चरीचर्ति । चरीचृतः । चर्तयति । अचीचृतत् । अचचर्तत् । उच्चर्ट्टा । चृतः । चृतवान् । 'यस्य विभाषे'त्यनिट्त्वे सिद्धे ऽस्येदित्त्वेन तस्यानित्यत्वज्ञापनाद्भावित इति सिद्धमिति मैत्रेयः । स्वामिकाश्यपौ तु ईदित्त्व चरीचृतः, चरीचृतवानिति यङ्लुगन्तान्निष्ठायामनिट्त्वार्थमिति ॥ ४४ ॥

विध विधाने ॥ विधति । विवेध । वेधिता । वेधिष्यति । विधतु । अविधत् । विधेत् । विध्यात् । अवेधीत् । विविधिषति । विवेधिषति । विधित्वा । वेधित्वा । वेविध्यते । वेवेद्धि । वेधयति । अवीविधत् । 'रलो व्युपधादि'ति क्त्वासनोः कित्त्वविकल्पः । विधिशब्दमस्मान्मैत्रेय आह । समर्थसूत्रे भाष्यं विधिरिति कोऽयं शब्दः, विपूर्वाद्धाञः कर्मसाधन इकार इति । अत्र कैयटे विध विधानइत्यस्यौणादिकेन्प्रत्ययान्तस्य निवृत्त्यर्थं विपूर्वाद्धाञ इत्युक्तं, स्वरे चानयोर्भेदः, इन्प्रत्ययान्तस्याद्युदात्तत्वात्, किप्रत्ययान्तस्यान्तोदात्तत्वात्, तस्यैव प्रयोगार्थमेवमुक्तमिति ॥ ४५ ॥

नैपुण्यम् । ब्राह्मणादित्वात् ष्यञ् । पित्त्वान् ङीप् । नैपुणी । 'हलस्तद्धितस्ये' ति यलोपः । नैपुणम् । युवादित्वादण् । अनिपुणः । तत्पुरुषो बहुव्रीहिर्वा । तस्येदम् नैपुणम् । अनैपुणम् । 'नञः शुची' त्यादिना पूर्वपदस्य वा वृद्धिरुत्तरपदस्य तु नित्यम् ॥ ५२ ॥

मुण प्रतिज्ञाने ॥ ५३ ॥

कुण शब्दोपकरणयोः ॥ दीर्घोपधः सङ्कोचने आकुस्मीयः ॥ ५४ ॥

शुन गतौ ॥ शुनतीत्यादि । शुनकः । औणादिकः क्वुन् ॥ ५५ ॥

द्रुण हिंसागतिकौटिल्येषु ॥ द्रुणति । द्रुणः खर्जुरः । इगुपधात् कः । द्रुणी कच्छपी । गौरादित्वान् ङीष् । द्रोणः । पचाद्यच् । द्रोणी । पूर्ववन् ङीष् । द्रोणस्य गोत्रमपत्यं द्रौणिः । द्रौणायनः । 'द्रोणपर्वतजीवन्तादन्यतरस्यामि' ति फगिञौ । द्रोणं पचतीति द्रौणी, द्रौणकी । 'तत्पचतीति च द्रोणादण् चे' त्यणठञौ । द्विद्रोणेन धान्यं क्रीणाति । 'प्रकृत्यादिभ्य उपसंख्यानमि' ति तृतीया । अत्रापि द्वितीया प्राप्नोतीति कैयटे । द्वयोर्द्रोणयोः समाहारो द्विद्रोणम् । पात्रादित्वात् स्त्रीत्वाभावः ॥ ५६ ॥

घुण घूर्ण भ्रमणे ॥ घुणति । घूर्णतीत्यादि ॥ घोणते, घूर्णते इति शपि ॥ ५७–५८ ॥

षुर ऐश्वर्यदीप्त्योः ॥ सुरति । सुषोर । सुषुरतुः । 'आदेशप्रत्यययोरि' ति प्रकृतेः षत्वम् । सोरिता । सोषूर्यते । सोषोर्त्ति । सोरयति । असूषुरत् । सुरन्तीति सुराः । इगुपधलक्षणः कः ॥ ५९ ॥

कुर शब्दे ॥ कुरतीत्यादि । अत्र 'हलि चे' ति दीर्घस्य 'न भकुर्छुरामि' ति न निषेधः । करोतेस्तत्र ग्रहणमिति व्याख्यातृभिरभिधानात् ॥ ६० ॥

खुर छेदने ॥ खण्डने चेति मैत्रेयः । खुरति । खुरः । इगुपधलक्षणः कः । कल्याणखुरा । 'स्वाङ्गाच्चोपसर्जनादि' ति ङीषो 'न क्रोडादिबह्वचः' इति निषेधः । खुरणाः । 'खुरखराभ्यां नस् वक्तव्य' इति ना-

सिकाया नसूभावः । 'अस् नासिकायाः संज्ञाया'मित्येव सिद्धे वार्त्ति-कमिदं नियमार्थं पक्षे उस् प्रत्ययो मा भूदिति वृत्तिः । तेन खुरणस इत्यपि भवति ॥ ६१ ॥

मुर संवेष्टने ॥ मुरति । मुरः । पूर्ववत्कः ॥ ६२ ॥

क्षुर विलेखने ॥ क्षुरति । क्षुरम् । पूर्ववत्कः ॥ ६३ ॥

घुर भीमार्थशब्दयोः ॥ घुरति । घोरः । पचाद्यच्, 'अकर्त्तरि च कारके' इति घञ् वा । घुर्घुरः । पूर्ववत्कः । 'घुरादीनां के द्वे भवत' इति द्वित्वम् । पृषोदरादित्वात् हलादिः शेषः ॥ ६४ ॥

पुर अग्रगमने ॥ पुरति । पुरम् । पूर्ववत्कः । पुरी । गौरादित्वात् ङीष् ॥ ६५ ॥

वृहू उद्यमने ॥ दन्त्योष्ठ्यादिरयम् । तथा हि 'सूनमस्या वर्हि,' सक्थ्या वृहन्मा मे वन विवृहन्निति प्रयुज्यते । अन्ये तु बकारादिं पठन्ति । वृहति । ववर्ह । ववृहतुः । ववर्हिथ । ववर्ढ । ऊदित्त्वादिड्विकल्पः । 'झलि होढः' । 'झषस्तथोर्धोऽधः' । 'ष्टुना ष्टुः' । 'ढो ढे लोपः' । वर्हिता । वर्ढा । वर्हिष्यति । वर्क्ष्यति । 'षढोः कस्सी'ति कत्वम्, वृहतु । अवृहत् । वृहेत् । अवर्हीत् । अवर्हिष्टाम् । अनिट्पक्षे 'शल इगुपधादि'ति क्सः । अवृक्षत् । अवृक्षताम् । विवर्हिषति । विवृक्षति । 'हलन्ताच्चे'ति[1] कित्त्वात् न गुणः । वरीवृह्यते । वरीवर्ढि, इत्यादि । वर्हयति । अवीवृहत् । अववर्हत् । उद्वर्हा । वर्हित्वा । वृढ्वा । 'न क्त्वा सेडि'त्यकित्त्वमिटि । वृढः । वृढवान् । 'यस्य विभाषे'त्यनिट् । 'ढ्रलोपे' इति दीर्घः पूर्वस्य इत्यत्र न भवति । वर्हति । वृहतीति वृद्धौ शपि । वर्हतइति तत्रैव प्राधान्ये । अथ एते ओष्ठ्यादयः ॥ ६६ ॥

तृहू स्तृहू तृंहू हिंसायाम् ॥ तृहति । ततर्ह । स्तृहति । तस्तर्ह । 'शर्पूर्वाः खयः' । तर्हिता । तर्ढा । स्तर्हिता । स्तर्ढेत्यादि वृह-

[1] झलि सनीत्यधिकं ४ पु० ।

तिवत् । तरीष्टृह्यते । तरीष्टर्ढि । 'आदेशप्रत्यययोरि'ति प्रकृतेः षत्वम् । तिस्तर्हिषति तिस्तृक्षतीत्यत्र तु 'स्तौतिण्योरेवे'ति नियमान्न षत्वम् । तृहति, शस्य ङित्त्वा 'दनिदिताम्' इति नलोपः । ततृह । ततृहतुः । ततृहिथ । ततृण्ढ । धत्वढत्वष्टुत्वढलोपेषु नकारस्य 'नश्चापदान्तस्ये'त्यनुस्वारे परसवर्णो णकारः । तृण्ढा । तृंहिष्यति । तृङ्क्ष्यति । तृहतु । अतृहत् । तृहेत् । तृह्यात् । यासुटः क्त्वान्नलोपः । अतृंहीत् । अतृंहिष्टाम् । अनिट्पक्षेप्यनिगुपधत्वात् क्सो नास्तीति सिचि ढत्वकत्वयोः सिचः षत्व, नकारस्यानुस्वारपरसवर्णौ, वृद्धिः, अताङ्क्षीत् । अताण्ढामित्यादि । तितृंहिषति । तितृक्षति । अनिट्पक्षे 'हलन्तादि'त्यत्र हल्ग्रहणस्य जातिवाचकत्वात् सनः क्त्वान्नलोपः । तरीतृंहीति । तरीतृण्ढीत्यादि । तृंहयति । अततृंहत् । तृंहित्वा । तृढ्वा । इटि 'न क्त्वा सेडि'त्यक्त्वम् । तृढः । तृढवान् । अत्र सानुषङ्ग मूर्धन्यादि चतुर्थमपि स्तृह इति धातु के चित्पठन्ति । आत्रेयमैत्रेयादिभिरयं न पठ्यते । तृह हिंसार्थो रुधादौ ॥ ६७–६८–६९ ॥

इष इच्छायाम् ॥ के चिदुदितं पठन्ति । तस्य च प्रयोजनमिड्विकल्पे क्त्वविधौ चोदितोनुवाद इति, तद्विधानेपि तथा पठतो दैवादिकक्रैयादिकयोस्तौ न भवत इत्याहुः । न च क्त्वायामिड्विकल्पः प्रयोजनं, 'तीषसहे'ति तादाविड्विकल्पनात् । ये त्वनुदितं पठन्ति ते 'तीषसहे' त्यत्राकारमात्रविकारेण सहिना साहचर्यात्तादृशस्तौदादिक एव ग्रहीष्यत इतीतरयोरग्रहणमाहुः । तथा 'इषुगमियमां छः' इत्यत्रापि 'क्सस्याची'त्यतो ऽचीत्यनुवर्तते, तच्च 'ष्ठिवुक्लमि'त्यतोनुवृत्तेन शितीत्यनेन विशेष्यत इति शिति विधीयमानं छत्वमपि तौदादिकस्यैव सम्भवति नेतरयोरित्याहुः । इच्छति, इच्छेत् । 'इच्छार्थेभ्यो विभाषा वर्तमान'इति लिङ्लटौ । इयेष, ईषतुः, पिति तु परत्वाद् गुणे कृते 'अभ्यासस्यासवर्णे' इतीयङ् । अन्यत्र सवर्णदीर्घः । एषिता । एष्टा । एषिष्यति इच्छतु । इच्छेत्, ऐषीत् । इच्छा । 'इच्छे'ति शप्रत्ययो यगभावश्च निपात्यते । इष्टिरिति बाहुलकात् क्तिच् । 'तितुत्रे'तीडनिषेधः

सवर्णः । कारके ल्युट् । इच्छु: । विन्दुरिच्छुरित्युप्रत्ययान्तौ निपात्येते । एषित्वा इष्ट्वा । 'तीषसहे'ति विकल्पः न क्त्वा सेडिति कित्त्वनिषेधः । इष्टः । इष्टवान् । 'यस्य विभाषे'त्यनिट्त्वम् । इष्यतीति श्यनि गतम् ॥ ८० ॥

मिष स्पर्द्धायाम् ॥ मिषति । मिमेष । मेषिता, मेषिष्यति मिषतु । अमिषत्, मिषेत् । मिष्यात् । अमेषिष्टाम् । मिमिषिषति । मिमेषिषति । मिषित्वा । मेषित्वा । रलो व्युपधादिति क्त्वाविकल्पः । मेमिष्यते । मेमेष्टि । मेषयति । अमीमिषत् । मेषः । पचाद्यच् । मेषी । जाति-लक्षणो ङीष् । निमिषः । घञ् ॥ ८१ ॥

किल श्वैत्ये ॥ श्वैत्यक्रीडनयोरिति मैत्रेयः । किलति । 'चिकेलेत्यादि' मिषतिवत् । किल्विषम् । 'किलेर्बुक्चे'ति टिषच् बुगागमः ॥ ८२ ॥

तिल स्नेहने ॥ तिलति । तितेलेत्यादि । तेलतीति गतौ शपि ॥ ८३ ॥

चिल वसने ॥ चिलतीत्यादि । चेलतीति शपि ॥ ८४ ॥

चल विलसने ॥ चलतीत्यादि । चलयतीति कम्पने घटादित्वात् । ज्वलादिष्वपठितस्यापीह पाठे प्रयोजनमुच्चलतीत्यादिवत्स्वरः । तत्र पाठः कर्तरि णविकल्पार्थः । चलश्चाल इति । आत्रेयस्तु तिलादित्रय मिह न पठति ॥ ८५ ॥

इल स्वप्नक्षेपणयोः ॥ इलति । इयेल । ईलतुः । गुणविषये 'ऽभ्यासस्यासवर्णे' इतीयङ् । एलिता । एलिष्यति । इलतु । ऐलत् । इलेत् । इल्यात् । ऐलीत् । ऐलिष्टाम् । ऐलिष्यत् । एलिलिषति । गुणे कृते द्वितीयस्यैकाचो द्विर्वचनम् । इला पृथिवी । इगुपधलक्षणः कः, टाप् । इल प्रेरणे चुरादौ ॥ ८६ ॥

विल संवरणे 'इलेत्यादि । विलति । आविलम् । वेलतीति वेलेः शपि गतम् । कल विल क्षेपइति चुरादौ ॥ ८७ ॥

बिल भेदने ॥ बिलतीति बिलम् । बेलतीति शपि । अयं चुरादौ चेत्यात्रेयः । मैत्रेयस्त्वत्रैव पपाठ नान्यत्र । आट्टादिरयम् ॥ ८८ ॥

णिल गहने ॥ प्रणिलति । 'उपसर्गादसमासेपी' ति णत्वम् । निनेल । नेलितेत्यादि ॥ ७९ ॥

हिल भावकरणे ॥ भावकरणमभिप्रायसूचनम् । हिलति । जिहेलेत्यादि ॥ ८० ॥

शिल षिल उञ्छे ॥ आद्यस्तालव्यादिरितरो मूर्द्धन्यादिः । शिलति । सिलति । सिषेल । 'आदेशप्रत्यययोरि' ति प्रकृतेः षत्वम् । सेलतीति शपीत्यात्रेयः ॥ ८१ ॥

मिल श्लेषणे ॥ मिलतीत्यादि । मिल इति स्वरितेत्त्वये भविष्यति । तस्येह पाठे प्रयोजनं कर्त्रभिप्रायेपि क्रियाफले परस्मैपदम् ॥ ८२ ॥

लिख अक्षरविन्यासे ॥ लिखति । लिलेख । लेखिता । लेखिष्यति । लिखतु । अलिखत् । लिखेत् । आशिषि लिख्यात् । अलेखीत् । लिलिखिषति । लिलेखिषति । लिखित्वा । लेखित्वा । लिखितः । लिखितवान् । लेखनः । लेखनी । टित्त्वान् ङीप् । रेखा लेखा । भिदादिपाठाद्ङि गुणो लकारस्य वा रेफादेशः । हृल्लेखः । कर्मण्यण् । 'हृदयस्य हृल्लेखे' ति हृद्भावः, लेख इत्यणन्तस्य ग्रहणाद्घञन्ते लेखशब्दे उत्तरपदे हृदयलेख इति भवति । अत्राण्ग्रहणादेवाणन्ते लेखशब्दे उत्तरपदे हृदयस्य हृद्भावे सिद्धे पुनर्लेखो[1]पादानमुत्तरपदाधिकारे प्रत्ययग्रहणपरिभाषा न व्याप्रियतइति ज्ञापनार्थं न तु घञन्तस्यापि ग्रहणार्थमिति प्रागप्युक्तम् । दन्तलेखकः । 'नित्य क्रीडाजीविकयो' रिति समासः । अत्र के चित्, कुटादिभ्य इत्यत्र कुटस्यादिः, कुटआदिर्येषामित्येकशेषवृत्त्या बहुव्रीहितत्पुरुषयोर्द्वयोरप्याश्रयणात् लिखितुं विश्वसृजोपि शक्तिहानिः, स्वयमेव लिखिष्यतइति समर्थयन्ते, तेषां लेखितेत्यादौ सर्वत्राञ्णित् प्रत्यये गुणाभावात् लिखितेत्यादि स्यात् । तच्च 'रलो व्युपधादे'- 'श्वरेतो सुनि' त्यत्र वृत्तौ लेखित्वा लिखित्वा लिलेखिषति विलेखितुमिति

[1] शब्देत्यधिकं ३ पुस्तके ।

चनं तस्यानित्यत्वज्ञापनार्थत्वेन ध्रुवतेरिन्प्रत्यये ध्रुविन्नमिति गुणो भवतीत्याहुः। कुड्मलम्। 'कुटिकुषिभ्यां क्मलनि' ति क्मलन्। कुटरो मन्थविष्कम्भः। बाहुलकादरः। कोटरः। कोटरावणम्। 'वनगिर्योः सञ्ज्ञायां कोटरे' ति दीर्घः। 'वन पुरगे'त्यादिना णत्वम्। अत्रैव च कोटरेति निर्देशादरे[1] गुणः। कुटिलम्। बाहुलकादिलच्। कुटिलिका। कर्मारााणां सन्दंशिनी। सञ्ज्ञायां कन्। कुटिलिकया अङ्गारान् हरतीति कौटिलिकः कर्मारः। 'अण् कुटिलिकाया' इत्यण्। कुटी। इवन्ता 'त्कृदिकारादक्तिन' इति ङीष्। अल्पा कुटी, कुटीरः। 'कुटीशमीशुण्डाभ्यो र' इति रः। कुट प्रतापने इत्याकुस्मीयः। कूट परितापे इति कथादिः। दीर्घोपधो, ऽयमपि ह्रस्वोपध इत्यात्रेयः। उभावपि दीर्घोपधाविति मैत्रेयः॥ ८४॥

पुट संश्लेषणे॥ पुटतीत्यादि कुटिवत्॥ पुटः, पुटिका। अल्पापुटः पुटिका। महांस्तु पुटः। पुटकृतादीनामुपसंख्यानमिति समानाधिकरणसमासः। 'अन्येषामपि दृश्यत' इति दीर्घः। प्रतिपत्त्रपेक्षमेकस्याल्पत्वमहत्त्वे। अय भाषार्थश्चुरादौ दण्डके। संसर्गार्थस्तु कथादौ॥ ८५॥

कुच संकोचने॥ अत एव निर्देशात् ल्युटि गुण इति काश्यपः। कुचति। निकुचितेत्यादि। संकोचः। 'न क्वादे' रित्यकुत्वम्। कोचतीति शपि॥ ८६॥

गुज शब्दे॥ अव्यक्ते शब्दे इत्यात्रेयः। गुजतीत्यादि। गोजः। घञि 'न क्वादेरि' ति न कुत्वम्। गुञ्जतीति शपि॥ ८७॥

गुड रक्षायाम्॥ गुडतीत्यादि। गुड इक्षुविकारः संवाहश्च। इगुपधलक्षणः कप्रत्ययो 'घञर्थे कविधानमि' ति कर्मणि वा। गुडितो हस्ती, संजातसंवाह इत्यर्थः। तारकादित्वादितच्। गुडा स्नुही[3]। टाप्, तत्प्राया केशा अस्य गुडाकेशः॥ ८८॥

---

१ प्रत्ययइत्यधिकम्।
२ सन्ना, जातेति ४ पु॰ पा॰।
३ वृक्षविशेषः।

छिप क्षेपे ॥ छिपति । चिछेप । छिपितेत्यादि । छिप्यतीति श्यनि । ८९ ॥

छुर छेदने ॥ छुरति । चुच्छोर । छुरितेत्यादि । छुर्यात् । छुर्यास्तामित्यादि । अत्र 'हलि च' इति दीर्घस्य 'न भकुर्छुराम्' इति निषेधः । छुरिका । 'कृत शिल्पिसंज्ञयोः' इति कृत । आच्छुरितकम् । मन्दप्रासो हासः । निष्ठान्तात्संज्ञायां कन् ॥ ९० ॥

स्फुट विकसने । स्फुटति । पुस्फोट । 'शर्पूर्वाः खयः' इति खयः शेषः । स्फोटतइति ण्यन्तमेतद्धौ । स्फोटतीति विशरणार्थः परस्मैपदी तत्रैव । भेदनार्थश्चुरादौ ॥ ९१ ॥

मुट आक्षेपप्रमर्दनयोः । मुटति । मुमोट । मुटितेत्यादि । मोटतीति प्रमर्दने शपि ॥ ९२ ॥

त्रुट छेदने ॥ त्रुटति । तुत्रोट । त्रुटितेत्यादि । 'वा भ्राश' इति शविषये वा श्यन् । त्रुट्यति । त्रुट्यतु । त्रुट्येत् । अत्रुट्यत् । त्रोटिः । ण्यन्तात् 'अच इः' इत्यौणादिक इप्रत्ययः ॥ ९३ ॥

तुट कलहकर्मणि ॥ तुटति । तुतोट । तुटितेत्यादि । तुटिः । 'इक्कृष्यादिभ्यः' इत्यादिभिः ॥ ९४ ॥

चुट छुट छेदने ॥ चुटति । छुटतीत्यादि । चोटतीति शपि ॥ ९५-९६ ॥

जुड बन्धने ॥ प्रेरणे चुरादिः । जुडति । जुजोड । जुडितेत्यादि ॥ ९७ ॥

कड मदे ॥ कडति । चकाड । कडितेत्यादि । अस्य कित्कार्याभावादिह पाठो इकारत्वमात्रानुरोधेन । कुटादिष्वोऽन्यत्रापि शक्यते पठितुम् । अयं भ्वादौ च । पुनःपाठफलमुक्तमिवन् ॥ कण्डते इति च शपि ॥ ९८ ॥

लुट संश्लेषणे ॥ लुटति । लुलोट । लुण्टतीत्यालस्यप्रतिघातयोः शपि । लोटति लुट्यतीति विलोडने शपि श्यनि च । लोटतीत्युपघाते शपि । प्रतिघाते लोटते इति द्युतादौ । लुण्टतीति स्तेये शपि । गतावपि लुण्टतीति शपि । लुड इत्येके । अयमपि शपि गतौ ॥ ९९ ॥

क्रुड घनत्वे ॥ घनत्व सान्द्रता । घसनइत्येके । क्रुडति । चक्रुड । क्रुडितेत्यादि ॥ १०० ॥

कुड बाल्ये ॥ कुडति । चुकोड । कुडितेत्यादि ॥ १०१ ॥

पुड उत्सर्गे ॥ पुडतीत्यादि । मुड इत्यात्रेयः ॥ १०२ ॥

घुट प्रतीघाते ॥ अयं प्रथमान्तः । घुटति । जुघोट । घुटितेत्यादि । घोटकः । ण्वुल् । घोटः । घञ् । अयं द्युतादावात्मनेपदी गतः ॥ १०३ ॥

तुड तोडने ॥ अयं तृतीयान्तः । प्रथमान्तः कलहकर्मार्थः पूर्वत्र पठितः । तोडन भेदः । तुडति । तुतोड । तुडितेत्यादि । तोडने तोडतीति शपि ॥ १०४ ॥

थुड [1]स्फुड संवरणे ॥ थुडति । तुथोड । थुडितेत्यादि । स्फुडति । पुस्फोड । 'शर्पूर्वाः खय' इति खयः शेषः । स्फुडितेत्यादि । खुड कुड इत्येके । अत्र कुड संघातइत्यात्रेयः, बाल्ये पठितस्येह पाठोऽर्थभेदादिति तस्याभिप्रायो द्रष्टव्यः । अत्रापठतां मैत्रेयादीनां धातूनामनेकार्थत्वादत्रापि वृत्तिर्भविष्यतीत्यभिप्रायः १०५–१०६ ॥

स्फुर स्फुल संचलने ॥ स्फुरतिस्फुलत्योरित्यत्र न्यासे स्फुर स्फुल चलने इत्यनुपसृष्ट पठ्यते, अत्र केवलं शब्दो भिन्नोऽर्थस्त्वेक एव । आत्रेयस्तु स्फुर स्फुरणे, स्फुल संचलने इति पपाठ । 'स्फुरतिस्फुलत्योर्निर्निविभ्य' इति वा षत्वम् । निर्निंसोः साधारणमुक्तमुदाहरणम् । पुस्फोर । स्फुरिता । स्फुरिष्यति । स्फुरतु । अस्फुरत् । स्फुरेत्, स्फूर्यात् । 'हलि चे'ति दीर्घः । स्फुरिता, स्फुरिष्यति, सेट्त्वा 'हलि चे'ति न दीर्घः । कुटादित्वा 'इलो व्युपधादि'त्यत्र न भवति । पोस्फूर्यते । पोस्फोर्ति । दीर्घस्यासिद्धत्वाद्गुणः । पोस्फूर्तः । स्फारयति । स्फोरयति 'चिस्फुरोर्णावि'ति वा ऽऽत्वम् । अपुस्फुरत्, आत्वपक्षे णौ कृतमभ्यासे स्थानिवदित्यभ्यासस्योकारान्तत्वे ह्रस्व इत्युकारः । 'ओः पुयण्ज्यि'ति इत्व न भवति,

---

१ तुड इति ४ पु० पाठः । धातुपाठे तु थुड स्थुड इति दृश्यते । अयमेव पाठो युक्तः, उत्तरत्रास्मिन्नेवार्थे स्फुडतेर्वक्ष्यमाणत्वात् ।

सकारेण वर्णान्तरस्य व्यवधानात्। तत्र ण्यन्तेऽस्फुरन्तेऽपि[1] पुस्फोरयिषति पुस्फारयिषतीति भवतः। मैत्रेयस्तु स्फुर स्फुरणे इति पृथक् पठित्वा स्फर इत्येके अनुबन्धः. स्फरति। पस्फारेत्याह। स्फुलतीत्यादि स्फुरतिवत्। णत्वं त्वस्य न भवति। तथा 'हलि चे'ति दीर्घत्वमपि न भवति, अरेफान्तत्वात् ॥ १०७–१०८ ॥

स्फुड चुड व्रुड संवरणे। मैत्रेयादयो न पठन्ति। आत्रेयादयस्तु पठन्ति। स्फुडति। पुस्फोड। स्पः शेषः। चुडति। चुचोड। व्रुडति। वुव्रोडेत्यादि। अत्र क्रुड भृड निमज्जन इत्येके इत्यात्रेयः। मैत्रेयस्तु क्रुडं पठित्वा भृड इत्यप्येके इत्याह। क्रुडति। क्रोडः। घञ्। क्रोडा। अरथादाङ्गुर., टाबन्तोऽयं स्वभावतो विशेषविषयः। कल्याणी क्रोडा यस्याः सा कल्याणक्रोडा। बहुव्रीहावुपसर्जनह्रस्वत्वे 'न क्रोडादिबह्वचः' इति स्वाङ्गलक्षणो ङीष् निषिध्यते। क्रोडादिषु टाबन्तस्य पाठाद् भुजान्तरमात्रवचनस्य क्रोडशब्दस्य बहुव्रीहौ स्वाङ्गलक्षणो ङीष्विकल्प एव भवति। कल्याणक्रोडी कल्याणक्रोडा मयूरीति। भृडतीत्यादि। व्रश्चादय उदात्ता उदात्तेतः ॥ १०९–११०–१११ ॥

अथ सेटमात्मनेपदिनमाह ॥

गुरी उद्यमने ॥ गुरते। जुगुरे। जुगुरिषे। गुरिता। गुरिष्यते। गुरताम्। अगुरत। गुरेत। गुरिषीष्ट। अगुरिष्ट। अगुरिष्याताम्। जुगुरिषते। जोगूर्यते। जोगोर्त्ति। गोरयति। अजूगुरत्। खड्गापगारं युध्यन्ते खड्गापगोरमिति वा, त्वरया खड्गमुद्यम्य युध्यन्त इत्यर्थः। 'द्वितीयायां चे'ति परीप्सायां णमुल्, 'अपगुरो णमुली'ति वात्वम् ॥ गूर्णः। गूर्णवान्। ईदित्त्वादनिट्त्वं गूर्तिः। 'तितुत्रे'ति तीगिनषेधः,। दीर्घार्थोऽयं तुरादौ, हिमागत्योर्दिवादौ, ईदित्तुदादावनुदात्तेत् ॥ ११२ ॥

निष्ठायामनिट्त्वनाम्यात् पुनः परस्मैपदप्रस्तावः।

णू स्तवने। ह्रस्वान्तमात्रेयादयः पठन्ति। यथा तु भाष्य तथा दीर्घान्तः। यदाह कुटादिसूत्रे तस्मान्नूत्वा धूत्वेत्येव भवितव्यमिति।

[1] मैत्रयेत्यधिकम ३। पु

विधिरस्तु सूत्र कि ङित्त्वेन तत्क्रियते 'नास्यनुदात्तेन्ङिद्दुपदेशादि' ति विशेषणार्थं, तेन माहिमृतेत्यत्र लसार्वधातुकानुदात्तत्वे धातोरन्त इति धातोरुदात्तत्व भवति । अत एव ङित्त्वसामर्थ्यात्सिज्लोपस्य पूर्वत्रासिद्धत्व नेति लसार्वधातुकस्य ङितः परत्वं भवति । अन्यथा प्रत्ययाद्युदात्तत्वे धातुरनुदात्तः स्यात् । न च 'तिङ्ङतिङ' इति सर्वनिघातप्रसङ्गः । 'हि चे' ति निषेधात् । मुमूर्षति । सनः कित्त्वे दीर्घे स्वरपरत्वदीर्घा । 'पूर्ववत्सन' इति तङत्र न भवति, नहि म्रियतिमात्रमात्मनेपदस्य निमित्त, किन्तु शिल्लुङ्लिङोपि । न चात्र ते म्रियतेरनन्तराः सभवन्ति । मरीम्रीयते, 'रीङ् ऋत' इति रीङ् । मर्मरीति । मर्मर्त्तीत्यादि । मारयति । अमीमरत्, मृत्वा । मृतः । मृतवान् । न म्रियते इति अमृतम् । 'मतिबुद्धिपूजार्थेभ्यश्चे' त्यत्र चकारस्यानुक्तसमुच्चयार्थत्वाद्वर्तमाने क्तः । नञ्समास । अमर । पचाद्यच् पूर्ववत्समासः । मृत्युः । 'भुजिमृङ्भ्यां युक्त्युकावि' ति त्युक्, अनुदात्तावात्मनेभाषौ ॥ ११९ ॥

रेफवदनिट्प्रकरणादाह ॥

रि पि गतौ ॥ रियति । लघूपधगुणादन्तरङ्गत्वादियङादेशः । रिराय । रिर्यतुः । रिर्युः । 'एरनेकाच' इति यण् । रिरयिथ । रिर्यिव । रिरेथ । रिर्यिम । क्रादिनियमादिट् । थ 'ल्यचस्तास्वदि' तीणिनषेधः । भारद्वाजनियमाच्च विकल्पः । रिर्यतुरित्यादौ यणो बहिरङ्गलक्षणस्यासिद्धत्वाद्रेफस्य हल् परत्वाभावा 'दुपधाया चे' ति न दीर्घः । रेता, रेष्यति । रियतु । अरियत् । रियेत् । आशिषि । रीयात् । अकृत्सार्वधातुकयो रिति दीर्घः । अरैषीत् । अरैष्टाम् । अरैषुः । रिरीषति । सनः कित्त्वे 'इज्झनगमामि' ति दीर्घः । रेरीयते । रेरयीति । रेरेति । राययति । अरीरयत् । पियतीत्यादि रियतिवत् ॥ १२० ॥ १२१ ॥

धि धारणे ॥ धियति । दिधाय । दिध्यतुः । दिध्युः । दिधयिथ । दिधेथ । धेतेत्यादि ॥ १२२ ॥

क्षि निवासगत्योः ॥ क्षियति । चिक्षाय । चिक्षियतुः । चिक्षियुः । चिक्षयिथ । चिक्षेथ । संयोगपूर्वत्वान्न यणादेश इतीयङ् । क्षेतेत्यादि

रियन्ति । प्रक्षीय । 'क्षिय' इति ल्यपि दीर्घः । क्षीणो देवदत्तः । अकर्मकत्वाद्गत्यर्थत्वाद्वा कर्तरि क्तः 'निष्ठायामण्यदर्थे' इति दीर्घः । ण्यदर्थो भावकर्मणी तयोर्न दीर्घादिति निष्ठानत्वम् । इदमेषां क्षीणं 'क्तोऽधिकरणे चे'ति ध्रौव्यार्थत्वाद्गत्यर्थत्वाद्वाधिकरणे क्तः । दीर्घत्वनत्वे पूर्ववत् । भावे तु क्षितं ण्यदर्थत्वेन दीर्घाभावान्न निष्ठानत्वं, क्षीणायुर्वृषलः । क्षितायुर्वृषलः । क्षीणकः क्षितकः । कान्तादनुकम्पायां कन्, 'वाक्रोशदैन्ययोरि'ति दीर्घविकल्पः, पूर्ववद्दीर्घनत्वे । क्षयी । 'जिदृक्षीत्यादि'नेनिः । रियन्त्यादयोऽनुदात्ता उदात्तेतः ॥ क्षयतीति गतं शपि ॥ १२६ ॥

षकारवत्यस्मिन्नदित्प्रसङ्गाभावादर्थभेदमाह ॥

षू प्रेरणे ॥ सुवति । सुवतः । सुवन्ति । सुवसि । सुवामि । सुषुवति, 'उपसर्गात्सुनोतिसुवती'ति षत्वम् । सुषाव । सुषुवतुः । सुषविथ । सुषुविथ । अभ्यासात्परस्या 'देशप्रत्यययोरि'ति षत्वम् । सुसुषाव । विसुषाव 'उपसर्गादि'ति षत्वमभ्यासस्य 'स्थादिष्वभ्यासेन चाभ्यासस्ये'ति नियमान्न भवति । सविता । सविष्यति । सुवतु । असुवत् । अभ्यषुवत् । 'प्राक्सितादड्व्यवायेऽपी'ति षत्वम् । सुवेत् । सूयात् । असावीत् । असाविष्टाम् । अभ्यषावीत् । लङ्वत्षत्वम् । सुसूषति । 'स्तौतिण्योरेवे'ति न षत्वम् । अभिसुसूषति । पूर्ववत्स्थादिनियमादभ्यासस्य न षत्वम्, प्रकृतेश्च 'स्तौतिण्योरि'ति नियमात् 'सनि ग्रहगुहोश्चे'त्यनिट्त्वात् 'इको झलि'ति सनः कित्त्वम् । सोषूयते । सोषोति । सावयति । असूषवत् । सूत्वा । सूतः । सूर्यः । 'राजसूये'त्यादिना क्यपि रुडागमः । सूर्यस्य स्त्री देवता सूर्या । 'सूर्याद्देवतायां चाब्वक्तव्य' इति चाप् । पुंयोगङीषोऽपवादः । अदेवतायां तु ङीषेव सूरी मानुषीति । 'सूर्यतिष्ये'ति तद्धिते ईति च भसञ्ज्ञानिमित्ते यलोपः । सूर्यस्येदं सौर्यमित्यत्र सूर्यस्य छे च ङ्या चेति नियमान्न लोपः । यद्यप्यत्र 'यस्येति चे'त्यल्लोपस्य यलोपविधिं प्रति न स्थानिवदिति स्थानिवत्त्वनिषेधादकारो नोपधस्तथा 'प्यसिद्धवदत्राभादि'त्यसिद्धत्वादुपधात्वादस्ति

लोपप्रसङ्गः, सौरी बलाकेत्यत्र तु 'तेनैकदिगि'त्यणि ङीप्यणो 'यस्येती'तिलोपस्य पूर्ववदसिद्धत्वादुपधायकार इति तस्य लोपः । इकारपरत्वात्, न चाणि यो यस्येतिलोपस्तस्यासिद्धत्वादनुपधात्वमिति शङ्क्यम् । अणयल्लोपो यलोपस्त्वीतीति व्याश्रयत्वेनासिद्धत्वाप्रसङ्गात् । न च स्थानिवद्भावेनोपधात्वभङ्गः । यलोपविधौ तस्य निषेधात् । नत्वेवमपि यकारः सूर्यस्योपधा न भवति किन्त्वणन्तस्येति लोपो न स्यात् । नैष दोषः । नात्र सूर्यादिभिरुपधा विशेषयिष्यामः किन्तु भसञ्ज्ञकेन, भस्योपधा यो यकारो वस्तुनः सूर्यादिसबन्धीति । एव च सौरीयमित्यत्रापि अणन्ताच्छे पूर्ववद् यलोपः सिध्यति । सौर्ये हिमवतः शृङ्गे इत्यत्र पूर्ववदणि । 'नपुंसकाच्चे'ति शीभावे पूर्ववदीति प्राप्तो यलोपो ङ्यामितीकारस्य विशेषणाच्च भवति । सौरो मन्त्र इति प्रयोगस्तु सूरशब्दादणि द्रष्टव्यः । प्रसवी । 'जिदृक्षिवी'त्यादिनेनिः । सवित्रम् । 'अर्त्तिलू'इति इत्रः । सूरः । 'सुसूधागृधिभ्य क्रनि'ति क्रन् । सूरिस्तु सूङः क्रिरिति, षूङ उक्त, सूते सूयतइति लुक्श्यनोः ॥ १२४ ॥

कॄ विक्षेपे ॥ किरसि । किरतः । 'ॠत इद्धातोरि'तीत्वम् । चकार । चकरतुः । चकरिथ । चकार । चकर । चकरिव, 'ॠच्छत्यॄता'मिति लिटि गुणे, णिति पूर्वविप्रतिषेधे 'नाचो ञ्णिती'ति वृद्धिः, कृते वा गुणे 'अत उपधाया'इति वृद्धिः । करिता, करीता, करिष्यति । करीष्यति । 'वॄतोवे'तीटो वा दीर्घ । किरतु । अकिरत् । किरेत् । कीर्यात् । इत्वे 'हलिचे'ति दीर्घः । अकारीत् । अकारिष्टाम् । सिचि वृद्धिः । 'वॄतो वे'तीटो दीर्घस्य 'सिचि च परस्मैपदेष्वि'ति निषेधः । चिकरिषति । 'सनि ग्रहगुहोश्चेति' चशब्दादुगन्तलक्षणेणिनषेधे प्राप्ते तदपवाद 'इट् सनि वे'ति विकल्पे च प्राप्ते 'किरश्च पञ्चभ्य'इति नित्यमिट् 'अस्य दीर्घत्व नेच्छन्तीति वामनः, हरदत्तोऽप्येवमिति । भागवृत्तौ त्वत्रापि दीर्घविकल्पो दृश्यते । चेकीर्यते । परत्वादित्वादौ द्विर्वचनम् । चाकरीति । चाकर्त्ति । अभ्यासस्य ह्रस्वोरदत्वहलादिशेषेषु । 'दीर्घोकित'इति दीर्घः । 'ॠतश्चे'ति अभ्यासस्य रुगादिविधौ

तपरकरणमसवर्णार्थमृकारान्तस्याङ्गस्य योऽयमिति सूत्रार्थव्यवस्थापना-
दृताभ्यामस्य ह्रस्वत्वेन ऋकारान्तत्वेऽपि तदाश्रयो गुणादिर्न भवति
ऋद्धस्य दीर्घान्तत्वात्। गतमन्यत्प्राग्वदिति प्रतिपत्तव्यम्। कारयति।
अचीकरत्। अवकिरते हस्ती स्वयमेव, अवाकीर्ष्ट हस्ती स्वयमेव, 'भूषा-
कर्मकिरादिसनां चान्यत्रात्मनेपदात्' इति यक्चिणोः प्रतिषेधः। हस्तिन
कश्चित्पांस्वादिना ऽवकिरति तत्र सौकर्यातिशयाद्धस्ती कर्तृत्वेन विव-
क्ष्यत इति कैयटे। अत्र सिचो 'लिङ्सिचोरात्मनेपदेष्वि'तीड्विकल्पः।
इट्पक्षे सिचः कित्त्वाभावाद्गुणः। अवाकरिष्टेत्यादि, 'वृत' इतीटो
दीर्घपक्षे अवाकरीष्टेत्यादि चेत्यस्य लिङि 'न लिङी'ति दीर्घनिषेधा-
'ल्लिङ्सिचोरात्मनेपदेष्वि'तीटो ऽभावपक्षेऽभ्यां द्वैरूप्यम्, अवकीर्षीष्ट
अवकरिषीष्टेति। अनिट्पक्षे लिङ्सिचो 'रुश्चे'ति कित्त्वाद्गुणाभावे
'ऋत इद्धातो'रितीत्वम्। अपस्किरते वृषो हृष्टः। अपस्किरते कुक्कुटो भक्षार्थी।
अपस्किरते श्वा आश्रयार्थी। 'किरतेर्हर्षजीविकाकुलायकरणेष्वि'ति
तङ्। 'अपाच्चतुष्पाच्छकुनिष्वालेखने' इति अपात्किरतेः परे कात्पूर्वः
सुट्, अत्रापि 'किरतेर्हर्षजीविकाकुलायकरणेष्वि'ति पठ्यते। तत्र
किरत्यर्थस्य हर्षो हेतुत्वेन विषय, इतरे फलत्वेनेति व्याख्यातारः।
तत्र हृष्टत्वाद्वृषभो विलिख्य विक्षिपतीत्यर्थः। इतरेऽपि कुक्कुटः श्वा च
जीविकायै कुलायकरणाय च विलिख्य विक्षिपतीत्यर्थः। अपचस्करे।
अपास्किरत्। 'अड्भ्यासव्यवायेऽपी'ति सुट्। लुङि तु कर्मकर्तरि चेड्-
दीर्घयोर्विकल्पनात्त्रैरूप्यम्। अपास्कीर्ष्ट अपास्करिष्ट, अपास्करीष्टेति।
आशिषि लिङ्यपि 'लिङ्सिचोरि'तीटो विकल्पे 'न लिङी'ति दीर्घनिषेधे
च कर्मकर्तृवद् द्वैरूप्यम्। अपस्कीर्षीष्ट अपस्करिषीष्टेति। अनिट्पक्षे
पूर्ववद् 'उश्चे'ति लिङ्सिचोः कित्त्वादि। अपस्करिता। अपस्करीते-
त्यादि। अपचिस्करिषते। 'किरश्चे'तीट् 'सनि वे'तिविकल्पं बाधते।
अस्येटो दीर्घो नेत्युक्तम्। अपचेस्कीर्यते। अपचास्कर्ति। किरतावि-
कृश्तिपा निर्देशादत्र सुट् न भवति। अपस्कारयति अपाचिस्करत्।
अडभ्यासाभ्यामुभाभ्यां व्यवधानेऽपि सुड् भवति। उपस्किरति श्वापदः।

रुजतीति । रुरोज । रुरुजतुः । रुरोजिथ । रुरुजिव । रोक्ता । रोक्ष्यति । रुजतु । अरुजत् । रुजेत् । रुज्यात् । अरौक्षीत् । अरौक्ताम् । अरौक्षुः । झलि सिचो लोपः । 'चोः कुः' । रुरुक्षति । रोरुज्यते । रोरोक्ति । रोजयति । अरूरुजत् । निष्पूर्वोय व्याधिप्रशमने । नीरुजति मिताशीति । कूलमुद्रुजः । 'उदि कूले रुजिवहो'रिति खश् । रोग. । 'पदरुजे'ति कर्तरि घञ् । हृद्रोगः । हृदयरोगः । 'वा शोकष्यञ्रोगेष्वि'ति हृद्भावविकल्पः । रुक्त्वा । रुग्णः । रुग्णवान् । ओदित्त्वान्नत्वम् । लुग्नं जीर्णवस्त्र, 'कपिलिकादीना सञ्ज्ञाछन्दसो'रिति लत्वम् । रुजा । भिदादेराकृतिगणत्वादङ् ॥ हिंसार्थोय चुरादौ ॥ १३२ ॥

भुजो कौटिल्ये ॥ भुजतीत्यादि रुजिवत् । मूलविभुजो रथः । 'मूलविभुजादीनामुपसंख्यानमि'त्यणोपवादः कः । 'भुजोनवन' इत्यत्र संयोगवद्विप्रयोगस्यापि विशेषस्मृतिहेतुत्वादवत्सा धेनुरानीयतामितिवदनवनप्रतिषेधेन सभवन्नवनसबन्धो रौधादिक एव गृह्यते । उक्तञ्च तत्र भाष्ये, अनवनकौटिल्ययोरिति वक्तव्यमिति । तस्मादस्मान्न तङ् ॥ १३३ ॥

छुप स्पर्शे ॥ द्वितीयादिरयम् । केचित्प्रथमादिम्पठन्ति ते भाष्यविरोधादुपेक्ष्याः । तथा च 'दीर्घोकित'इत्यत्र चेच्छिद्यते चोच्छुयते इत्यत्र 'छे चे'ति तुकि गुणो न प्राप्नोतीत्याशङ्क्य परत्वाद्गुणे पश्चात्तुगिति समर्थितम्, हरदत्तोपि परत्वाद्गुणे कृते पश्चात्तुगित्याह । छुपति । चुच्छोप । चुच्छुपतुः । चुच्छुपिथ । चुच्छुपिव । छोप्ता । छोप्स्यति । छुपतु । अछुपत् । छुपेत् । छुप्यात् । लुङि अच्छौप्सीत् । अच्छौप्ताम् । चुच्छुप्सति । चोच्छुप्यते । चोच्छोप्ति । छोपयति । अचुच्छुपत् । छुपित्वा । छुप्तः ॥ १३४ ॥

रुश रिश हिंसायाम् ॥ रुशति । रुरोश । रुरोशिथ । रुरुशिव । रोष्टा । रोक्ष्यति । रुशतु । अरुशत्, रुशेत् । रुश्यात् । अरुक्षत् । 'शल इगुपधादनिट' इति क्सः । रुरुक्षति । रोरुश्यते । रोरोष्टि । रोशयति ।

अरूरुशत् । रिशति । रिरेश । रेक्ष्यति । रिशतु । अरिशत्, रिशेत् । अरिक्षत् । रिरिक्षति । रेरिश्यते । रेरेष्टि । रेशयति । अरीरिशत् ॥ १३५-१३६ ॥

लिश गतौ ॥ लिशतीत्यादि रिशतिवत् । लिश्यते इति दैवादिकस्य ॥ १३७ ॥

स्पृश संस्पर्शने ॥ स्पृशति । पस्पर्श । पस्पृशतुः । पस्पर्शिथ । पस्पृशिव । स्वयः शेषः । स्पर्ष्टा । स्पृशतु । अस्पृशत् । स्पृशेत् । स्पृश्यात् । अस्प्राक्षीत् । अस्प्राष्टाम् । अस्प्राक्षुः । अस्पार्क्षीत् । अस्पार्ष्टाम् । अस्पार्क्षुः । 'स्पृशमृश' इति पक्षे सिचि पूर्ववदम्विकल्पः । अन्यदा क्सः । अस्पृक्षदित्यादि । पिस्पृक्षति । उरदत्वे 'सन्यत' इतीत्त्वम् । परिस्पृश्यते । परीस्पर्ष्टि । इयिकारस्युदाहार्यम् । अपरिस्पर्गित्यत्र 'क्विन्प्रत्ययस्य कुः' इति पदान्ते कुत्वं, 'रात्सस्ये'ति नियमात् संयोगान्तलोपः । इह क्विनि दृष्टो धातुः क्विन्प्रत्यय उच्यते । अस्यैवास्य क्विनो विधानं 'स्पृशोऽनुदके क्विन्' इति । मन्त्रेण स्पृशतीति मन्त्रस्पृक् । स्पृशोऽनुदके सुबन्तमात्रे उपपदे क्विन् । उदकं स्पृशतीत्यत्र कर्मण्यण् उदकस्पर्श इति । हृदिस्पृक् दिविस्पृगित्यत्र 'हृद्युभ्यां ङेरुपसंख्यानमि'त्यलुक् । स्पर्शो रोगः । 'पदरुजविशस्पृशो घञि'ति घञ् । तत्र वार्तिकं स्पृश उपताप इति, स्पर्शवान् आद्यस्त्रिस्पर्श उच्यते ॥ १३८ ॥

विच्छ गतौ ॥ उदात्तेत् । विच्छायति । 'छे चे'ति तुक् । 'गुपूधूपविच्छि'त्यायः । सार्वधातुके नित्यम् । विच्छायांचकार । विविच्छ । विविच्छतुः । विविच्छिथ । विविच्छिव 'आयादय आर्द्धधातुके वे'त्यार्द्धधातुके भाविन्यायोत्पत्तिविकल्पः । निवृत्तिविकल्पे प्रत्ययलक्षणेनायान्तत्वादाम्प्रत्ययः स्यात्, विच्छाञ्चकारेति । विच्छिता विच्छायिता । विच्छिष्यति । विच्छायिष्यति । विच्छायतु । अविच्छिष्टाम् । विविच्छिषति । वेविच्छ्यते । यङ्लुको विवक्षायामार्द्धधातुकविषयत्वस्यैवापहारादायोत्पत्तिविकल्पो नेति प्रागेवोपपादितत्वाद्यङ्लुङ्नास्ति । विच्छयति । अविविच्छत् । अविविच्छायत । विश्नः । 'यजयाचे'ति नङ्, 'च्छ्वोः शूडि'

ति शः, 'नेड्वशि कृति' तीण्निषेधः, विच्छित्वा । विच्छायित्वा । विच्छितः । विच्छायितः । अथ भासार्थे चुरादौ ॥ १३९ ॥

विश प्रवेशने ॥ विशति । इत्यादि रिषतिवत् । निविशते । 'नेर्विश' इति तङ् । उत्तरसूत्रोपात्तैः पर्यादिभिः साहचर्यादिहोपसर्गो गृह्यते न तु तत्प्रतिरूपक इत्यङ्के निविशति भयादित्यत्र तङभावः प्रतिरूपकापेक्षो द्रष्टव्यः । निविविशे । निविविशिषे । निवेष्टा । निवेक्ष्यते । निविशताम् । न्यविशत । निविशेत । निविक्षीष्ट । न्यविक्षत । निविविक्षते । निवेविश्यते । निवेविशीति । निवेवेष्टि । विष्टः, विष्टवान् । विट् । विशौ । विशः । क्विप् । देवविशा । अजादिपाठाद्धलन्तादपि टाप् । वेशः । 'पदरुजविशे' ति कर्तरि घञ्, वेश्या जनसमाश्रये तु 'हलश्चे' ति अधिकरणे घञ् । गेहानुप्रवेशमास्ते गेहगेहमनुप्रवेशमास्ते । 'विशिपदी'-त्यादिना णमुल् । तृतीयाप्रभृतित्वात्समासविकल्पः । असमासे व्याप्यमानतया द्रव्यवचनस्य द्विर्वचनम् । आसेव्यमानतायान्तु क्रियावचनस्य णमुलन्तस्य, समासे तु व्याप्त्यासेवयोस्तेनैवोक्तत्वान्न द्विर्वचन, क्त्वाप्यत्र वासरूपेण भवति । गेहमनुप्रविश्यानुप्रविश्यास्ते गेहगेहमनुप्रविश्यास्तइति । समासस्त्वस्य न भवत्यनुपपदे विधानादित्येतत्सर्वं स्कन्दन्यादावुक्तम् । ग्राममभिनिविशते । 'अभिनिविशश्चे' त्याधारः कर्म । अत्र मण्डूकप्लुत्या 'परिक्रयणे संप्रदानमन्यतरस्यामि' त्यतोऽन्यतरस्याग्रहणानुवृत्तेस्तस्य च व्यवस्थितविभाषात्वात्कल्याणेऽभिनिवेशः, पापेऽभिनिवेशः, यायां संज्ञा यस्मिन्नभिविशते इत्यादौ कर्मत्वाभावः । वेशन्तः । 'दृविशिभ्या झषि'-ति झष् । 'झोन्तः' । वेश्म । मनिन् ॥ १४० ॥

मृश आमर्शने ॥ आमर्शनं स्पर्शः ॥ मृशतीत्यादि सर्वं स्पृशतिवत् ॥ १४१ ॥

णुद प्रेरणे ॥ कर्त्रभिप्रायेपि क्रियाफले परस्मैपदार्थः पुनः पाठः, नुदतीत्यादि रूपं पूर्ववत् ॥ १४२ ॥

षद्लृ विशरणगत्यवसादनेषु ॥ एवं धनपीलः । विसरणादत्यात्रेयमैत्रेयौ दुर्गश्च, शिति 'पाघ्रेत्यादिना सीदादेशः । सीदतीत्यादि,

अन्यत्र ससादेत्यादि सर्वं भौवादिकवत् । इह पाठे प्रयोजनं सीदती सीदन्तीति नुम्विकल्पः । तत्र तस्येनैव रूपद्वये सिद्धे तत्रास्य पाठोऽनर्थक इति केचित् । त्वनितिरूपत्त्वो गार्ग्यः माह इति । स्वरस्तु भिद्यते, शपि सीदतीत्यत्र शप्पित्त्वादनुदात्तत्वे धातुरुदात्तः । शे तु प्रत्ययस्वरेणोदात्ते सत्यन्तोदात्तत्वम् ॥ १४३ ॥

शद्लृ शातने ॥ 'पाघ्रे'त्यादिना शिति शीयादेशः । शीयत इत्यादि । अन्यत्र शशाद । शत्तेत्यादि सर्वं भौवादिकवत् । 'शदेः शित' इति शिद्विषये तङ्विधानाद्वास्य शता ऽर्प्याति नुम्विकल्पस्य प्रयोजनस्याभावात्पुनः पाठे प्रयोजनं पूर्ववत्स्वरभेदः । कृत्यादयोऽनुदात्ता उदात्तेतः । विच्छिरेकः सेट् ॥ १४४ ॥

अथोभयपदिनमाह ।

मिल सङ्गमे ॥ मिल संश्लेषण इति पठितस्यैव पुनः पाठः कर्त्रभिप्राये तङर्थ इत्यात्रेयः । अथ स्वुदात्तस्यापि नित्, मिलतीत्यादि पूर्ववत् । मिलते । मिमिले । मेलिता । मेलिष्यते । मिलताम् । अमिलत । मिलेत । मेलिषीष्ट । अमेलिष्ट । मिमिलिषते । मिमेलिषते ॥ १४५ ॥

मुच्लृ मोक्षणे ॥ मुञ्चति । 'शे मुचादीना'मिति शे नुम् । मुमोच । मुमुचतुः । मुमोचिथ । मुमुचिव । मोक्ता । मोक्ष्यति । मुञ्चतु । अमुञ्चत् । मुञ्चेत् । मुच्यात् । अमुचत् । अमोक्ष्यत । मुञ्चते । मुमुचे । मोक्ता । मोक्ष्यते । मुञ्चताम् । अमुञ्चत । मुञ्चेत । मुक्षीष्ट । अमुक्त । अमुक्षाताम् । झलि सिचो लोपः । 'चोः कुः', मुमुक्षति । मुमुक्षते वत्स, कर्मकर्तरि मोक्षते वत्सः स्वयमेवेत्यपि भवति 'मुचोऽकर्मकस्य गुणो वे'ति सन्नन्तस्य पक्षे गुणे 'अत्र लोपोऽभ्यासस्ये'त्यभ्यासलोपः यङ्लुकि 'भूदाकर्मकरादिसनामि'ति निषेधः । मोमुच्यते । मोमोक्ति । मोचयति । अमूमुचत् । मोक्षः । सनन्तात् घञि पूर्ववद्गुणाभ्यासलोपौ । निर्मुच्यत इति निर्मोकः । घञि चजोः कुघिण्ण्यतो'रिति कुत्वम् । अमोच्यमश्व यदि मन्यसे इत्यत्रावश्यके ण्यः । 'ण्य आवश्यके' इति कुत्वनिषेधः । नवमुचानि धनूंषि, मूलविभुजादित्वात्कर्तरि कः । मुष्टिर्व

हिर्भूतानीत्यर्थः । जलमुक् । जलमुचौ । क्विप् । मुक्ता, क्तिच्क्तौ च संज्ञायामिति संज्ञायां क्तः । मुक्तैव मौक्तिकम् । 'विनयादिभ्यश्चे' ति स्वार्थे ठक् । नमुचिः । 'इगुपधात्किच्चे' ति इन् । 'नभ्राडि' त्यादिना नञः प्रकृतिभावः । चक्रमुक्तः । 'अपेतापोढमुक्ते' ति पञ्चमीसमासः । प्रमोचनेयं चुरादिः । मुञ्चते मुञ्चतीति कल्कने शपि गतम् ॥ १४६ ॥

लुप्लृ छेदने ॥ लुम्पति । लुम्पते इत्यादि मुञ्चतिवत् । लोलुप्यते । 'लुपसदे' त्यादिना भावगर्हायामेव यङ् । लुप्तनिर्दिष्ट इत्यत्रापूर्वकालस्यापि लुप्तशब्दस्य भाष्यकारप्रयोगात्पूर्वनिपातः । लोपयति । अलूलुपत् । अलुलोपत् । काण्यादित्वात् ह्रस्वविकल्पः ॥ १४७ ॥

विदॢ लाभे ॥ अयं सेडपि मुचादिकार्यानुरोधात्रेमिह पठितः । विन्दति । विन्दतः 'विदो लटो वे' त्यत्र लादेशैः सम्भवदानन्तर्यस्यादादिकस्यैव ग्रह इति विकरणेन व्यवहितानन्तर्यादस्मात्परेषां तिबादीनां णलादयो न भवन्ति । अत एव हेतोः 'विदेः शतुर्वसुरि' त्यत्रापि पूर्ववत्सम्भवदानन्तर्ये आदादिक एव गृह्यते इति विदचित्यत्र वस्वादेशो न भवति । विवेद, विविदतुः । विवेदिथ, विन्दतु, अविन्दत् । 'सिजभ्यस्तविदिभ्य' इत्यत्रापि पूर्ववत्सम्भवदानन्तर्यस्यादादिकस्यैव ग्रह इत्यविन्दवित्यत्र जुस्न भवति । विन्देत् । आशिषि विद्यात् । 'समो गम्यृच्छी' त्यत्र गम्यादिभिः साहचर्यात्परस्मैपदिन एव विदेर्ग्रह इत्यस्य तङ्नियमाभावात्कर्माविवक्षायामपि संविन्दति संविन्दत इत्युभयं भवति । अविदत् । अविदताम् । ऌदित्वादङ् । विन्दते । विविदे । वेदिता । वेदिष्यते । विन्दताम् । अविन्दत । विन्देत । वेदिषीष्ट । अवेदिष्ट । 'उषविदे' त्यत्र उषजागृभ्याम्परस्मैपदिभ्यामादादिकेन जागर्तिना साहचर्यात्परस्मैपदिन आदादिकस्य ज्ञानार्थकस्यैव ग्रह इत्यात्मनेपदिनस्तौदादिकस्य सत्ताविचारणार्थयोरुभयपदिनश्चास्माच्च भवति । विविदिषति । विवेदिषति । विदित्वा । वेदित्वा 'रलो व्युपधादि' ति वा कित्त्व, 'रुदविदे' त्यत्राकारस्य विवक्षितत्वादस्य न ग्रहः । अत एव तत्र न्यासे विद ज्ञाने इत्युपात्तः, तथा च 'सन्सुद्विषे' त्यत्र वृत्तिः । विद

लिलिप्सते । लेलिप्यते । लेलेप्ति । लेपयति । अलीलिपत् । लिम्पः । 'अनुपसर्गाल्लिम्पे'ति शः । निलिम्पा देवाः । 'नौ लिम्पेरि'ति शः । लिप्तवासितमित्यत्र राजदन्तादिपाठात्पूर्वकालस्यापि परनिपातः । लिपिः । लिबिः 'इगुपधात्किच्चे'ति इन्प्रत्ययः । 'दिवाविभे'त्यादौ लिपिलिबीति निर्देशात्पकारस्य पक्षे बकारः ॥ १४९ ॥

षिच क्षरणे ॥ सिञ्चति । सिषेच । सिषिचतुः । सिषेचिथ । क्रादिनियमादिट् । 'आदेशप्रत्यययोरि'ति प्रकृतेः षत्वम् । सेक्ता । सेक्ष्यति । सिञ्चतु । असिञ्चत् । सिच्यात् । असिचत् । 'लिपिसिचिह्वश्चे'ति परस्मैपदेऽङ् । अन्यत्रा 'त्मनेपदेष्वन्यतरस्यामि'ति विकल्पः । असिक्त । असिक्षाताम् । असिचत । असिचेतामित्यादि । सिञ्चते । सिषिचे इत्यादि, सिसिक्षति । सिसिक्षते । 'स्तौतिण्योरेवे'ति नियमान्न षत्वम् । सेसिच्यते । 'सिचो यङी'ति न षत्वम् । सेसेक्ति । सेचयति । असीषिचत् । अत्र स्वामी षत्व नेच्छति । अभिषिचति 'स्तौतिण्योरेवे'ति नियममबाधित्वा 'स्थादिष्वभ्यासेन चाभ्यासस्ये'ति षत्वम् । अभिसेसिच्यते इत्यत्र 'उपसर्गादि'ति प्राप्तेरपि परत्वा 'त्सिचो यङी'ति निषेधो भवति, उपसर्गादिति प्राप्तिस्तु पुरस्तादपवादन्यायेन 'सात्पदाद्योरि'ति निषेधमेव बाधेत । सेक्तम् । 'दाम्नीशसे'त्यादिना ष्ट्रन् । सिक्थम् । पातृतुदिवचिरिचिसिचिभ्यस्थगिति थक् । सिचयशब्दस्तु बाहुलकात्कयनन्तः । मुचादयोनुदात्ताः स्वरितेतः । विदतिस्तु सेडेकः ॥१५०॥

कृती छेदने ॥ उदात्त उदात्तेत् । कृन्तति । चकर्त्त । चकृततुः । चकर्तिथ । चकृत । चकृतिव । कर्तिता । कर्त्स्यति । कर्तिष्यति । 'सेसिची'त्यादिना सकारादाविड्विकल्पः । कृन्ततु । अकृन्तत् । कृन्तेत् । कृत्यात् । लिडौ । अकर्तीत् । अकर्तिष्टाम् । चिकृत्सति चिकर्तिषति । चरीकृत्यते । चरिकर्त्तीत्यादि । कर्तयति । अचकर्तत् । उर्छृद्वा । विकर्तनः । नन्द्यादिः । कृतः । कृतवान् । कृतिः । क्तिन् । कृत्समुद्[1]कम् । सर्वाश्चक्ष-

१ धानीयमिति ४ पु पाठः ।

त्यृषिभ्यः किदिति सप्रत्ययः स कित् । 'निनुत्रे नोपनिषेधः क्रुन्दम् । 'कृत्यल्युटो बहुलम्' इति क्रत्वन् । बाहुलकादिड्भावश्च ॥ १५१ ॥

खिद परिघाते ॥ अनुदात्त उदात्तेत् । खिन्दति । चिखेद । चिखिदतुः । चिखेदिथ । खेत्ता । खेत्स्यति । खिन्दतु । अखिन्दत् । खिन्देत् । खिद्यात् । लुङि अखैत्सीत् । अखैत्ताम् । 'वदव्रज' इति वृद्धिः । झलि सिचो लोपः. चिखित्सति । चेखिद्यते । चेखेत्ति । चेखिदीति । खेदयति । अचीखिदत् । खित्त्वा । खिन्नः । खिदिरम् । 'इषिमदिमुदिखिदिच्छिदिभिदिमन्दिचन्दितिमिमिहिमुहिमुचिरुचिरुधिबन्धिशुषिभ्यः किरच्' इति किरच् । खिद्यत इति दैन्ये दिवादिपाठात् । अथ कर्मकर्तरीति वदन् वामनो दिवादावस्य पाठं नेच्छति । खिद दैन्य इति रुधादौ गतः ॥ १५२ ॥

पिश अवयवे ॥ उदात्त उदात्तेत् । पिशति । पिपेश । पिपेशिथ । पिपिशिव । पेशिता पेशिष्यति । पिशतु । अपिशत् । पिशेत् । पिश्यात् । अपेशिष्टाम् । पिपिशिषति । पिपेशिषति । पेपिश्यते । पेपेष्टि । पेशयति । अपीपिशत् । पिशित्वा, पेशित्वा । पिशितम् । पिशिताशः पिशाचः । पृषोदरादित्वात्सिद्धिः[1] । पिशङ्गः । बाहुलकादङ्गच् । पिशङ्गी 'पिशङ्गादुपसंख्यानम्' इति ङीप् । पेशी गर्भकोशः । पचाद्यजन्ताद् गौरादित्वान्ङीष् । अयं दीपनायामपि वर्तते । तथा च 'त्वष्टा रूपाणि पिंशन्त्वि'त्यत्र हरदत्तः, पिंशतिर्दीप्तिकर्मा । नक्षत्रेभिः पितरो द्यामपिंशन्निति दर्शनादिति । पिश गतौ चुरादौ ॥ १५३ ॥

वृत् ॥ तुदादयो मुचादयश्च वृत्ता इत्यर्थः ॥

इति श्रीपूर्वदक्षिणपश्चिमसमुद्राधीश्वरकम्पराजसुतसंगममहामन्त्रिणा मायणसुतेन माधवसहोदरेण सायणाचार्येण विरचितायां माधवीयायां धातुवृत्तौ तुदादिगणः सम्पूर्णः ॥

---

१ पिशितपूर्वादशधातोरणि इतशब्दस्य लोपः, शकारस्य चकारश्चकारस्य जश्त्वाभावश्च पृषोदरादित्वात् । पिशितमश्नातीति पिशाचः ।

## अथ रुधादयः ॥

रुधिर् आवरणे ॥ अयं द्विकर्मकः । व्रजं गां रुणद्धि । रुन्द्धः । रुन्धन्ति । रुणत्सि । रुन्धः । रुन्ध । रुणध्मि । रुन्ध्वः । रुन्ध्मः । 'रुधादिभ्यः श्नम्' इति शपोऽपवादः श्नम् । नित्यत्वादयं गुणात्पूर्वं प्रवर्तते । मित्त्वादचोऽन्त्यात्परः, शकारः श्नान्नलोप इति विशेषणार्थः । 'झषस्तथोर्धोऽधः' इति झषोऽनन्तरयोस्तथोर्धत्वे 'झलां जश् झशि' इति धातोर्दत्वे, रुन्ध इत्यादौ क्ङिति सार्वधातुके 'श्नसोरल्लोप' इत्यकारस्य लोपः । 'नश्चापदान्त' इत्यनुस्वारः परसवर्णः । अल्लोपस्यानयोर्नस्थानिवत्त्वं, 'नपदान्त' इत्यादिना निषेधात् । णत्वे तु कर्तव्ये परसवर्णस्य पूर्वत्रासिद्धत्वान्न तद्भवति । न चानुस्वारात्पूर्वं णत्वप्रसङ्गः । तस्यासिद्धत्वात् । रुणत्सीत्यत्र 'खरि च' इति चर्त्वं, रुरोध । रुरुधतुः । रुरुधुः । रुरोधिथ । रुरुधिव । क्रादिनियमादिट् । रोद्धा । रोत्स्यति । रुणद्धु, रुन्धात् । रुन्धाम् । रुन्धन्तु । रुन्द्धि, हेर्धित्वे जश्त्वम् । रुन्धम् । रुन्ध । रुणधानि । रुणधाव । रुणधाम । अरुणत् । अरुणद् । अरुन्धाम् । अरुन्धन् । अरुणत् । अरुणद् । अरुणः । अरुन्धम् । अरुणधम् । अरुन्ध्व । अरुन्ध्म । 'हल्ङ्या' दिना तिस्योर्लोपः । जश्त्वं वा चर्त्वञ्च । सिपि 'दश्च' इति वा रुत्वमपि । रुन्ध्यात् । रुन्ध्याताम् । रुन्ध्युः । रुन्ध्या । रुन्ध्याम् । रुन्ध्याव । आशिषि रुध्यात् । रुध्यास्ताम्, लुङि 'इरितो वे' ति अङ्पक्षे । अरुधत् । अरुधताम् । अन्यदा अरौत्सीत् । अरौद्धाम् । अरौत्सुः । अरौत्सीः । अरौद्धम् । अरौद्ध । अरौत्सम् । अरौत्स्व । अरौत्स्म । रुन्धे । रुन्धाते । रुन्धते । 'आत्मनेपदेष्व' त्यद्भावः । रुन्त्से । रुन्धाथे । रुन्ध्व । रुन्ध्वहे । रुरुधे । रुरुधाते । रुरुधिरे । रुरुधिषे । रुरुधिवहे । रोद्धा । रोत्स्यते । रुन्धाम् । रुन्धाताम् । रुन्धताम् । रुन्त्स्व । रुणधै । रुणधावहै । अरुन्धाताम् । अरुन्धत । अरुन्धाः । अरुन्धि । अरुन्ध्वहि । रुन्धीत । रुन्धीयाताम् । रुन्धीयाः । रुन्धीय । रुन्धीवहि । आशिषि । रुत्सीष्ट । रुत्सीयास्ताम् ।

‘लिङ्सिचावि’ति कित्त्वम् । अरुत्साताम् । अरुत्सत । अरुद्धाः । अरुत्सि । अरुत्स्वहि । कर्मकर्तरि अरुद्ध गौः स्वयमेवेत्यत्र ‘न रुध’ इति चिणो निषेधः । शुद्धे तु कर्मण्यरोधीति भवति । रुरुत्सते । ‘हलन्ताच्चे’ति सनः कित्त्वम् । रोरुध्यते । रोरोद्धि । रोधयति । अरूरुधत् । अस्याप्रधाने कर्मणि लादयः । अद्दुरोधी । यद्वा द्वन्द्वाणिनिः, अनुरोधी । ‘सम्पृचा’दिना घिनुण् प्रतिरोधी । ‘भविष्यति गम्यादय’ इति इवन्तो भविष्यदर्थे, व्रजमवरोधं, व्रजेन उपरोधं, ‘सप्तम्यां चोपपीडरुधे’ति सप्तम्यन्ते तृतीयान्ते चोपपदे णमुल् । ‘तृतीयाप्रभृतीनी’ति समासविकल्पः । केचित्तु रुधशब्दस्य पीडयतिनैव सम्बन्धमाहुः । भट्टिकारस्य तूपोपसर्गग्रहणमनन्वितमिति प्रागेवोक्तम् । रोधः । अरुत् । रुधिरम् । ‘इषिमदी’त्यादिना किरच् । अनुरुध्यत इति श्यनि गतम् ॥ १ ॥

भिदिर् विदारणे ॥ भिनत्ति । भिन्तः, भिन्दन्ति । भिनत्सि । भिन्थः । भिन्थ, भिनद्मि, भिन्द्वः । भिन्द्मः । बिभेद । बिभिदतुः । बिभिदुः । बिभेदिथ । बिभिदिव । भेत्ता । भेत्स्यति । भिनत्तु । भिन्तात् । भिन्ताम् । भिन्दन्तु । भिन्धि । भिनदानि । अभिनत् । अभिन्ताम् । अभिन्दन् । अभिनः । अभिन्तम् । अभिन्त । अभिनदम् । अभिन्द्व । भिन्द्यात् । भिन्द्याताम् । भिन्द्युः । भिन्द्याम् । आशिषि । भिद्यात् । भिद्यास्ताम् । लुङि अभिदत् । अभिदताम् । अभैत्सीत् । अभैत्ताम् । भिन्ते । भिन्त्से । भिन्दे । बिभिदे । बिभिदिषे । भेत्ता । भेत्स्यते । भिन्ताम् । भिन्दाताम् । भिन्त्स्व, भिनदै । अभिन्त । अभिन्दाताम् । अभिन्दत । अभिन्थाः । अभिन्दि । भिन्दीत । आशिषि भित्सीष्ट । अभित्त । अभित्साताम् । बिभित्सति । बिभित्सते । बेभिद्यते । बेभिदीति । बेभेत्ति । भेदयति । अबीभिदत् । सर्वत्र रुधिवत्प्रक्रिया । भिदेलिमानि काष्ठानि । ‘केलिमर उपसंख्यानमि’ति केलिमर् । अयं कर्मकर्तरि, भिद्यो नदः । ‘भिद्योद्ध्यौ नदे’ इति कर्तरि क्यपि निपात्यते । कर्तरि काष्ठभित् । प्रभित् ‘सत्सूद्विषे’त्यादिना क्विप् । भिदुरं काष्ठम् । ‘विदिभिदिच्छिदेः कुरच्’ इति कुरच् । स्वभावादय

कर्मकर्तरि । भिदा । भिदादित्वादङ् । तत्र भिदा विदारणे इति-पाठादन्यत्र भित्तिरिति भवति । भित्तम् । 'भित्त शकल' मिति शकले निष्ठानत्वाभावादन्यत्र भिन्नमिति भवति । भिदिर वज्रम् । 'इषिमदी' त्यादिना किरच्। उद्भित् क्विप्। उद्भिदः। इगुपधलक्षणः कः ॥ २ ॥

छिदिर् द्वैधीकरणे ॥ छिनत्तीत्यादि भिनत्तिवत्। छिदुरम्। 'विदिभिदिच्छिदेः कुरजि' ति कुरच्। अथ कर्मकर्तरीति वृत्तिः। करीन्द्रदर्पच्छिदुर मृगेन्द्र, रसज्ञाया इत्थ विदुरशशिधामभ्रमकरानित्यादिप्रयोगदर्शनात् कर्मकर्तरीति वृत्तिकारोक्त प्रायिकमित्यात्रेयः। र[1]ज्जुच्छित्। 'सत्सूद्विषे' त्यादिना क्विप्। छिदा। छिदा द्वैधीकरणे इति भिदादिपाठादङ्। अन्यत्र छित्तिः, घञ् छेदः, छैदिकं 'छेदादिभ्यो नित्यमि' ति तदर्हतीत्यस्मिन्नर्थे ठक् । शीर्षच्छेद्यः शैर्षच्छेदिकः । 'शीर्षच्छेदाद्यच्चे' ति । तदर्हतीत्यर्थे यत्ठकौ, अत्रैव निर्देशात् प्रत्ययसन्नियोगेन शिरसः शीर्षभावः । छिदिरम् । 'इषिमदी' त्यादिना किरच् । छिद्रम् । 'स्फायितञ्चीत्यादिना रक्, छेद द्वैधीकरणे चुरादौ ॥ ३ ॥

रिचिर् विरेचने ॥ रिणक्ति । रिङ्क्तः । रिञ्चन्ति । रिङ्क्थः रिङ्क्थ । रिणच्मि । रिञ्च्वः रिञ्च्मः । रिरिचतुः, रिरेचिथ । रिरिचिव । रेक्ता । रेक्ष्यति । रिणक्तु । रिङ्क्तात् । रिङ्क्तात् । रिञ्चन्तु । रिङ्ग्धि । रिङ्क्तात्। रिणचानि। अरिणक् । रिञ्च्यात्। रिञ्च्याताम् । आशिषि, रिच्यात् । लुङ् । अरिचत् । अरैक्षीत्, रिङ्क्ते । रिरिचे । रेक्ता । रेक्ष्यते । रिङ्क्ताम्। रिङ्क्ष्व। रिणचै। अरिङ्क्त। अरिङ्क्थाः। अरिञ्च्वि। रिञ्चीत। रिक्षीष्ट । अरिक्त। अरिक्षाताम् । रिरिक्षति। रिरिक्षते । रेरिच्यते । रेरिचीति। रेरेक्ति । रेचयति । अरीरिचत्। रेकः। घञि 'चजोः कुघिण्ण्यतोरि' ति कुत्वम् । रिक्थ, 'पातॄतुदिविचिरिचिसिचिभ्यस्थक् विरिञ्चः विरिञ्चिः विरिचिनः, एते पृषोदरादयः । रिच विरेचनसम्पर्चनयोरिति चुरादौ ॥ ४ ॥

[1] वणच्छिदिति ३ पु॰ पा॰ ।

विजिर् पृथग्भावे ॥ विनक्ति विङ्क्तः, विङ्क्ते इत्यादि रिचिवत् । विवेक्ती । सम्पृचादिना घिनुण् । विवेकः, घञ् 'चजो'रिति कुत्व मुभयत्र ॥ ५ ॥

तुदिर् सम्पेषणे ॥ तुणत्ति । तुन्त्तः । तुन्दन्ति । तुणत्सि तुणद्मि । तुन्द्वः, तुन्त्ते । तुन्दाते । तुन्त्से तुन्ध्वे । तुन्द्वहे, चुतोद चुतुदतुः । चुतोदिथ । चुतुदिव । चुतुदे । चुतुदिषे । चुतुदिवहे । तोत्ता । तोत्स्यति तोत्स्यते । तुणत्तु । तुन्तात् । तुन्ताम् । तुन्दन्तु । तुन्धि । तुणदानि । तुन्ताम् । तुन्दाताम् । तुन्दताम् । तुन्त्स्व । तुणदै । तुणदावहै । अतुणत् । अतुन्ताम् । अतुन्दन् । अतुणन् । अतुणद् । अतुणः । अतुणदम् । अतुन्द्व । अतुन्त । अतुन्दाताम् । अतुन्दत । अतुन्थाः । अतुन्दि । अतुन्द्वहि । तुन्द्यात् । तुन्द्याताम् । तुन्दीत । तुन्दीयाताम् । आशिषि तुद्यात् । तुद्यास्ताम् । तुत्सीष्ट, तुत्सीयास्ताम् । अतुदत् । अतुदताम् । अतुदन् । अतौत्सीत् । अतौत्ताम अतुत्त । अतुत्साताम् । तुतुत्सति । तुतुत्सते । तोतुद्यते । तोतोत्ति । तोदयति । अतूतुदत् । तुद्रः । 'स्फायितञ्ची'त्यादिना रक्, तुद्राभिः कृत तौद्र मधु । 'तुद्राभ्रमरे'ति तेन कृतमिति विग्रहेत् । तोदिष्टः, तोदीयान् तोदिमा, 'स्थूलदूरे'त्यादिना यणादेर्लोपः इष्ठेमेयस्सु, पूर्वस्य च गुणः, पृथ्वादित्वादिमनिच्, तोदयति । णाविष्ठवदिति यणादेर्लोपो गुणश्च ॥ ६ ॥

युजिर् योगे । युनक्ति । युङ्क्तः । युञ्जन्ति । युनक्षि । युनज्मि । युङ्क्ते । युञ्जाते । युङ्क्ते । युञ्जे । युञ्ज्वहे । युयोज । युयोजिथ । युयोज । युयुजिव । युयुजे । योक्ता । योक्ष्यति । योक्ष्यते । युनक्तु । युङ्क्तात् । युङ्क्ताम् । युञ्जन्तु । युङ्ग्धि । युङ्क्तात् । युङ्क्तम् । युनजानि । युनजाव । युनजाम । युङ्क्ताम् । अयुनक् । अयुनग् । अयुङ्क्तम् । अयुङ्क्त । अयुञ्जि । अयुञ्ज्वहि । युञ्ज्यात् । युञ्ज्याताम् । युञ्जीत । आशिषि युज्यात् । युक्षीष्ट । 'प्रोपाभ्यां युजेरयज्ञपात्रेष्वि'त्यकर्त्रभिप्रायेऽपि तङ् । यज्ञपात्रे तु पात्राणि प्रयुनक्तीति । अत्र प्रग्रहणं स्वरान्तस्योपसर्गस्योपलक्षणम् । उपग्रहणमपि स्वरादेः, । तथा च वार्त्तिके स्वराद्यन्तोपसृष्टा-

न्यासकारादयः । केचि 'दिन्धिभवतिभ्यां च' इति इन्धेः परस्य लिटः कित्त्वविधानसामर्थ्यादामो विकल्पमिच्छन्ति तदिन्धेश्छन्दो विषयत्वाद्भुवो वुको नित्यत्वादित्यादि भाष्यवार्तिकविरोधादुपेक्ष्यम् । इन्धिता । इन्धिष्यते । इन्धाम् । इन्धाताम् । इन्धताम् । इन्त्स्व । इनधै । ऐन्ध । ऐन्धाताम् । ऐन्धत । ऐन्धाः । ऐन्धि । इन्धीत । इन्धीयाताम् । आशिषि इन्धिषीष्ट । इन्धिषीयास्ताम् । ऐन्धिष्ट । ऐन्धिषाताम् । इन्दिधिषते । 'नन्द्राः' इति नकारवर्जितस्य द्विर्वचनम् । इन्धयति । ऐन्दिधत् । इद्धः । ञित्वाद्वर्तमाने क्तः । ईदित्त्वादनिट्त्वम् । एधः । 'अवोदैधौद्म' ति निपातनाद्घञि नलोपः । सान्तस्त्वेधस्शब्द औणादिकेऽसुनि बाहुलकान्नलोपे । अग्निमिन्धे इति अग्निमिन्धः । 'भ्राष्ट्राग्न्योरिन्धे' इति मुम् । समित् । समिद् । समिधौ । 'संपदादित्वात् क्विप् । सामिधेन्यो मन्त्रः । 'समिधामाधाने षेण्यण्' इति षेण्यण् । सामिधेनी ऋक् । षित्त्वान्ङीष् । 'हलस्तद्धितस्ये' ति यलोपः, अग्निमिन्धे इत्यग्नीत् । ऋत्विग्विशेषः, क्विप् चेति क्विप् । आग्नीध्र । अग्नीधः शरणे रण् भं चेति रण्प्रत्ययः, भं चेति भत्वात्पदत्वाभावाज्जश्त्व न भवति । शरणं गृहम् । ञित्त्वाद्वृद्धिः, । 'आग्नीध्रः साधारणादञ्' ति स्वार्थेञ्यद्यपीदमेव रूपम् । प्रयोजनन्तु स्त्रियामाग्नीन्ध्री शालेति 'टिड्ढेति' ङीप् । विविधमिन्धे इति वीध्रः । अग्निर्विमलश्च । 'वाविन्धेरि' ति वावुपसर्गे उपपद इन्धेः क्रन्, कित्त्वादनुनासिकलोपः ॥ ११ ॥

खिद दैन्ये ॥ खिन्ते । खिन्दाते । खिन्त्से । खिन्द्दे । खिन्ताम् । खिन्दाताम् । खिन्त्स्व खिनदै । अखिन्त । अखिन्दाताम् । अखिन्दि । खिन्दीत । चिखिदे । खेत्तेत्यादि खिद्यतिवत् । खिन्दतीति शे गतम् ॥ १२ ॥

विद् विचारणे ॥ विन्ते इत्यादि खिनत्तिवत् ॥ वित्तः, विन्नः । 'नुदविदोन्दत्रे' ति निष्ठानत्वविकल्पः ॥ उन्दिना साहचर्यादस्यैव तत्र ग्रहः । खिदिविदी अनुदात्तावनुदात्तेतौ ॥ १३ ॥

शिषॢ विशेषणे ॥ इतो भुजन्यन्ता अनुदात्ता उदात्तेतः । शिनष्टि । शिंष्टः । शिंषन्ति । शिनक्षि । शिनष्मि । शिंष्वः । ष्टुत्वं तवर्गस्य, सकारादौ षस्य कत्वम् । शिशेष । शिशिषतुः । शिशेषिथ । शिशिषिव । शेष्टा, शेक्ष्यति, शिनष्टु, शिंष्टात् । शिंष्टाम् । शिण्ढि । हेर्धित्व, षत्वजश्त्वानुस्वारपरसवर्णा यथायोग्यम् । शिनषाणि । अशिनट् । अशिनड् । षकारस्य 'झलां जशोऽन्ते' इति जश्त्वे चर्त्वविकल्पः । अशिंष्टाम् । अशिनट् । अशिनषम् । अशिंष्व । शिंष्यात् । शिंष्याताम् । आशिषि । शिष्यात्, लुङि अशिषत् । ऌदित्त्वात्परस्मैपदे ऽङ् । तङि तु क्सः, अशिक्षतेत्यादि । शिशिक्षति । शिशिक्षते । शेशिष्यते । शेशिषीति । शेशेष्टि । शेषयति । अशीशिषत् । शिष्टः, शिष्टवान् । विशेषः । वैशेषिक, 'विनयादिभ्यष्ठक्' इति स्वार्थे ठक् । महत्या विशिष्टः महाविशिष्टः 'महदात्वे घासकरविशिष्टेषूपसङ्ख्यानम्' इति पुंवद्भाव आत्वं च । शेषतीति दण्डके हिंसायां शपि । शेषयतीति युजादिपाठादसर्वोपयोगे ॥ १४ ॥

पिषॢ सञ्चूर्णने ॥ पिनष्टीत्यादि शिषिवत् । शुष्कपेषं पिनष्टि । चूर्णपेषं पिनष्टि । रूक्षपेषं पिनष्टि । 'शुष्कचूर्णरूक्षेषु पिषः' इति शुष्कादौ कर्मण्युपपदे णमुल् । शुष्कं पिनष्टीत्यर्थः । उदपेषं पिनष्टि । 'स्नेहने पिषः' इति स्नेहवाचिनि करणे उपपदे णमुल्, उदकेन पिनष्टीत्यर्थः । 'पेषंवासवाहनधिषु च' इति उदभावः । सर्वत्र कषादित्वादनुप्रयोगः । पिष्टमयम् । 'पिष्टाच्च' इति विकारे मयट् । पिष्टकर्णी । 'कर्णे लक्षणस्य' इति कर्णे उत्तरपदे लक्षणवाचिनो विधीयमानो दीर्घस्त्वेव पिष्टादिपर्युदासान्न भवति । चोरस्य पिनष्टि । 'जासिनिप्रहण' इत्यादिना कर्मणि शेषे हिंसायां षष्ठी, अशेषे त्वहिंसायाञ्च चोरं पिनष्टि, धानाः पिनष्टीति द्वितीयैव भवति ॥ १५ ॥

भञ्जो आमर्दने ॥ भनक्ति । भङ्क्तः । भञ्जन्ति । भनक्षि । भनज्मि । भञ्ज्वः । 'श्नान्नलोपः' इति प्रकृतिनकारस्य लोपः । नकारे परतोऽकारस्य 'अतो दीर्घो यञि' इति दीर्घो न भवति । अकारान्तस्यानङ्गत्वात् । किन्तु

त्यात्व वा भवति । सन्यादित्यत्र तु 'ये विभाषे' त्यात्व ये इत्यत्वतो-निर्द्देशान्न भवतीति धातुपारायणे । सातिः, सतिः । सन्तिः 'सनः क्तिचि लोपश्चास्यान्यतरस्या'मित्याकारः, पत्ते तदभावे वा नलोपश्च । सातिः । 'ऊतियूती' त्यादिना क्तिनि निपात्यते ॥ २ ॥

क्षणु हिंसायाम् ॥ क्षणोति । क्षणुते । चक्षाण । चक्षणे । क्षणिता । क्षणितासे । क्षणिष्यति । क्षणिष्यते । क्षणोतु । क्षणुतात् । क्षणुतम् । क्षण्वाताम् । अक्षणोत् । अक्षणुत । क्षणुयात् । क्षण्वीत । क्षण्या-त् । क्षणिषीष्ट । अक्षणीत् । अक्षणिष्टाम् । 'ह्म्यन्ते'त्यादिना 'अतो हलादे'रिति वृद्धिनिषेधः । अक्षत । अक्षणिष्ट । अक्षथाः । अक्षणिष्ठाः । 'तनादिभ्य' इति वा सिचो लुक्, तदा तनोत्यादित्वा-दनुनासिकलोपः । चिक्षणिषति । चङ्क्षण्यते । क्षाणयति । अचिक्षणत् । 'सन्वल्लघुनी'ति त्वनेकहल्व्यवधानेऽपि भवति, 'अत्स्मृदृत्वरे' त्यादि-ना इत्वापवादादत्वविधानाज्ज्ञापकात् । अयमप्युपदेशे तवर्गीयान्तः । लक्षणवशात्तु णत्व, तेन चक्षन्तीत्यत्रानुस्वारपरसवर्णौ भवतः । णत्व त्वनुस्वारीभूतो णत्वमतिक्रामतीति तत्र तत्रोक्तत्वान्न भवति । क्षत्वा । क्षणित्वा 'उदितो वे' त्युदित्त्वादिड्विकल्प । क्षतः । 'यस्य विभाषे'-त्यनिट्त्वम् । क्षन्तिरित्यत्र 'न क्तिचि दीर्घश्चे'ति दीर्घानुनासिकलोप-निषेधः ॥ ३ ॥

क्षिणु च ॥ हिंसायामित्यर्थः । क्षि[1]णोति । क्षिणुते । चिक्षेण । चिक्षिणे । क्षेणितासे । क्षेणिष्यति । क्षेणिष्यते । क्षिणोतु । क्षिणुताम् । अक्षिणोत् । अक्षिणुत । क्षिणुयात् । क्षिण्वीत । क्षिण्यात् । क्षे[2]णिषीष्ट । अक्षेणीत् । अक्षित । अक्षेणिष्ट । अक्षिणिष्ठाः । पूर्ववत्पाक्षिके सिज्लुक्यनुना-सिकलोपः, चिक्षिणिषति । क्षेणयति । क्षिणित्वा । क्षेणित्वा, 'रलो व्युप-धादि'ति क्त्वविकल्पः । क्त्वायामुदित्त्वादिडभावे तु क्षित्वा । तनोत्या-दित्वादनुनासिकलोपः । चेक्षिण्यते । चेक्षेणति । अयमपि तवर्गीयोपदेशः ॥

१ सन्नापूर्वको विधिरनित्य इति न गुण. ।
२ क्षेणिषोष्टेति ३ पु· पा· ।

णत्वन्तु नात्तणिकमिनीह क्षणिवदनुच्चार्य इनो णत्वमस्ति ज्ञानन्ति क्षितः । 'यस्य विभाषे'त्यनिट्त्वम् । क्षितिः । 'क्तितुत्रे'त्यनिट्त्वम् . अत्र सर्वत्र पिट्टचने तु विकरणापेक्षो गुणः सन्नापूर्वको विधिरनित्य इति न भवतीत्या- त्रेयमैत्रेयौ । तथा चापिशलिः । शाब्दिकरणेषु धातुगुणमभिधाय करो- तेश्च सिद्देश्चेत्यसूत्रयन, 'इगन्तनयूपधस्य चे'त्यत्र रक्षितेन चोक्तम् । एवञ्च पञ्चबाणः क्षिणोर्नाति सिद्ध्यति । शाब्दिकाभरणे तु गुण एवो- दाहृतः । शाकटायनक्षीरस्वामिभ्यामस्य धातुर्न पठ्यते । अत एवात्रेय- मैत्रेयाभ्यामपि स्वादिश्क्रान्त्येषु पठितस्य क्षेणोतिरित्यादाविव प्रयोगाङ्गी- कारेण क्षेणोनीति साधितम् । शाकटायनः पुनस्तत्र छान्दसमित्याह । इहापि क्षिणु न पपाठेति । तन्मते क्षिणोतिरित्यादि भाष्यासमा- धुरेव ॥ ४ ॥

ऋणु गतौ ॥ अयमपि तवर्गीयान्तोपदेशः । लाक्षणिकं णत्वम् । अर्णोति । अर्णुतः, अर्णुवन्ति । अर्णोषि । अर्णोमि । अर्णुते । अर्णुवाते । अर्णुवते । अर्णुवे । आनर्ण । आनृणतुः । आनर्णिथ । आनृण । आनृणिव । आनृणे । आनृणिषे । आनृणिवहे । क्षिणोतिवत्क्सिद्धत्रं तथा । अर्णिता । अर्णिष्यति । अर्णिष्यते । अर्णोतु । अर्णुहि । गुणे कृते सयोग- पूर्वत्वादुकारस्यो 'तश्च प्रत्यया'दिति हेर्लुग्न भवति । आर्णोत् । आर्णु- ताम् । ऋणयात्, अर्णुयात् । सर्वत्र विकारणापेक्षो गुणः । आशिषि अर्णि- षीष्ट । आर्णीत । आर्णिष्टाम् । आर्त, आर्णिष्ट । आर्णिष्ठाः । आर्थाः. तनादित्वात्सिचस्तृतीयचतुर्थयोर्लोपः । अर्णिनिषति । गुणे कृते 'न न्द्रा' इति रेफवर्जितस्य द्विर्वचनम् अत्रात्रेयो नान्तोपदेशत्वेपि द्विर्वचने कर्तव्ये णत्व- स्य नासिद्धत्वम्, पूर्वत्रासिद्धीयमद्विर्वचनइति न्यायात् । तेन प्रकृत्यभ्यासयो- र्द्वयोरपि णकारावित्याह । पारायणे तु णत्वस्यासिद्धत्व इणत्वस्य द्विर्व- चने परस्य व्यवधानात् णत्वाभावो दर्शितः । प्रतिपादितस्यादादनिते- साभ्यासस्य णत्वविधानाद् लिड्त्पूर्वत्रासिद्धमद्विर्वचने इत्यस्यानित्यत्व ज्ञापनाण्णत्वविषये तस्याप्रवृत्तेरर्णिनूषते इत्यादिवण्णत्वस्यासिद्धेव भवि तव्यमिति पारायणिकपक्षो ज्यायान् । अत एव पारायणिकपक्षविरोधा-

णोपदेशस्य पक्षो दूष्य एव । अर्णयति । आर्णयत्, माभवानर्णिनत् माभवानृणिनत् । उर्चीद्वा, माभवानृणिनेताम् । माभवानृणिनया: । पूर्ववत्परस्य णत्वं न भवति । ऋत्वा । अर्णित्वा । उदित्त्वादिड्विकल्प: । अनिट्पक्षे 'ऽनुदात्तोपदेशे' त्यनुनासिकलोप: । ऋत: । ऋतवान् । ऋति: । स्वर्ण: । पचाद्यचि गुण: । उपसर्गस्य यण् । 'तनादीनां छन्दस्युपसख्यानमि' त्युपसर्गस्योवङि सुवर्ण, संज्ञाशब्दत्वाद्भाषायामप्यस्य प्रयोग: साधुरित्यात्रेयमैत्रेयौ । शोभनो वर्णोऽस्येत्यपि शक्यते व्युत्पादयितुम् । द्वाभ्यां सुवर्णाभ्यां क्रीतं द्विसुवर्णम्, द्विसौवर्णिकम् । 'सुवर्णशतमानयोरुपसंख्यानमि' त्यार्हीयस्य ठक: पक्षे लुक् । लुगभावे 'परिमाणान्तस्ये' त्युत्तरपदवृद्धि: । अर्ण: । असुन् । अर्णव: । 'अर्णसो लोपश्चे' ति मत्वर्थीये वप्रत्यये सलोप: । अत्रात्रेयमैत्रेयादिभि: शब्विकरणे गुण:, करोतेश्च मिदेश्चेन्यापिशलिम्मरणाद्विकरणापेक्षो गुणोऽन्यस्य धातोर्न भवतीति क्षिणोतीत्यादि दर्शितम्, तथा च क्षीरस्वाम्यपि क्षिणिप्रभृतीन्प्रस्तुत्य इमे सार्वधातुके संदिग्धगुणा इत्याह । सार्वधातुके परे उप्रत्यये इत्यर्थ. । चन्द्रस्तु गुणाभाव न सहते । यदाह । अर्णोतीत्याद्युदाहृत्य क्षिणोर्धातोर्लघोरुपान्त्यस्य गुणो नेष्यतइत्येतस्यान्योभिप्रायो मृग्य इति । अत: काश्यपादय: 'करोतेश्च मिदेश्चे' ति सूत्रमन्यथा ऽव्याख्यन् । करोते: सम्बन्धिनि विकरणे धातोर्गुणो भवतीति । अत्र वर्द्धमान: । करोते: सम्बन्धिनि गुण इति व्याख्यान न्याय्यमिति, मुनित्रयाविरोधादस्य न्याय्यत्वम् ॥ ५ ॥

तृणु अदने ॥ तर्णोति । तर्णुते । ततर्णेत्यादि पूर्ववत् । तृणम् । घञर्थे क: । तृण्या । 'पाशादिभ्यो य' इति समूहे य: । कत्तृणं तृणजातिविशेष:, 'तृणे च जातावि' ति को: कद्भावस्तत्पुरुषे । स्वाभाविकमस्य धातोर्णत्वमिति केचित्, तेषां यङ्लुकि तरीतृर्णोति भाव्यम् । अन्येषा तु अनुस्वारीभूतो णत्वमतिक्रामतीति तरीतृन्तोति ॥ ६ ॥

१ ऋणोतीत्यादीति ४ पु० पा० ।
२ शिवस्वामीति ३ । ४ । पु पाठ. ।

घृणु दीप्तौ ॥ घर्णोति । घर्णुते । जघर्णेत्यादि पूर्ववत् । घृणा । भिदादेराकृतिगणत्वादङ्, शिवस्वामी वकारोपधं पपाठ । तनादय उदात्ताः स्वरितेतः ॥ ७ ॥

वनु याचने ॥ दन्त्योष्ठ्यादिः । वनुते । वनुषे, वन्वे, वनुवहे । ववने । ववनिषे । वादित्वादेत्वाभ्यासलोपनिषेधः । वनिता, वनिष्यते । वनुताम्, । अवनुत । वन्वीत । आशिषि वनिषीष्ट । अवनिष्ट । अवत । अव-निष्ठाः । अवथाः । विवनिषते । वंवन्यते । वंवन्ति 'ज्ञाश्रावनुवमां चे'त्यनुपसृष्टानां मित्त्वविकल्पे वनु च नोच्यत इति घटादिकस्यायह इत्येके । अन्ये ऽनन्तरस्य विधिरिति न्यायेन घटादिकस्य वनतेरेवेति । तेन वानयति । प्रवानयतीत्येव भवति । वनित्वा । वत्वा । उदित्त्वादिड्भावपक्षे तनोत्यादित्वादनुनासिकलोपः । वतः । वतवान् । 'यस्य विभाषे'त्यनिट्त्वम् । वन्ति । 'न क्तिचि दीर्घश्चे'त्यनुनासिकलोपस्य दीर्घस्य च निषेधः । वनी, वाञ्छा, तामिच्छतीति क्यजन्तात् ण्वुल्, वनीयकः । अर्थि[2]-पर्यायः । अन्ये तु वनीयेत्यकारान्तं पठन्ति । तेषां वनीयतीति वनीय, ततः संज्ञायां कन् । चान्द्रास्त्वमुं परस्मैपदिनमाहुः । तन्मते वनोति । ववानेत्यादि ॥ ८ ॥

मनु अवबोधे ॥ मनुते । मेने इत्यादि वनुवत् । उदात्तावनुदात्तेतौ ॥ ९ ॥

डुकृञ् करणे ॥ करोति । कुरुतः । कुर्वन्ति । करोषि । करोमि । कुर्वः । कुर्मः । कुरुते । कुर्वाते । कुरुषे । कुर्वे । कुर्वहे । 'अत उत्सार्वधातुके' इति[3] सार्वधातुकपरस्योप्रत्ययान्तस्य करोतेरकारस्योकारः । तपरकरणाल्लघूपधगुणो न भवति । 'नित्यं करोते'रिति वकारमकारादौ नित्यमुकारस्य लोपः । कृतेऽस्मिन् 'हलि चे'ति दीर्घो 'न भकुर्छुरा'मि'ति निषिध्यते । न चेर्दिति तपरत्वेनैव विकारनिवृत्त्यर्थेन गुणवृद्धी-

---

१ याचनेति २ । पु पा ।
२ अर्थिपर्याय इति ४ पु॰ नास्ति ।
३ किदित्यधिक ४ पु ।

र्घोऽपि न भविष्यतीति मन्तव्यम् । तस्मिन्हि विकारनिवृत्त्यर्थे प्रसक्ते दीर्घस्य पूर्वत्रासिद्धत्वात् । न चोकारलोपस्य स्थानिवद्भावेनेह हल्पर-त्वाभावः, दीर्घविधि प्रति न स्थानिवदिति वा 'पूर्वत्रासिद्धे न स्थानिव-दि'ति वा स्थानिवत्त्वस्य निषेधात् । चकार । चक्रतुः । चकर्थ । चकृव । क्रादिव्यतिरेकाभावाल्लिटीडभावः । चक्रे । चक्राते । चकृषे । चकृवहे । न चाजादावन्तरङ्गत्वात्पूर्व यण्यनच्कत्वाद् द्विर्वचनाप्रसङ्गः शङ्क्यः । 'द्वि-र्वचनेऽची'ति यणः स्थानिवत्त्वात् । कर्ता । करिष्यति । 'ऋद्धनोः स्य'इतीट् । करोतु । कुरुतात् । कुरुताम् । कुरु । करवाणि । कुरु-ताम् । कुरुष्व । करवै । 'अत उत्सार्वधातुके' इत्यस्मिन्कर्तव्ये 'उतश्च प्रत्ययादि'त्यस्य हिलुको 'ऽसिद्धवदत्रे'त्यसिद्धत्वात्सार्वधातुकपरत्वे-नोत्वं भवति । अकरोत् । अकरोः । अकरवम् । अकुरुत । अकुरुथाः । कुर्यात् । कुर्याताम् । कुर्याः । 'ये चेति' यकारादौ करोतेरुप्रत्य-यस्य नित्य लोपः । कुर्वीत । कुर्वीयाताम् । कुर्वीय । यणादेशः । आशिषि । क्रियात् । क्रियास्ताम् । 'रिङ् शयग्लिङ्क्षु'ति रिङादे-शस्य रीङि प्रकृते रिङ्विधाना'दकृत्सार्वधातुकयो'रिति दीर्घो न भवति । कृषीष्ट, कृषीयास्ताम् । रिङादेशो यकारादाविति सीयुटि न भवति । 'उश्चे'ति लिङ्सिचोरात्मनेपदे कित्त्वान्न गुणः । अकार्षीत् । अका-र्ष्टाम् । सिचि वृद्धिः । अकृत । अकृषाताम् । 'ह्रस्वादङ्गा'दिति सिचो लोपः । 'तनादिभ्यस्तथासोरि'ति विकल्पितो लुङ् भवति । तनादित्वा-देवास्योप्रत्यये सिद्धे पृथग्विधानादन्यत्तनादिकार्यं न भवतीति ज्ञापनात् । यद्वास्तु विकल्पः, तथापि 'ह्रस्वादङ्गादि'ति लुगभावे लोपो भवि-ष्यति । न च विकल्पेनास्य बाधोऽसिद्धत्वाल्लोपस्य । न च विकल्पविधान-सामर्थ्यादसिद्धत्वेपि बाधः । तस्यान्यत्र अतत अतनिष्टेत्यादौ चरितार्थ-त्वात् । एवं च विकरणविधौ कृञ उपादानं प्रपञ्चार्थं भवति । कर्मणि क्रियते । अकारि । 'रिङ् शयग्लिङ्क्षु'ति रिङादेशो यकि । अत्राचेयः । कथ क्रियतीति पुरुषकारइत्युपादाय 'व्यत्ययो बहुलमि'ति कर्मण्यपि

१ वर्णादेश इति पु पा ।

परस्मैपदसिद्धिः। तथा च गुरुटीकायां कृताः पुरोडाशाः, करिष्यन्ति निर्वापा इति, अत्र कर्मण्येव ल्टि प्रयोगो दृश्यते। प्रयोगमूले तु तिङन्तप्रतिरूपको निपात इत्युक्तमित्याहुः। कर्मकर्तरि क्रियते कटः स्वयमेव, अकारि अकृत कटः स्वयमेव। 'अचः कर्मकर्तरी'ति तङ्वद्भावे चिण्। चिकीर्षति। 'इको झलि'ति कित्त्वान्न गुणः। 'अज्झनगमां सनि' इति दीर्घे 'ऋत इद्धातो'रितीत्वे रपरत्वे 'हलि चे'ति दीर्घः। चेक्रियते, रिङ्। चर्करीत्यादि, कारयति कटं देवदत्तो यज्ञदत्तः, देवदत्तेनेति वा, 'हृक्रोरन्यतरस्या'मिति वा प्रयोज्यः कर्म। संस्करोति। अलङ्करोतीत्यर्थः। तत्र संस्कुर्वन्ति समवयन्तीत्यर्थः। समस्करोत्। सञ्चस्कार। सञ्चस्करतुः। सञ्चस्करिथ। सञ्चस्करिव। 'सुट् कात्पूर्वः'। 'अड्भ्यासव्यवायेऽपी'ति अधिकारे 'संपर्युपेभ्यः करोतौ भूषणे' 'समवाये चे'ति कात्पूर्वः सुट्। समवायः समुदायः। 'समः सुटी'ति समो मकारस्य रुः। तस्य 'खरवसानयो'रिति विसर्जनीये 'विसर्जनीयस्य स' इति सत्वम्। 'वा शरी'ति विसर्जनीयो न भवति, व्यवस्थितविभाषाविज्ञानात्। वार्तिके तु संपुंकानां सो वक्तव्य इति रोरपवादः स एव विहितः। भाष्ये तु 'समः सुटी'ति द्विसकारकनिर्देशात्सूत्रेणैव सविधिः सिद्ध इत्युक्तम्। 'अत्रानुनासिकः पूर्वस्य तु वे'ति पक्षे मात्पूर्वस्यानुनासिकः। अत्रग्रहणं प्रकरणोपलक्षणम्, अनुनासिकाभावे 'अनुनासिकात्परोऽनुस्वारः' इत्यनुस्वार आगमः। कादिसूत्रे कृञोऽसुडिति वक्तव्यमिति वचनात्ससुट्कः कादन्यो भवतीति लिटीडागमः। भारद्वाजनियमोऽप्यसुट एवेष्यत इति वृत्त्यादौ स्थितमिति केचित्, सुटि कात्पूर्वग्रहणं सुटोऽभक्तत्वज्ञापनार्थमिति व्यवस्थितत्वात्संस्क्रियत इत्यादावृकारान्तत्वेऽपि संयोगादित्वाभावात् 'गुणोऽर्तिसंयोगाद्यो'रिति गुणो न भवति। तथा संस्कृषीष्ट समस्कृषातामित्यादौ 'लिङ्सिचावात्मनेपदेषु' इति 'ऋतश्च संयोगादे'रितीण्न भवति। 'ऋतश्च संयोगादेर्गुण' इत्यत्र तु संयोगोपधग्रहणं कर्तव्यमसोर्थमिति उक्तत्वात्संयोगाद्यवयवत्वाभावेऽपि ऋकारस्य

१ ४ पुस्तके करिष्यन्ता निर्वपा इति कर्मण्येव ल्टि प्रत्ययो दृश्यते इति पाठ उपलभ्यते स तु प्रयोगमूले तु तिङन्तप्रतिरूपको निपात इत्युत्तरग्रन्थसाकाङ्क्षत्वादसङ्गतः ।
२ स्थितत्वात्सर्तीति ४ पु पा ।

सञ्चस्करतुरित्यादौ क्किति लिटि गुणो भवति । एवमुपस्करोतीत्यादि, परिपूर्वत्वे तु 'परिनिविभ्य' इत्यादिना सुटः षत्वं भवति परिष्करोतीत्यादि । अड्व्यवाये तु 'सिवादिना वाड्व्यवायेपी' ति विकल्पो भवति पर्यष्करोत्पर्यस्करोद् इत्यादि । परिचस्कारेत्यादौ 'स्थादिष्वभ्यासेने' ति न षत्वं, तत्र यतः प्राक् सितादित्यनुवर्तते, संपूर्वस्य क्वचिदभूषणेपि सुडिष्यते। तदृषिः समस्कुरुतेति, सूत्रे च दृश्यते 'सस्कृतं भक्षा' इति । उपात्कृञः 'उपात्प्रतियत्नवैकृतवाक्याध्याहारे' ष्वित्येतेष्वपि कात्पूर्वः सुड् भवति । प्रतियत्नस्सतो गुणान्तराधानहेतुरिहा, ऽसावाधिक्याय वृद्धस्य वा तादवस्थ्याय, विकृतमेव वैकृतं प्रज्ञादित्वात्स्वार्थेण्, गम्यमानार्थस्य वाक्यैकदेशस्य स्वरूपेणोपादानं वाक्याध्याहारः । एधो दकस्योपस्कुरुते । 'कृञः प्रतियत्न' इति कर्मणि शेषे षष्ठी, 'गन्धनादि' सूत्रेण प्रतियत्ने तङपि, उपस्करोत्यन्नं विकरोतीत्यर्थः । उपस्करोति, वाक्यैकदेशमध्याहरतीत्यर्थ. । उपस्कृतं भुङ्क्ते उपस्कृतं जल्पतीत्युदाहरणे हरदत्तेन क्रियाविशेषणं व्याख्यातम् । उत्कुरुते दोषं, श्येनो वर्तिकामपकुरुते, राजानं प्रकुरुते, परदारान्प्रकुरुते । एधो दकस्योपस्कुरुते । गाथाः प्रकुरुते । शत प्रकुरुते । सूचयति, भर्त्सयति, सेवयते, सहसा प्रवर्तते, गुणान्तराधानाय ईहते, प्रकर्षेण कथयति, विनियुङ्क्ते इति क्रमेणार्थाः, 'गन्धनावक्षेपणसेवनसाहसिक्यप्रतियत्नप्रकथनोपयोगेषु कृञ' इत्येतेष्वर्थेषु वर्तमानात्कृञो ऽकर्त्रभिप्रायेपि तङ् । तमधिकुरुते । 'अधेः प्रसहन' इति तङ्, प्रसहनमभिभवः, अपराजयो वा, पराजयः शक्तस्य क्षमयैव यस्तदभावः सः, तथा च भारविः, भवादृशाश्चेदधिकुर्वते परा[1]निति । क्षमया न पराजयन्ते क्षमन्ते इत्यर्थः । क्रोष्टा विकुरुते स्वरान् । 'वेः शब्दकर्मण' इति तङ् । अत्र कर्मेति कारकं गृह्यते न क्रिया । अत्र सुधाकरः । 'वेः शब्दकर्मण' इति चेदनुवाकं श्लोकं वा विकरोतीत्यत्रातिप्रसङ्गः । नेह शब्दविषयो व्यापारो यस्य शब्दो निर्वर्त्यः।

१ अद्यतनपुस्तकेषु रतिमिति पाठः, तत्र यद्यपि प्रसहनस्यासंगतेरधिपूर्वात्करोते 'रधेः प्रसहने' इत्यात्मनेपद न प्राप्नोति तथापि कर्त्रभिप्रायविवक्षाया स्वरितञित इत्यात्मनेपदम् ।

अत्र हि करोतिर्विनाशनीत्यर्थो न निर्वर्तयतीति, विकुरुते सैन्धवः, साधु दान्तः, सा[1]धु वल्गतीत्यर्थः । 'अकर्मकाच्चे'ति पूर्ववत्तङ् । यदाथ वल्गना- यां कृञ् तदा सौकार्यातिशयाद्वल्गनावचनस्तदा कर्तुः कर्मवद्भावेऽपि 'यक्- चिणोः प्रतिषेध' इत्यात्मनेपदाकर्मकत्वात् यक्चिणाविति विकुरुते सैन्धवः स्वयमेव व्यकृत सैन्धवः स्वयमेवेति भवतः । अत्रात्मनेपदाकर्मकेत्य- नेनात्मनेपदविधावर्थान्तरवत्त्वादकर्मणामन्तर्भावितण्यर्थाना सकर्मकाणा सौकर्यातिशयविवक्षया पुनरकर्मकाणा कर्मकर्तृविषयाणा विग्रह इति येषां दर्शन तेषा 'विकारहेतौ सति विक्रियन्त' इत्यत्र न यक्निषेधप्र- सङ्गः । यतोऽत्र स्वत एव सकर्मकस्य कर्माविवक्षया ऽकर्मकत्वम्, येषा त्वा- त्मनेपदाकर्मकेति धातूपलक्षण, तेषा विकरोतिरपि अर्थान्तरवृत्त्या क्वचिदा- त्मनेपदनिमित्त दृष्टमिति विकारहेतौ सति विक्रियन्त इत्यत्रापि कर्म- कर्तरि यक्निषेधेन भाव्यम् । संस्कुरुते कन्या स्वयमेव, समस्कृत कन्या स्वयमेवेत्यत्रापि भूषाकर्मकत्वात् यक्चिणौ । पद मिथ्या कारयते स्वरा- दि दुष्टमसकृदुच्चारयतीत्यर्थ । 'मिथ्योपपदात्कृञोऽभ्यासे' इति ण्यन्ता- त्तङ् । 'गन्धनादि' सूत्रचतुष्कमेव चाकर्त्रभिप्रायार्थम् । अनुकरोति । 'अनुपराभ्या कृञः' इति परस्मैपदम् । इदं च कर्त्रभिप्राये गन्धनादौ च प्राप्तस्य तङोऽपवादः । अनेन च कृञस्तङ्निमित्तत्वमेव निषिध्यत इत्य- नुचिकीर्षतीत्यादौ 'पूर्ववत्सन' इति तङ् न भवति । अत्रात्रेयः । 'सञ्ज्ञा- पूर्वको विधिरनित्य' इति सा नः सर्वान्यराक्रिया इति परस्मैपदाभावमाह । कृत्यम् । कार्यं, 'विभाषा कृवृषोरि'ति क्यप्ण्यतौ । ग्रामरूपेण तव्यादयोऽपि, कर्तव्य करणीयम् । विद्या यशस्करी । श्राद्धकर आस्तिकः, प्रैषकरो भृत्यः । 'कृञो हेतुताच्छील्यानुलोम्येष्वि'ति कर्मण्युपपदे टप्र- त्ययः । हेतुरैकान्तिक कारण, ताच्छील्य तत्स्वभावता, आनुलोम्यमनु- कूलता । टित्त्वात्स्त्रिया ङीप् । शङ्करा नाम परिव्राजिका तच्छीला चेत्यत्र ताच्छीलिकं परमपि प्रत्ययं 'शमिधातोः सञ्ज्ञाया'मित्यच्प्रत्यय- स्तत्र धात्वधिकारेऽपि पुनर्धातुग्रहणाद्बाधते । तथा च वार्तिक शमिसञ्ज्ञा-

[1] शोभनमिति ३ । ४ । पु पाठः ।

या धातुग्रहणं कञो हेत्वादिटप्रतिषेधार्थमिति । अयं च टप्रत्ययो 'न शब्दश्लोककलहगाथावैरचाटुसूत्रमन्त्रपदेष्वि' ति निषेधाच्छब्दादिषूपपदेषु न भवतीत्यणेव, शब्दकार इत्यादि । दिवा हि प्राणिनश्चेष्टायुक्तान्करोतीति दिवाकरः । 'दिवाविभानिशाप्रभाभास्कारान्तानन्तादिबहुनान्दीकिंलिपिलिबिबलिभक्तिकर्तृचित्रक्षेत्रसंख्याजङ्घाबाह्वहर्यत्तद्धनुररुष्षिति' दिवादिषूपपदेषु कञष्टः । अहेत्वाद्यर्थ आरम्भः । तत्र दिवाशब्दस्याधिकरणप्रधानत्वात्कर्मत्वं न भवतीति तत्र सुपीति संबध्यते । अन्येषु कर्मणीति, विभां करोतीति विभाकरः प्रभाकर इत्यादीनि उदाहार्याणि । भास्कर इत्यत्रात्रैव भास्कर इति करोतौ परे सकारस्य निर्देशात्सत्वम् । 'अतः कृकमी' ति सत्वं तपरनिर्देशाच्च प्राप्नोति । कर एव कार इति प्रज्ञा[1]दिः । अत्रानन्तकरस्य नञ्समासेनैव सिद्धे ऽनन्तग्रहणं कृदुत्तरपदप्रकृतिस्वरार्थम् । अन्यथा 'तत्पुरुषे तुल्ये' त्याद्युदात्तत्वं स्यात् । बहुशब्दो वैपुल्यवचनः, अन्यस्य संख्यात्वादेव ग्रहः । अत्रेष्टिः । कियत्तद्बहुषु कृञोऽज्विधानमिति । प्रयोजनं किंकरेत्यादौ स्त्रियां टाप् । किंकरीति तु प्रयोगे ङीषि । हेत्वादौ वा पूर्वसूत्रेणटप्रत्यये तस्कर इत्यत्र 'तद्बृहतोः करपत्योश्चोरदेवतयोः सुट् तलोपश्चे' ति सुट्तलोपौ, धनुष्करः, अरुष्करः । 'नित्यं समासेऽनुत्तरपदस्थस्ये' ति विसर्जनीयस्य नित्यं षत्वं, कर्मकरः । 'कर्मणि भृतावि' ति कर्मशब्द उपपदे भृतौ गम्यमानायां टप्रत्ययः, भृतिर्वेतनम् । अन्यत्र कर्मकारः । स्तम्बकरिर्व्रीहिः । शकृत्करिर्वत्सः । 'स्तम्बशकृतो' रितीन् । 'व्रीहिवत्सयोरिति वक्तव्यमि' त्युक्तत्वादन्यत्र स्तम्बकारः शकृत्कार इति, मेघंकरः । ऋतिंकरः । भयंकरः । 'मेघर्तिभयेषु कृञ' इति मेघादिषु कर्मसूपपदेषु खच् । खित्त्वान्मुम् । उपपदविधौ भयाढ्यादिग्रहणं तदन्तविधिं प्रयोजयतीत्युक्तत्वादभयादिशब्देष्वुपपदे खज् भवति अभयंकर इति । क्षेमंकरः । क्षेमकारः । 'क्षेमप्रियमद्रेऽण् चे' ति खजणौ । खचो विकल्पनेनैव कर्मण्यणि सिद्धे ऽण्ग्रहणं हेत्वादिषु टप्रतिषेधार्थम्, एवं प्रियमद्रयोरप्युदाहार्यम् । अनाढ्य आढ्यः क्रियते येन तदाढ्यंकरणम् । 'आढ्यसु-

१ कर एव कार', प्रज्ञादित्वादण् । इति ४ पु॰ पाठः ।

भगस्थूलपलितनग्नान्धप्रियेषु च्व्यर्थेष्वच्वौ कृञः करणे ख्युनि'ति आ-
ढ्यादिष्वभूततद्भावविषयेषु अच्व्यन्तेषु कर्मसूपपदेषु करणकारके ख्युन् ।
स्त्रियामाढ्यङ्करणी । 'टिड्ढाणञि'त्यादिना ङीप् । एवं सुभगङ्करणमित्या-
दि, खित्वान्मुम् । उपपदविधौ भयाढ्यादिग्रहणं तदन्तविधिं प्रयोजय-
तीत्युक्तत्वात्स्वनाढ्यादिष्वप्युपपदेषु ख्युन् भवति । स्वनाढ्यङ्करणमि-
त्यादि । सुकृत् । शोभनं कृतवानित्यर्थः । 'सुकर्मपापमन्त्रपुण्येषु कृञ'
इति स्वादिषु कर्मसूपपदेषु भूते कृञः क्विप्, एवं कर्मकृदित्यादि । राजानं
कृतवान् राजकृत्वा । 'राजनि युधि कृञ' इति राजनि कर्मण्युपपदे
भूते क्वनिप्, तुगागमः, 'वनो र चे'ति ङीब्रेफौ, राजकृत्वरी । सह-
कृत्वा । 'सहे चे'ति भूते क्वनिप् । अलङ्करिष्णुः । 'अलङ्कृञ्निराकृञि'ति
ताच्छीलिक इष्णुच्, चक्रिः, 'भाषाया धाञ्कृञि'ति किकिनोरन्यतरः
लिड्वद्भावाद् द्विर्वचन, चक्र, घञर्थे कः । 'कृञादीनां के द्वे भवत' इति द्वि-
र्वचनं, चक्रीवान्नाम राजा, 'आसन्दीवदष्ठीवच्चक्रीवदि'ति मतुपि
चक्रीभावो निपातनात् । क्रिया । कृतिः । 'कृञः श चे'ति शक्तिनौ ।
कृञ इति योगविभागात्क्यप् तुगागमः, कृत्येति, शस्य भावविषयत्वात्सा-
र्वधातुकत्वाच्च यकि विकरणे 'रिङ् शयग्लिङ्क्षि'ति रिङादेशः । ईष-
दाढ्यङ्करो देवदत्तः, दुराढ्यङ्करः 'कर्तृकर्मणोश्च भूकृञोरि'ति करोतेः
कर्तृकर्मवाचिनि चकाराद्दीषदादिषु चोपपदेषु खल् प्रत्ययः । 'कर्तृकर्म-
णोश्च्व्यर्थयो'रिति वचनादभूततद्भावविषयोऽयं प्रत्ययः । तदयमर्थः ।
अनाढ्येनायासेन दुःखेन सुखेन वा आढ्यः क्रियते इति । चोरङ्कारमा-
क्रोशति, 'कर्मण्याक्रोशे कृञः खमुञि'ति कर्मण्युपपदे आक्रोशे गम्य-
माने खमुञ् । अत्र करोतिः स्वभावादुच्चारणक्रिय इति चोरशब्दोऽपि स्वरू-
पपरः, तदयमर्थः, चोरशब्दमुच्चार्याक्रोशतीति । अस्य धातुसम्बन्धमन्त-
विधानेऽपि णमुलन्तार्थानुरोधादाक्रोशार्थस्यैवानुप्रयोगः । स्वादुङ्कारं भुङ्क्ते ।
'स्वादुमि णमुलि'ति णमुल् । स्वादुमित्यर्थग्रहणात् सम्पन्नङ्कारं भुङ्क्ते
लवणङ्कारं भुङ्क्ते इत्यत्रापि णमुल् भवति । अत एव स्वादुमीति निर्देशा-
दुपपदस्य मान्तत्वम् । ननु प्रकृतः खमुञ् विधीयतां खित्वान्मान्तत्व

१ सुमिति ४ पु पा॰ ।

भविष्यति किं निपातनेन, एवं तर्हि लिङ्गविशिष्टपरिभाषया 'वोतो गुणवचनादि' ति ङीषन्तस्य स्वाद्वीशब्दस्योपपदत्व माभूदिति निपातन, भावप्रत्ययविषये हि मान्तत्वनिपातने उकारान्तत्वाभावान्नास्ति ङीषः प्रसङ्गः । किं च ह्येतस्य स्वाद्वादेर्मान्ततार्थं, तस्य ह्यव्ययत्वात् खित्त्वनिबन्धनो मुम्नास्ति । अत्र णमुल्विषये वासरूपविधिना क्त्वापि भवति स्वादुंकृत्वा भुङ्क्ते । इत्यादि । अन्यथाकारं भुङ्क्ते । 'अन्यथैवंकथमित्थंसु सिद्धाप्रयोगश्चे' दित्यन्यथादिषु उपपदेषु णमुल्, सिद्धशब्दः प्राप्तवचनः, प्राप्तप्रयोगश्चेत्करोतिरित्यर्थः, प्राप्तप्रयोगत्व च निरर्थकत्वात्, तेनान्यथेनि यावानर्थस्तावानेवान्यथाकारमिति । एवमेवंकारमित्यादि । अत्रापि वासरूपेण क्त्वापि भवति । तेनान्य[1]था कृत्वा परिहरतीत्यादि भवति । यथा[2]कारमहं भोक्ष्ये तथाकारमहं भोक्ष्ये किन्तवानेन । 'यथातथयोरसूयाप्रतिवचन'-इति कृञः सिद्धाप्रयोगाद्यथातथयोरुपपदयोरसूयाप्रतिवचने गम्यमाने णमुल्, यत्र प्रश्ने प्रतिवचनमसूयायां भवति तदसूयाप्रतिवचनम् । अकृतकारं करोति, अकृत करोतीत्यर्थः । 'समूलाकृतजीवेषु हन्कृञ्ग्रहः' इति णमुल् । कषादित्वाद्यथाविध्यनुप्रयोगः । ब्राह्मण पुत्रस्ते जातः । किं तर्हि नीचैःकारमाचष्टे, नीचैःकृत्य नीचैःकृत्वेति वा । 'अव्ययेयथाभिप्रेताख्याने कृञः क्त्वाणमुलावि' ति क्त्वाणमुलौ । यथाभिप्रेतं न भवति तथा ऽऽख्याने गम्यमाने, अत्र हि पुत्रजन्मनि प्रियमुच्चैराख्येय गोपनीयवत्केन चिन्नीचैराख्यायते, 'तृतीयाप्रभृतीन्यन्यतरस्यां' 'क्त्वा चे' ति समासविकल्पः, तिर्यक्कृत्य गतः तिर्यक्कृत्वा गतः, तिर्यक्कारमिति वा । समाप्य गत इत्यर्थः । 'तिर्यच्यपवर्गे' इति क्त्वाणमुलौ, । अपवर्गः समाप्तिः, पूर्ववत्समासविकल्पः, मुखतःकृत्य, मुखतःकृत्वा, मुखतःकारं गच्छति । 'स्वाङ्गे तस्प्रत्यये कृभ्वोरि' ति क्त्वाणमुलौ, पूर्ववदत्रापि समासविकल्पः । नानाकृत्य, नानाकृत्वा नानाकारं, विनाकृत्य विनाकृत्वा विनाकारम् । द्विधाकृत्य, द्विधाकृत्वा, द्विधाकारम् । द्वैधाकृत्य, द्वैधाकृत्वा, द्वैधाका-

१ तेनान्यथा चोदितमन्यथा कृत्वा परिहार इत्यादि भवतीति ४ पु· पा· ।
२ यथाकारमहं भोक्ष्ये किं भवानिति ४ पु· पा· ।

रम्, एवं द्वैधंकृत्येत्यादि । 'नाधार्थप्रत्यये च्व्यर्थ' इति क्त्वाणमुलौ । पूर्ववत्समासः । सूत्रार्थो भवनादुक्तः । कृतः । कृतवान् । कृतं गृह्णाति कृतयति । 'मुण्डमिश्र' त्यादिना णिच्, स्वभावाद्ग्रहणाद्यर्थे प्रत्ययः, कृतमनेन कृती । 'इष्टादिभ्यश्चे' तीनिः, कृतञ्च तदपकृतं च कृतापकृतं, 'कृतापकृतानामुपसंख्यान' मिति समासः । कृत्रिमम् 'ड्वितः क्त्रिः', 'क्त्रेर्मम्नित्य' मिति । कडति माद्यतीति कडः । अच् । कडं करोतीति कडंकरो माषमुद्गादिकाष्ठं, तदर्हतीति कडंकर्यः, कडंकरीयः, 'कडंकरदक्षिणाच्छ चे' ति अर्हतीत्यर्थे यच्छौ । अत्रैव निर्देशादचि मुमागमः । कर्म । मनिन् । कर्म शीलोऽस्य कार्मः 'छत्रादिभ्यो ण' इति णः । 'कार्मस्ताच्छील्ये' इति निपातनाट्टिलोपः । 'नस्तद्धित' इति टिलोपे सिद्धे निपातनं णेपि क्वचिदणकृतं कार्यं भवतीति ज्ञापनार्थं, तेन तापसी चौरीत्यत्र णेप्यणकृतो ङीब् भवतीति पूर्वत्रोक्तम् । कर्मणे प्रभवति कार्मुकम् । 'कर्मण उकञि' ति 'तस्मै प्रभवती' त्यर्थे उकञ्, सर्वकर्म व्याप्नोति सर्वकर्मीणः । 'तत्सर्वादे' रित्यादिना खः, कर्मणि घटते कर्मठः । 'कर्मणि घटो ऽठजि' ति अठच् । कर्मी, व्रीह्यादित्वादिनिः । कार्मणम्, 'तद्युक्तात्कर्मणो' ऽणिति व्याहृतार्थवाग्युक्तात्कर्मणः स्वार्थेऽण् । 'अचि' ति प्रकृतिभावः । कारुः । 'कृवापाजि' त्युण् । क्रतुः । 'कृञः कतु' रिति कतुप्रत्ययः । कार्पासः । 'कृञः पासणि' ति पासण्, कृकः । 'कृदाधारार्चिकलिभ्यः क' इति कः, बाहुलकात्कलोपगुणयोरभावः । उरी[1]कृत्य, पटपटाकृत्य । 'ऊर्यादिच्विडाचश्चे' ति कृभ्वस्तियोगे ऊर्यादीनां गतिसंज्ञा । तथा च वृत्तिः । च्विडाचोः कृभ्वस्तियोगे विधानादूर्यादीनामपि तैरेव योगे गतिसंज्ञेति, वार्तिकमपि कृभ्वस्तियोग इति वक्तव्यमिति । संज्ञाप्रयोजनं समासादि । ऊर्यादीनां प्रयोगोपि कृभ्वस्तियोगएवेति कैयटपदमञ्जर्योः । कथं तर्हि भवति आविश्चकुषोर्भवदसाविव राग इति । अभवद्युगपद्विलोलजिह्वा युगलीडोभयसृक्कभागमाविरिति च । स्वतन्त्राः कवय इति हरदत्तः । तत्राप्याविःप्रादुःशब्दौ मुक्त्वा

1 शुक्लीकृत्येत्यधिकं ४ पु ।

अन्येषामूर्यादीनामर्थस्वभावात्करोतियोगएव प्रयोगः । अत एव वृत्तिकृता गणवृत्तिकृता अन्यैश्च शाकटायनादिभिः करोतियोगएवोदाहरणं दर्शितम् । श्रच्छब्दस्य दधातिनैव योग इत्यन्ये, श्रौषट् वषट् स्वाहा स्वधेत्येतेषां पञ्चानां चादिषु पाठादक्रियायोगेऽपि प्रयोगः । अन्येऽप्यर्यादय उदाहार्याः । कारिकाकृत्य । क्रियां कृत्वेत्यर्थः । कारिकाशब्दस्योपसङ्ख्यानमिति गतित्वं, 'धात्वर्थनिर्देशे ण्वुल्' इति ण्वुलन्तः कारिकाशब्द इति न्यासे, खाट्कृत्य 'अनुकरणं चानितिपर' मिति गतिसञ्ज्ञा, अनुकरणस्य इतिपरत्वे तु खाडिति कृत्वा । सत्कृत्य । 'आदरानादरयोः सदसती' इति गतित्व, प्रीतिपूर्वकप्रत्युत्थानादिविषयत्वरा आदरः, अवज्ञया कर्त्तव्य प्रत्युत्थानादिक प्रत्युपेक्षा ऽनादरः । अन्यत्र सत्कृत्वा, असत्कृत्वा । शोभनमशोभनञ्च कृत्वेत्यर्थः । अलङ्कृत्य । 'भूषणे ऽल' मिति गतित्व, भूषणादन्यत्रालं कृत्वा, करणेनालमित्यर्थः । अनुकरणमित्यादयस्त्रयो योगाः स्वभावात् कृञ्विषयाः, पुरस्कृत्य पूर्वदेशे कृत्वेत्यर्थः । 'पुरोऽव्यय' मिति गतिसंज्ञा, 'पूर्वाधरावराणामसिपुरधवश्चैषा' मिति सप्तम्यन्तात् स्वार्थे ऽसिप्रत्ययः पुरादेशश्च, 'तद्धितश्चासर्वविभक्ति'-रित्यव्ययत्व, 'नमस्पुरसोर्गत्यो' रिति विसर्जनीयस्य सत्वम् । अव्ययादन्यत्र, पुरः कृत्वा गतः । अस्तंकृत्य । 'अस्तञ्चे' ति गतिसञ्ज्ञा, चकारोऽव्ययमित्यनुकर्षणार्थः, तेनात्रैव निर्देशादस्तशब्दो मकारान्तो ऽव्ययमस्तीति ज्ञायते । अस्य त्वदर्शनमर्थः । अन्यत्रास्तंगतः क्षिप्त कृत्वेत्यर्थः । द्वाविमौ योगौ करोत्यविषयावपि दृश्येते, यथा 'तुरासाह पुरोधाय । 'अस्तगत्य सविता पुनरुदेति' । अदःकृत्य । 'अदोऽनुपदेश' इति गतित्वम् । उपदेशः परार्थो वाक्यप्रयोगः । ततोऽन्योपदेशः, स्वयमेव बुद्ध्या परामर्श इति यावत्, परस्य कथने त्वदः कृत्वा गत इति, सूत्रे ऽद इति द्वितीयान्तानुकरणेनामुना कृत्वेत्यर्थेदः कृत्वेत्येव भवतीत्याशयः । तिरस्कृत्य 'विभाषा कृञि' ति तिरसो वा गतित्व,मन्तर्द्धौ 'तिरसोऽन्यतरस्या' मिति विसर्जनीयस्य वा सत्वम्, अन्यदा तु 'कुप्वोः ≍क≍पौ चे' ति जिह्वामूलीयविसर्जनीयौ द्रष्टव्यौ, अगतित्वे 'तिरसोऽन्यत-

रस्या'मिति सत्व गतेरितीह न भवतीत्यात्रेयः । केचित्तु तत्र गति-ग्रहणं नानुवर्तयन्ति, तेन तिरस्कृत्येत्यत्रापि सत्वम् । अत एव पराजयेऽपि तिरस्कार इति, अथ पक्षो भाष्यवृत्तिभ्यामपद्मजयादौ न दृश्यते । उपाजेकृत्य उपाजे कृत्वा । अन्वाजेकृत्य । अन्वाजे कृत्वा इति, 'उपाजेऽन्वाजे' इति वा कृञि गतित्वम् । उपाजेन्वाजेशब्दौ विभक्तिप्रतिरूपकौ निपातौ दुर्बलस्य सामर्थ्याधाने वर्तेते । साक्षात्कृत्य । साक्षात् कृत्वा । 'साक्षात्प्रभृतीनि चे'ति कृञि वा गतित्वम्, अत्र वार्तिकं साक्षात्प्र-भृतिषु च्व्यर्थग्रहणं, तत्र च्विप्रत्ययप्रतिषेध इति । तेन च्व्यन्तत्वे त्यूर्या-दित्वाद् नित्य गतित्वम् । अस्य च प्रयोजनमकारान्तेषु लवणंकृत्ये-त्यादौ । अत्र लवणमुष्णमुदकं शीतमार्द्रमिति पञ्च पठ्यन्ते, एषा-मत्रैव निपातनाद्गतित्वसंनियोगेन मान्तत्वम् । अत्राग्नौ वशे भूतयः केचिदेजन्ताः पठ्यन्ते, ते विभक्तिप्रतिरूपका निपाताः, प्रादुराविस् शब्दाविह पठ्येते, तयोरूर्यादित्वान्नित्ये प्राप्ते विकल्पार्थः पाठः, ऊर्यादि-पाठस्तु कृभ्वस्तियोगे नित्यार्थः । अत्र नमःशब्दः पठ्यते, स यदा गति-संज्ञकस्तदोपसर्गवद्वृत्त्या कृञः प्रणामवचनत्वं द्योतयतीति प्रणामापे-क्षया कर्मणि देवादौ 'नमःस्वस्ती'त्यादिना उपपदविभक्तेः कारक-विभक्तिर्बलीयसीति नमस्यति देवानितिवन्नमस्करोति देवानिति द्विती-यैव भवति । अगतित्वे तु करोतिक्रियाकर्मभूतमत्र विशेष्यभूतं प्रणाममाचष्टे इति देवादावकर्मणि 'नमःस्वस्ती'ति चतुर्थी । तथा च भट्टिः । नमस्चकार देवेभ्यो, रावणाय नमस्कृत्या इति, स्वयं भुवे नमस्कृ-त्येत्यत्र तु नमसो गतित्वे कृञो विशेषकत्वात्प्राप्ता कारकविभक्तिः द्वि-तीयां क्रियार्थोपपदस्येति चतुर्थी बाधते, तदत्रायमर्थो वाच्यः, स्वयंभुवं प्रीणयितुं प्रणम्येति, वर्द्धमानस्तु श्राद्धाय निगृह्णते इतिवत्क्रियाग्रहणं कर्त-व्यमिति चतुर्थीमाह । उरसिकृत्य । उरसि कृत्वा मनसिकृत्य मनसि कृ-त्वा । बुद्धौ कृत्वेत्यर्थे । 'अनत्याधानउरसिमनसी' इति उरसिमनसी-त्यनयोर्वा गतित्वम् । अत्याधानमुपश्लेषस्तदभावो ऽनत्याधानम् । अत्या-धाने तु उरसि कृत्वा पाणिं शेते इति । सप्तम्यन्तप्रतिरूपकावेतौ मध्ये

कृत्वा मध्येकृत्य । पदे कृत्वा पदेकृत्य । निवचने कृत्वा निवचनेकृत्य 'मध्येपदेनिवचने चे' ति वा गतित्वम् । अनत्याधाने मध्येपदेशब्दौ विभक्तिप्रतिरूपकौ, निवचन वचनाभावः । सन्तृणमिनिवदव्ययीभावः । उच्चारणसामर्थ्यात्सप्तम्या लुङ् न भवतीति न्यासे । हरदत्तस्तु निपातनादेकारान्तत्व न पुनरेषा सप्तमी । वाचनियम्येति व्याख्यानात् । निपातनं चाविशेषेण न तु सञ्ज्ञासंज्ञियुक्त, निवचने कृत्वेत्युदाहृतत्वादित्याहुरिति । अत्याधाने पदे कृत्वा शिरः शेते, हस्तेकृत्य । पाणौकृत्य । 'नित्यं हस्तेपाणावुपयमने' इति नित्यं गतित्व, निपातनादलुगिति न्यासे, सप्तम्यन्तप्रतिरूपकाविति हरदत्तादयः । उपयमनं दारकर्मेति वृत्तौ, अन्ये तु स्वीकरणमात्रमिच्छन्ति । हस्तेकृत्य महास्त्राणीति । आत्रेयस्तूपयमनमपरित्यागलक्षणं स्वीकरण, तथा च भट्टिः । हस्तेकृत्य त्वमाश्वासीरिति, प्राध्वंकृत्य शकटं गतः, बन्धनेनाकूलं कृत्वा गत इत्यर्थः । 'प्राध्वं बन्धन' इति गतित्वम् । प्राध्वंशब्दस्य मान्तस्याव्ययस्यानुकूल्यार्थत्वाद्बन्धनइत्यर्थद्वारेण बन्धने सति यदानुकूल्यमिति, अबन्धने तु प्राध्व कृत्वा कट गतः । विनापि बन्धनेनानुकूलं कृत्वेत्यर्थः, जीविकामिव कृत्वा जीविकाकृत्य, उपनिषदमिव कृत्वा उपनिषत्कृत्य, 'जीविकोपनिषदावौपम्य' इति गतित्वम् । इवशब्दप्रयोगे जीविकोपनिषदौ स्वार्थं वर्त्तेते नौपम्यइत्यगतित्वान्न समासः । मामधिकृत्वा ईश्वरो भवेति, मां विनियुज्येत्यर्थः । यथा स्वरितेनाधिकारः, ग्रामे ऽधिकृत इत्यनयोः प्रयोगयोर्विनियोगो ह्यर्थः । 'विभाषा कृञी' त्यधेरैश्वर्ये गम्यमाने कर्मप्रवचनीयसञ्ज्ञा । अस्याः फलमाकडारादिति गतिसंज्ञाबाधः । द्वितीया त्वधिकृञो विनियोगार्थत्वात्कर्मणीत्येव सिद्धा । अगतित्वे तु प्रादिसमासस्य कर्मप्रवचनीयानां प्रतिषेध इति निषेधाद्वाक्यमेव भवति । कर्मप्रवचनीयत्वाभावे तु गतित्वात्समासे मामधिकृत्येति । अनुदात्त उभयतोभाषः ॥ ८ ॥

इति श्रीपूर्वदक्षिणपश्चिमसमुद्राधीश्वरकम्पराजसुतसंगममहाराजमहामन्त्रिणा मायणपुत्रेण माधवसहोदरेण सायणाचार्येण विरचितायां माधवीयायां धातुवृत्तौ उविकरणास्तनादयः संपूर्णाः ।

---

# अथ क्र्यादयः[1]।

डुक्रीञ् द्रव्यविनिमये ॥ क्रीणाति । क्रीणीतः । क्रीणन्ति । क्रीणासि । क्रीणामि । क्रीणीवः । क्रीणीते । क्रीणाते । क्रीणते । क्रीणीषे । क्रीणे । क्रीणीवहे । इत्यादि । 'क्र्यादिभ्यः श्ना' इति शपोऽपवादः श्ना, 'श्नाभ्यस्तयोरातः' इति क्ङिति सार्वधातुकेऽऽल्लोपः । हलादौ 'ई हल्यघोः' इतीत्वम् । झिझयोः परत्वान्नित्यत्वादन्तरङ्गत्वाद्वीत्वात्पूर्वमन्तादेशाद्भावयोराल्लोपः । चिक्राय । चिक्रियतुः । चिक्रयिथ । चिक्रेथ । चिक्रियथुः । चिक्रिय । चिक्राय । चिक्रय । चिक्रिये । चिक्रियाते । चिक्रियिषे । चिक्रियिध्वे । चिक्रिये । चिक्रियिवहे, क्रादिनियमादिट्, थलि तु भारद्वाजनियमाद्विकल्पः । अगुणवृद्धिविषये इयङ् । 'एरनेकाचः' इति यण् तु संयोगपूर्वत्वान्न भवति । क्रेता । क्रेष्यति । क्रेष्यते । क्रीणातु । क्रीणीतात् । क्रीणीताम् । क्रीणन्तु । क्रीणीहि । क्रीणानि । क्रीणाव । क्रीणीताम् । क्रीणाताम् । क्रीणताम् । क्रीणीष्व । क्रीणावहै । तातङः स्वतो ङित्त्वाद्धेश्चापित्त्वेन ङित्त्वादीत्वम् । उत्तमे त्वाटोपित्त्वेन ङित्त्वाभावादीत्वाभावः । अक्रीणात् । अक्रीणीताम् । अक्रीणाः । अक्रीणीतम् । अक्रीणीत । अक्रीणाम् । अक्रीणीव, अक्रीणीत, अक्रीणीथाः । अक्रीणाथाम् । अक्रीणीध्वम् । अक्रीणि, अक्रीणीवहि । क्रीणीयात् । क्रीणीयाताम् । क्रीणीयाः । क्रीणीयाम् । क्रीणीयाव । यासुटो ङित्त्वात्पिद्वचनेष्वपीत्वम् । क्रीणीत । क्रीणीयाताम् । क्रीणीथाः । क्रीणीय । क्रीणीवहि । क्रीणीमहि । सीयुटि आल्लोपः । आशिषि क्रीयात् । क्रीयास्ताम् । क्रेषीष्ट । क्रेषीयास्तामित्यादि । अक्रैषीत् । अक्रैष्टाम् । अक्रैषम् । सिचि वृद्धिः । अक्रेष्ट । अक्रेषाताम् । अक्रेष्ठाः । अक्रेषि । चिक्रीषति । चिक्रीषते । चेक्रीयते । चेक्रेति । क्रापयति । अचिक्रपत् । 'क्रीङ्जीनां णौ' इत्यात्वे पुक् । शतेन शताय वा परिक्रीणीते । 'परिव्यवेभ्यः' इत्यकर्त्रभिप्रायेऽपि तङ् । एवं व्यवाभ्यामपि । इह पर्या-

---

१ आतो लोप' इत्यधिक ४ पु ।

दय उपसर्गा गृह्यन्ते इति बहु विक्रीणाति वनमिन्यादौ न भवति । 'परिक्रयणे संप्रदानमन्यतरस्यामि'ति परिपूर्वस्य क्रीणातेः साधकतमस्य पक्षे संप्रदानत्वम् । परिक्रयण वेतनादिना नियतकालं स्वीकरणम् । क्रीत्रिमं । 'ड्वितः क्त्रिः'। 'क्त्रेर्मम् नित्यम्' क्रीतः । क्रीतवान् । अश्वेन क्रीता अश्वक्रीती । धनेन क्रीता धनक्रीती । 'कर्तृकरणे कृता बहुलमि'ति तृतीयासमासः । स च 'गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक्सुबुत्पत्तेरि'ति क्रीतशब्देनेति 'क्रीतात्करणपूर्वादि'-त्यदन्तात् क्रीतान्तात्प्रातिपदिकाद्विधीयमानो ङीष् भवति । सा हि तस्य धनक्रीता प्राणेभ्योपि गरीयसीत्यत्र तु बहुलग्रहणादाबन्तेन समास इति अनदन्तत्वान्ङीषभावो वाच्यः । अन्तवद्भावेन टाबन्तोपि कृदन्त एवेति कृदन्तलक्षणसमासलाभः । क्रयः । एरच् । अवक्रियते व्यवह्रियतेनेनेति अवक्रयः । आयस्थानेषु वणिगादिभिर्दीयमान· स्वामिग्राह्यो भागः, यस्य पिण्डक इति प्रसिद्धिः । 'पुंसि सञ्ज्ञायामि'ति घः । क्रयार्थे प्रसारित क्रय्यम् । अचो यति, 'क्रय्यस्तदर्थे' इत्ययादेशः । अत्र तच्छब्देन क्रयः परामृश्यते । अन्यत्र गुणे क्रेयः । क्रायकः, ण्वुल्, क्रियिकः । 'क्रिय इकचि'ति इकन् ॥ १ ॥

प्रीञ् तर्पणे कान्तौ च ॥ कान्तिः कामनेति पुरुषकारे । प्रीणाति । प्रीणीते इत्यादि क्रीणातिवत् । प्रीणयति । अपिप्रीणत् । 'धूञ्-प्रीञोर्नुग्वक्तव्य' इति नुक् । प्रीणातीति प्रियः । 'इगुपधज्ञाप्रीकिरः क' इति कः । प्रेष्ठ इत्यादि दिवादावुक्तम् ॥ २ ॥

श्रीञ् पाके ॥ श्रीणाति । श्रीणाते इत्यादि क्रिणातिवत् । श्राययति । अशिश्रयत् । वृद्ध्यायो ॥ ३ ॥

मीञ् हिंसायाम् ॥ मीनाति । मीनीतः । मीनासि । मीनामि । मीनीवः । मीनीते । मीनाते । मीनीषे । मीने । मीनीवहे । ममौ, मिम्यतुः । ममिथ । ममाथ । मिम्यथुः । मिम्य । ममौ । मिम्यिव । 'मीनातिमिनोती'त्येज्विषये आत्वं ल्यपि च । अन्यत्र 'एरनेकाच' इति यण् । मिम्ये । मिम्यिषे । मिम्ये । मिम्यिवहे । माता । मास्यति । मा

नीथाः । स्कुनीयाम् । स्कुनीत । स्कुनीयाताम् । स्कुनीथाः । स्कुनीय । स्कुनुयात् । स्कुन्वीत । स्कुन्वीथाः । स्कुन्वीय । आशिषि । स्कूयात् । स्कूयास्ताम् । स्कोषीष्ट । स्कोषीय । अस्कौषीत् । अस्कौष्टाम् । अस्कोष्ट । अस्कोषाताम् । चुस्कूषति । चुस्कूषते । चोस्कूयते । चोस्कोति । स्कावयति । अचुस्कवत् । स्कुत्वा । स्कुतः, स्कुतवान् ॥ ६ ॥

युञ् बन्धने ॥ युनाति । युनीते, योता, इत्यादि स्कुनातिवत् । युयूषतीत्यत्र 'सनीवन्तर्द्ध' त्यादौ युग्रहणेन ऊर्णुञ्साहचर्यादिरनुबन्धकत्वाच्च मिश्रणार्थस्यादादिकस्य ग्रहणादिड्विकल्पो न भवति । क्र्याद-योनुदात्ता उभयतो भाषाः ॥ ७ ॥

अथ सेट आह ॥

क्नूञ् शब्दे ॥ एतदादयो धूञन्ता उदात्ता उभयतो भाषाः । क्नूनाति । क्नूनीते, इत्यादि स्कूनातिवत्[1] । चुक्नाव । चुक्नुवतुः । चुक्नुवे । चुक्नुवाते । आर्द्धधातुके त्विड्भवति । क्नविता । क्नविष्यति । क्नविषीष्ट । अक्नावीत् । अक्नविष्टाः, सनि तूगन्तत्वा 'त्सनि ग्रहगुहोश्चे' तीण्निषेधः । चुक्नूषति । चुक्नूषते, इत्यादि ॥ ८ ॥

द्रूञ् हिंसायाम् ॥ द्रूणाति, द्रूणीते, इत्यादि क्नूञ्वत् ॥ ९ ॥

पूञ् पवने ॥ पवनं पूतीकरणं, सकर्मकोयम् । तथा च पुनात्यग्निं, पुनीते आत्मानं कर्षकेण, वल्लजं[2] पुपूषतइत्यादौ सकर्मकत्वं दृश्यते । पुनाति । पुनासि । पुनामि । पुनीते । पुनीषे । पुने । 'प्वादीनां ह्रस्व' इति शिति परे ह्रस्वः । पुपाव । पुपुवतुः । पुपविथ । पुपुविव । पुपुवे, पुपुविरे । पुपुविषे । पुपुवे । पविता । पविष्यति । पविष्यते । पुनातु । पुनीताम् । पुनीष्व । पुनै । अपुनात् । अपुनीताम् । अपुनाः । अपुनाम् । अपुनीव । अपुनीत । अपुनाताम् । अपुनीथाः । अपुनि । अपुनीवहि । पुनीयात् । पुनीयाः । पुनीयाम् । पुनीत । पुनीयाताम् । पुनीयाः । पुनीय । आशिषि । पूयात् । पूयास्ताम् । पविषीष्ट । अपा-

१ क्नूनातिर्वदति ४ पु॰ पा॰ ।
२ पालज्ञान् इति ४ पु॰ पा॰ ।

वीत् । अपाविष्टाम् । अपाविषुः । अपविष्ट । पुपूयति । पुपूषते । उगन्तत्वादनिट्त्वम् । पोपूयते । पोपोति । पावयति । अपीपवत् । 'ओः पुयण्ज्यपरे' इत्यभ्यासस्येत्वम् । 'दीर्घो लघोः' इति दीर्घः । पूत्वा । पूतः । पूना यवाः । विनष्टा इत्यर्थः । 'पूञो विनाश' इति निष्ठानत्वम् । शेषाः कृतः पवतिवत् ॥ १३ ॥

लूञ् छेदने ॥ लुनाति । लुनीते, इत्यादि पुनातिवत् । लवित्रम् । 'अर्तिलू'-इति इत्रः । लूत्वा । लून । 'ल्वादिभ्य' इति निष्ठानत्वम् । लूनिः । 'ल्वादिभ्यः क्तिन्निष्ठावद्' इति नत्वम् । लवकः । 'पुसृल्वः समभिहारे वुन्' इति वुन् । अभिलावः । 'निरभ्योः पूल्वो' रिति घञ् । अपोऽपवादः । लोत्र करणे ष्ट्रन् । लोतः । 'हसिमृग्रिण्वामिदमिलूपूधूर्विभ्यस्तन्' इति तन् । उभयत्र 'श्र्युक' [illegible] ॥ १४ ॥

स्तृञ् आच्छादने ॥ स्तृणाति । स्तृणासि । स्तृणामि । स्तृणीते । स्तृणीषे । स्तृणे, तस्तार । तस्तरतुः । तस्तरिथ । तस्तरिव । तस्तरे । तस्तरिषे । तस्तरिवहे । 'ऋच्छत्यृताम्' इति गुणः । वृद्धिविषये तु पूर्वविप्रतिषेधेन वृद्धिः । क्ङिते वा गुणे वृद्धिरित्युक्तम् । स्तरिता । स्तरीता । स्तरिष्यति । स्तरीष्यते । स्तरीष्यति । स्तरिष्यते । 'वृतो वे' त्यलिटीटो दीर्घविकल्पः । स्तृणातु । स्तृणीहि । स्तृणानि । स्तृणाव । स्तृणीताम् । स्तृणीष्व । स्तृणै । अस्तृणात् । अस्तृणीताम् । अस्तृणाः । अस्तृणाम् । अस्तृणीत । अस्तृणीथाः । स्तृणीत । स्तीर्यात् । स्तीर्षीष्ट । स्तरिषीष्ट । 'लिङ्सिचोरात्मनेपदेष्वि' तीड्विकल्पः । 'उश्चे' ति कित्त्वम् । इट्पक्षे 'वृत' इति दीर्घस्य 'न लिङि' ति निषेधः । अस्तारीत् । अस्तारिष्टाम् । 'सिचि च परस्मैपदेष्वि' तीटो न दीर्घः । अस्तीर्ष्ट । अस्तरीष्ट । अस्तरिष्ट । 'लिङ्सिचोरि' तीड्विकल्प इटि 'वृत' इति वा दीर्घः । अनिटि 'उश्चे' ति कित्त्वम् । तिस्तीर्षति । तिस्तरिषति । तिस्तरीषति । 'इट् सनि वे' ति वेट् । इटि पूर्ववद्दीर्घः । स्तारयति । अतस्तरत् । 'अत्स्मृदृत्वर' त्यभ्यासस्यात्वम् । मणिप्रस्तारः । 'प्रे स्त्रोऽयज्ञ' इति घञ् । यज्ञविषये त्वपि प्रस्तरः । विस्तारः ।

'प्रथने वावशब्दे' इति घञ् । शब्दविषये तु विस्तरः । विष्टारः । पङ्क्तिश्छन्दः । 'छन्दोनाम्नि चे'ति योगाभ्यां घञ्षत्वे । अवस्तारः । 'अवे तृस्त्रोर्घञि'ति करणाधिकरणयोर्घञ् । स्तीर्णः । स्तीर्णिः । 'ल्वादिभ्यः क्तिन्निष्ठावदि'ति नत्वम् ॥ १२ ॥

कॄञ् हिंसायाम् ॥ कृणाति । कृणीते । चकार । चकरतुः, चकरुः । इत्यादि स्तृणातिवत् ॥ १३ ॥

वॄञ् वरणे ॥ वृणाति । वृणीते । ववार । ववरे । वरिता । वरीता, वरिष्यति । वरीष्यति । वरिष्यते । वरीष्यते । वृणातु । वृणीताम् । अवृणात् । अवृणीत । वृणीयात् । वृणीत । आशिषि वूर्यात् । 'उदोष्ठ्यपूर्वस्ये'त्यगुणवृद्धिविषये उत्वे रपरत्वे च 'हलि चे'ति दीर्घः । वरिषीष्ट । वूर्षीष्ट । 'लिङ्सिचोरात्मनेपदेष्वि'तीडभावपक्षे 'उश्चे'ति कित्त्वादुत्वादि । इट्पक्षे पूर्ववच्च 'लिङी'ति अदीर्घत्वम् । अवारीत् । अवारिष्टाम् । पूर्ववत् 'वॄत' इति दीर्घस्य 'सिचि च परस्मैपदेष्वि'ति निषेधः । अवरिष्ट । अवरीष्ट । अवूर्ष्ट । 'लिङ्सिचो'रितीड्विकल्पे 'वॄत' इति दीर्घः । अनिटि 'उश्चे'ति कित्त्वादुत्वादि । वुवूर्षति । विवरिषति । विवरीषति । 'इट् सनि वे'तीड्विकल्पे 'वॄत' इति दीर्घविकल्पः । अनिटि 'इको झलि'ति सनः कित्त्वे उत्वादि । वोवूर्यते । वावर्ति । 'ऋतश्चे'ति तपरनिर्देशाच्च रुगादीत्युक्तम् । वारयति । अवीवरत् । वूर्णः, वूर्णवान् । वूर्णिः ॥ १४ ॥

धूञ् कम्पने ॥ धुनाति । धुनीते । दुधाव । दुधुवतुः । दुधविथ, दुधुविथ । दुधुविम । दुधुवे । दुधुविषे । दुधुविढ्वे । दुधुविध्वे । दुधुविवहे । 'स्वरत्या'दिसूत्रेण प्राप्तमार्धधातुकनिबन्धनमिड्विकल्पं पुरस्तात्प्रतिषेधकाण्डारम्भसामर्थ्यात् 'श्र्युकः किति' इति निषेधो बाधते, तमपि क्रादिनियमो बाधतइति नित्यमिडित्यादि तत्र[1] तत्रोक्तम् । धोता । धविता । धोष्यति । धविष्यति । धोष्यते । धविष्यते । 'स्वरत्यादि' नेड्विकल्पः ।

१ तत्त्वमिति ४ पु॰ पा॰ ।

प्रत्ययः । शरीरं 'कॄशॄपॄकटिपटिशौटिभ्य ईरन्' इति ईरन् प्रत्ययः । शरत् । 'शॄदॄभसोऽदिरि'त्यदिप्रत्ययः । शरदिजः । 'प्रावृट्शरत्कालदिवां जे' इत्यलुक् । शरदि भव श्राद्ध शारदिकं, 'श्राद्धे शरद' इति ठञ् । ऋत्वणोपवादः । शारदो रोगः । शारदिको रोगः । 'विभाषा रोगातपयो'रिति वा ठञ् । अन्यदा ऋत्वण् । एवमातपेऽपि । शारदका मुद्गाः । शारदका दर्भाः । 'संज्ञायां शरदो वुञि'ति तत्र जात इत्यस्मिन्विषये वुञ् । दर्भविशेषस्य मुद्गविशेषस्य चेयं सज्ञा । परा शृणातीति परशुः । 'आङ्परयोः खनिशॄभ्यां डिच्चे'त्युप्रत्ययः । डित्त्वाट्टिलोपः । बाहुलकात्परोपसर्गस्य ह्रस्वः, परशवे हित परशव्यम् । 'उगवादिभ्यो यदि'ति यत् । परशव्यस्य विकारः पारशवम् । 'कसीयपरशव्ययोर्यञञौ लुक् चे'त्यञ्प्रत्यय', यत्प्रत्ययस्य लुक्,[1] पराञ्छृणाति पापानीति पराशर', अच् । पाराशर्यः, गर्गादित्वादपत्ये यञ् । पाराशर्येण प्रोक्तं भिक्षुसूत्रमधीयानाः पाराशरिणः । 'पाराशर्यशिलालिभ्यां भिक्षुनटसूत्रयोरि'ति प्रोक्ते णिनौ तदन्ता 'छन्दोब्राह्मणानी'त्यध्येतृवेदितृोरणः 'प्रोक्ताल्लुगि'ति लुक् । सूत्रस्यापि छन्दस्त्व तत्रेष्यते, णिनावल्लोपयलोपौ ॥ १६ ॥

पॄ पालनपूरणयोः ॥ पृणाति । पपार । पपरतु । पप्रतुः । परिता । परीता । परिष्यति । परीष्यति । पृणातु । अपृणात् । पृणीयात् । आशिषि पूर्यात् । 'उदोष्ठ्यपूर्वस्ये'त्युत्वम् । अपारीत् । अपारिष्टाम् । पिपरिषति । पिपरीषति । पुपूर्षति । 'इट् सनि वे'तीडभावे 'इको झलि'ति कित्त्वादुत्वादि । पोपूर्यते । पापर्ति । पारयति । अपीपरत् । पूर्तः, पूर्तवान् । 'न ध्याख्यापॄमूर्छिमदामि'ति नत्वनिषेधः, 'उदोष्ठ्यपूर्वस्ये'त्युत्वम् । निष्ठानत्ववर्जं प्रक्रिया शृणातिवत् ॥ १७ ॥

वॄ वरणे ॥ वृणातीत्यादि वृञ्वत् । तेनैव वृणातीत्यादिसिद्धावपि पुनरस्योपादाने न प्रयोजनम् । नैतद्युक्तम् । वृञो ञित्त्वात्सिद्धेऽपि पदद्वये यदञितो वचस्तत्कर्त्रभिप्राये क्रियाफले परस्मैपदसिद्ध्य-

[1] आशरः, पचाद्यजित्यधिकं ४ पु० ।

इति । अत्र पवर्गतृतीयादिं बहवः पठन्तीति मुकुटकारेणोक्तम् । तत्राद्य-शब्देन जिन् वृणातिरुच्यते स्वामिशाकटायनावप्येवं पठित्वा भरणमर्थ-माहतुः ॥ १८ ॥

भॄ भर्त्सने ॥ भरणेऽप्येके । भृणाति । बभारेत्यादि वृवत् । भरः । 'ऋदोरप्' । भरणे न निर्भरं भरिम, 'भावप्रत्ययान्तादिमब्वक्तव्य' इतीमप् ॥ १९ ॥

मॄ हिंसायाम् ॥ मृणाति । ममारेत्यादि वृवत् । म्रियतइति तुदादौ ॥ २० ॥

दॄ विदारणे ॥ दृणाति । ददार । ददरतुः । दद्रतुः । ददरुः । दद्रुरित्यादि शृणातिवत् । विशेषस्तु 'अत्स्मृदृत्वर' इत्यभ्यासस्य णौ चङ्यत्वमददरदिति । अयं घटादिपाठान्मित् । भये दरयति । अन्यत्र दारयति । दरः । अप्, दरी । गौरादित्वान्ङीष् । पुरन्दरः । 'पूःसर्वयोर्दारिसहोरि'ति खच् । भगन्दरः । 'भगे च दारेरिति वक्तव्य'मिति खच् । 'खचि ह्रस्व' इति उपधाया ह्रस्वः । दारः । 'दारजारौ कर्तरि णिलुक् चे'ति घञि णिलुक् । दरत् जनपदः । 'शॄदॄभसोऽदि'रित्यदिप्रत्ययः । दृषत् । 'दृणातेः षुक् ह्रस्वश्चे'ति षुगागमो धातोर्ह्रस्वोऽदिश्च प्रत्ययः । द्रियते इति तुदादौ ॥ २१ ॥

जॄ वयोहानौ ॥ श्नाविषये जृणातीत्यादि । अन्यत्र जीर्यतिवत् । यथा तु भाष्यवार्तिककृन्नित्यामपदमजर्यादि तथायं धातुर्नास्तीति प्रतीयतइति जीर्यतावुपपादितम् । आत्रेयमैत्रेयदैवपुरुषकारादिषु दर्श-नादिहास्माभिर्लिखितः ॥ २२ ॥

धॄ इति त्वेके इति मैत्रेयः । धृणातीत्यादि ॥ २३ ॥

नॄ नये ॥ नृणाति । नीर्णम् । नीर्णवान् । नरः । पचाद्यच् । ना । 'नयतेर्डिच्चे'ति नयतेर्ऋन्प्रत्ययः स च डित् । नारी । 'नृनरयोर्वृद्धिश्चे'ति शार्ङ्गरवादिपाठान्ङीन् वृद्धिश्च ॥ २४ ॥

कॄ हिंसायाम् ॥ कृणातीत्यादि कृवत् । तेनैव सिद्धे पुनः पाठः कर्त्रभिप्राये क्रियाफलेऽपि वृणातिवत्परस्मैपदार्थः ॥ मॄ हिंसायामित्येके इति मैत्रेयः, एवं वदतोऽस्य पूर्वं मृणातेः पाठोऽनभिमत इति प्रतीयते ॥ २५ ॥

ऋ गतौ ॥ ऋणाति । ऋणीतः । ऋणासि । ऋणामि । अराञ्चकारेत्यादि, 'इजादेश्च गुरुमत' इत्याम् । अरिता । अरीता । अरिष्यति । अरीष्यति । ऋणातु । ऋणीताम् । ऋणीहि । ऋणानि । आर्णात् । आर्णीताम् । आर्णाः । आर्णाम् । आर्णीव । ऋणीयात् । ऋणीयाताम् । आशिषि ईर्यात् । ईर्यास्ताम् । इत्त्वरपरत्वा[1]दि । आरीत् । आरिष्टाम् । 'सिचि च परस्मैपदेष्वि'तीटो न दीर्घः । अरिरिषति । आरिरीषति । ईर्षिषति । 'इट् सनि वे' तीड्विकल्पः, इटि गुणः, पूर्ववद्वा दीर्घश्च, अनिटि सनः कित्त्वादित्त्वादि, 'न न्द्राः' इति रेफवर्जितस्य द्विर्वचनम् । आरयति, माभवानरिरत्, ईर्त्वा, समीर्णः, समीर्णवान् । 'उदोष्ठ्यपूर्वस्ये'त्यत्र प्रत्यासत्त्याऽङ्गावयव एवोष्ठ्यो गृह्यतइत्युत्त्वमत्र न भवति । ऋच्छतीति शपि । इयर्त्तीति श्लौ ॥ २६ ॥

गॄ शब्दे ॥ गृणाति । जगारेत्यादि पूर्ववत् । 'अवाद्ग्र'इति तङस्य न भवति । तथा च भाष्यम् । न चावपूर्वस्य गृणातेः प्रयोगोऽस्तीति । 'समः प्रतिज्ञान'इत्यत्र पूर्वसूत्रगृहीतस्यानुवृत्तिरिति सङ्गृणातीत्यत्र तङ् न भवति । होत्रेऽनुगृणाति, प्रतिगृणाति । 'अनुप्रतिगृणश्चे'त्यनुपूर्वस्य प्रतिपूर्वस्य च गृणातेः कारकं पूर्वस्याः क्रियायाः कर्तृभूत सम्प्रदा[2]नमिति होतुः सम्प्रदानत्वम् । होता चात्र पूर्वक्रियायां शंसने कर्ता भवति । अनुगरः प्रतिगर इति हि शंसितु. प्रोत्साहनमुच्यते । तदय वाक्यार्थः । प्रथम शंसति होता तमन्यः[3] प्रोत्साहयतीति । जेगिल्यते । जागर्त्ति । जागीर्त्तः । 'लुपसद'त्यादावकारविकरणे. हाहन्तपानौदा इकस्यैव यह र्णमिति क्रियासमभिहार एवायं यङ् । इत्त्वरपरत्वयोः 'पूर्वत्रासिद्ध'मिति पूर्वं 'ग्रो यङी'ति लत्वे रेफाभावान्न 'हलि चे'ति दीर्घः । लत्वे हि गिरति गृणात्योर्द्वयोर्ग्रहणमुक्तम् । गृणातिप्रभृतय उदात्ता उदात्तेतः ॥ २७ ॥

ज्या वयोहानौ ॥ एतदादयो बध्नात्यन्ता अनुदात्ता उदात्तेतः । जिनाति । जिनीतः । जिनासि । जिनामि । जिनीवः । 'ग्रहिज्या'दिना सम्प्र-

१ दीर्घेत्यधिकं ३ पु । २ संज्ञकमिति ३ पु॰ पा॰ ।
३ अध्वर्युरिति ४ पु॰ पा॰ ।

ब्ली वरणे ॥ ब्लिनाति । ब्लिनीतः । ब्लिनासि । ब्लिनामि । बिब्लाय । बिब्लियतुः । बिब्लेथ । बिब्लयिथ । बिब्लियिव । ब्लेता । ब्लेष्यति । ब्लिनातु । ब्लिनीहि । ब्लिनानि । अब्लिनात् । ब्लिनीयात् । अब्लैषीत् । अब्लैष्टाम् । बिब्लीषति । बेब्लीयते । ब्लेपयति । अबिब्लिपत् । 'अर्त्तिह्री' त्यादिना पुक् । ब्लीत्वा, ब्लीनः । ल्वादित्वान्निष्ठानत्वम् । प्रहीणं ब्लीनाति, नैनं दक्षिणा ब्लीनाति, इत्यादौ दीर्घश्छान्दसः ॥ ३१ ॥

प्ली गतौ ॥ ओष्ठ्यादिः । प्लिनातीत्यादि ब्लिनातिवत् । केचिदमुं दन्त्योष्ठ्यादि पठन्तो ब्ली वरणइत्यमु न पेठुः, मैत्रेयस्तु वरणार्थे पठित्वाऽमुं न पपाठ ॥ ३२ ॥

वृत् ॥ ल्वादिपरिसमाप्त्यर्थोयम् । अन्ये तु प्वादीनामपि परिसमाप्त्यर्थमिति, तत्रानन्तर्यात् 'ज्ञाजनोर्जा' इति दीर्घनिर्द्देशाच्च ल्वादिपरिसमाप्त्यर्थत्वमेव युक्त, जेति ह्रस्वान्तादेशेऽपि जायते जानातीत्यादा 'वनो दीर्घा यत्नीति' दीर्घेण सिद्धे प्वादित्वाज्ज्नानानीत्यत्र ह्रस्वो माभूदिति हि दीर्घत्वम्, उक्त चैव हरदत्तादिभिरपि ॥

व्री वरणे ॥ व्रीणाति । व्रीणीतः । व्रीणासि । व्रीणामि । विव्राय । विव्रियतुः । विव्रेथ । विव्रियिव । व्रेता । व्रेष्यति । व्रीणातु । व्रीणीतात् । व्रीणीहि । व्रीणानि । अव्रीणात् । अव्रीणीताम् । अव्रीणाः । अव्रीणाम् । व्रीणीयात् । आशिषि व्रीयात् । अव्रैषीत् । अव्रैष्टाम् । विव्रीषति । वेव्रीयते । वेव्रेति । व्राययति । अविव्रयत् । स्वामिकाश्यपादयोऽर्तिह्रीव्रीतिपठन्तो व्रेपयतीति पुकं प्रतिपन्नाः ॥ ३३ ॥

भ्री भये ॥ भरणइत्येके । भ्रीणातीत्यादि व्रीवत् ॥ ३४ ॥

क्षीष् हिंसायाम् ॥ क्षीणाति । चिक्षायेत्यादि व्रीवत् । षित्त्वादङ्, क्षीयः । क्षीत्वा । क्षीतवान् । 'क्षियो दीर्घा' दिति निष्ठानत्व ह्रस्वान्तस्य क्षियो 'निष्ठायामण्यदर्थे' इति कृतदीर्घस्य । क्षये क्षयतीति शपि । क्षियतीति निवासगत्योः । क्षिणोतीति तनोत्यादौ हिंसायाम् ॥ ३५ ॥

ज्ञा अवबोधने ॥ जानाति । जानीतः । जानन्ति । जानासि । जानामि । जानीवः । 'ज्ञाजनोर्जा' इति शित्प्रत्यये जादेशः । दीर्घनिर्देशसामर्थ्यात् 'प्वादीनां ह्रस्व' इति ह्रस्वो नेति न्यासकारादिभिरुक्तम्[1] । जज्ञौ । जज्ञतुः । जज्ञिथ । जज्ञाथ । जज्ञिव । क्रादिनियमादिट् । थलि भारद्वाजनियमाद्विकल्पः । ज्ञाता । ज्ञास्यति । जानातु । जानीहि । जानानि । अजानात्, अजानीताम् । अजानाम् । जानीयात् । आशिषि ज्ञायात् । ज्ञायास्ताम् । ज्ञेयात्, ज्ञेयास्ताम् । 'वाऽन्यस्य संयोगादेः' इत्येत्वविकल्पः । अज्ञासीत् । अज्ञासिष्टाम् । शतमपजानीते । अपलपतीत्यर्थः । 'अपह्नवे ज्ञ' इति तङ् । सोऽयमर्थोऽयमपह्नवे वर्तते । सर्पिषो जानीते । सर्पिषोपायेन प्रवर्तत इत्यर्थः । 'अकर्मकाच्च' इति तङ् । 'ज्ञोऽविदर्थस्य करणे' इति शेषत्वेन विवक्षिते षष्ठी । मात्रा सञ्जानीते । मातरं सञ्जानीते, शतं प्रतिजानीते, 'सम्प्रतिभ्यामनाध्याने' इति तङ् । सम्पूर्वत्वे 'सञ्ज्ञोऽन्यतरस्यां कर्मणी' ति पक्षे तृतीया । आध्यानमुत्कण्ठापूर्वकं स्मरणं, ततोऽन्यदनाध्यानम् । आध्याने तु मातुः सञ्जानाति । 'अधीगर्थ' इति कर्मणि शेषे षष्ठी । अशेषे तु 'सञ्ज्ञ' इति द्वितीयातृतीये भवतः । मातरं सञ्जानाति । मात्रा सञ्जानाति । कृद्योगे तु मातुः सञ्ज्ञानम् । कृद्योगलक्षणा षष्ठी परत्वाद्भवति धर्मं जानीते । 'अनुपसर्गाज्ज्ञ' इति कर्त्रभिप्राये तङ् । स्वयं जानाति जानीत इति वा, 'विभाषोपपदेन प्रतीयमाने' इति कर्त्रभिप्रायत्वे उपपदेन द्योत्यमाने तद्विकल्पः । धर्मं जिज्ञासते । 'ज्ञाश्रुस्मृदृशां सनः' इति तङ् । सकर्मकार्थमिदमकर्मकात्तु 'पूर्ववत्सनः' तङ् सिद्धः । अनुजिज्ञासति पुत्रं, 'नानोर्ज्ञः' इति तङ्निषेधः । अयं च सक्ष्येपवादन्यायेन 'ज्ञाश्रुस्मृदृशाम्' इत्यस्यापवादः । तेनौषधस्यानुजिज्ञासते इत्यत्र 'पूर्ववत्सनः' इत्यकर्मकत्वनिबन्धनस्तङ् भवति । औषधेन प्रवर्तितुमिच्छतीत्यर्थः । ज्ञाज्ञापने ज्ञाज्ञाति । ज्ञपयति । अजिज्ञपत् । मारणादौ ज्ञपयति घटादित्वान्मित्त्वं प्रपञ्चितं घटादावेवावगन्तव्यः । जानातीति ज्ञा, 'इगुपध' इति 'श्याद्व्यध' इति णापवादे के आतो

---

१ भूतेनेत्यधिकम् ४ पु ।

न्थिथ । श्रेथुः । श्रेथ । शश्रन्थ । श्रेथिव । श्रेथिम । 'श्रन्थिग्रन्थिद
म्भी'त्यादिना लिटः कित्त्वा 'दनिदितामि'ति नलोपः क्ङिति
अत्र हरदत्तः । 'एत्वाभ्यासलोपावत्र वक्तव्यावि'ति । अन्यथा 'असि
द्धवदत्रे'ति नलोपस्यासिद्धत्वादत एकहल्मध्यस्थत्वाभावान्न तौ स्या
ताम् । ये तु श्रन्थ्यादीनां कित्त्वविकल्पमिच्छन्ति तेषां शश्रन्थतुरित्या
द्यपि । इदं च कित्त्वं पिद्वचनेष्वपीति सुधाकरः । तन्मते । शश्राथ
श्रेथिथ । शश्रथ । शश्राथेति । श्रन्थिता । श्रन्थिष्यति । श्रथ्नातु
श्रथ्नीताम्, श्रथान । 'हलः श्नःशानज्झी'ति शानचि हेर्लुक् । श्रथ्नानि
अश्रथ्नात् । अश्रथ्नीताम् । अश्रथ्नाः । अश्रथ्नीव । श्रथ्नीयात् । श्रथ्नी
याताम् । आशिषि श्रथ्यात् । श्रथ्यास्ताम् । कित्त्वादनुनासिकलोप
अश्रन्थीत् । अश्रन्थिष्टाम्, अश्रन्थिषुः, शिश्रन्थिषति । शाश्रथ्यते । शाश्र
न्थीति । शाश्रन्ति 'झरो झरी'ति थलोपो विकल्पेन, लोपाभावे 'खरि
चे'ति चर्त्वेन थकारस्य तकारः । श्रन्थयति । अशश्रन्थत् । कर्मकर्त
'णिश्रन्थी'त्यादिना यक्चिणोर्निषेधात् श्रथ्नीते मेखला स्वयमेव, अश्र
न्थिष्ट मेखला स्वयमेवेति भवति । श्रन्थना । 'ण्यासश्रन्थो युजि'ति
युच्प्रत्ययः । प्रश्रथः हिमश्रथः । 'अवोदैधौद्मप्रश्रथहिमश्रथा' इति नि
पातनाद् घञि नलोपो वृद्ध्यभावश्च । श्रन्थित्वा, श्रथित्वा, 'नोपधात्
फान्ताद्वे'ति कित्त्वविकल्पः । श्रन्थत इति शैथिल्ये शपि ॥ ३९ ॥

मन्थ विलोडने ॥ अयं द्विकर्मकः । मथ्नाति । ममन्थ । ममन्थु
रित्यादि श्रथ्नातिवत् । अस्य लिटः कित्त्वं नास्ति । कर्मकर्तरि यक्चिणौ
स्तः । मथ्यते, अमन्थीति । ममन्थीति, विलोडने मन्थति, हिंसासंक्ले
शनयोः शपि ॥ ४० ॥

ग्रन्थ सन्दर्भे ॥ ग्रथ्नाति । इत्यादि सर्वं श्रन्थिवत् । अत्रापि केचि
श्रन्थि पठन्ति । पुनः पाठोऽर्थभेदात् । तथा च णिश्रन्थीत्यत्र न्या
ग्रन्थ सन्दर्भइति चुरादावित्युक्त्वा क्र्यादावपीत्युक्तम् । 'अवोदैधौद्
प्रश्रथे'त्यत्र तु श्रन्थ विमोचनप्रतिहर्षयोरिति । एवमुभयत्र पदमञ्जर्यां
मपि । पुरुषकारेऽपि श्रन्थ विमोचनप्रतिहर्षयोः, अन्ये तु श्रन्थ ग्रन्थ सन्द

इति क्र्यादौ पठन्ति । तथा च संदर्भे ग्रन्थनक्रियायां ग्रन्थिर्ग्रन्थिधातू वर्तेते इति क्षीरस्वामीत्युक्तम् । ग्रन्थिः, इत्यन्यथः ॥ ४१ ॥

कुन्थ संश्लेषणे ॥ संक्लेशे इत्येके । तथा च दैवः । कुन्थ संक्लेशे इति । कुथ्नाति । चुकुन्थेत्यादि मन्थिवत् । कुथेति दुर्गः । तन्मते कुथ्नाति । चुकोथ । कोथितेत्यादि । कुन्थतीति शपि । कुथ्यतीति पूतीभावे श्यनि ॥ ४२ ॥

मृद क्षोदे ॥ मृद्नाति, मृद्नीतः, मृद्नन्ति । मृद्नामि । ममर्द । ममृदतुः । ममृदुः । ममर्दिथ । ममृदथुः । ममृद । ममृदिव । ममृदिम । मर्दिता । मर्दिष्यति । मृद्नातु । मृदान । 'हलःश्न' इति श्नः शानच् । मृद्नानि । अमृद्नात् । अमृद्नाः । अमृद्नाम् । अमृद्नीव । मृद्नीयात् । आशिषि मृद्यात् । अमर्दीत् । मिमर्दिषति । मरीमृद्यते । मर्मर्तीत्यादि । मर्दयति । अममर्दत् । अमीमृदत् 'उर्ऋत्' । मृत् । क्विप् । मृत्तिका । 'मृदस्तिकन्' इति स्वार्थे तिकन् । मृत्सा । मृत्स्ना । 'सस्नौ प्रशंसायाम्' इति सस्नौ प्रत्ययौ । मर्दनम्, मृद्यः । 'ऋदुपधाद्' इति क्यप् । मृदित्वा । 'मृडमृदे'ति सेटः क्त्वः कित्त्वम् ॥ ४३ ॥

मृड च ॥ मृड सुखे चेति केचित् । मृड सुखन इत्यपरे । मृडित्वेत्यादि मृदिवत् । 'ष्टुना ष्टुः' इति ष्टुत्वे णकारः । मृड्णीति श्ने ॥ ४४ ॥

गुध रोषे ॥ गुध्नाति । जुगोध । गुधित्वेत्यादि मृदिवत् । गुधितः, गुधितवान् । 'उदुपधाद्' इति निष्ठायाः कित्त्वविकल्पो व्यवस्थितविभाषया शब्विकरणानामेवेत्युक्तम् । गुध्यतीति परिवेष्टने दिवादौ ॥ ४५ ॥

कुष निष्कर्षे ॥ निष्कर्षो बहिर्निःसारणम् । कुष्णाति कुष्णासि । कुष्णामि । कुष्णीवः । 'ष्टुना ष्टुः' इति ष्टुत्वं, 'रषाभ्याम्' इति णत्वं, चुकोष । चुकुषतुः । चुकोषिथ । चुकुषिव । निष्कोषिता । निष्कोष्टा । निष्कोषिष्यति । निष्कोक्ष्यति, कुष्णातु । कुषाण । अकुष्णात् । कुष्णीयात् । आशिषि कुष्यात् । निरकोषीत् । निरकुक्षत् । 'निरः कुषः' इति वलाद्यार्धधातुके इड्विकल्पः । अनिष्पूर्वत्वे तु नित्यमिडेव, लुङ्यनिट्पक्षे 'शल

इगुपधा' दिति क्सः । निष्चुकोषिषति । निष्चुकुक्षति । पूर्ववदिड्विकल्पः । इटि 'रलो व्युपधा' दिति कित्त्वविकल्पः । कुष्यति पादः स्वयमेव । कुष्यते वा । अकुष्यत् पादः स्वयमेव । कुष्यतु कुष्यता वा पादः स्वयमेव । 'कुषिरञ्जोः प्राचां श्यन् परस्मैपदं चे' ति श्यन् परस्मैपदे सार्वधातुके । अन्यत्र कोषिष्यते पादः स्वयमेव । अकोषि पादः स्वयमेवेत्यादि । निष्कुषितम् । 'इण् निष्ठाया' मिति नित्यमिट् । कुष्ठः । 'हनिकुषी' त्यादिना क्थन् । कुक्षिः । 'प्लुषिकुषिशुषिभ्यः क्सि' रिति क्सिप्रत्ययः । सर्वत्र 'तितुत्रेती' तिनिषेधः । कौक्षेयकः । 'कुलकुक्षिग्रीवाभ्यः श्वास्यलङ्कारेष्वि' ति असावभिधेये शैषिकष्ठक् । अन्यत्र कौक्षः कौक्षेयः । 'दृतिकुक्षी' त्यादिना भवार्थे ढञ् ॥ ४६ ॥

क्षुभ सञ्चलने ॥ क्षुभ्नाति । क्षुभ्नीतः । चुक्षोभ, चुक्षुभतुः, चुक्षोभिथ । चुक्षुभिव । क्षोभिता । क्षोभिष्यति । क्षुभ्नातु । क्षुभाण । क्षुभ्नानि । अक्षुभ्नात् । क्षुभ्नीयात् । आशिषि क्षुभ्यात्, अक्षोभीत् । अक्षोभिष्टाम् । चुक्षुभिषतीत्यादि । क्षुभ्यतिवत् । क्षोभतइति भ्वादौ । अक्षुभदिति क्षुभ्यतेः पुषादिपाठात् । 'क्षुभ्नादिषु चे' ति णत्वनिषेधो यत्रैतद्रूपं तत्रैवेति क्षोभणमित्यत्र रूपान्तरे न भवति । क्षुभ्नीतः, क्षुभ्नन्तीत्यादौ त्वेकदेशविकृतस्यानन्यत्वात्स्थानिवद्भावाद्भवत्येव ॥ ४७ ॥

णभ तुभ हिंसायाम् ॥ नभ्नाति । तुभ्नातीत्यादि पूर्ववत् । लुङ्यनभीत् । अनाभीत् । 'अतो हलादे' रिति वृद्धिविकल्पः । प्रणिनभ्नाति । प्रनिनभ्नाति । 'शेषे विभाषे' ति णत्वविकल्पः । नभ्यति तुभ्यतीति दिवादौ । नभते तोभतइति शपि ॥ ४८–४९ ॥

क्लिशू विबाधने ॥ क्लिश्नाति । क्लिश्नीतः । क्लिश्नासि । क्लिश्नामि । 'शादि' ति चुत्वनिषेधः । चिक्लेश, चिक्लिशतुः चिक्लेशिथ । चिक्लेष्ठ । चिक्लिशिव । चिक्लिश्व । ऊदित्त्वा 'त्स्वरती' त्यादिना वलाद्यार्धधातुकइड्विकल्पः, क्लेष्टा । क्लेशिता । क्लेशिष्यति । क्लेक्ष्यति । अनिटि 'व्रश्चादि' ना षत्वे यथायोगं ष्टुत्वकत्वे । क्लिश्नातु । क्लिशान । क्लिश्नानि । अक्लिश्नात् । क्लिश्नीयात् । आशिषि क्लिश्यात् । अक्लेशीत् ।

अक्लिशिष्टाम् । अनिट्पक्षे 'शल इगुपधादनिटः क्सः' इति क्सः, अक्लिक्षत् । चिक्लेशिषति । चिक्लिशिषति । चिक्लिक्षति । चेक्लिश्यते । क्लेशयति । अचिक्लिशत् । क्लिशित्वा । क्लिष्ट्वा, क्लिष्टः । क्लिशितः । 'क्लिशः क्त्वानिष्ठयोः' इतीड्विकल्पः । क्त्वायाम् इत्त्वाद्वा सेट् क्त्वो 'रलो व्युपधा' दिति विकल्पं[1] बाधित्वा 'मृडमृद' इत्यादिना नित्यं कित्त्वं, क्लिष्टं च तदक्लिशितं च क्लिष्टाक्लिशितं, 'क्तेन नञ्विशिष्टेने' ति कर्मधारयः, क्लिश्यते इति दिवादौ ॥ ५० ॥

अश भोजने ॥ अश्नाति । अश्नीतः । अश्नासि । अश्नामि । आश । आशिथ । आशिव । अशिता । अशिष्यति । अश्नातु । अशान । अश्नानि । आश्नात्, आश्नाम् । अश्नाः । अश्नीयात् । आशिषि अश्यात् । आशीत् । आशिष्टाम् । अशिशिषति । अशाश्यते । आशिटि[2] । 'सूचिसूत्रि' इत्यादिना यङ्, आशयति । 'निगरणे' ति नित्यं परस्मैपदं, माभवान[3]शिशत् । अनाश्वान् । 'उपेयिवाननाश्वाननूचानश्चे' ति नञ्पूर्वादश्नातेर्भाषायां भूतसामान्ये लिट्, क्वसुरनिट् निपात्यते । इदमेव ज्ञापकं भूतसामान्ये लिटः कल्पकं, स चादेशविषयः । इह च लिडन्तमुत्तरत्रानुवृत्तेर्लङ्लिड्विषयं भवति, अस्य चोपादानं सदादौ भूतमिति तत्र पक्षानुगमत्वम्[4] । अशनायति, बुभुक्षतीत्यर्थः, 'अशनायोदन्यधनाये' त्यादिना बुभुक्षायामीत्त्वापवाद आत्वम्, अश्नीत पिबतेति यस्यां क्रियायां सातत्येनोच्यते सा ऽश्नीतपिबता । मयूरव्यंसकादौ 'आख्यातमाख्यातेन क्रियासातत्ये' इति पाठात्समासे टाप्, अश्नुत इति स्वादौ ॥ ५१ ॥

उध्रस उञ्छे ॥ ध्रस्नाति । दध्रास । दध्रसिथ । ध्रसिता । ध्रसिष्यति, ध्रस्नातु । ध्रसान । अध्रस्नात् । ध्रस्नीयात् । आशिषि ध्रस्यात् ।

---

१ निषेधमिति ४ पु० पा० ।

२ पुस्तकद्वये ऽप्याशीटीति पाठ उपलभ्यते स न युक्तः ।

३ माभवानशिशदित्यस्याग्रे न तु स्थगुरित्यधिकं ४ पुस्तके ।

४ तत्र हि सदादौ भूतसामान्ये सावकाशस्यास्य लिटः पराभ्यां विशेषविहिताभ्यां लङ्लिड्भ्यां बाधमाशङ्क्य तद्विधाने पक्षानुवर्तनादित्युक्तमितम् ।

अध्रासीत् । अध्रसीत् । दिध्रसिषति । दाध्रस्यते । दाध्रस्ति । ध्रासयति । अदिध्रसत् । ध्रसित्त्वा, ध्रस्त्वा । उदित्त्वादिड्विकल्पः, ध्रस्तं, 'यस्य विभाषे' ति अनिट्त्वम् । अयं चुरादौ । अत्र क्षीरस्वाम्युकारं धात्ववयवमाह । तन्मते उध्रस्नातीत्यादि, उध्रसाचकार, औध्रस्नादित्याद्युदाहार्यम् । अनवयवत्त्वे स्वादिवद् ध्रसु इति ब्रूयादिति तस्याभिप्रायः । स एव भूवादौ यदाह

दरिद्राजागृदेधीङोनेकाचश्च चिरिर्जिरिः ।
च[1]कास्त्यूर्णोतिवेवीङः स्मर्यन्ते णौ तथोल्लिङिः ॥

इति, तदुदाहरणप्रदर्शनं न तु परिगणनम् ॥ ५२ ॥

इष आभीक्ष्ण्ये ॥ पौनःपुन्य भृशार्थो वा ऽऽभीक्ष्ण्य, तद्विषयाया क्रियायामित्यर्थः । सा च यथायोग्य तथा च श्रूयते 'पुर इष्णाति पुरुहूत' इति, अत्र भाष्यम् । आसुरीणां पुरो हननादिरर्थो गम्यते इति । इष्णाति । इष्णीतः, इयेष । ईषतुः । ईषुः । इयेषिथ । इयेष । ईषिव । गुणविषये 'ऽभ्यासस्यासवर्णे' इतीयङ् । अन्यत्र सवर्णदीर्घः, एषिता । एषिष्यति । इष्णातु । इषाण । इष्णानि, ऐष्णात् । ऐष्णीताम् । ऐष्णाः । इष्णीयात् । आशिषि इष्यात् । ऐषीत् । ऐषिष्यत् । एषिषिषति । परत्त्वाद्गुणे द्वितीयस्यैकाचो द्विर्वचनम् । एषयति । माभवानिषिषत्, ऋदित्करणात्कृतह्रस्वे द्विर्वचनमिति तत्रैवोक्तम् । एषित्त्वा, इषितः । 'तीषसहे' तीड्विकल्पस्तौदादिकस्यैव न दैवादिकक्रैयादिकयोरेतदर्थमेव तौदादिकमुदितं पठित्वा सूत्रे तमुदितं पठ[2]न्तीति वृत्तौ स्थितम्, अनुदित्पाठिना तौदादिकस्यैव ग्रहणे हेतुर्हरदत्तेनाकारमात्रविकरणेन सहिना साहचर्यमुक्तम्, एवं धनपालसंमतात्क्षीरतरङ्गिणीकारादयश्च तौदादिकस्यैव तीषसहेत्यत्र ग्रहणमाहुः । काश्यपस्तु 'इषेस्तकारे श्यन्प्रत्ययात् प्रतिषेध' इति वार्त्तिकप्रामाण्यादश्यन्विकरणयोस्तौदादिकक्रैयादिकयोर्द्वयोरपि इड्विकल्पमाह, हरदत्तोपि, 'यथा तु वार्त्तिकं तथा क्रैयादिकस्याप्यत्र ग्रहणमि-

१ अदन्तोर्णोतीति ४ पु· पाठः ।
२ कुर्वन्तीति ३ । ४ । पु· पा· ।

ष्यतइति, एवञ्च तौदादिस्त्व वार्तिकं चिन्त्यम्,' उक्तं च तत्र कैयटे पाठ-द्वयं प्रस्तुत्य 'तत्र वार्तिककारस्य मते त्रयोरीययोः निरनुबन्धक'. इह च लोपमहे निराठस्तदाह, इषेरितीति ॥ ५३ ॥

विष विप्रयोगे ॥ अनिट्कारिकायां विशिग्रहणेन शौहोत्यादिकोऽयं च गृह्यते इति न्यासे. विष्णाति । विवेष, विवेषिथ । विविषिव । क्रादि-नियमादिट् । विष्णातु । विषाण । विष्णानि । अविष्णात् । वेविष्ट्यादि वेष्टिवत् ॥ ५४ ॥

प्रुष प्लुष स्नेहनसेचनपूरणेषु ॥ प्रुष्णाति । पुप्रोष । पुप्रोषिथ । पुप्रु-षिव । प्रोषिष्यति । प्रुष्णातु । प्रुषाण । प्रुष्णानि । अप्रुष्णात् । प्रुष्णीयात् । आशिषि प्रुष्यात्, अप्रोषीत् । पुप्रुषिषति । पुप्रोषिषति । पोप्रुष्यते । पोप्रोष्टि । प्रोषयति । अपुप्रुषत् । प्रोषित्वा प्रुषित्वा । प्रुषितः । एवं प्लुष्णातीत्यादि प्रुष्वा, प्रुट्, प्लुष्वा, प्लुट्', इति मैत्रेयादिकयोरुदाहार्य-योरुक्तिः, प्लुषिस्तु दिवादौ पुषादौ ॥ ५५-५६ ॥

पुष पुष्टौ ॥ पुष्णाति पुष्णीतः । पुषाण । अपुष्णात् । पुष्णी-यात् । पुपोष । पुपोषिथ । पोषितेत्यादि पोषयतिवत् । पुष्यतीत्यनिट् पुषा पु[1]षतीति पुष वृद्धावित्यस्य शपि ॥ ५७ ॥

मुष स्तेये ॥ मुष्णाति इत्यादि पूर्ववत् अयं द्विकर्मक इत्युक्तं, तन्निबन्धनानि च कार्याणि तत्रतत्रोक्तानीति नेह प्रतायन्ते । मुषित्वा । मुमुषिषति । 'रुदविदमुषेति' क्त्वासनोर्नित्यं कित्त्वं 'रलो व्युपधादि'ति विकल्पापवादः ॥ ५८ ॥

खच भूतप्रादुर्भावे ॥ भूतप्रादुर्भावोऽतिक्रान्तोत्पत्तिः । खच्ञाति । श्चुत्वेन ञकारः, चखाच । चखचिथ । चखचिव । खचिता । खचिष्यति । खच्ञातु । खचान । खच्ञानि । अखच्ञात् । खच्ञीयात् । खच्यात् । अखचीत् । अखाचीत् । 'अतो हलादे'रिति वा वृद्धिः । चिखचिषति । चाखच्यते । चाखक्ति । खाचयति । अचीखचत् । खचित्वा । खचितः ।

---

१ पोषतीति पाठो युक्तः । पुषतीति पाठे संज्ञापूर्वको विधिरनित्य इति गुणाभावः ।

खव इत्येकइति मैत्रेयः । स्वाम्यपि खच्चातीत्युक्त्वा खौनातिरिति सभ्या इति । खौनाति । खौनातु । खौनाहि । अनुनासिकादावूठ्, हौ च श्नः शानचः पूर्वं परत्वादूठि पश्चाद्धलन्तत्वाभावान्न शानच्, अखौनात् । खौनीयात् । आशिषि खव्यात् । शेषं खविवत्, अत्र क्वचिद्धेठ चेति पठ्यते, तत्र हेठतीत्यादि, हेठ विबाधायामिति शपि, अन्यादय उदात्ता पिपि-वर्जम् । क्लिशिस्तु विभाषितेड्। इषिरपि तकारादौ वार्त्तिकमतेन, सर्वे परस्मैपदिनः ॥ ५९ ॥

ग्रह उपादाने ॥ उदात्तः स्वरितेत् । गृह्णाति । गृह्णीतः । गृह्णासि । गृह्णामि । 'ग्रहिज्या'दिना सम्प्रसारणं क्ङितोः । गृह्णीते । गृह्णीषे । गृह्णे । गृह्णीवहे । जग्राह । जगृहतुः । जगृहुः । जग्रहिथ । जगृहथुः । जग्राह । जग्रह । जगृहिव । जगृहे । जगृहाते । जगृहिषे । जगृहिढ्वे । जगृहिध्वे । जगृहिवहे । ग्रहीता । ग्रहीष्यति । ग्रहीष्यते । 'ग्रहोऽलिटि दीर्घ' इत्यलिटीटो दीर्घः । गृह्णातु । गृहाण । गृह्णानि । गृह्णीताम् । गृह्णा-ताम् । गृह्णीष्व । गृह्णै । अगृह्णात् । अगृह्णीताम्, अगृह्णीत, अगृह्णाताम्, । गृह्णीयात्, । गृह्णीयाताम् । गृह्णीयाः । गृह्णीत, गृह्णीयाताम्, । गृह्णीरन्, । आशिषि गृह्यात् । गृह्यास्ताम् । ग्रहीषीष्ट । ग्रहीषीयास्ताम् । अग्रहीत् । अग्र-हीष्टाम् । 'ह्म्यन्ते'ति न वृद्धिः । अग्रहीष्ट । अग्रहीषाताम् । जिघृक्षति । जिघृक्षते । 'सनि ग्रहगुहोश्चे'तीण्निषेधः । 'रुदविदमुषग्रहीति' सनः कित्त्वात्सम्प्रसारणम् । 'हो ढः' भष्भावः । 'षढो'रिति कत्वे षत्वम् । ज-रीगृह्यते, यङि सम्प्रसारणे द्विर्वचनम् । 'रीगृदुत'इत्यभ्यासस्य रीक् । जाग्राढि, यङो लुका लुप्तत्वान्न संप्रसारणं, ढत्वघत्वष्टुत्वढलोपदीर्घाः । जागृढः । ढत्वादि दीर्घवर्जं, तत्र हि पूर्वाणो ग्रहणम् । प्रसारणं त्वपित्सार्वधातु-का[1]पेक्षम् । जाग्रहीति । झ[2]ल्परत्वाभावान्न ढत्वम् । जागृह्वि । ढत्व-भष्भावकत्वषत्वादि । जागृहि । जागृहुः । जाग्रहांचकार । जाग्रही-ता । जाग्रहीष्यति । 'ग्रहोऽलिटी'त्यत्र ग्रहेर्येद्विहितमार्धधातुकं तस्य य

१ तस्य बहिरङ्गत्वेनासिद्धत्वान्न रीगादयः ।
२ अझल्परत्वादिति ४ पु॰ पा ।

इडिति विहितविशेषणत्वेऽपि द्विः प्रयोगरूपत्वाद् द्विर्वचनस्य द्विरुक्तोऽपि स एव ग्रहिरिति दीर्घो भवति । विहितविशेषणं तु फलस्य च प्रयोजनं जरीगृहशब्दादुत्तरस्यार्धधातुके इडन्त्येयवनौपदेनेरिहितिन्यादौ दीर्घनिवृत्तिः । अत्र च न यङ्लुगन्तमार्धधातुकं किं तर्हि यङन्तात् । जागाढु । जागृढाम् । जागृढि । अत्र हेरपित्त्वान्न गुणः ढत्वादि. अजागाट् । अजागृढाम् । अजागृहुः । अजागहम् । अजागाट् । निष्ठिषोर्हलन्तादिति दे यङन्तत्वाद्गुणाभावयोर्नान्त्यवत्त्वं । जागृह्यात् । जागृह्यास्ताम् । जागृह्यास्ताम् । अजागर्हीत् । स्यसिच्सीयुडित्यादिना चिण्वदिटि ग्राहिष्यत इत्यादि । 'ग्रहोऽलिटि दीर्घः' प्रकृतस्येट इतीह न भवति । प्रगृह्य पदं, यस्य प्रगृह्यसंज्ञा विधीयते । गृह्यकाः शकुनयः, अस्वतन्त्रा इत्यर्थः, ग्रामगृह्या चाण्डालवाटिका । ग्रामाद्बहिर्भूतेत्यर्थः । अर्जुनगृह्यः, अर्जुनपक्षः । 'पदास्वैरिबाह्यापक्ष्येषु चे'ति ग्रहेः क्यप्, बाह्येति स्त्रीलिङ्गनिर्देशो लिङ्गान्तरे माभूदिति । तेन ग्रामबाह्यश्चाण्डाल इत्यत्र ण्यदेव भवति । गृह्यका इत्यत्रानुकम्पायां कन् । पाणिगृहीती, 'पाणिगृहीती'ति ङीप् । ग्राहः, ग्रहः । 'विभाषा ग्रह' इति कर्तरि वा णः । अन्यदा च व्यवस्थितविभाषाविज्ञानात् जलचरे ग्राहः । ज्योतिषि ग्रहः । गृह्णात्युपादत्ते धान्यादिकमिति गृहं गेहम् । 'गेहे क'इति ग्रहेर्गेहे कर्तरि कः, संप्रसारणम् । यदाह तात्स्थ्यात्तद्वचनस्तदा स्वभावात्पुंल्लिङ्गो बहुवचनान्तश्च । शक्तिं गृह्णातीति शक्तिग्रहः । अच्प्रकरणे 'शक्तिलाङ्गलाङ्कुशयष्टितोमरघटघटीधनुष्षु ग्रहेरुपसंख्यान'मित्यच् । अणोऽपवादः । एवं लाङ्गलग्रह इत्यादि । सूत्रं धारयतीति सूत्रग्रहः । 'सूत्रे च धार्यर्थे' इति धारयत्यर्थाद् ग्रहेरच् । फलेग्रहिः । आत्मम्भरिरिति नैघण्टुकाः । 'फलेग्रहिरात्मम्भरिश्चे'ति इन् प्रत्यय उपपदस्य चैकारान्तत्वं निपात्यते । भट्टिकाव्ये तु फलग्राहिमात्रे प्रयुज्यते । 'फलेग्रहीन् हंसि वनस्पतीनामिति । उद्ग्राहः । 'उदि ग्रह' इति घञ् । 'ग्रहवृदृनिश्चिगमश्चे'त्यपोऽपवादः । संग्राहो मल्लस्य, अङ्गुलिसन्निवेशस्य दार्ढ्यमित्यर्थः । 'समि मुष्टा'विति घञ्, अपोऽपवादः पूर्ववत् । मुष्टाविति मुष्टिविषयश्चेद्धात्वर्थ

इत्यर्थः । अवग्राहो हन्त ते वृषलरूपात् । एवं निग्राहः । 'आक्रोशेवन्योर्ग्रह' इति घञ् । पूर्ववद् अपोपवादः । आक्रोशःशपनम् । अन्यत्रावग्रहः पदस्य निग्रहश्चोरस्य । 'ग्रहवृदृनिश्चिगमश्चे'त्यप् । पात्रप्रग्राहेण चरति भिक्षुः, लिप्सुः पात्रं गृहित्वा चरतीत्यर्थः । 'प्रे लिप्सायां' मिति घञ् लिप्सायां गम्यायाम् । परिग्राहो वेद्याः । 'परौ यज्ञे' इति ग्रहेर्घञ्, अन्यत्र परिग्रहो धनस्य, पूर्ववदप् । अवग्रहो देवस्य अवग्राह इति वा । 'अवे ग्रहो वर्षप्रतिबन्धे' इति घञपौ । वर्षस्य प्रतिबन्ध इत्यर्थः । तुलाप्रग्राहस्तुलाप्रग्रहः । तुलासूत्रमित्यर्थः । 'प्रे वणिजामि'ति वा घञ् । वणिजामित्यनेन तुलासूत्रं लक्ष्यते, तेषां तेन सबन्धात्, न तु वणिजस्तन्त्रमिति वृत्त्यादौ स्थितम् । प्रग्राहोऽश्वादेः प्रग्रह इति वा । 'रश्मौ चे'ति वा घञ् । अश्वानां नियमनार्था रज्जुरिह रश्मिशब्देनोच्यते । जीवग्राहं गृह्णाति । 'समूलाकृतजीवेषु हन्कृञ्ग्रह' इति जीवशब्दे कर्मण्युपपदे ग्रहेर्णमुल् । कषादित्वाद्यथाविध्यनुप्रयोगः, जीवन्तं गृह्णातीत्यर्थः । हस्तग्राहं गृह्णाति । पाणिग्राहं गृह्णाति । हस्तेन गृह्णातीत्यर्थः । 'हस्ते वर्तिग्रहोरि'ति करणवाचिनि हस्तार्थे उपपदे णमुल् । पूर्ववदनुप्रयोगः । नामग्राहमाह्वयति । नाम गृहीत्वा ऽऽह्वयतीत्यर्थः । 'नाम्न्यादिशिग्रहो'रिति नाम्न्युपपदे णमुल् । तृतीयाप्रभृतित्वात्समासविकल्पः । धातुसंबन्धाधिकारादनुप्रयोगः । वासरूपेण क्त्वाप्यनुज्ञायतइति नाम गृहीत्वेति भवति । गर्हतइति ग्रहेर्ग्रहणे शपि । कुत्सायां गल्हतइति शपि, एवं गर्हते इति ॥ ६० ॥

इति श्रीपूर्वदक्षिणपश्चिमसमुद्राधीश्वरकम्पराजसुतसङ्गमहाराजमाहमन्त्रिणा मायणसूतेन माधवसहोदरेण सायणाचार्येण विरचितायां माधवीयायां धातुवृत्तौ क्र्यादयः ।



# अथ चुरादयः।

चुर स्तेये ॥ अकार उच्चारणार्थः प्रयोजनान्तराभावात् । न च तदर्थानुदात्तेत्त्वं स्यात् । 'सत्यापपाशे' त्यादिना चुरादिभ्यः स्वार्थे णिचो विधानाद्णिचः प्रयोगाभावात् । तथा च काश्यपः । कार्याभावादेकश्रुत्या पठ्यतइति । अत्राभरणे घुषिरविशब्दनइति ज्ञापकादक्रियमाणेपि ग्रहणे चुरादिभ्यो णिजित्युक्त्वा 'पृनपक्षद्दिनि' त्यत्र पृणौ जगणतुः जगणुरिति प्रत्युदाहरणमसमर्थेन पूर्वनित्यण्यन्ताश्चुरादय इति न्यासकारेणाभिधानात् इह ज्ञापक सामान्यापेक्षयेत्युक्त्वा ऽऽघृषाद्वेति गणकारवचन चानुवाद इत्युक्तम् । ज्ञापकस्य स्वरूपमस्माभिर्धापतौ लिखितमिति नेह प्रदर्शितं, तस्य ज्ञापकस्य सामान्यापेक्षत्वं कैयटविरुद्धम् । यदाह 'गोरणा' वित्यत्र गणयति गणमिति भाष्यव्याख्याने नित्यत्वाण्णिचः केवलानां चुरादीनां प्रयोगाभावादिति । भाष्यविरुद्ध च । तथाहि । किमर्थमविशब्दनइत्युच्यते न विशब्दने घुषेर्णिचा भवितव्यम् । एव तर्हि सिद्धे सति यदविशब्दनग्रहणं करोति तज्ज्ञापयत्याचार्यो विशब्दने घुषेर्विभाषा णिच् भवतीति । किमेतस्य ज्ञापने प्रयोजनं, महीपालवचः श्रुत्वा जुघुषुः पुष्यमाणवा इत्येष प्रयोग उपपन्नो भवतीति विशिष्टविषयत्वेनाभिधानात् 'ऊदुपधाया गोहः' इत्यत्रानित्यण्यन्ताश्चुरादय इति सामान्येन यदुक्तं पदमञ्जर्यां तदपि मतान्तरापेक्ष न तु स्वमतेन, यद्वक्ष्यति । घुषिरविशब्दनइत्यत्र घुषिविषयमेव ज्ञापकमुक्त्वा, अन्ये त्वाहुः । अनित्यण्यन्ताश्चुरादय इति सामान्येन ज्ञाप्यतइति । यापि ऊदुपधाया इत्यादावनित्यण्यन्ताश्चुरादय इति न्यासकृतः सामान्योक्तिः सापि येषां लिङ्गेन वचनेन वा णिज्विकल्पस्तन्मात्रविषयैव । तथा च 'गोरणावि' त्यत्र तेनैवोक्तं, चौरादिकानामप्यनित्यण्यन्तत्वाद्विभाषितणिचां केषां चिद्विद्यमानत्वादिति, यस्मात् णेः प्राक्कर्म कर्ता वा विद्यते न चैतस्मात्णेः प्राक्कर्म कर्ता वा विद्यते इति गणेर्नित्यण्यन्तत्वाभिधानं

विरुध्येत । तथा जगणतुरिति प्रत्युदाहरणे पदमञ्जर्यामपि चुरादित्वादत्र णिच् प्राप्नोति, यदि नेष्यते ऽनित्यण्यन्ताश्चुरादय इति । यदिना ह्यपरितोषः सूच्यते । अपरितोषश्च पूर्वोक्तो भाष्यविरोधः । तदेव नित्ये णिचि स्वरितेत्त्वात् यहिः क्र्यादौ लक्षिश्चैकश्चुरादिष्वितिवचनाल्लक्षेः स्वरितेत्त्वाल्लिङ्गादन्येभ्यश्चुरादिभ्यो 'णिचश्चे'ति कर्त्रभिप्राये तङ् नेत्युक्त्वा चन्द्रस्त्वत्राप्युभयपदित्वमास्थित । णिज्विकल्पमाह स्वामी । एव देवो नन्दी चाहतुः । मैत्रेयस्तु स्वरितेत्त्वमस्य नेच्छति, यदाह स्वरितेत्त्वमस्य कश्चित्प्रतिपद्यतइति । 'णिचश्चे'त्यत्र हरदत्तोपि लक्षेः स्वरितेत्त्वं प्रस्तुत्याह । नात्राप्तभाषितमस्ति, पारायणेपि चुरादिणिच आत्मनेपदमुदाहृतमिति । एवं च लक्षजिति पठित्वा ञित्करणादन्येभ्यश्चुरादिभ्यो 'णिचश्चे'ति तङ् भवतीति च श्रीभद्रवचनमपि प्रत्युक्तम् । प्रक्रियारत्ने च चितेरिदित्त्वात् ज्ञापकाच्चुरादिणिचो ऽनित्यत्वात् स्फुट भेदनइत्यादौ चटतीत्याद्यपि यथादृष्ट द्रष्टव्यमित्यैकीयमतमुक्त्वा तद्भाष्योक्तज्ञापकविरुद्धम् । एवं हि घुषिरविशब्दनइत्यस्याप्यण्यन्तस्य सम्भवात्तद्व्यावृत्त्यर्था ऽविशब्दनोक्तिः कथं ज्ञापिका स्यादिति तन्मतं दूषितम् । तस्माद्यत्र लिङ्गं वचनं चास्ति तत्र विकल्प इति सिद्धमिति । वचन स्पष्टं, लिङ्गमपि तत्रतत्र धातावुपदर्शयिष्यते । यत्तु जगणतु', जगणुरिति लिङ्गवचनयोरभावेप्यण्यन्तस्य प्रत्युदाहरण 'मत एकहलि'त्यत्र वृत्तौ तदनित्यण्यन्ता इति सामान्यवादिमतापेक्षया न तु सिद्धान्तबुद्ध्या । चोरयति । चोरयतः । चोरयन्ति । चोरयसि । चोरयथः । चोरयथ । चोरयामि । चोरयावः । चोरयामः । चोरयते । चोरयेते । चोरयन्ते । चोरयसे, चोरयेथे । चोरयध्वे । चोरये । चोरयावहे । चोरयामहे, चोरयां चकार । चोरया चक्रे । चोरयामास । चोरयां बभूव । प्रत्ययान्तत्वादाम्प्रत्ययः । 'अयामन्ते'ति णेरयादेशः । चोरयिता । चोरयिष्यति । चोरयिष्यते । चोरयतु । चोरयताम् । अचोरयत् । अचोरयत । चोरयेत् । चोरयेत । चोर्यात् । 'णेरनिटी'ति णिलोपः । चोरयिषीष्ट । अचूचुरत् । अचूचुरत, 'णिश्री'त्यादिना चङ्, शत्रादिकार्यं भूवत् ज्ञेयम् ।

चुचोरयिषति । चुचोरयिषते । चिण्वदिटि स्यासिटूस्व णिलोपे चोरि-ष्यते । अचोरिषाताम् । एकवचने चिणि सिचोऽभावः, चोरिषीष्ट । चोरितेति भवति । चोरः । पचाद्यच् । चौरः । प्रज्ञादित्वात्स्वार्थेऽण् । चोरणा । 'ण्यासश्रन्थो' इति युच्, चुरेति छत्रादिपाठादङ्प्रत्ययो गुणा-भावश्च । चुरा शीलमस्याश्चौरी । 'छत्रादिभ्यो णः' इति णेऽपि क्वचिदण्-कृतमिति ङीप् । एतच्च कर्तानुपपादितम् ॥ १ ॥

चिति स्मृत्याम् ॥ इदित्त्वान्नुम्, चिन्तयतीत्यादि । चिन्ता, 'चिन्तिपूजी' त्यादिना अङ्प्रत्ययः । अत्र मैत्रेयः । अकारेऽविद्यमानेऽपीदो विधानं गुणाभावार्थं, तत्सामर्थ्यात्कदा चिण्णिलोपो नास्तीति तत्र चिन्तितवती-यदुदाहर्तव्यः । चिन्त स्मृत्यामिति सानुषङ्ग एव पठितव्ये इदित्पाठस्तु लोपाभावार्थोऽस्य णिच् पाक्षिकः । नित्ये हि णिचि तस्य स्यादिवृद्ध्या-शङ्कावधानात् क्वापि णित्परत्वमिति चिन्त इत्यादौ नलोपप्रसङ्गः । तेन चिन्तति । चिचिन्त । चिन्तितेत्याद्यपि भवति । एवमन्यत्रापीदित्त्वं णिज्वि-कल्पार्थं द्रष्टव्यम् । चेततीति शपि संज्ञाने । चेतयत इत्याहुर्मैत्रेय. ॥ २ ॥

यत्रि सङ्कोचने ॥ यन्त्रयति । यन्त्रणा । यन्त्रितः । अत्रापि पूर्व-वदिदित्करणाद्यन्त्रतीत्याद्यपि भवति । अत्राभरणे यत्र इति पठित्वा स्व-कारो 'नाग्लोपी' ति विशेषणार्थ इत्युक्तम् । अयं च इदित्करणं ग्रन्था-न्तरेषु न दृश्यते, प्रत्युत यन्त्रणादिशब्दस्मादिति मैत्रेयादयो युदपादयन्, अनेकविकरणविचारणे दैवे तद्व्याख्याने पुरुषकारे वा यदर्थं नकारोऽयं तत्स-ङ्कोचार्थो नोपादीयत इति तस्य मूलं मृग्यम् ॥ ३ ॥

स्फुडि परिहासे ॥ स्फुण्डयति । स्फुण्डतीत्यादि[1] ॥ ४ ॥

लक्ष दर्शनाङ्कनयोः ॥ लक्षयतीत्यादि । लक्ष्मीः । 'लक्षेर्मुट् च' इतीका-रप्रत्ययो मुडागमश्च । लक्ष्मीवान् । लक्ष्मणः । 'लक्ष्म्या अच्च' इति मत्व-र्थीयो नकारप्रत्ययः इकारस्य चाकारः । लक्ष्यं लक्षणम् । अचो यति ल्युटि च णिलोपः । लक्ष्यमधीते वेद वा लाक्ष्यिकः । लाक्षणिकोऽप्येवम् । उक्थादौ लक्ष्य लक्षणे इति पाठाट्ठक् । शम लक्ष आलोचने इत्याकुस्मीयो भविष्यति ॥ ५ ॥

१ स्फुडानि प्रथमान्तं केचित्पठन्ति, तत्रार्थः परिहास इति दुर्ग इत्यधिक ४ पुस्तके ।

कुद्रि अनृतभाषणे ॥ कुन्द्रयति । अचुकुन्द्रत् । कुन्द्रतीत्यादि । अत्र स्वामी ऋदिदित्येकइति । तत्र कोदयतीत्यादि । ऋदित्फलं तु अचुकोददित्यत्र ह्रस्वनिवृत्तिः ॥ ६ ॥

लड उपसेवायाम् ॥ लाडयतीत्यादि । लडतीति विलासे शपि ॥ ७ ॥

मिदि स्नेहने ॥ मिन्दयति । मिन्दतीत्यादि । अत्र क्षीरस्वाम्यनिदितं पठित्वा केश्चिदिदित् पठ्यतइत्याह । तथा कौशिकोप्यनिदितं पपाठ । स्नेहने मेदते मेद्यतीति शप्श्यनोः । ऋदितोपि शपि मेधाहिंसनयोः, मेदते ॥ ८ ॥

ओलडि उत्क्षेपणे ॥ ओलण्डयति । ओलण्डति । ओलिलण्डयिषति । अजादित्वाद् द्वितीयस्यैकाचो द्विर्वचनम् । अत्र स्वामिकाश्यपसम्मताकाराः केचिदोदित पठन्ति तेषां मते लण्डयति । लण्डनीति । अपरे तूकारादि पठन्ति, तदोकारस्यात्वव्ययमुदाहरता मैत्रेयादीनामित्सञ्ज्ञकत्वमभिदधतामन्येषां च सर्वेषामनभिमतम् ॥ ९ ॥

जल अपवारणे ॥ जालयतीत्यादि । नन्दिसमन्ताकारावाद्यन्तौ विपर्यस्य पठतो लज इति, तन्माभूदिति मैत्रेयो जालमित्युदाजहार ॥ १० ॥

पीड अवगाहने ॥ पीडयति । अपीपिडत् । 'अपिपीडत् । भ्राजभासे' त्यादिना णौ चङ्युपधाह्रस्वविकल्पः । पीडा । भिदादिपाठादङ् । पाणावुपपीडं धारयति, पाण्युपपीडं धारयति । पाणिनोपपीडमिति वा । 'सप्तम्यां चोपपीडे' ति सप्तमीतृतीयान्तयोर्णमुल् । तृतीयाप्रभृतित्वात् समासविकल्पः । धनुररिभिरसह्यं मुष्टिपीडं दधान इति वदन् भट्टिकार उपोपसर्गग्रहणमतन्त्रं मन्यते ॥ ११ ॥

नट अवस्यन्दने ॥ अवस्यन्दनं नाट्यम् । नाट्यइत्येव चन्द्रः । चौरस्योज्जासनम् । 'जासिनिग्रहणे' ति कर्मणि शेषे षष्ठी । अनेकार्थत्वाद्धिंसार्थत्वमुत्पूर्वस्य, जास्यादीनां विकृतनिर्दृशाण्णौ चङि ह्रस्वे नायं विधिरित्युक्तं न्यासे । तत्फलं चोरमनीनटदित्यत्र षष्ठ्यभावः । अयं पक्षो भवादौ दूषितः ॥ १२ ॥

श्रथ प्रयत्ने ॥ प्रस्थानइति मैत्रेयः । श्रतिहर्षइति बहवः । श्राथयति । क्रथिमपि केचिदत्र पठन्ति । स मैत्रेयादौ न दृश्यते । तथा क्रथश्रथौ हिंसायां, क्राथयेत्, क्रथते, क्रथेतेति घटादौ[1] च पठना देवेनापि न पठितः ॥ १३ ॥

बध संयमने ॥ बाधयति । बध्येति चान्द्रः । बध्नातीति बन्ध बन्धनइति क्रैयादिकस्य । बीभत्सते इति भौवादिकस्य नित्यसन्नन्तस्य बधे वैरूप्ये ॥ १४ ॥

पॄ पूरणे ॥ पारयति । अत्र श्रीभद्रादयो दीर्घोच्चारणसामर्थ्यात्क्वचिणिज् नेति । तथाहि । दीर्घोच्चारणं परिनेत्यादावइत्वमुदुत्वमिति इट्सिद्धये, तण्णिचो विकल्पस्य ज्ञापकं भवति । ननु परिनेत्यादि पृणाति पिपर्त्योरन्यतरेणापि सिद्ध्यति किं विकल्पकल्पनया । सत्यम् । परिनेत्यादि सिध्यति, परनीत्यादिसिद्धिस्तु प्रयोजनं भविष्यति ॥ १५ ॥

ऊर्ज बलप्राणनयोः ॥ प्राणनं जीवनम् । ऊर्जयति । और्जिजत् । ऊर्जिजयिषति । 'न न्द्राः' इति रेफवर्जस्य द्वितीयस्यैकाचो द्विर्वचनम् । ऊर्क् । 'भ्राजभासे'त्यादिना क्विप् । 'चोः कुरि'ति कुत्वं, णिलोपस्य 'पूर्वत्रासिद्धीये न स्थानिवदि'ति स्थानिवत्त्वनिषेधात्पदान्तता संयोगान्तलोपस्तु 'रात्सस्ये'ति नियमान्न भवति ॥ १६ ॥

पक्ष परिग्रहे ॥ पक्षयति । अपपक्षत् ॥ १७ ॥

वर्ण चूर्ण प्रेरणे ॥ एवं मैत्रेयः । अन्ये तु वर्ण वर्णने । चूर्ण प्रेरणइति वर्णयन्ति । चूर्णयति । वर्णं गृह्णाति वर्णयति । चूर्णैरवध्वंसयत्यवचूर्णयति । 'सत्यापपाशे'त्यादिना वर्णचूर्णाभ्यां प्रातिपदिकाभ्यां ग्रहणावध्वंसनयोर्णिच् ॥ १८–१९ ॥

प्रथ प्रख्याने ॥ प्राथयति । अपप्रथत् । 'अत्स्मृदॄत्वरप्रथे'त्यभ्यासस्याकारः, 'नान्ये मितो हेताव'ति सम्भवद्धेतुमण्णिचा चुरादिणिचि मित्त्वाभावात्प्रथ प्रख्यानइति घटादिकं मित्त्वमस्य न भवति ॥ २० ॥

---

१ घटादौमिति ४ पु· अधिकम् ।

पृथ प्रक्षेपे ॥ पार्थयति । अपपर्थत् । अपीपृथत् । उर्च्छा । पथ इत्येक इति स्वामी, पाथयति । अपीपथत् ॥ २१ ॥

षम्ब सम्बन्धने ॥ सम्बयति । अससम्बत् । शम्ब चेति मैत्रेयः । शम्बेत्येक इति स्वामी । शम्बयति । अशशम्बत् । शम्बरम् । बाहुलकादरः । साम्ब इति केचिद्दन्त्यादि दीर्घवन्त च पठन्ति ॥ २२ ॥

भक्ष अदने ॥ भक्षयति पिण्डीं देवदत्तः । अतो हेतुमण्णिचि भक्षयति पिण्डीं देवदत्तेनेति 'गतिबुद्धिप्रत्यवसानार्थे'ति प्रयोज्यस्य कर्मत्वं 'भक्षेरहिंसार्थस्ये'ति वार्तिकेन निषिध्यते । अत्र 'आदिखाद्योः प्रतिषेध' इत्यतः प्रतिषेधग्रहणानुवर्तते । 'गतिबुद्धी'त्यादौ चाणिग्रहणेन हेतुमण्णिचो निषेधः । हिंसायां तु भक्षयति यवान् बलीवर्दानिति भवति । अत्र भक्षयतिर्हिंसाङ्गे भक्षणे वर्तते, हिंसा च सर्वे भावाः सचेतना इति दर्शनेन यवाना सचेतनत्त्वादस्ति । दर्शनान्तरे यवानां भक्षणे स्वामिनो हिंसा भवतीति तदपेक्षं भक्षणस्य हिंसाङ्गत्त्वम् ॥ २३ ॥

कुट्ट छेदनभर्त्सनयोः ॥ एवं बहवः । छेदनपूरणयोरिति स्वामी, छेदनइत्येवं जिनेन्द्रदुर्गौ । कुट्टयति । अचुकुट्टत् । कुट्टाकः । 'जल्पभिक्षकुट्टे'ति षाकन् । षित्त्वात् स्त्रिया कुट्टाकी, कुट्टन कुट्टः । 'एरच्' । कुट्टेन निर्वृत्त कुट्टिम, भावप्रत्ययान्तादिमब्वक्तव्य इति 'तेन निर्वृत्त'मिति विषये इमप् ॥ २४ ॥

पुट्ट चुट्ट अल्पीभावे ॥ पुट्टयति । अपुपुट्टत् । चुट्टयति । अचुचुट्टत् ॥ २५–२६ ॥

अट्ट षुट्ट अनादरे ॥ अट्टयति, आट्टिटत् । अयन्दोपधो लक्षणवशेन टकार इति 'नन्द्रा' इति दकारवर्जस्य द्वितीयस्यैकाचो द्विर्वचने पश्चात् ष्टुत्त्वम् । सुट्टयति । असुषुट्टत् ॥ २७–२८ ॥

लुण्ठ स्तेये ॥ लुण्ठयति । अलुलुण्ठत् । लुण्ठतीति लुठि स्तेये इत्यस्य शपि । ननु लुण्ठतेरिदित्पाठेनापि लुण्ठयति लुण्ठतीति रूपद्वयं भविष्यति, किं भ्वादीदित्पाठेन । सत्यम् । सिध्यतीदं रूपद्वयं,

भवति, तथा कुमारीमाचष्टे कुमारयतीत्यत्राप्रातिपदिकत्वेपि णिजिति के चित् । अन्ये तु 'प्रकृत्यैकाजि'ति प्रकृतिभावादेव स्रजयतीत्यत्र वृद्धिर्न भविष्यति । तथा यथाकथञ्चित्प्रातिपदिकग्रहणे लिङ्गविशिष्टपरिभाषाया ङ्याप्प्रातिपदिकादिति सूत्रे भाष्ये स्थापनात् कुमारयतीत्यादौ णिजपि सिद्ध इति बहुलग्रहणं विकल्पमात्रफलमाहुः ॥

"तत्करोति तदाचष्टे" ॥ तदिति द्वितीयान्तोपलक्षणम् । तत्करोत्याचष्टइत्यत्र धात्वर्थमात्र णिजर्थो न कर्तापि, तथा चैवोदाहृतम् ॥

"तेनातिक्रामति" ॥ अत्रापि तेनेति तृतीयान्तोपलक्षणम् । अश्वेनातिक्रामति अश्वयति । हस्तिनातिक्रामति हस्तयति ॥

"धातुरूपञ्च" ॥ णिच्प्रकृतिर्धातुरूपं प्रतिपद्यते । अनेना'ख्यानात्कृतस्तदाचष्टे कृल्लुक् प्रकृतिप्रत्यापत्तिः प्रकृतिवच्च कारक'मित्येतत्सूच्यते । कंसवधमाचष्टे कंसं घातयतीत्युदाहरणम् ॥

"कर्तृकरणाद्धात्वर्थे" ॥ अत्र कर्तृग्रहणं करणस्य विशेषणम् । कर्तुः करणाद्धात्वर्थे णिजिति सूत्रार्थः । करिभिरवबध्नाति] अवकरयति । असिना हन्ति असयति । परशुना छिनत्ति परशयति । दात्रेण लुनाति दात्रयति । अत्र कर्त्ता करणस्य विशेषणं करणशब्दवाच्यत्वेन लोकप्रसिद्धानां चक्षुरादीन्द्रियाणां परिग्रहो माभूद् इति ॥

बष्क दर्शने ॥ बष्कयति ॥ ३६९ ॥

चित्र चित्रकरणे ॥ चित्रयति । चित्रकरणमालेख्यकरणमित्यात्रे[1]यः । चित्र आलेख्यकरणइत्येव दुर्गः ॥ ३७० ॥

"कदाचिद्दर्शने" ॥ चित्र इत्ययं कदाचिद्दर्शनेऽद्भुतदर्शने णिचमुत्पादयति । चित्रयति । चित्रीयतइति चित्रप्रातिपदिकादाश्चर्य्यवृत्तेर्नमोवरिवश्चित्रङः क्यजि'ति क्यचि, तत्र हि चित्रङ् आश्चर्य्ये इत्युच्यते, प्रातिपदिकस्य ङित्त्वमवयवे ऽकृतं लिङ्गं समुदायस्य विशेषकमिति न्यायात् प्रत्ययान्तात्तङर्थम् ॥ ३७१ ॥

अंस समाघाते ॥ अंसयति । अंसः ॥ ३७२ ॥

१ मन्त्रेय इति ४ पु० पा ।

वट विभाजने ॥ वटयति ॥ ३०३ ॥

लज प्रकाशे ॥ लजयति । अत्र मैत्रेयः । अटेः पुनः पाठोऽर्थभेदात् । वटि लजि इत्येके । वण्टयति । लञ्जयति । अदन्तेषु पाठबलाददन्तत्वे वृद्धिरित्यपरे । वण्टापयति । लञ्जापयति । तथा च शाकटायनसूत्रम् । 'कथादिपाय्यस्फायो णौ पुग्लुग्वत्व' मिति । अस्यार्थः । कथादीनां पायेश्च णौ पुग् लुग् इत्येतावागमौ स्फायेऽन्त्यस्य वत्वं क्रमेणेति । एवञ्च शाकटायनमतेन कथादीनामागमे पुकि वृद्धौ कथापयतीत्युदाहार्य्यम् ॥ ३०४ ॥

मिश्र सम्पर्के ॥ मिश्रयति । गुडमिश्रः । पूर्वसदृशे त्यादिना तृतीयान्तस्य मिश्रशब्देन तत्पुरुषः ॥ ३०५ ॥

संग्राम युद्धे ॥ अयमनुदात्तेत् । तथा च तृतीयादिभ्य इत्यत्र कैयटे । संग्रामयतिरनुदात्तेद् बोद्धव्य इति । पदमञ्जर्य्यां च 'अनुदात्तेदयं संग्रामयतिरिष्यत' इति । तथा च तत्र भाष्यमपि । असंग्रामयत शूर इति, संग्रामशब्दात्तत्करोतीति णिचापि सिद्धाविह संग्रामस्य पाठः सोपसर्गात्सङ्घातादन्यथार्थस्तेनासंग्रामयत इत्युपसर्गात्पूर्वमट् भवति । तथा संग्रामयित्वेत्यत्राधीत्येत्यादिवल्ल्यप् न भवति । निसंग्रामयिषतइत्यत्र समो द्वित्वं भवति । अत एव सङ्घातादुत्पत्तिवचनादन्यत्र धातूपसर्गसमुदायात्प्रत्यये विहितउपसर्गाः पृथक् क्रियन्तइति ज्ञाप्यते । तेन परिवृढयतीत्यत्र ल्यबादि भवति । अस्यानुदात्तेत्त्वमपाणिनीयमिति पाठस्य तदर्थतया न ज्ञापकत्वभङ्गः ॥ ३०६ ॥

स्तोम श्लाघायाम् ॥ स्तोमयति, स्तोमः । अग्निष्टोमः । 'अग्नेः स्तुत् स्तोमे' ति षत्वम् ॥ ३०७ ॥

छिद्र कर्णभेदने ॥ करणभेदनइति गुप्तः. मैत्रेयस्तु छिद्रयति कर्णयतीति कर्णमपि पृथग्धातुमुक्त्वा कर्णेन भावयति कर्णयतीति व्याचष्टेत्याह ॥ ३०९ ॥

अन्ध दृष्ट्युपघाते ॥ उपसंहारइत्येके । अन्धयति ॥ ३१० ॥

दण्ड दण्डनिपातने ॥ अयं द्विकर्मक इत्युक्तं नाथतौ । तत्र कर्मणि

ग्डयते । चीवराण्यर्जयति परिधत्ते वा सचीवरयते । सिद्वशब्दो मङ्गलार्थः ॥

इति पूर्वदक्षिणपश्चिमसमुद्राधीश्वरकम्पराजसुतसंगममहाराजमहामन्त्रिणा मायणसुतेन माधवसहोदरेण सायणाचार्य्येण विरचितायां माधवीयायां धातुवृत्तौ चुरादयः सम्पूर्णाः ॥

सम्पूर्णा चेयं माधवीया धातुवृत्तिः ॥

शुभं भवतु ॥



अस्याश्च माधवीयधातुवृत्तावनुक्तानां सौत्रकण्ड्वादिधातूनां निरूपणेऽपि भूयसा नामधातूनामेव व्युत्पादनान्मल्लग्रामन्यायेन नामधातुवृत्तिरिति व्यपदेशः । इयञ्च माधवीयधातुवृत्तिनिर्माणोत्तरं निर्मितेति

धातुपाठे निविष्टानां धातूनां यः पुरा व्यधात् ।
विवृतिं माधवीयाख्यां भाष्यज्ञहृदयंगमाम् ॥

इत्येतद्ग्रन्थश्लोकतोऽवसीयते ।

अस्याञ्च वृत्तौ बहुत्र परिवृत्तियोग्यान् पाठान् निश्चिन्वन्नपि पुस्तकान्तरे तानेवावेक्ष्य तथैवावास्थापयम् ॥ तामिमां वृत्तिमतिप्राचीनां व्युत्पित्सुजनाह्लाददायिनीमवलोकयन्तु क्षाम्यन्तु च सीसाक्षरविन्यासादिप्रमादजान् दोषान् सफलयन्तु च विद्वदेकसंवेद्यं मामकीनं परिश्रमं दोषैकदृशोऽपि गुणैकपक्षपातिनो विद्वांस इति भृशमभ्यर्थये ।

भारद्वाजदामोदरशास्त्री ।

इति शम् ।



॥ विश्वनाथो विजयते ॥

॥ श्रीगणेशाय नमः ॥

# ॥ अथ माधवीया नामधातुवृत्तिः ॥

---

यस्या रूपप्रभावेन न स्यात्तृणमपि क्वचन ।
शक्यन्ते वस्तु लोकेषु जयत्येषा सरस्वती ॥ १ ॥
धातुपाठे निविष्टानां धातूनां यः पुरा व्यधात् ।
विवृत्तिं माधवीयाख्यां भाष्यतन्त्रद्वयज्ञताम् ॥ २ ॥
तेन सायणपुत्रेण व्याख्या कापि विरच्यते ।
धातूनां प्रत्ययान्तानां गणसूत्रानुगामपि ॥ ३ ॥
तत्र प्रतिपदं शिष्टा गणसूत्राणा इमे ।
गणास्तत्रापि बहवः किं च सूत्राण्यधीयते ।
आचार्येण पुरा प्रोक्तास्तानाद्रौ विगणोऽस्म्यहम् ॥ ४ ॥
एतावदेव सर्वस्मादर्थये सुमनोजनात् ।
[1]नामस्तु भवता मार्गमन्यथा तु न मे रतिः ॥ ५ ॥

'कण्ड्वादिभ्यो यक्' । एभ्यो यक् स्यात् स्वार्थे । एते च धातवः प्रातिपदिकानि च । तत्र धातुत्वं यको धातुविहितत्वेन तद्विमत्तगुणनिषेधार्थेन कित्त्वेनावसीयते । प्रातिपदिकत्वं तु कण्ड्वादीनां केषांचिद्दीर्घान्तपाठात् । कण्डूयते इत्यादिरूपं तु ह्रस्वान्तादपि यकि मन्तूयतीत्यादिवत् 'अकृत्सार्वधातुकयो'रिति दीर्घेण भविष्यति । तत्र धात्वधिकारात् धातुभ्यो यक् प्रत्ययः । नन्वेवं प्रातिपदिकत्वमेवास्तु मास्तु दीर्घपाठः प्रत्ययस्य कित्त्वं च । न चाकृत्सार्वधातुकयोर्दीर्घ इति दीर्घविधौ अङ्ग धातुराश्रीयते किं त्वङ्गमात्रमेव । कण्डूरिति च कण्डूयशब्दात्सम्पदादित्वाद्भावे क्वावल्लोपे वलि लोपेन यलोपेन सिद्धम्, यलोपे अल्लोपस्य स्थानिवत्त्वं 'न पदान्ते'ति निषिद्धं, वलि लोपश्च 'लोपो व्यो'रिति विधेयस्य पश्चान्निर्दिष्टस्य पूर्वनिर्दिष्टादल्लोपात्परत्वं

---

१ मार्गमस्त स्यात् स्वार्थेनात पाठोऽत्र ।

भवति । यद्येवं कण्डूशब्दस्य यगन्तत्वेन धातुत्वादल्लोपस्य पूर्वविधौ स्थानिवत्त्वादुवङ् स्यात् । नैतदस्ति । सति स्थानिवत्त्वे ऽकारस्य तदन्त एव धातुर्नाकारान्तः । एवं तर्हि यण् प्राप्नोति । अस्तु, क्विबाश्रयः च्छ्वोः शूडित्यूठ् भविष्यति, न चाल्लोपस्य स्थानिवत्त्वे वकारस्य क्विप्परत्वाभावः, वकारस्यादिष्टादचः पूर्वत्वात् । न च स्थानिवत्त्वेनानादिष्टादचः पूर्वत्वं, तस्याशास्त्रीयकार्यत्वात् । अत एवादिष्टादचः पूर्वत्वादूठि पुनरुवङभावः । यद्वा 'क्वौ लुप्तन्न स्थानिव'दिति अल्लोपस्य स्थानिवत्त्वनिषेधाद्यणभावाप्रसङ्गः, यद्येवं कण्ड्वावित्यादावुवङ् स्यात्, न चेोः सुपीति यणः प्रसङ्गः, संयोगपूर्वत्वात् । अस्त्वत्रोवङ्, क्विपः प्रत्ययलक्षणेनोङ् भविष्यति । एवमपि पुनरुवङ् स्यात्, पुनरुडुवङौ पर्यायेणेति व्यवस्था न स्यात् । किं च कण्डूरित्यादिवन्मन्तूरिति च स्यात्, न च भवतीष्ट मन्तुरित्यादि । अथ धातोः कर्मण इत्यतो वाग्रहणमनुवर्त्तते, तेन यगभाव पक्षे उत्पादाद्यपि सिद्धं मन्तुरिति तथापि कण्डूरितिवद्दीर्घेपि अल्लोपयलोपयोश्च दुर्वारं मन्तूरित्यादि, तथा यगभावपक्षे मन्तुरित्यादिवत्कण्डुरिति च स्यात्, सुखादिभ्यश्च यकि तस्याधातुविहितत्वेनानार्द्धधातुकत्वादतो लोपाभावादकृत्सार्वधातुकयोरिति दीर्घे सुखायतीत्यादि स्यात्, न चेष्टं, सुख्यतीत्यादेरिष्टत्वात्, इह पाठे तु न कदा चन सुखादेरकारान्तता सिध्यति, तस्माद्यथान्यासमेवास्तु । नन्वेवमपि प्रातिपदिकेभ्यः कण्ड्वौ मन्तुरित्यादि यद्यपि सिध्यति तथापि धातुभ्यो यकि कण्डूयशब्दात् क्वावल्लोपयलोपयोरजादौ सुप्युवङि कण्डुवावित्यादि प्राप्नोत्येव, तथा मन्तूयादेर्मन्तूरित्यादि, सुख्यादेश्च सुगित्यादि हलन्तं, नैष दोषः । यगन्तेभ्यः क्विबेव नोत्पद्यते । उक्तं च भाष्ये नैतेभ्यः क्विब् दृश्यतइति, न तर्हिं इदानीमुवङ् भवति कण्डुवाविति, भवति, यदा प्रातिपदिकात्क्विबन्तात् क्यजन्ताद्वा क्विप्यल्लोपयलोपयोः स्वाद्युत्पत्तिः, यद्येवं कण्ड्वादयः प्रातिपदिकान्येव सन्तु, यथान्यासं दीर्घान्ताश्च तथैव भवन्तु, ककारश्च प्रत्यये मासञ्जि, वाग्रहणं चानुवर्तिष्यते, तत्र कण्डूयति मन्तूयतीत्यादयो यकि भवन्ति, कण्डूः

कण्ड्वौ मन्तुरित्यादयश्च यगभावपक्षे प्रातिपदिकात् स्वाङ्कुप्रत्ययौ, यग-न्तात्किबभावस्येदानीमेवोक्तत्वात्स एव धातुः प्रातिपदिकं च कण्डूशब्दो भवति, तस्मात्स्वाद्युत्पत्तावुवङ् प्रसज्येत, तथाऽन एव यगन्तात्किबभावा-न्मन्त्वादेर्दीर्घत्वं सुखादेर्ह्रस्वत्वं न भवति किं कण्ड्वादीनां धातुत्व-माश्रित्य तेभ्यः प्रत्ययविधानेन, सत्यमेतदेवं स्यात् । सुख्यतीति न सिध्येत्, प्रातिपदिकात्प्रत्यये तस्यानार्धधातुकत्वेनातो लोपाप्रसङ्गात् ।

अथोदाहरणानि । कण्डूयति । कण्डूञो ञित्करणस्याश्रयत्वे कृतं लिङ्गं समुदायस्य विशेषकं भवतीति समुदायस्य ञित्त्वादात्मनेपदं भवति । एवमनुबन्धान्तरस्यापि समुदायार्थत्वं ज्ञेयम् ॥ १ ॥

मन्तु अपराधे ॥ रोषइत्यपरे । मन्तूयति । चन्द्रस्तु ञितं पठित्वा मन्तूयते इति चाह ॥ २ ॥

वल्गु पूजामाधुर्ययोः ॥ वल्गूयति ॥ ३ ॥

असु मनस् उपतापे ॥ असूयति । असूयुः । 'मृगय्वादयश्च' इत्युप्रत्ययः । अत्र वर्धमानहरदत्तगणरत्नमहोदधिकारा वाक्यानुसारेणासुशब्द-मसिति सान्तं पठित्वा असूञिति दीर्घान्तमेके पठन्तीत्याहुः । तन्मते अस्यति असूयति असूयते इति भवति ॥ ४ ॥

लेट् लोट् धौर्त्ये पूर्वभावे स्वप्ने च ॥ लेट्यति, लोट्यति, लेटिता, लोटिता, अकारस्यातो लोपे यलोपः । अत्र केचिदर्थनिर्देशार्थं पूर्वशब्द प्रतिनिर्देशार्थं मत्वा 'पूर्वतीति तु यत्स्वप्ने तत्कण्ड्वादिषु दर्शनादि'त्याहुः । तदेतन्माधवीयां शाकटायनधातुवृत्तौ अर्थनिर्देशरहिते गणपाठे पूर्वस्य पाठाभावादयुक्तमिति पुरुषकारेण दूषितम् । अन्ये तु लेट्लोटौ दीप्त्यर्थावाहुः । अत्र लेला दीप्तावित्येके पठन्ति, पठ्यते च भातीभूमौ लेला-यमानः, यद्वा वीतार्तिहन्मायेति ॥ ५ ॥

इरस् ईर्ष्यायाम् ॥ अत्र वर्धमानहरदत्तौ इरस् इरज् इरञ् ईर्ष्याया-मिति त्रीन्पेठतुः । इरस्यति, इरज्यति, ईर्ष्यतिमार्गावसानार्थापि, तत्र चेर्ष्यतिरीर्ष्यार्थाधिरिति स्थितिरिति । ॥ ६ ॥

इयस् ऐश्वर्ये ॥

अमुं दुर्गो न पठतीति गणरत्नमहोदधौ ॥ ९ ॥

उषस् प्रभातीभावे ॥ उषस्यति रात्रिः ॥ १० ॥

वेद धौर्त्ये स्वप्ने च ॥ वेद्यति ॥ ११ ॥

मेधा आशुग्रहणे ॥ मेध्यति ॥ १२ ॥

तन्तस् पम्पस् दुःखे ॥ तन्तस्यति । पम्पस्यति ॥ १४ ॥

सुख दुःख तत्क्रियायाम ॥ तच्छब्देन सुखदुःखार्थौ परामृश्येते । न सुखदुःखरूपायां क्रियायामित्यर्थो भवति, सुख्यति, दुःख्यति । सुखानुभवति दुःखमनुभवतीत्यर्थः ॥ १६ ॥

सपर पूजायाम् ॥ अकारान्तोयं महोदधौ, सपर्यति ॥ १७ ॥

अरर आराकर्मणि ॥ आरा प्रतोदा । अरर्यति ॥ १८ ॥

भिषज चिकित्सायाम् ॥ भिषज्यन्ति भिषज्यते ॥ १९ ॥

भिष्णज उपसेवायाम् ॥ भिष्णज्यति ॥ २० ॥

इषुध शरधारणे ॥ इषुध्यति ॥ २१ ॥

चरण गतौ ॥ चरण्यति । वरण इति भोजः । उक्तं च तयेदृशाद्दृशं काव्ये वरणाश्चारण्यैर्वेलामिति ॥ २२ ॥

चुरण चौर्ये ॥ चुरण्यति ॥ २३ ॥

तुरण त्वरायाम् ॥ तुरण्यति ॥ २४ ॥

भुरण धारणपोषणयोः ॥ पणधारणयोरित्यन्ये । भुरण्यति ॥ २५ ॥

गद्गद वाक्स्खलने ॥ गद्गद्यति ॥ २६ ॥

एला केला खेला विलासे ॥ एलायति । केलायति । खेलायति । अवेलास्थाने इलेत्यपरे पठन्ति । इलायति ॥ २९ ॥

लेखा स्खलने च ॥ अकारान्तइत्यन्ये । तत्रातो लोपः, लेख्यति ॥ ३० ॥

लिट् अल्पार्थे कुत्सायां च ॥ लिट्यति ॥ ३१ ॥

लाट् जीवने ॥ लाट्यति ॥ ३२ ॥

हृणीङ् रोषणे लज्जायां च ॥ हृणीयते ॥ ३३ ॥

महीङ् पूजायाम् ॥ अत्र पूजा पूज्यमानकर्तृका, तेनायमकर्मकः, महीयते पूजामधिगच्छतीत्यर्थः ॥ ३४ ॥

रेखा श्लाघासादनयोः ॥ आसादनं प्राप्तिः प्रापणा वा, रेखायति । श्लाघामनुभवति अनुभावयति चेत्यर्थः ॥ ३५ ॥

द्रवस् परितापपरिचरणयोः । द्रवस्यति ॥ ३६ ॥

तिरस् अन्तर्द्धौ ॥ तिरस्यति ॥ ३७ ॥

अगद नीरोगत्वे ॥ अमुं भोजः नेच्छतीति गणरत्नमहोदधौ, नेखायतिरेखायतिवदर्थः ॥ ३८ ॥

उरस् बलार्थः ॥ उरस्यति । बलवान्भवतीत्यर्थः ॥ ३९ ॥

तरण गतौ ॥ तरण्यति ॥ ४० ॥

पयस् प्रसृतौ ॥ पयस्यति ॥ ४१ ॥

सम्भूयस् प्रभूतभावे ॥ सम्भूयस्यति । अत्र गणरत्नमहोदधौ अम्बर सम्बर सम्भर इति वामन इति, अम्बरयति, सम्बरयति, अत्र गणरत्नमहोदधावेव लेट्लोटाविति पठित्वा मतान्तरेण दान्तत्वमुक्त्वा लेट्यति लोट्यतीत्युक्तम् । अस्याकृतिगणत्वाद्वैधनादिभ्यो रायति धनायतीति केचित्, यदा कण्ड्वादिभ्य सनुत्पद्यते तदा कण्ड्वादीनां तृतीयस्यैकाचः द्वे भवत इति कण्डूयियिषतीत्यादि भवति ॥ ४२ ॥

अथ सौत्रधातवः प्रक्रियन्ते ॥

'ऋतेरीयङ्' । अयं स्वार्थे, ऋतिर्घृणायां, सा चेह घृणा जुगुप्साकृपयोरित्युक्तत्वापि ऋतीयाशब्दस्य निघण्टुषु निरूढा जुगुप्सैवेति व्याख्यातारः । अत्र प्रत्ययस्य ङित्त्वेनापि गुणाभावस्य सिद्धौ ङित्करणमात्मनेपदार्थमपि, ऋतीयते, ऋतीयेते ऋतीयां चक्रे इत्यादि, ङिन्तकारेषु अजादित्वा 'दाटश्चे'ति वृद्धौ आर्तीयत आर्तीयिष्ट आर्तीयिष्यतेति भवति, यदायमवर्णान्तादुपसर्गात्परो भवति तदा 'उपसर्गादृति धाता'विति वृद्धौ प्रार्तीयते उपार्तीयत इत्यादि भवति । अत्रोपसर्गग्रहणाद्धाताविति सिद्धे उपसर्गादृतीत्येव वक्तव्ये पुनर्धातुग्रहणं योगभेदेनाधिकविधानार्थमिति 'ऋत्यक' इति पाक्षिकः प्रकृतिभावश्चात्र बाध्यते, उपसर्गग्रहणं प्रादुपलक्षणमित्येतत्तु यत्रो'पसर्गादध्वन' इत्यादौ उपसर्गत्वं न सम्भवति तत्रैवेनेह तु सम्भवतीति हरदत्तादयः । तेना-

गता ऋतीयका अमुं देशम् आर्तीयको देश इत्यादौ यत्क्रियायुक्ताः प्रादयस्तं प्रति गत्युपसर्गसंज्ञा इत्याङादीनां गम्यादिक्रियापेक्षयोपसर्गत्वं न तु ऋतीयक्रियापेक्षयेति तां प्रत्युपसर्गत्वाभावादाद्गुणइति गुणः 'ऋत्यक' इति शाकलप्रकृतिभावश्च भवतः । यदायमीयङ् आयादय आर्धधातुके वेति वचनादार्धधातुके न भवति तदा आनर्त, अर्तिता, अर्तिष्यति, आर्तीत्, आर्तिष्यत्, अर्तित्वा, ऋतित्वेत्यादि भवति, अत्र 'वञ्चिलुञ्च्यृतश्चे' ति सेटः क्त्वविकल्पनात् पक्षे गुणो न, 'आयादय आर्धधातुके वे'त्यत्रार्धधातुकेत्यस्य विषयसप्तमीत्वादार्धधातुकेषु विषयभूतेषु आयादय उत्पद्यन्तइत्यर्थो न तु भूता निवर्तन्तइति, अन्यथा ऋतीयशब्दाल्लिटि प्रत्ययान्तत्वेनाम्मि ईयप्रत्ययस्य निवृत्तावर्ता चकारेति स्यात् आनर्तेति च न स्यात् । न चार्तितासि अर्तिष्यति ऋत्यात् आर्तीदित्यादौ परस्मैपदं न स्यात्, तथा तास्यादेरार्धधातुकस्येयङो निवृत्तेर्निमित्तत्वात्तदपेक्षो गुणो 'न धातुलोप आर्धधातुके' इति निषेधाच्च स्यात्, अनेनाभिप्रायेण गुणाभावः, आर्तिष्ट ऋतिषीष्टेत्यादि स्यात्, ईयङन्तादुत्पन्नेषु तिङ्षु तदाश्रयेण पश्चादुत्पन्नेषु विकरणेषु आर्धधातुकेष्वीयङो निवृत्तिः क्रियते, ईयङो ङित्त्वात्तदन्ताच्चोत्पद्यमानास्तिङ आत्मनेपदान्येव, तथा क्तिनि ऋतिरिति न स्यात्, अप्रत्ययादित्यकार ईयङो निवृत्तावृतेति च स्यात्, एवमादीनि दूषणानि । अत्र क्वचिद्वृत्तिकारः ऋच्छिङित्येव सिद्धे ऋतेरीयङ्वचनं ज्ञापकं धातुविहितानां प्रत्ययानामायनादयो न भवन्तीति । तेन शमेः खः, खड्वः, कमेष्ठः कण्ठ इति, अत्रेनिकादेशौ न भवतः । ननु ऋते श्च्छिङित्युच्यमाने छङ आर्धधातुकत्वेन परत्वादिडागमे कृते छकारस्य प्रत्ययादित्वं विप्रतिपन्नमिति 'आयनेयी' त्यादिना विधीयमानः कथमीयादेशः सिध्यति, नैष दोषः । यदायनादिषूपदेशिवद्वचनस्य चोदितत्वादन्तरङ्गत्वादिटः पूर्वमीयादेशो भविष्यति । अत्र हरदत्तः । द्विवचनविभज्योपपदे इत्यत्र तरप्तमुनाविति वक्तव्ये ईयसुन्वचनादधातुविहितानामपि प्रत्ययानामायनादयो न स्युः, वचनसामर्थ्याच्चेदुभयेषामपीति ज्ञापकं भङ्क्त्वा ठादौ बाहुलकादिकाद्यभावमाह ॥ १ ॥

'स्तम्भुस्तुम्भुस्कम्भुस्कुम्भुस्कुञ्भ्यः श्नुश्च'। एभ्यः श्नुः प्रत्ययो भवति सार्वधातुके श्नुर्भवति, चकाराच्छ्ना च, तत्र पञ्चमो धातुषु पठितो व्याख्यातश्च, प्रथमतृतीयौ स्तम्भार्थौ, द्वितीयो निष्कोषणार्थः । चतुर्थो धारणार्थः, उदित्त्वं क्त्वायामिड्विकल्पार्थम्, अत एव श्नाद्यतिरिक्तविषयाश्चैते भवन्ति, स्तभ्नोति, स्तभ्नुतः, स्तभ्नुवन्ति, स्तभ्नोषि, स्तभ्नोमि, स्तभ्नुवः, स्तभ्नुमः, 'अनिदिताम्' इति नलोपः, 'लोपश्चास्यान्यतरस्याम्' इत्युकारलोपः संयोगपूर्वत्वान्न भवति, स्तभ्नाति स्तभ्नीतः, स्तभ्नन्ति, स्तभ्नासि, स्तभ्नामि, हलादौ क्ङिति 'ई हल्यघोः'-रितीत्वम्, अजादौ तु 'श्नाभ्यस्तयोः' इत्यालोपः तस्तम्भ, तस्तम्भतुः, तस्तम्भुः, तस्तम्भिथ, तस्तम्भ, तस्तम्भिव, तस्तम्भिम, स्तम्भिता, स्तम्भिष्यति, स्तभ्नोतु, स्तभ्नुतात्, स्तभ्नुतां, स्तभ्नुवन्तु स्तभ्नुहि, स्तभ्नवानि, हे 'उतश्च' इति लोपः संयोगपूर्वत्वान्न भवति, स्तभ्नातु, स्तभ्नीतात्, स्तभ्नीतां, स्तभ्नन्तु, स्तभान, हौ हलः श्नः शानज्झाविति शानजादेशे 'अतो हेः' इति हेर्लुक्, अस्तभ्नोत्, अस्तभ्नुताम्, अस्तभ्नुवन्, अस्तभ्नोः, अस्तभ्नवम्, अस्तभ्नात्, अस्तभ्नीताम् । अस्तभ्नन्, स्तभ्नुयात्, स्तभ्नुयातां, स्तभ्नुयुः, स्तभ्नुयाः, स्तभ्नुयां, स्तभ्नीयात्, स्तभ्नीयातां, स्तभ्यात्, स्तभ्यास्तां स्तभ्यासुः । यासुटः क्ङित्त्वादनुनासिकलोपः । अस्तभत्, अस्तभताम्, अस्तभन् 'जॄस्तम्भ्वि'ति परस्मैपदे च्लेर्वाङि 'अनिदिताम्' इति नलोपः । अन्यदा सिचि अस्तम्भीदित्यादि । अस्तम्भिष्यत् । तिस्तम्भिषति, तास्तभ्यते, तास्तम्भीति, तास्तम्भि, तास्तब्धः, तास्तम्भतीत्यादि । स्तम्भयति । अतस्तम्भत्, अत्यष्टभ्नोत्, प्रत्यष्टभ्नोत्, प्रतिष्टभ्नाति, प्रत्यतष्टम्भत्, इत्यादौ स्तम्भेः 'प्राक् सितादड्व्यवायेऽपी'ति इणन्तादुपसर्गात्परत्वेन षत्वं, तत्राप्रतेरिति नानुवर्तते, प्रतितिष्टम्भिषति, 'स्थादिष्वभ्यासेन' इति षत्वम् । अवष्टभ्नाति, अवलम्बत इत्यर्थः । अवष्टब्धा सेना । आसन्नेत्यर्थः । 'अवाच्चालम्बनाविदूर्ययोरि'ति षत्वं, अन्वतस्तम्भदित्यत्र 'स्तम्भुसिवुसहां चङी'ति निषेधात् 'स्तम्भे' रिति षत्वं न भवति, सन्वद्भावे ईत्वं लघुपरत्वा-

भावाच्च भवति, दीर्घत्व त्वलघुत्वादपि न भवति। स्तम्भित्वा, स्तब्ध्वा, उदित्त्वादिड्विकल्पः, इटि 'न क्त्वा सेडि'ति कित्त्वप्रतिषेधान्नानुषङ्गलोपः। स्तब्धः। 'यस्य विभाषे'त्यनिट्त्व, प्रतिष्टब्धः, निष्टब्धः 'प्रतिष्टब्धनिष्टब्धौ चे'ति षत्व, स्तम्भेरिति सानुषङ्गनिर्देशादयमेव स्तभिः सौत्रो ऽत्र गृह्यते न त्वत्र भ्वादिकः स्तभिनभीति प्रतिस्तम्भादयः प्रयोगास्तस्य द्रष्टव्याः। उत्तम्भः। 'तितुत्रेती'ण्निषेधः, 'उदः स्थास्तम्भोः पूर्वस्ये'ति पूर्वसवर्णस्तकारः, एवमुत्तभ्नोतीत्यादावपि, एवं स्तुभ्नोति स्तुभ्नाति, स्कभ्नोति, स्कुभ्नातीत्यादि स्तभ्नोतिवत्। विष्कभ्नोति, विष्कभ्नाति, विष्कम्भ इत्यादौ 'वेः स्कभ्नातेर्नित्य'मिति षत्वं, श्नान्निर्देशः स्कम्भतेर्निवृत्त्यर्थ इति विष्कम्भ इत्यादावपि भवति॥ ५॥

सातिः सुखे॥ अय हेतुमण्ण्यन्त इति जिनेन्द्रहरदत्तौ, तन्मते सतिरिति प्रकृत्या भवितव्य, सातिः सौत्रो धातुरिति वृत्तिबोधिन्यासयोः, सातयतीत्यादि। सातयः। 'अनुपसर्गाल्लिम्पे'त्यादिना शे शपि गुणायादेशौ॥ ६॥

जु वेगितायां गतौ॥ जवति, जोतेत्यादि, स्वरान्तत्वादनिट्त्व, जुजूषति, अजीजवदित्यत्र णेश्चङि णौ कृतस्य स्थानिवत्त्वेनाभ्यासस्योवर्णान्तत्वादोः पुयण्जीतीत्वे 'दीर्घो लघो'रिति दीर्घः। जवनः। 'जुचङ्क्रम्ये'ति युच्, प्रजवी। प्रजोरिति इनिः। जूः। जुवौ, 'भ्राजभासे'ति क्विप् ताच्छीलिकः। तत्रैव सूत्रे जू इति दीर्घपाठाश्रयणात्क्विप्सन्नियोगेन दीर्घ इत्येके। अन्ये तूत्तरसूत्रे द्युग्रिग्रहणस्येहाप्यभिसंबन्धाद् दीर्घ इत्याहुः। जूतिः। 'ऊतियूतिजूती'ति क्तिनि दीर्घान्तोदात्तत्वे निपात्येते। जवः। 'ऋदोरबि'त्यप्। जवसवौ छन्दसीत्यब्विधानं तत्रान्तोदात्तार्थं न तु भाषायामेतद्रूपनिवृत्त्यर्थं, विजावको नाम देशः, सञ्ज्ञायां ण्वुल्। वैजावकः, 'कच्छादिभ्यश्चे'त्यण् शैषिकः। 'कोपधादणि'त्येवाणि सिद्धे कच्छादिष्वस्य पाठो यदा भवादिर्मनुष्यस्तस्थो वा भवति तदा वैजावक इति, कच्छाद्यधिकारेण विधीयमानो मनुष्यतत्स्थयोर्वुञमुख्यादपि यथा स्यादिति॥ ७॥

अथ नामप्रत्ययाः धातवः प्रदर्श्यन्ते ॥

'सुप आत्मनः क्यच्' । कर्मण इच्छायां वेति वर्तते, इहात्मशब्दः परव्यावृत्तिवचनः स्वशब्दपर्यायः, न चेतनद्रव्यवचनः, तस्मिन्हि किमयं कर्तृषष्ठ्यन्तः सन् इच्छया सम्बध्यते उत शेषषष्ठ्यन्तः सुबन्तेन, तत्राद्यपक्षे इच्छायाश्चेतनकर्तृत्वाव्यभिचारादानर्थक्यमात्मशब्दस्य । किं च राज्ञः पुत्रमिच्छत्यमात्य इत्यादौ परेच्छायामपि चेतनस्यैव कर्तृत्वात्क्यच् स्यात् । यत्तु भाष्ये इष्टसामर्थ्यात्प्रत्ययाभाववचनं तत्प्रौढिवादमात्रम्, इष्यमाणं वस्तु स्वत एव नित्यमन्यदपेक्षते इति नैतावतास्य सामर्थ्यम्, अत एव वृत्तावात्मग्रहणस्येदमेव प्रत्युदाहृतं, सुबन्तसम्बन्धपक्षेऽपीह राजादिना चेतनेनैव पुत्रादेः सम्बन्धात् क्यच्प्रसज्यतैव, आनर्थक्यं चाविशिष्टमेवात्मग्रहणस्य, अचेतनस्य ह्यात्मत्व्याभावात् । अत्र हरदत्तः । वृक्षस्य फलमिच्छति, खट्वायाः पादमिच्छतीत्यादौ यत्राचेतनार्थं किंचिदिष्यते तद्व्यावर्त्यमिति चेत्, तत्रापि चेतनस्यैव परं शेषित्वात्, सर्वमेव हि भोग्यं चेतनानामेव शेषभूतं, खट्वायाः पादमिच्छतीत्यत्रापि यस्य तत् खट्वादिकमुपभोग्यं तदर्थमेव तदिष्यते, खट्वादिकं तु द्वारमात्रम् अतः परव्यावृत्तिवचनमात्र एवात्मशब्द इति, तत्राप्यसौ यदि कर्तृषष्ठ्यन्तः सन्निच्छया सम्बध्येत तर्हि विचारमन्तरेणेच्छाया अभावात् अनर्थकः स्यात्, तस्मात्स्वशब्दपर्यायः शेषषष्ठ्यन्तः सुबन्तेन सम्बध्यते, तेनायमर्थः सूत्रस्य । इषेः सन्निधानात्तत्कर्मण एषितुरेवात्मनः सम्बन्धिनः सुबन्तादिच्छायामर्थे वा क्यच्भवति । एवं चात्मनः पुत्र परस्य दासमिच्छतीत्यादौ वस्तुतः सुबन्तस्यात्मना सम्बन्धेऽपि परार्थमिष्यमाणत्वादिच्छिकर्त्रवच्छेदेनात्मना सम्बन्धाभावान्न क्यचः प्रसङ्गः । ककारो 'नः क्ये' इति सामान्यग्रहणार्थः । चकारोऽन्तस्वरविधानार्थः । स्वरस्तु प्रत्ययस्वरेण धातुस्वरेण वा सिध्यति ॥

अथोदाहरणानि ॥

पुत्रमात्मन इच्छति पुत्रीयति । यत्रामलभूता: पाणिनीयाः, अन्यदपि शास्त्रं निवर्तयन्तीति यान्तरङ्गानि गीर्वाणरङ्गे। लुग् बाधनमिति

वा सन्धिकार्यरहितायाः द्वितीयस्याः 'सुपो धातुप्रातिपदिकयो'रिति लुकि 'क्यचि च'त्यवर्णस्येत्वे सनाद्यन्तत्वेन धातुत्वाल्लडादि। अश्वस्यति, वृषस्यति, क्षीरस्यति, लवणस्यति, 'अश्वक्षीरवृषलवणानामात्मप्रीतौ क्यचि'त्यसुगागमः। अत्रात्मप्रीतावित्यपनीया'श्ववृषयोर्मैथुनेच्छायां' 'क्षीरलवणयोर्लालसायामि'त्यर्थान्तरमुक्त, तेनाद्ययोरुदाहरणयोरश्ववृषौ मैथुनायेच्छत इत्यर्थः। अन्ये तु परित्यक्तप्रकृत्यर्थान्मैथुनेच्छैवार्थ इत्याहुः। तथा च भट्टिः। इति रामो वृषस्यन्तीमिति। निघण्टुश्च वृषस्यन्ती तु कामुकीति। इतरयोरपि तृष्णातिरेको ऽभ्यवजिहीर्षातिरेको लालसा, तेन क्षीरलवणेच्छायां लालसारूपायामित्यर्थलाभात् क्षीरलवणे अतिशयेनाभ्यवहर्तुमिच्छतीत्यर्थो भवति। अत्र क्यच्प्रकृतीनां प्रत्ययलक्षणेन यत्पदत्वं प्राप्तं 'नः क्ये 'इति नियमेन नान्तविषयमिति प्रकृत्यसुगकारयोः सवर्णदीर्घत्वं बाधित्वा'ऽतो गुणे'इति पररूपं भवति। अकारोच्चारणफलं तु पूर्वसूत्रोदाहरणे ब्राह्मणास इत्यादौ। तथा 'सर्वप्रातिपदिकेभ्यो लालसायामसुग्वक्तव्यः'। इत्यनकारान्तादसुकि दध्यस्यतीत्यादौ च। अपरे त्वाहुः। सुग्वक्तव्य इति दधिस्यति मधुस्यति, अश्वक्षीरेत्यत्र भाष्ये द्वाविमावागमौ प्रस्तुत्य दध्यस्यति मध्वस्यति दधिस्यति मधुस्यतीत्येवमर्थमभिधानात् दधिमधुशब्दावेवागमिनावित्येके। अन्ये तु सर्वप्रातिपदिकेभ्य इत्येकइति सर्वग्रहणात् बहुवचननिर्देशाच्च सर्वत्र भवतः। भाष्यं तूदाहरणमात्रमित्याहुः। अत्र मते दध्यस्यति मध्वस्यतीत्येवंशब्दः स्वार्थे न पुष्यति। अशनोदकधनेभ्यः क्यच्य'शनायोदन्यधनाया बुभुक्षापिपासागर्द्धे'ष्विति क्रमेणैतेष्वर्थेषु क्यात्येष्वाद्यन्तयोरीत्वापवाद आत्वम्, उदकस्योदादेशो निपात्यते, तेनाशनायति, उदन्यति, धनायति, बुभुक्षाप्रभृतीनां तदात्वे भोक्तुकामो ऽशनमिच्छति, पातुकाम उदकमिच्छति। सत्यपि धने भूयो धनमिच्छतीति क्रमेणार्थः। यस्त्वौत्तरकालिकमशनं, स्नानार्थमुदकं, दरिद्रः सन् धनमिच्छति तत्राशनीयति, उदकीयति, धनीयतीति भवति। अत्रान्ये ऽशनायतीत्यादीना प्रकृत्यर्थमनपेक्ष्य केवलं

बुभुक्षादीनेवार्थं मन्यन्ते । अत्र भारविरमुमेव पक्षं प्रतिपेदे, तदाह 'किमुधनं धनायितु'मिति, । निघण्टुश्च उदन्या तु पिपासा तृडिति । गार्ग्यमिच्छति गार्गीयति । अत्र 'क्यच्व्योश्चे'त्यपत्यप्रत्ययकारस्य हलुत्तरस्य लोपे 'क्यचि चे'तीत्वम् । उपार्षभीयति, उपर्षभीयति, उपाल्कारीयति, उपल्कारीयति, अत्र 'वा सुप्यापिशलेरि'ति सुबन्तावयवऋकारादि धातुपरत्वात् पूर्वपरयोरेका वृद्धिर्वा भवति । ऋकारल्कारयोः सावर्ण्याद्वियम् ल्कारादावपि भवति, तत्रो'रण् रपर'इति प्रत्याहारग्रहणात् लपरत्व, वाग्रहणं गुणस्य प्राप्त्यर्थमिति वृद्ध्यभावे स भवति, नन्वेतद्वाग्रहणं यथाप्राप्ताभ्यनुज्ञानार्थं स्यात्, 'ऋत्यक'इति प्रकृतिभावः पक्षे कस्मान्न भवति । उच्यते । अत्राप्यनुवृत्तस्य धातुग्रहणस्योपसर्गादृतीत्यत्रा*धिकविधानार्थत्वादिव च धातुग्रहणस्य प्रकृतिभावबाधनार्थत्वमृतीयतावुपपादितम् । अत्रैव वा सुपीत्यत्र वृत्तौ वाग्रहणस्य प्रयोजनं दर्शितम् । उपगता ऋषभीयका अमु देशमित्यत्रोपर्षभीयको देश इति गुणप्रकृतिभावौ न भवतः, वृद्धिस्तु पूर्वसूत्र'वृद्धा सुपी'त्यत्रानुवृत्तस्योपसर्गग्रहणस्य प्राग्रूपलक्षणार्थस्याभावान्न भवति । उपलक्षकत्वाभावश्च ऋतीयतावुक्तः । ऋषभस्य समीपमुपर्षभं, तदिच्छति उपर्षभीयतीत्यत्र संग्रामयतीतिरूपस्य संग्रामं करोतीति संग्रामशब्दात्तत्करोति णिचा सिद्धावपि चुरादौ संग्रामयुद्ध इति पाठात्सम उपसर्गात् पूर्वमडागमार्थादन्यत्र सोपसर्गात् संघाताद्धातुसंज्ञानिमित्ते प्रत्यये चिकीर्षिते उपसर्गाः पृथक् क्रियन्त इति ज्ञापनात् सोपसर्गात् संघातात् धातुसंज्ञानिमित्तः प्रत्ययो यदि भवति संग्रामयतेरेवेति नियमाद्वा पृथक्कृतोपसर्गादेव भवतीतीहाप्यृषभशब्दादेव क्यचा भवितव्य, सुपस्तूपर्षभशब्दाद्विधानात् प्रत्ययग्रहणपरिभाषया तस्यैव सुबन्तत्व न तु तदन्तावयवस्य ऋषभशब्दस्यापीत्यृषभीयशब्दः सुबन्तावयवो धातुर्न भवतीति तत्परत्वाभावादनुपसर्गत्वाच्च 'वा सुपी'ति वृद्धेरप्रसङ्गः । अत एवोपसर्गस्य पृथक्कारादुपार्षभीयदित्यत्र ऋषभीयस्यैवाडागमस्तस्यैवाड् भवति, तस्मादेव क्त्वायामुपेन प्रादिसमासेप्युपर्षभीय्येति भवति ।

* अनुवृत्तिबाधनार्थत्वादिति प्रचुर. पाठ ।

तथा तस्यैव धातुत्वात् पशब्दस्य द्विर्वचने उपर्षिषभीयिषतीति । नन्वयं सङ्ग्रामशब्दः उपसर्गसदृशावयवोऽस्ति, कथमुक्तस्यार्थस्य प्रमाणं स्यादिति । उच्यते । पदान्तस्येतिकृतपरसवर्णो पठ्यते । अत्र हरदत्तः । संग्रामशब्दोनुदात्तेत्त्वार्थः, न च तन्मात्रार्थत्वे ग्रामयुद्धइति शक्यते पठितु,मध्यैष्टेत्यादौ आट इव मध्ये ऽटः प्रसङ्गादिति ज्ञापकमभाङ्क्षीत्। तदास्यानुदात्तेत्त्वमपाणिनीयमिति नोदेति । अत एव भृशादौ कैयटे संग्रामयतिरनुदात्तेद्बोद्धव्य इत्युक्तम् । अयं चानुदात्तेत्सग्रामयतिरिष्यत इतिभाष्ये ज्ञापकत्वमेवोक्तम् । ऋकारमिच्छति ऋकारीयति,उपकारीयतीत्यत्र 'वा सुपी'ति वृद्धिः ऋतीति तपरकरणाच्च भवति । अत एव शाकलः प्रकृतिभावोपि । मालीयति । अत्राकृतव्यूहाः पाणिनीया इति स्थिते सुब्धात्वन्तरङ्गत्वेन पूर्वमेकादेशे परमपीत्व पश्चाद्भवति । उक्तं च भाष्ये । अस्तुपैकादेश इत्वोत्वाभ्यां भवति अन्तरङ्गतर इति । ननु पूर्वमपीत्वे यस्येतिलोपेनेष्टसिद्धिरिति चेत् न, तस्मिन्नीत्वस्यासिद्धत्वात् । उस्नामैच्छत् औस्नीयत् । औङ्कारीयत् । औढीयत् । अत्रा'स्यपदान्ता''दोमाङो-श्चे'तिपररूप 'म.टश्चे'ति पुनर्वृद्धिविधानार्थेन चशब्देन बाध्यते, तथा च वार्तिक, 'उस्योमाङ्क्त्वाटः प्रतिषेध' इति, उसि ओमाङोश्च परयोराटः पररूपं नेत्यर्थः । औढीयदित्यत्राङ ओकारेण सहैकादेशे उपसर्गरूपत्वं पृथङ्न प्रतीयतइति सोपसर्गात्सग्रामयतेरित्यस्याप्रवृत्तेरोकारात्पूर्वमाटि तस्यान्तवद्भावेन लब्धाङ्गव्यपदेशस्योकारस्याटश्च 'ओमाङश्चे'तिप्राप्तेन पररूपेण वृद्धेर्बाधः स्यादिति वार्तिके च आङ्ग्रहणमेवम् आ इतः एतः ऐतीयदित्यपि द्रष्टव्यम् । आ इत एतः, एतीयति, प्र एतीयति प्रेतीयतीत्यत्र प्राप्तमवर्णान्तोपसर्गविषयमेङि पररूपं बाधित्वा प्राप्ता-'मेत्येधती'ति वृद्धि'मोमाङोश्चे'ति पररूपं परत्वाद्बाधते,आ ऋश्या अर्श्या, आगता ऋश्येति प्रादिसमासः । 'आद्गुण'इत्यनेनाङृकारयोर्गुणः, तमिच्छति अर्श्यीयति । अद्यर्श्यीयति । अत्र गुणस्यान्तवद्भावेनाङ ओमाङोश्चेतिप्राप्त पररूपं परत्वाद्बाधित्वा प्राप्तः सवर्णदीर्घश्चकारेण पुनः पररूपविधानात् बाध्यते । दधीयति । मधूयति । 'अकृत्सार्व

त्यादावपि वाक्यमेव भण्यते। प्राणितीति प्राण्, प्राण्यति। राजीयति। 'नः क्य'इति पदत्वा'न्नलोपः प्रातिपदिके'ति नलोपे 'क्यचि चे'तीत्वं, न च नलोपस्यासिद्धत्वं, 'नलोपः सुप्स्वरसञ्ज्ञातुग्विधिषु कृती'ति नियमात्। अहर्यति। 'रोः सुपी'ति अह्नः रुः, पदस्य सुप्परत्वाभावा'दह्वि'ति रुत्वापवादो रेफः, नन्वसौ नलोपे पूर्वत्रासिद्धः स्यात्, अस्ति वचनस्यावकाशः, हे अहरित्यत्र 'स्वमोर्नपुंसकादि'ति सोर्लुका लुप्तत्वे तस्य नलोपश्च 'न ङिसम्बुद्ध्यो'रिति निषेध्यते। नैष दोषः। अहन्नित्यत्राह्न इति स्थानेन शब्दे निर्दिश्ये ऽहन्विति प्रथमान्तेन निर्देशादहन्नित्यावृत्त्या ऽहन्नेव न तु लुप्तनकार इति स्थितं, स एवाहन्शब्द इहापि रेफविधावनुवर्ततइति। उक्तेः क्विबन्तादनुकरणाद्वा ऽभ्यति। ककुद्यति। अर्घ्यति। परिव्रश्च*ति। विलम्ब्यति। अङ्गयति। दृह्यति। अर्घादिभ्यस्तत्करोतीति णौ लोपे णेश्चक्यावुदाहरणानि, परिवृढे†र्णाविष्ठवदित्यतिदेशादृकारस्य'र ऋतो हलादे'रिति रभावश्च, अतोऽन्यत्राङ्गादेर्धातोरनुकरणात्क्विबन्ताद्वा क्यच् द्रष्टव्यः, युध्यति भिषज्यतिप्रभृतयो गताः, प्रक्रियासाम्याद्दृष्टान्तेन प्रदर्शिताः, त्वामिच्छति, मामिच्छति, त्वद्यति, मद्यति, 'प्रत्ययोत्तरपदयोश्चे'त्येकार्थवृत्तयोर्युष्मदस्मदोर्मपर्यन्तस्य त्वमावादेशौ भवतः। 'त्वमावेकवचन'इत्यत्र एकस्य वचनमेकवचनं न तु पारिभाषिकमिति स्थिते तत्रापि तस्यैवानुवर्तनादेकार्थानुवृत्तयोरित्युक्तं, तेन युष्मदस्मच्छब्दौ यदा एकार्थे समासस्तु द्विबहुर्थस्तदापि त्वमौ भवतः, यथा अतित्वामिच्छति अतिमामिच्छति अतित्वद्यति, अतिमद्यति, विग्रहवाक्ये अतित्वामतिमामितिरूपं, युष्मदस्मदोर्द्वितीयाद्विवचने तस्य 'ङेप्रथमयो'रित्यमि युष्मदस्मदोरेकार्थत्वा'त्त्वमावेकवचने'इति मपर्यन्तस्य त्वमयोर्दकारस्य शेषेलोपापवादे 'द्वितीयायां चे'त्यात्वे एकादेशे च 'युवावौ द्विवचन'इत्यत्रापि द्वयोर्वचनं द्विवचनमिति स्थिते तत्र च युष्मदस्मदोर्युवावादेशौ न शङ्क्यौ। अतित्वा-

* परिदृढतीति २ पु· पा।
† दृढेरिति २ पु पा·।

नतिमानिति तु ङेप्रथमयोरित्यमादेशापवादे ,तस्मादिन्युत्तरस्येति परि-
भाषया 'शसो न'ेति तदादेर्नकारे पूर्वसवर्णमात्वैकादेशेषु सकारस्य संयो-
गान्तलोपे च भवति । नन्वत्र युष्मदस्मदोरेकार्थयो विभक्तिः परेति 'त्व-
मावेकवचन'इत्येव त्वमयोः सिद्धिः किं पुनः प्रत्ययोत्तरपदग्रहणेन । भवे-
देतदेवं विभक्तिपरत्वे सिद्धे, तदेवतु न सिद्ध्यति । विभक्तेर्लुका लुप्तत्वेन
सत्प्रत्ययलक्षणाभावात् । नन्वन्तरङ्गत्वाल्लुकः पूर्वं त्वमादेशौ भवि-
ष्यतः । न च लुका लुप्तत्वेनानयोर्बाधनमाशङ्क्यम्, अन्तरङ्गत्वादादेश-
योर्नित्यान्तरङ्गयोरन्तरङ्गं बलीयः, तथोक्तं, परनित्यान्तरङ्गप्रतिपदविध-
यो विरोधिसन्निपाते तेषां मिथः प्रसङ्गे परबलीयस्त्वमिति । एवं तर्ही-
दमेव 'प्रत्ययोत्तरपदयोश्चे'त्यादेशविधानं ज्ञापकम् अन्तरङ्गानपि विधी-
न्बहिरङ्गो लुग् बाधते इति, नन्वेतत् परमस्त्व, त्वत्तरः, त्वं प्रधान-
मस्य त्वत्प्रधानं, तुभ्यं हितं त्वद्धितं, तवेदं त्वदीयं, तव पुत्रस्त्वत्पुत्रः,
परमोऽहं मत्तरः, अहं प्रधानमस्य मत्प्रधानं, मह्यं हितं मद्धितं, ममेदं
मदीयं, मम पुत्रो मत्पुत्र इति 'त्वाहौ सौ' 'तुभ्यमह्यौ ङयि' 'तवममौ ङ-
सी'ति विधीयमानानन्तरङ्गानपि त्वाहादीन् बाधित्वा त्वमादेशविधा-
नेन अर्थवद्वचनमिति कथ ज्ञापकं स्यात्, इद तर्हि ज्ञापकम् उत्सर्गसमा-
नदेशा अपवादा इति त्वाहाद्यपवादत्वेनैव त्वमयोर्मपर्यन्तावयवत्वे
सिद्धे यत्पुनर्मपर्यन्तस्येत्यनुवृत्त्या विधानम्, अबाधे तु लुकान्तरङ्गाणा-
मपि त्वाहादीनां तदपवादत्वेनैव त्वमयोर्मपर्यन्तविषयत्वस्य सिद्धेः किं
तदर्थेनानेन मपर्यन्तस्येत्यनेन । ननु शप्कन्यवाद्यपवादाना बहुला-
दीना भिन्नविषयाणामपि दर्शनात् सर्वादेशनिवृत्त्यर्थमेतत् स्यादिति कथ
ज्ञापकं भवति । उच्यते । इह त्वाहादयो विषयनिर्देशार्थमनुवर्तन्ते, तेन
त्वाहादीनां प्रसङ्गे प्रत्ययोत्तरपदयोस्त्वमयोर्विधानादेव मपर्यन्तविषयत्वे
सिद्धे यत्पुनर्मपर्यन्तस्येत्यनुवर्तनेनानयोर्विधान त्वया कृतं त्वत्कृत त्वामि-
च्छति त्वद्यतीत्याद्यर्थमिति ज्ञापकमेवोकार्थस्य । एवं च युवामि-
च्छति युष्मद्यति अतियुवामिच्छति अतियुष्मद्यति, आवामिच्छति अस्म-
द्यति अत्यावामिच्छति अत्यस्मद्यति इत्यत्र युष्मदस्मदोर्द्विवचनत्वेपि

विभक्तेर्लुप्तत्वेन तत्परत्वाभावात् 'युवावौ द्विवचन'इति युवावौ न भवतः, लुकः पूर्वत्वेनानयोरन्तङ्गत्वेऽपि न प्रसङ्गो बहिरङ्गेणापि लुका बाधस्येदानीमेव ज्ञापितत्वात्, 'प्रत्ययोत्तरपदयो'रिति त्वमौ त्वनेकार्थत्वान्न प्रसजतः। वाक्ये ऽतित्वामतियुवामिति रूपं युष्मदस्मद्भ्यां द्वितीयैकवचनद्विवचनयो'र्ङे प्रथमयो'रित्यमिति प्रकृत्योर्मपर्यन्तस्य युवावयोर्दकारस्य द्वितीयायां चेत्यात्वे सवर्णदीर्घे ऽमि पूर्वत्वे च, अतियुवान् अत्यावानिति रूपं तु शसि तदादेरमादेशापवादे 'शसो ने'ति नकारे प्रकृत्योः पूर्ववत् युवावयोरात्वे सकारस्य संयोगान्तलोपे भवति। अतियुष्मानिच्छति अतियुष्मद्यति अत्यस्मानिच्छति अत्यस्मद्यतीत्यत्रापि 'प्रत्ययोत्तरपदयो'रिति त्वमौ प्रकृत्योरनेकार्थत्वादेव न भवतः। अत्रापि वाक्ये अतियुष्मानित्यादिरूपमतियुवामित्यादिवज्ज्ञेयम्। उख्यति, तृण्यति, उदक्यति, मव्यति, मध्यति, अर्घ्यत्यादिवत्प्रक्रियोज्ञेया। तत्रोच्छिने क्विवन्तः, तत्र हि 'च्छ्वोः शूडनुनासिके'ति शकारेण भवितव्यं, वाच्यति, आश्यति, मरुत्यति, तुक्यति, लुप्यति, दिश्यति, षष्ठ्यति, पदस्यति, अत्र पुत्रादेः कर्मणः जीवत्यादौ प्राणादिवत् क्यजन्तेऽन्तर्भावादकर्मत्वात्तादयो भावकर्त्रोर्भवन्ति। उदाहृतं कर्तरि। भावे पुत्रीयते इत्यादि द्रष्टव्यम्। पुत्रीयादेः सनि यथेष्ट नामधातूनामिति पर्यायेण सर्वस्य काचो द्विर्वचनात् पुपुत्रीयिषति, पुतित्रीयिषति पुत्रीयियिषतीत्यादि भवति। इह कस्मान्न भवति महान्तं पुत्रमिच्छति महापुत्रीयतीति। किमत्वाभावश्चोद्यते, अथ केवलात् प्रत्ययाभावः, समुदायाद्वा, आत्वं न भवति प्रत्ययार्थेन सापेक्षत्वात् समासाभावादनुत्तरपदत्वात्, प्रत्ययाभावो महता सापेक्षत्वेन असामर्थ्यात्, समुदायात्त्वकर्मकत्वात् महत्त्वविशिष्टस्य पुत्रस्येष्यमाणत्वेनाकर्मकत्वेन परस्परं प्रत्ययार्थत्वेन च संबन्धे नास्ति सामर्थ्यम्। सुब्ग्रहणं च पदविधित्वेन समर्थपरिभाषोपस्थानार्थमेव क्रियते, ननु धातुव्यावृत्त्यर्थं स्यात्, मस्तत्र बाधको भविष्यति। प्रातिपदिकादुत्पत्तावपि नान्ते नलोपस्तु सुबन्तादुत्पत्तौ यद्'नःक्ये'इति पदस्वस्य नियामकं तदेवात्र विधायकमिति भविष्यति। नन्वसति सुब्ग-

ग्रहणे विशेषाभावात् प्रातिपदिकादिव सुबन्तादपि प्रत्ययोत्पत्तेर्वाग्यतीत्यादौ कुत्वं स्यात्, एवं तर्हि नः क्यचि निवृत्त सुबन्तादुत्पत्तौ नियमार्थं प्रातिपदिकादुत्पत्तौ विध्यर्थं च भविष्यति । नन्वत्र कर्मग्रहणेनैव सुबन्तत्वं लप्स्यते, पञ्चकपक्षेप्यस्य द्योतिकया विभक्त्या भाव्यम्, अतो ऽन्तरेणापि सुब्ग्रहणं वस्तुनः पदविधित्वेन समर्थपरिभाषोपस्थास्यते इति किं तद्ग्रहणेन । नैवं, यत्र हि पदस्यैवासाधारणं किञ्चिद्रूपमाश्रीयते स एव पदविधिः, न त्वीदृशमपीति, कर्मग्रहणे तु न पदस्यैवासाधारणं धातोः कर्मणइत्यपि दर्शनात् । नदीदानीमिदं भवति महापुत्रीयतीति, भवति, एतदेनद्वाक्यं महान्पुत्रः महापुत्रमिच्छतीति ॥

"काम्यच्च" ॥ क्यचो विषये ऽयं भवति, मान्ताव्ययेभ्य इति निषेधाभावात् न तान्येवास्याप्राप्तस्य त्विदंयं, स्यादिति वाच्यं, पाणिन्यस्य कातीयवचनस्य सूत्रप्रणयनकाले ऽभावात् । पुत्रमात्मन इच्छति पुत्रकाम्यतीत्यादि, त्वत्काम्यति, मत्काम्यति युष्मत्काम्यत्यस्मत्काम्यतीत्यत्र 'प्रत्ययोत्तरपदयो'रिति त्वमौ, तदभावश्च । कश्चि चित्करण पुत्रकाम्यतीत्यादौ सति शिष्टस्वरं बाधित्वा धातुस्वरो यथा स्यादिति, ककारस्तु नेत्, प्रयोजनाभावात् । अतिकाम्यतीत्यादावधातु विहितत्वादार्धधातुकत्वाभावादस्ति गुणप्रसङ्गः । कम परिमार्ष्टि कमपरिमृट्, कमपरिमृट्काम्यतीत्यत्र मृजेर्वृद्धिः प्रत्ययमात्रे विधीयमाना ऽपि धातोः स्वरूपग्रहणे तत्प्रत्यये कार्यविज्ञानान्न प्रसज्यते । तत्प्रत्ययो धातुसशब्दनेन विहितः प्रत्ययः, यजे विंशुरेच्छन्दसीति विस्पष्टं वचेः क्विपि वाक्, उपयट्काम्यतीति वाक्काम्यतीति । अत्र यजादिभिः क्विनो विशेषणाद्धातोः स्वरूपेति वा प्रसारणाप्रसङ्गः । अन्तर्वर्तिन्या विभक्त्या यथायोगं पदकार्याणि द्रष्टव्यानि । पयस्काम्यति । यशस्काम्यति । अन्तर्वर्तिन्या विभक्त्या पदत्वेन सोरुत्वे विसर्जनीये तस्य कुप्वोरपदाद्योः परयोर्विधीयमानं 'सोपदादावि'ति सत्वं भवति, स्यात्काम्यतीत्यादौ सोपदादावनव्ययस्येति वचनात् सत्वाभावः । अधिकरणशक्तिप्रधानस्याप्यस्य वृत्तिविषये शक्तिमत्प्रधानत्वादिविषयात् कर्मत्वेन योगः पञ्चा

दिवाभूता रात्रिः दोषाभूतमहरित्यादावधिकरणशक्तिप्रधानत्वेऽपि शक्तिमत्प्राधान्यादभूततद्भावयोगः । वाःकाम्यतीत्यादौ रोः काम्यइति रोरेव विसर्जनीय इति काम्ये सत्वनियमात्सत्वाभावः । सर्पिष्काम्यति धनुष्काम्यतीत्यादौ सत्वं बाधित्वा 'इणः ष'इति षत्वं भवति सत्वस्यापवाद इति यत्र तत्प्रसक्तस्तत्रैव भवतीत्युच्चैःकाम्यति गीःकाम्यतीत्यादौ न भवति । पुंस्काम्यतीत्यत्र पुंसः संयोगान्तलोपे 'पुमः खय्यम्पर'इति रुत्वं निर्वर्त्य 'सम्पुकाना सो वक्तव्य'इति सत्ववचनान्नास्ति विसर्जनीय इति न षत्वप्रसङ्गः ।

"उपमानादाचारे" ॥ कर्मणः सुप इति च वर्त्तते । तत्र प्रत्ययार्थस्याचारक्रियायाः सन्निधानात्तदपेक्षया कर्मण उपमानात् सुबन्तादाचारे क्यजित्यर्थो भवति । यद्यपि काम्यजनन्तरस्तथापि पूर्वसूत्रे चकारेणेहाद्य एव क्यजनुकृष्टः स एवात्र विधीयते, पुत्रमिवाचरति छात्रम् । उदाहरणान्यवशिष्टानि प्रक्रिया चेच्छाक्यजन्तवद्द्रष्टव्यानि । अत्रोपमानेनोपमेयमाक्षिप्यते, तत्र प्रत्यासत्त्या साधारणधर्मभूताधारक्रियापेक्षया कर्मतैव, उपमानकर्मवत् प्रत्ययान्ते धात्वर्थानन्तर्भावादनभिहिते कर्मणि तत्र द्वितीया भवति । तथा पुत्रीयतइत्यादौ कर्मणि यगादयोऽपि भवन्ति । नन्वन्या पुत्रविषयाचारक्रिया ऽन्या छात्रविषयेति आचारक्रियायाः वस्तुतो भेदादेककर्मधर्मसमावेशस्यात्राभावात्कथमौपम्यम् । उच्यते । आचरितुरेकत्वादाचारसमावेशादाचार एकोऽवसीयते, अन्यथा सर्वत्रैवोपमानोपमेयगतस्य धर्मस्य वस्तुतो भेदादौपम्यव्यवहारच्छेदः स्यात् । 'अधिकरणाच्चेति वक्तव्य'मित्युक्तत्वात् प्रासादीयति कुट्यामित्यादौ सप्तम्यन्तादपि भवति । त्वयीवाचरति त्वद्यति, मयीवाचरति मद्यति, युष्मदस्मदोरेकार्थत्वा'त्प्रत्ययोत्तरपदयो'रिति त्वमौ, युवयोरिवाचरति आवयोरिवाचरति युष्मद्यति, अस्मद्यति, अत्र नास्त्येकार्थत्वमिति त्वमौ न भवतः, द्विवचनत्वेऽपि विभक्तेर्लुका लुप्तत्वाच्च युवावौ, लुकः पूर्वं तु न भवतोऽन्तरङ्गानपि विधीन् बहिरङ्गो लुक् बाधतइत्युक्तत्वात् । युष्मास्विव आचरति अस्मास्विवाचरतीत्यत्रापि एकार्थत्वाभावान्न भवतस्त्वमौ,

त्वामतिक्रान्ते अतित्वयि, अतिक्रान्तयोः, अतित्वयोः अतिक्रान्तेषु अतित्वासु, एवमतिमयि, अतिमयोः, अतिमासु सर्वत्रात्र प्रकृत्योरेकार्थत्वात्त्व मयोरन्नादावनादेशे विभक्तौ 'योऽचि' इति दकारस्य यकारः, हलादौ तु युष्मदस्मदोरनादेश इति विभक्तिपरत्वादात्वम्, एभ्योऽपि क्यचि त्वमयोस्त्वद्यति मद्यतीति भवतः । युवामतिक्रान्ते अतियुवयि, अतिक्रान्तयोः, अतियुवयोः अतिक्रान्तेषु, अतियुवासु, एवमत्यावयि, अत्यावयोः, अत्यावासु अत्र प्रकृत्योर्द्विवचनत्वे युवावयोर्दकारस्य पूर्ववद्यत्वात्वे एभ्यस्तु क्यचि प्रकृत्योरेकार्थत्वाभावात् न त्वमौ भवतः, युष्मद्यति अस्मद्यतीति भवतः द्विवचनत्वेऽपि विभक्तेर्लुका लुप्तत्वेन तत्परत्वाभावात् युवावौ न भवतः तथा लुकः पूर्वमपि न भवतीति इदानीमेवोक्तं. युष्मानतिक्रान्ते अतियुष्मयि, अतिक्रान्तयोः, अतियुष्मयोः, अतिक्रान्तेषु अतियुष्मासु एवमत्यस्मयि, अत्यस्मयोः अत्यस्मासु, पूर्ववद्दकारस्य यत्वात्वे, अत्रापि प्रकृत्योरेकार्थत्वाभावेन त्वमयोरभावाद्युष्मद्यति अस्मद्यति इति भवतः ।

"कर्तुः क्यङ् सलोपश्च" । उपमानात् सुप आचारे वेति वर्तते । अत्रापि पूर्ववत् सन्निहिताचारक्रियापेक्षया कर्तृत्वोपमानत्वे नेतव्ये सर्वः । उपमानादाचारे कर्तुः सुबन्तादाचारेऽर्थे वा क्यङिति ङकारो 'नः क्ये' इति सामान्यग्रहणार्थः, इकारस्तद्विधानार्थः तत्र लोपश्चेति चशब्दोऽन्वाचये, सेति लुप्तषष्ठीकं पृथक् पदं तेन च लोपापेक्षया स्थानषष्ठ्यन्तत्वेन सम्बन्धिनो जायमानस्य कर्तुर्नित्य तस्य विशेषणात्तदन्तविधौ सकारान्तेभ्यो क्यङ् तस्य सकारस्य लोप इत्यर्थो भवति । अत्रापि वेत्यस्य सम्बन्धात्तस्य च व्यवस्थितविभाषात्वादोजोऽप्सरसोर्नित्यं सलोपो भवति अन्यत्र विकल्पेन, उक्तं च । ओजसोऽप्सरसो नित्यं पयसस्तु विभाषयेति । पयस इति ओजोऽप्सरोव्यतिरिक्तानां सकारान्तानामुपलक्षणमिति व्याख्यातारः । श्येन इवाचरति श्येनायते, काकायते, ओजायते अप्सरायते, पयस्यते, पयायते, यशस्यते, यशायते, ओजःशब्दो वृत्तिविषये तद्वति वर्तते, अर्चिष्यते सर्पिष्यते इत्यादौ प्रत्ययसकारत्वात्षत्वम्, अत्र 'नः क्ये' इति नियमेन सकारस्य पदान्तत्वाभावः, पदान्तत्वे 'झलपदान्तस्य

'धेन्य'इति वचनात् षत्वं न स्यात् । अन्तस्य सकारस्य लोपवचनात् :सायते स्वरसायतइत्यादौ अनन्त्यस्य लोपो न भवति । उपमानकर्तुं- रेव उपमेयकर्तुः प्रत्ययान्ते धातावन्तर्भावात् तत्र लादयो भवन्ति । अकर्मकत्वात् भावे च श्येनायतइति, त्वामिवाचरति त्वद्यते मद्यते, प्रत्ययोत्तरपदयोश्चे'ति युष्मदस्मदोरेकार्थयोस्त्वमौ, युवामिवाचरति युष्मद्यते, अस्मद्यते, अत्रानेकार्यत्वान्न त्वमौ, अन्तर्वर्तिन्या विभक्तेर्लुप्त- त्वात् 'युवावौ द्विवचने' 'यूयवयौ जसी'ति युवावादयो न भवन्ति । लुकः पूर्वं तु बहिरङ्गेणापि तेन बाधस्योक्तत्वान्न भवन्ति, त्वामतिक्रान्तो ऽतित्वम्, अतिक्रान्तौ अतित्वा,मतिक्रान्ता अतियुयं, मामतिक्रान्तः अत्यहम्, अतिक्रातौ अतिमाम्, अतिक्रान्ता अतिवय, सर्वत्र विभक्तेर्ङेः प्रथमयोरमित्यम्भावो द्विवचनादन्यत्र शेषे लोप इति दकारलोपस्तत्र 'प्रथमायाश्च द्विवचन'इत्यात्व, तत्र सौ 'त्वाहौ सा'विति त्वाहौ, अन्यत्र 'त्वमावेकवचन'इति त्वमौ, आभ्याम्पराभ्यामपि त्वाहयोर्न बाध- स्त्वाहादीनां तु पूर्वविप्रतिषेधेन तएवेष्यन्तइति उक्तत्वात् । जसि तु न्याय्यविप्रतिषेधेन यूयवयाभ्यां त्वमोर्बाध एव, एभ्यः क्यङि अतित्वद्यते ऽतिमद्यतइति भवतः, युवामतिक्रान्तोतित्वाम्, अतिक्रान्तौ, अतियुवाम्, अतिक्रान्ता अतियूयम्, एवं मामतिक्रान्तो ऽत्यहम्, अतिक्रान्तौ अत्यावा- मतिक्रान्ता अतिवयं, सौ जसि च 'त्वाहौ सौ' 'यूयवयौ जसी'त्याभ्यां पराभ्यां युवावौ द्विवचनइत्यस्य बाधः । द्विवचने तु युवावयोः प्रथमायाश्च द्विवचनइति दकारस्यात्वम् । इतरयोस्तु शेषे लोपः, एभ्यस्तु क्यङि युष्मदस्मदोरनेकार्थत्वात्त्वमयोरभावादतियुष्मद्यते अत्यस्मद्यते इति भवतः । अन्तर्वर्तिनीं विभक्तिमाश्रित्य तत्तदादेशाभावस्तत्रतत्रोक्तो, युष्मानतिक्रान्तः अतित्वम् अतिक्रान्तौ अतियुवाम्, अतिक्रान्ता अति- यूयम्, एवमस्मानतिक्रान्तो ऽत्यहम्, अतिक्रान्तौ अत्यस्मान्, अति क्रान्ता अतिवयं, पूर्ववत् प्रथमाया द्विवचने आत्वम्, अन्यत्र शेषे लोपो यथायोगं 'त्वाहौ सौ' 'यूयवयौ जसी'ति त्वाहादयश्च, एभ्योपि क्यङि अतियुष्मद्यते, अत्यस्मद्यते इति भवतः । उदाहरणान्यवशिष्टानि प्रक्रिया

चेच्छाक्यजन्तवद्वेद्यानि । अवर्णस्येत्यादिकं 'क्यचि च' निविधीयमान मिह न भवति, कुमारीवाचरति कुमारायते, हरिणीवाचरति हरिणायते गौरीवाचरति गौरायते, गुर्वीवाचरति गुरूयते, क्यङ्मानिनोश्चेति स्त्रीशब्दस्य पुम्शब्दः, अत्र स्त्रियाः पुंवद्भाषितपुंस्कादिति वर्तते, तत्र स्त्रीशब्देन स्त्र्यर्थशब्द उच्यते, पुंवच्छब्देन पुमर्थो, भाषितः पुमान् यस्मिन् अर्थे प्रवृत्तिनिमित्ते स भाषितपुंस्कस्तद्योगाच्छब्दोऽपि, स चेह स्त्र्यर्थः, ऊङो ऽभावः अनूङ्, षष्ठ्यर्थे प्रथमा, भाषितपुंस्कात् पर ऊङोऽभावो यस्मिन् स्त्रीशब्दे स भाषितपुंस्कादनूङ्, निपातनात्पञ्चम्या अलुक्, एतदुक्तं भवति, पुंसि यत् प्रवृत्तिनिमित्त तदुक्तस्यार्थवाचिन शब्दस्य पुम्शब्द आदेशो भवति ऊडन्तस्य नेति, तेन श्वशुरस्योकाराकारयोर्लोपश्चेति ऊङि श्वश्रूयते इत्यत्र पुंवत्त्व न भवति । तथा भाषितपुंस्कत्वाभावान्न द्रोणीयत इत्यादौ न भवति । अत हरदत्तः । पुंसि द्रोणशब्दस्य परिमाणप्रवृत्तिनिमित्तमाह । स्त्रिया तु द्रोणीनाम जातिः । कैयटकारस्तु द्रोणशब्दस्तु परिमाणवृत्तिर्भाषितपुंस्कः स एव भेदोपचारात्सादृश्यनिबन्धनप्रत्यभिज्ञानवशात् वा स्त्रियां वर्तते इति पुंसि प्रवृत्तिनिवृत्तेनार्थमात्रेणैव युक्तः स्त्र्यर्थयोगोस्तीति स्यादेव द्रोण्यादीनां भाषितपुंस्कत्व, नैतत् । एव हि व्यावर्त्याभावात् भाषितपुंस्कग्रहणमनर्थकं स्यात् । अतो यः शब्दो भाषितपुंस्को यत्प्रवृत्तिनिमित्तेन युक्तस्तद्युक्तं स्त्र्यर्थं तद्रूपेणाह स चेह भाषितपुंस्क आश्रीयते न तु रूपान्तरेणापि, न च द्रोण्यादिशब्द, स्वार्थमर्थमात्रतयाहेति । एवमपि द्यौरिवाचरति दीव्यतीति, दिवशब्दस्य स्वर्गशब्दस्य चैकमेव प्रवृत्तिनिमित्तमस्ति च तद्युक्ततया स्वार्थाभिधानमित्यर्थसाम्यात् पुंल्लिङ्गः स्वर्गशब्दः प्राप्नोति । नैव दोषः, यस्य शब्दस्य पुंवद्भावः स एव शब्दः स्त्रीकृतचिह्ननिरहितः पुमांसमाहेति प्रत्यासत्त्या लभ्यत्वात्, न च दिवशब्दः पुमांसमाह । इदमत्र सूत्रार्थतत्त्व, यः शब्दो येन प्रवृत्तिनिमित्तेन पुंसि प्रवृत्तस्तेनैव स्त्रियां वर्तते तस्य पुंवद्भाव, ऊडन्तस्य नेति । एवं हंसस्य स्त्री वरटा, सारसस्य लक्ष्मणा, मद्गुरकस्य मालिका, कच्छपस्य डुलीका, ऋषभस्य रोहित्, पुरुषस्य योषिदित्यादौ

नियतस्त्रीवचनाना वरटादीनां पुंवत्वेन वरटादयो न भवन्तीति वरटायत-इत्यादि भवति, शक्यन्ते च साहचर्यात्पुंशब्दैरपि स्त्रीशब्दार्थाः प्रतिपादयितु, यद्येव गर्भिणीवाचरति गर्भीयतइत्यत्र कथं पुंस्त्वं, यतो गर्भी व्रीहिरित्यादौ पुंस्यवयवभूतगर्भसंबन्धः प्रवृत्तिनिमित्त स्त्रियान्त्वनवयभूतगर्भसंबन्ध इति प्रवृत्तिनिमित्त भिद्यते, नैष दोषो यदुभयत्रापि गर्भसंबन्धमात्रमेव प्रवृत्तिनिमित्तम्, एव प्रसूताप्रजातादिशब्दानामप्यप त्यपत्यवत्संबन्धमात्र प्रवृत्तिनिमित्तं न तु पुंसि गर्भाधानं स्त्रियां तु गर्भविमोचनमिति समानप्रवृत्तिनिमित्तत्वात् प्रसूतायतइत्यादौ पुंत्व भवति, इदं च प्रसूतभार्या इत्यर्थमवश्यमेवेष्टव्य, समानः पतिरस्याः सपत्नी, नित्यं सपत्न्यादिष्विति नकारे ङीप् । अत एव निर्देशात्समानस्य सभावः । सपत्नीवाचरतीत्यत्र सपत्नीयतइति भवितव्यमिति न्यासे, यदाह नित्यं सपत्न्यादिष्वित्यत्र समुदायस्योच्चारणान्नियोगत एषां समुदाय ईकारान्त एव यथा स्यादिति । तेन सपत्नीभार्यइति स्त्रियाः पुंवद्भावो न भवतीति । तस्मिन्नादिष्वित्यत्र भाष्यकैयटयोस्तु 'भस्याढे तद्धित'इति पुंवत्त्व प्रस्तुत्य कुण्डिनीशब्दाद्गर्गादियञि पुंवत्त्वेन कुण्डिञ्छब्दे 'नस्तद्धित' इति टिलोपे कौण्डेय इति प्राप्नोति । तथा सपत्नीशब्दाच्छिवाद्यणि सपतिशब्दादेशे सापत इति चोदयित्वा ढग्रहणमपनीय तत्रानपत्यइति न्यस्यापत्यप्रत्यये पुंवद्भावाभावाद्यञि ईकारस्य 'यस्येति च'ति लोपे तस्य 'नस्तद्धित'इति टिलोपस्य स्थानिवत्त्वान्नान्तस्य तद्धितपरत्वाभावात्कौण्डिन्य इति सिध्यति । तथा शिवाद्यणोऽपत्यप्रत्ययत्वात्सपतिशब्दादेशाभाव इति परिहृत्य एवं सति गार्ग्यायण्या अपत्ये कुत्सने, गोत्रस्त्रियाः कुत्सने ण चेति एतस्यापत्यप्रत्ययत्वेन पुंवद्भावाभावाद्गार्ग्यायणइति स्यात्, नन्विष्टङ्गार्ग्यमिति दोषमुद्भाव्य तत्सम्परिहाराय भस्याढे इत्येव संस्थाप्य कौण्डिन्ये आगस्त्यकौण्डिन्ययोरिति निपातनात् परिहृत्य सापत्ने तु नित्यं सपत्नीतिसमुदायनिपातनं परिहारमनभिधाय शत्रुपर्यायात्सपत्नशब्दाच्छार्ङ्गरवादिषु द्रष्टव्य इति शिवाद्यणि परिहृतम्, अत एव शिवादौ समानपतिलक्षणस्य सपत्नीशब्दस्य ग्रहणं नेत्यवसी-

यते, ग्रहणे हि तस्माद्गणे पुंवत्त्वेन सापत इति रूपं दुर्वारमेव स्यात् । अत एव सापत इति प्राप्नोतीति भाष्ये नित्यं सपत्न्यादिष्विति निर्देशेन भवत्समानस्य सभावो ङीप्नकारयोगेऽपि भवतीत्यवगम्यते । एवं च न्यासोक्तपुंवत्त्वाभावो भाष्यकृतोऽनभिमत इत्यवगम्यते । समुदायनिपातनं तु रूढ्यर्थेऽपि स्यादिति न सूत्रभाष्यविरोधः । एवं सति समानपतिलक्षणात्सपत्नीशब्दात्लिङ्गविशिष्टपरिभाषया पत्युत्तरपदलक्षणे ण्ये सापत्य इति भाष्ये, तथा भावकर्मणोरपि पत्यन्तलक्षणे यकि सापत्यमिति युवतिरिवाचरति युवायते । यत्तु वार्तिकसूत्रभाष्ये युवतिरित्युदाहरणे 'ग्रहणे' ति पुंवत्त्वाभावः स तत एव यङ्निर्देशात्त्वभाषितपुंस्कत्वाच्चापि यौवनस्य जातित्वेन जातिवाचकत्वात् 'जातेश्चे'ति प्रतिषेधात् अतः स्थानिवत्सूत्रे युवजानिरिति दृष्टम् । पट्वी च मृद्वी च पट्वीमृद्व्यौ, ते इवाचरति पट्वीमृद्वयते पूर्वपदस्य अनुदुपरत्वाभावाच्च पुंवत्त्वं, पचेर्ण्वुलि पाचिका मद्रवृज्योः कनिति शैषिके कनि मद्रिका, पाचिकायते मद्रिकायते 'न कोपधाया' इति पुंवत्त्वनिषेधः । अत्र तद्धितग्रहणात्तद्धितेन वा 'युवोरनाकौ' इत्यकादेशेन वा यः कोपधस्तस्यैव ग्रहणमिति पाकायत इत्यत्र पुंवत्त्वं भवति । नन्वजादिपाठाट्टापा वयोलक्षणस्य ङीपो बाधात्पुंवत्त्वापुंवत्त्वयोर्न विशेषः । सत्यम् । अत्राविशेषेऽपि अस्ति पाकभार्य इत्यत्र विशेषः । चतुर्थायते 'सङ्ख्यापूरण्योश्चे'ति पुंवत्त्वनिषेधः । स्रौघ्नीयते वृद्धिनिमित्तस्य च तद्धितस्यारक्तविकार इति पुंवत्त्वनिषेधः । वृद्धेर्निमित्तं अकारो णकारो वा यस्मिन्निति बहुव्रीह्याश्रयणात् यावनीवाचरति यावन्यते इत्यत्र पुंवत्त्वं भवति, अत्र 'सर्वनाम्न' इत्याकारस्य वृद्धित्वेऽपि निमित्तमिति नास्य वृद्धिनिमित्तत्वात्, तद्धितस्येति वचनात्काण्डलावीवाचरति काण्डलावायते इत्यत्र पुंवत्त्वं भवति, तथारक्तविकार इति वचनात्कषायेण रक्ता शाटी काषायी, तेन रक्तं रागादि'ति अणि ङीप्, खदिरस्य विकारः खादिरी ईषा, 'पलाशादिभ्यो वे'ति विकारेऽणन्तेऽरक्तविकारस्मिन् ङीप्, काषायायते खादिरायतइति, अत्र पुंवत्त्वं भवति । व्याकरणमधीते वैयाकरणी ।

'तदधीते तद्वेदे' त्यणि ङीप्"। सैवाचरति वैयाकरणीयते। 'न ख्याख्या'-मिति निषेधादणो नास्ति वृद्धिनिमित्तकत्वमिति पुंवद्भावः, निमित्तशब्दः कुर्वद्रूपवचनः, दीर्घाः केशा अस्याः दीर्घकेशी, एव, मृद्वङ्गी 'स्वाङ्गाच्चोपसर्जनादसंयोगोपधात्' 'अङ्गगात्रकण्ठेभ्यश्चेति वक्तव्यमि'ति पाक्षिको ङीप्। दीर्घकेशीयते मृद्वङ्गीयते। 'स्वाङ्गाच्चेतोमानिनी'ति स्वाङ्गवचनात्परो य ईकारस्तदन्तस्य मानिनोऽन्यस्मिन्परे पुंवत्त्वं निषिध्यते। कल्याणीयते, इडबिड्यते, दरद्यते, कठीयते, 'जातेश्चे'ति पुंवत्त्वनिषेधः। 'गोत्रञ्चचरणैः सहे'ति गोत्रचरणयोः जातिवाचित्वम्। इहापत्यं गोत्रम्, अपत्याधिकारादन्यत्र लौकिकं गोत्रं गृह्यतइति, चरणशब्दः शाखाध्यायिषु रूढः। अत्र इडविट् नाम जनपदो राजा वेति जनपदसमानशब्दत्वात् 'जनपदसमानशब्दात् क्षत्रियादञि'त्यत्र 'ते तद्राजा' इत्यापादपरिसमाप्तेः प्रत्ययानां तद्राजसञ्ज्ञकत्वात् 'अतश्चे'ति अकारप्रत्ययत्वेन स्त्रियां लुकि इडविट् स्त्री, ऐडविडः पुमान् भवति, दरदोपि जनपदसमानशब्दत्वात् द्व्यञ्मगधेत्यणः पूर्वं लुकि दरद् स्त्री दारदः पुमान्, एते गोत्रवचनाः, कठशब्दात् 'कलापिवैशम्पायनान्तेवासिभ्यश्चे' ति प्रोक्ते छन्दसि णिनेः 'कठचरकाल्लुगि'ति लुकि 'छन्दोब्राह्मणानि च तद्विषयाणी'ति छन्दोब्राह्मणप्रत्ययान्तानामध्येतृवेदितृप्रत्ययविषयत्वाद् 'तदधीते तद्वेदे'त्यणि तस्य 'प्रोक्ताल्लुगि'ति प्रोक्तप्रत्ययान्तात्परत्वेन लुकि शाखाध्ययननिवृत्तिः॥

'भृशादिभ्यो भुव्यच्वेर्लोपश्च हलः'॥ अत्राच्वेरित्येकवचनं भृशाद्यवयवापेक्षम्, अयं च पर्युदास इति तत्सदृशप्रतिपत्त्या ऽभूततद्भावविषयेभ्यो भुवि भवत्यर्थे क्यङिति अर्थो भवति, प्रसज्यप्रतिषेधे तु भवतियोगे च्विविधानाद्भवतिनैव स्वार्थस्य भवनस्योक्तत्वान्न क्यङः प्रसङ्ग इत्यर्थे अच्वेरिति वचनमनर्थकं स्यात्, न च सत्यस्मिन् च्व्यन्तादुत्पद्यमानेन क्यङा भवतेरनुप्रयोगस्य बाधनमाशङ्क्यं, यदिदमच्व्यन्ते सावकाशं भवतेरभावात् च्वेरप्यभावस्तद्योगे तस्य विधानात्, न च क्यषा योगे डाज्वचनप्रामाण्याद्भवतेरभावेपि क्यङो योगे च्वेः कल्पनं युक्तं, यत इदं वचनमच्व्यन्ते सावकाशं, भृशादिभ्य इति पञ्चमी लोपविधौ स्थानषष्ठी

सम्पद्यते, तत्र विशेषणेन हला तदन्तविधौ भृशादिषु हलन्तानामन्त्यस्य लोप इति अर्थो भवति, एव च चशब्दोऽन्वाचये भवति, अभृशो भृशो भवति भृशायते, शीघ्रायते, चपलायते, मन्दायते, पण्डितायते, रेहायते रेहः-शब्दो रहसि निर्घृणत्वे भिन्नाभिन्नायस्य च निवृत्तौ वर्तत इति गणवृत्तौ वृषायते, वृषश्चन्द्रः समुद्रश्च, वेहायते, वेहद्गर्भोपघातिनी, अन्धरायते, अन्धरो मूर्खो पुष्करश्चेति गणवृत्तौ, अण्डार इत्यन्ये इति च, ओजायते वर्चायते, ओजोवर्चसी वृत्तिविषये तद्वति वर्तेते रेहायते, रेहस् रोष इति गणवृत्तौ, दुर्मनायते सुमनायते, उत्सुकायते उन्मनायते, रभ्वायते वृहायते, तान्ताविनौ अनिमनायते, अत्र सूत्रे भिन्द्ये मनःशब्दः पठ्यते, तत्र सोपसर्गात्स्यामयतेरेव धातुसञ्ज्ञानिमित्तः प्रत्यय इति नान्तात्म नस एव प्रत्यय इति स्वमनायत इत्यादि भवति, सुमनायित इत्यत्र मनस्युपसर्गे इति मनसि परे उपसर्गस्य पराङ्गवद्भाववचनात्सुमनायत इत्यादौ 'तिङ्ङतिङः' इति निघातो न भवति देवदत्तः सुमनायत इत्यादौ सोपसर्गस्य निघातो भवति, अत्रामी भृशादयो ऽस्माभिः श्लोकगणपाठानुसारेण पठिताः। गणवृत्तौ तु वृहच्छब्दो न दृश्यते, भद्रशब्दस्तु पठ्यते, तथा च कन्धरशब्दश्च त्वचोऽभ्यन्तरे स्थूलतत्त्वाभा अमयुक्ता मन्युः कन्धरा तद्वान्कन्धरः, मत्वर्थे अर्शआदिभ्योऽजिति व्याख्यातं च ॥

'लोहितादिडाज्भ्यः क्यष्' ॥ अत्र भुवीति वर्तते, अच्वेरिति च। तत्रैतद्वाचो न विशेषणमसम्भवात् अव्यक्तानुकरणाद् द्व्यजवरार्धादनितौ डाज्विधीयते, यत्र ध्वनौ वर्णविशेषा न व्यज्यन्ते सोऽव्यक्तस्तस्यानुकरणमव्यक्तानुकरणं, तस्मात् 'डाचि बहुलं द्वे भवतः' इति डाचि विषयभूते द्विरुक्तात् द्व्यजवरार्धात् अनितिपरात् कृभ्वस्तियोगे डाज् भवतीति सूत्रार्थः। यस्य द्विरुक्तस्य समुदायस्य प्रविभज्यमानमर्धं द्व्यजन्यूनात्मकं द्व्यच् वा भवति तद् द्व्यजवरार्धम्, अवरशब्दोऽपकर्षे, अत एव वचनात् कृभ्वस्तिभिरिव क्यषापि योगे डाज् भवतीत्यवसीयते, न च भवतियोगे डाचि कृते क्यषः प्रसङ्गो भुवो भवतिनैवोक्तत्वात्। अलोहितो लोहितायति लोहि

१ अवरमिति पाठः पु॰

तायते, 'वा क्यष'इति पक्षे न ङ्, लिङ्गविशिष्टपरिभाषया लोहिनीशब्दात्क्यषि लोहिनीयति लोहिनीयतइति भवति, पटपटायति पटपटायते, अत्र डाचि बहुलमिति द्विरुक्ते 'नित्यमाम्रेडिते डाची'ति अव्यक्तानुकरणस्यान्त्यस्य टेश्च पररूपे टेरिति टिलोपः, इदमेव पररूपवचन ज्ञापकं डाचि बहुलं द्वे इत्यस्य विषयसप्तमीत्वे, अत्र लोहितानां तेषां नीलहरितमन्द्रफेनमुण्डानां भृशादौ पाठः कर्त्तव्यः । अत्र वार्तिकं 'लोहितादिडाज्भ्यः क्यष्वचन भृशादिष्वितराणी'ति । अत्र वृत्तौ नहि पठितेषु लोहितादिषु नान्तोस्तीति 'नःक्य'इति पदन्यसामान्यग्रहणार्थेन क्यषः ककारेणाऽस्याकृतिगणत्वज्ञापनादन्यानि संगृह्यन्ते, तेषां भृशादौ अनुप्रवेश इति स्थितं, यदाह यानि पठ्यन्ते तेभ्यः क्यङेव भवति, अपठितेभ्यस्तु क्यषेवेति, तेन निद्रायति, निद्रायते, करुणायति, करुणायते, वर्मायति, वर्मायतइत्यादि भवति, निद्राकरुणाशब्दौ वृत्तिविषये तद्वति वर्तेते, यद्वा निद्रायतेरातश्चोपसर्गइति कर्तरि कप्रत्ययान्तो निद्राशब्दो भवति। अत्र गणवृत्तौ ॥

लोहितश्यामदुःखानि हर्षगर्वसुखानि च ।
मूर्छा निद्रा कृपा धूमा करुणा नित्यवर्मणी ॥

इत्याकृतिगणसिद्धानि पठ्यन्ते ।

'कष्टाय क्रमणे' । क्रमणमनार्जवः । अत एव निर्देशाच्चतुर्थ्यन्तात्कष्टशब्दादनार्जवे क्यङ् भवति, कष्ट कृच्छ्र दुःखमिह तु तत्कारणं कर्म, कष्टाय कर्मणे क्रामति, कष्टायते, कष्ट कर्तुं कुटिलमाचरतीत्यर्थः । अत्र वार्तिक 'सत्रकक्षकृच्छ्रगहनेभ्यःकण्वचिकीर्षाया'मिति, कण्वस्य पापस्य चिकीर्षा कण्वचिकीर्षा सा चेह वृत्तिविषये, सत्रादयः कण्ववचनाश्चिकीर्षाया प्रत्यय इति समुदायार्थो भवति, एवं च पापवचनेभ्यो विषयान्तेभ्यः सत्रादिभ्यः चिकीर्षाया प्रत्यय इति वार्तिकार्थः सम्पद्यते। सत्रायतइत्यादि ॥

"कर्मणो रोमन्थतपोभ्यां वर्तिचरोः" ॥ कर्मण इत्यवयवापेक्षमेकवचनं, तेन रोमन्थतपोभ्यां कर्मभ्यां यथासंख्यं वर्तिचरोर्धात्वर्थयोः क्यङ्

प्रत्ययो भवतीत्यर्थो भवति । कर्मत्वं च रोमन्थतपोभ्यां श्रुतवर्तिचरि-क्रियापेक्षं, वर्तिरित्यत एव निर्देशाण्ण्यन्तादपि क्विप्, चरिरिति चरतेः सम्पदादित्वाद्भावे क्विप्। रोमन्थं वर्तयति रोमन्थायते, तपश्चरति तपस्यति, 'तपसः परस्मैपदं चे'ति परस्मैपदम्, अत्र हनुचलन इति वक्तव्यमित्युक्तत्वात् कीटो रोमन्थं वर्तयतीत्यत्र क्यङ् न भवति । अत्र न्यासपदमञ्जर्योरपान-प्रदेशाच्चिसृतं द्रव्यं कीटो वर्तुलं करोतीत्यर्थोऽभिमतः, कीटस्त्वपानप्रदेशाच्चिसृतमश्नातीति, 'वाष्पोष्मफेनाच्चेति वक्तव्य,' कर्मग्रहणमनुवर्तते तच्च श्रुतोद्वमनक्रियापेक्षं वाष्पादिभिःसम्बध्यते, वाष्पमुद्वमति वाष्पायते ॥

"शब्दवैरकलहाभ्रकण्वमेघेभ्यः करणे" ॥ कण्वशब्दः पापवचनः करणं क्रिया करोत्यर्थः, न पारिभाषिकं तस्मिन्हि कर्मणि इत्यनेन सवधेः शब्दादिभिः सवधे न स्यात्, शब्दादिभ्यः कर्मभ्यः करणे क्यङ् भवति शब्दं करोति शब्दायते, एवं वैरायते, कलहायते, अभ्रायते, कण्वायते, मेघायते अत्र न्यासे यद्यप्ययं तत्करोतीति णिचि प्राप्ते आरभ्यते तथापि न बाधत इति शब्दयतीत्याद्यपि भवतीत्युक्तम् । अत्र वार्तिकं सुदिनदुर्दिनाभ्यां च 'नीहाराच्च' । अटाट्टाशीकाकोटापोटासोटाप्रुष्टाप्लुष्टाग्रहणमिति, पोटा स्त्रीपुंसलक्षणा । अतोऽन्ये अट्टादयः क्रियावचनाः सुदिनं करोति इति सुदिनायते इत्याद्युदाहार्यम् ॥

"सुखादिभ्यः कर्तृवेदनायाम्" ॥ कर्तृ इति पृथक्पदं लुप्तषष्ठीकं, वेदनाज्ञानकर्तृत्वं च श्रुतवेदनक्रियापेक्षं, तेन वेदनक्रियायाः कर्तुराधेयभावेन सम्बन्धिभ्यः सुखादिभ्यो वेदनायामर्थे क्यङ् भवतीत्यर्थो भवति, सुखं वेदयते सुखायते, सुखमनुभवतीत्यर्थः । वेदयितुः सुखादीनां विशेषणात्सुखं वेदयते प्रसाधको देवदत्तस्येत्यत्र क्यङ् न भवति, अत्र प्रसाध्यगतं सुखं प्रसाधकोऽक्षिनिमीलनादिना ज्ञानातीत्यर्थः इति सुखं वेदयितृगतं न भवति, अत्र श्लोकगणकारः ॥

सुखदुःखगहनकृच्छ्रास्रुपकप्रतीपकरुणाश्च ।
कृपणः सोढ इतीमे तृप्रादयो दश गणे पठिताः ॥

---

१ पुपकेति २ पु॰ पा ।

